# प्रस्तावना।

श्रीविघ्नौघघातिने नमः

यावर्त्तवर्त्तिरोलम्बलीलया ललितं जगत्।
तद्विवर्त्ते वरीवर्त्ति तस्मै तारात्मने नमः॥ १॥

प्रत्नप्रवृत्त्यतीततीव्रतमगतिमत्तया विवर्तमाने प्रत्यक्षादियावन्मानमानापमर्दितनैगत्तार्साँगातिगानिगेमवति जगति मन्ये महामतयोऽपि महामत्स्या इव महोदन्वति कालत इव देशतोपि भावान् व्यभिचरन्त एव प्रकाशन्ते तन्वेव तनुना तेजसा संविदा च। तत्र तत्र श्रुतितटमायाता निरस्तसमस्ततमोराशितया तेषां, समन्देहानयवृत्तितया च तदीयसंवित्तेः श्रुतिस्तु वस्तुतस्तदीयाऽयोकत्रामान्यतरकालिकफतिचनकृत्यचमत्कृततदनुरक्तजनतावर्जितस्वान्तप्रयोज्यतया कृतज्ञता समर्थनस्थानीयैव। तस्याः (श्रुतेः) भ्रमप्रमादादिदोषदुष्टपुरुषस्वभावातिगसर्वज्ञत्वादिविशेषणविभूषणेन परिष्कृत्य पुरुषपरम्परया स्मरणमपि पितृपितामहप्रपितामहादिमहामहिमाप्तपूर्वजादतोदात्तचरितपूज्यपादगुरुपादादरणं भारतवर्षस्यैव प्रथमश्रेणिमधितिष्ठतीति तात्पर्यपरायणमेव।

यद्यपि केचन शास्त्रनिरस्ततर्कस्त्वप्रतिष्ठिततया शास्त्रैकशरणप्रमाणायां कर्मव्याकर्त्तव्यव्यवस्थितौ स्वतन्त्रतया नाद्रियत इति समयस्य सम्यगपरिचिततयाऽसंमततया वा संवित्तारतम्यादिना पुरुषविशेषतया सर्वज्ञसाधनाय बहुधा क्लिश्यन्ते तदपि तेषां प्रायोऽवैदिकतया परिगृहीतापरपथदिग्दर्शकाद्य-,पदोपदेशस्वीकर्त्तव्यत्वमहत्त्वादिप्रथनहेतुकं किमपि कौतुकमेव। अनाद्यविच्छिन्नशिष्टपरम्परापरिरक्षितवेदादिशास्त्राणामप्रामाण्यकल्पने अपरिचितपुरुषप्रणीतापण्डितप्रायजनतानुगृहीतसम्मानितसमष्टिविशेषरक्षितपुस्तकविशेषस्य प्रामाण्यकल्पने तत्कृते च तत्पुस्तककर्तुस्संवित्तारतम्येन सर्वज्ञत्वसाधनाग्रहे कल्पनागौरवात्प्रमाणाभावाच्च।

किंच तादृशसिद्धान्तस्तम्भभूतसर्वज्ञसाधकबोधतारतम्यस्य हेतोरेव तावत्प्रयोजकत्वे सन्देहः। हेतोरेतस्य सर्वकालवृत्तितया संप्रत्यपि यत्रकुत्रापि सत्त्वेऽपि सर्वसंमतस्य कस्यापि सर्वज्ञस्यानुपलब्धेः। प्रोक्ततारतम्यविश्रान्तिसहचरितस्य

सर्वज्ञत्वस्य कादाचित्कत्वे देशान्तरवृत्तिव्यक्तिवृत्तित्वे वा विनिगमनाविरहः । कथमपि सर्वज्ञस्य कादाचित्कत्वाङ्गीकारेऽपि हेतोर्बोधतारतम्यस्य सनातनत्वेन व्यभिचारः । बोधतारतम्यस्येयत्तानवच्छिन्नत्वेन क्वचिदेकस्मिन्नेव तदवधित्वस्वीकारस्योचितत्वेन युगपत्स्वीकृतशतसहस्रादिसर्वज्ञस्य वादिनो विप्रलम्भकत्वापत्तिः । बोधतारतम्यविश्रान्तेरनिश्चितत्वेन बहुव्यक्तिवृत्तित्वेन वा द्वैतसिद्धिः । तारतम्यं हि युगपदनेकाधिकरणमाश्रयत्स्वरूपं ज्ञापयति । सर्वत्रायत्नगतद्वित्वादिवृत्तिसर्वज्ञत्वस्य साध्यत्वे साध्यासिद्धिश्च । दृढतरतर्कविरहवतो बोधतारतम्यस्य हेतोः स्वाधिकरणस्य कस्याप्येकस्य तदितरावधिनिरूपितोत्तमज्ञानवत्त्वसाधनेन शिथिलसामर्थ्यस्य सर्वज्ञत्वसाधने तादृशाश्रयान्वेषणे च हीनोत्कृष्टस्याश्रयो नास्तीति पक्षासिद्धिश्च । तत्त्वस्यैव सर्वज्ञत्वे सिद्धसाधनञ्च ।

महत्परिमाणतारतम्यस्याकाशादौ विश्रान्तिरिव बोधतारतम्यस्यापि क्वचिद्विश्रामो वाच्यो यत्र च स स सर्वज्ञ इति तर्कोऽपि मनोमोदक एव । अणुपरिमाणतारतम्यस्य परमाणौ विश्रान्तिरिवाल्पबोधतारतम्यस्यापि क्वचिद्विश्रामो वाच्यो यत्र च स सोऽल्पज्ञ इति सर्वज्ञपरिभाषाया इवाल्पज्ञपरिभाषाया अपि परस्या आपत्तेः । अल्पबोधविश्रान्तिपरामर्शमन्तरापि तत्कालीनाधिकबोधवत्पुरुषापेक्षया न्यूनबोधवति पुरुषेऽल्पज्ञव्यवहार इवाधिकाधिकबोधवति पुरुषे सर्वज्ञव्यवहार इति कल्पनया सर्वसामञ्जस्ये तारतम्यस्य हेतोस्सिद्धसाधकत्वस्योक्तत्वाच्च । कश्चिदल्पमास्वादते कश्चित्ततोऽतितरामास्वादत इति स्वादनादावपि तारतम्यं दृश्यते तेनैव हेतुना सर्वस्वादकास्तित्वानुमाने सर्वभुग्भुजोऽपि सिद्धौ प्रतिपलं प्रलयस्य गले पातात् सर्वासिद्धेश्च ।

स्वादशयनादिक्रियाया अवधेर्नियतत्वेनाहारादितारतम्यप्रदादृष्टस्यापि नियतावधिमतएव स्वीकारेण च सर्वभुग्भुक्तिसिद्धेः प्रलयस्य च नापत्तिः सर्वज्ञतात्वनन्तज्ञानदर्शनवत् आत्मनः सहजसिद्धो धर्म आवरककर्मप्रलये प्रतीयते आवरककर्मप्रलयोऽपि कस्याप्येव तपस्विसत्तमस्येति कस्क एव कदाचिदेव सर्वज्ञस्तदानीन्तनजनताप्रतिभाप्रमाण इदानीन्तनजनताकथाविषयः, तारतम्येन सर्वज्ञत्वानुमानन्तु तत्संभवप्रदर्शनपरमेवेति सर्वथा सर्वं समञ्जसमित्यप्यापातरमणीयम् । तादृशस्वादशयनादितारतम्यस्य सावधिकस्येव तत्तज्जातीयतत्तच्छरीरावच्छिन्नतत्तदात्मवृत्तिसंविद्विशेषस्यापि शरीरविशेषसमनियतस्यैव सावधिकस्याल्पाल्पेतरपरिमाणमात्रामात्रपर्यवसानसध्रीचीनस्य स्वीकारात् । चेतना-

लक्षणतया जीवात्मनामकिञ्चिज्ज्ञत्वस्येवाल्पज्ञलक्षणतया परस्परप्रतिपक्षितया च सर्वज्ञत्वस्यास्वीकार्यत्वात् । परिच्छिन्ननानात्मवादे त्वपरिच्छिन्नानन्तवस्तुविषयकज्ञान (दर्शन) वदात्मवार्त्ताया अपि तत्तन्मतपरिभाषामात्रपर्यवसायित्वात् । शरीरावच्छेदेनापि यावज्ज्ञान (दर्शन) प्रतिबन्धकात्ययस्वीकारस्येव यावदाहारान्तरायात्ययस्य यावद्वीर्यान्तरायात्ययस्यचासर्वसम्मतस्यापि स्वीकारेऽन्यतमामतसिद्धान्तातिरिक्तबाधकाभावात्पूर्वदोषास्तित्वतादवस्थ्यात् । तदानीन्तनजनताप्रतिभाप्रमाण इति रणनस्यापीदानीन्तनजनताकथामात्रप्रमाणकत्वात् । समसमयसदृशदेशसमानवेषसेविनां सर्वज्ञानां तदानीन्तनानामेव तदनुसारिणां च सर्वज्ञतास्पदप्रयुक्तविवाददर्शनात्तदानीन्तनजनताप्रतिभाप्रमाण इति हेतुविशेषणस्यापि विरुद्धत्वात् । ज्ञानतारतम्येन सर्वज्ञत्वानुमानं जीवात्मन्यपि तत्संभवप्रदर्शनार्थमित्युक्तेरपि पशुत्वेन शशके शृङ्गित्वानुमानं तत्रापि तत्संभवप्रदर्शनार्थमित्युक्तेस्समानत्वात् ।

अथ बहुषु संप्रदायेषु विसंवादासंभवादिदोषासंस्पर्शिशासनप्रणेतृतया स्वीकृतानां केषाञ्चित्तपस्विनामङ्गीकृता सर्वज्ञता त्वितरनरातिशाय्यसाधारणाधिकरणवृत्तितया न प्रमाणान्तरमुखमाकाङ्क्षते क्षतेरभावादित्यपि न परीक्षाक्षमम् । प्रोक्ताधिकरणता सर्वज्ञतासमनियतेत्यत्रैव तावत्प्रमाणाभावात् । तत्तत्संप्रदायशासनानामनादितायास्तैरेवाभिलप्यमानतया तत्प्रणेतृताया अपि सर्वज्ञस्यायुक्तत्वात् । शासनस्यासंभवादिदोषासंस्पर्शित्वेऽपि मानाभावाच्च । दृश्यमानस्य सर्वस्यासंभवेतिवृत्तस्य तादृशशासनसंभवत्वात् । सर्वप्रासिविसंवादस्य परस्परनिन्दानिलयकर्मसु सर्वपौरुषेयसंप्रदायेषु विशेषतः स्पष्टत्वात् । शासनं सर्वज्ञप्रणीतत्वाद्दोषास्पर्शि शासनस्य दोषास्पर्शित्वात्तत्प्रणेता सर्वज्ञ इति परस्पराश्रयस्यापि सर्वज्ञताप्रतिकूलत्वात् ।

'सर्वज्ञस्सुगतो बुद्ध'इत्यमरकोषात्सर्वमान्यात्सुगतस्य सर्वज्ञता तु प्रतीतप्राया न्यायवेदान्तादिदर्शनेऽपि च युक्तयुञ्जानरूपयोगिद्वयस्य सर्वज्ञापरपर्यायस्य हस्तगतामलकफलगोचरज्ञानसमानाव्यभिचारिभूतभविष्यद्भवद्यावद्वस्तुविषयकज्ञानवतो जीवन्मुक्तस्य च प्रसिद्धिरिति सर्वतन्त्रसर्वविज्ञपण्डितगणानुगृहीते सर्वज्ञे संशयोत्थानमसमीचीनमित्यपि न समीचीनम् । अमङ्गलस्यापि मङ्गलस्य ( माहेयग्रहस्य ) मङ्गलनामवदसर्वज्ञस्यापि सुगतस्य सर्वज्ञेति नामेति तन्मात्रेणैवान्वर्थकल्पनाया अप्रामाणिकत्वात् । शब्दानां व्युत्पत्तिप्रवृत्तिनिमित्तयोरन्य-

त्वस्यापि सर्वसम्मतत्वात् । युक्तयुञ्जानयोर्योगिनोरसत्यपि संयोगादिलौकिक-संनिकर्षेऽलौकिकयोगजप्रत्यासत्त्या व्यवहिताव्यवहितातीतानागतकतिपयाल्पभिन्न-त्ववस्तुविषयकप्रत्ययस्य सत्त्वेऽपि तयोः सर्वज्ञत्वे मानाभावात् । सर्वज्ञत्वेन तयोर्यत्रतत्रोल्लेखस्य स्तुतिरूपत्वात् । प्रागभावध्वंसाभावप्रतियोगिनोरतीतोऽती-तानागतयोर्वस्तुनोर्विशकलिततया वर्तमानसमयवृत्तित्वेन भानस्य मिथ्यात्वनिदा कल्पितयोर्योगिज्ञानं निर्विषयं, योगियोगमहिम्ना सर्वस्य वस्तुनस्सर्वदा सत्त्व-मिति पक्षयोर्द्वयोरपि योगिज्ञानस्य व्यावहारिकवस्तुविषयकत्वाद्योगिनोरसर्वज्ञत्वस्य स्पष्टत्वात् । सतो वस्तुनो व्यावहारिकस्यैव ज्ञानमसतस्तु तस्य योगमहिम्ना सन्नि-हितस्येत्यर्द्धजरतीयस्य त्याज्यत्वात् । अतुपतण्डुलादीनामङ्कुरजनकतावच्छेदक-राहित्येन स्थितेरिव जन्मान्तरजनकादृष्टराहित्येन स्थितेरेव जीवन्मुक्तावस्थेति संज्ञेति तादृशावस्थायास्सर्वज्ञत्वप्रयोजकत्वे तर्काभावाज्जीवन्मुक्तस्यापि सर्वज्ञत्वे सर्वसंमतप्रमाणाभावात् ।

ज्यौतिषशास्त्रज्यौतिषशरीरमणिमन्त्रौषधादिसहायवतामिव तपोजपोपवासादि-जनितातिशयवतामपि यावद्वस्तुविषयकबोधवत्त्वे न कोऽपि बाध इत्यपि न निर्बाधम् । ज्यौतिषशास्त्रस्य व्याप्तिग्राहकत्वेन तज्जन्यज्ञानस्यानुमितित्व-त्वात्, नष्टमुष्टिप्रश्नादौ व्याप्तिनिश्चयपूर्वकोत्तरस्य प्रसिद्धत्वात् । ज्यौतिषशरीरस्थो ज्ञानस्य दूरतरादिवस्तुगोचरस्य गृध्रदर्शनस्येव व्याघ्रवीर्यस्येव वा सृष्टिकर्तुः संकेत-रूपत्वात् । मणिमन्त्रौषधादेरपि ज्ञानोत्कर्षमात्रहेतुत्वात् । तन्त्रमन्त्राधिष्ठायकदेव-स्याप्यसर्वज्ञस्यैव स्वीकारात् । तपोजपोपवासादीनामपि प्रत्यवायपरिहारकत्वेन निरूपितानामुत्कर्षमात्राधायकत्वात् ।

अस्तु ज्योतिश्शास्त्रस्य व्याप्तिग्राहकत्वेन ज्ञानजनकत्वं तत्कर्तुस्तु प्रथमस्य ज्योतिर्विदो बोधस्य सर्ववस्तुविषयकत्वे न सन्देहस्तत्कृतदर्शनस्याद्भुतत्वादित्यपि नात्यद्भुतम् । आदिमज्योतिर्विदोऽपि ज्योतिर्वित्त्वादेवाधुनिकज्योतिर्वित्समानत्वा-ज्ज्योतिषश्च वेदमूलकत्वेनानादित्वात्तत्सादिमत्त्वाभावाच्च । ज्योतिषः सादित्वा-ग्रहस्य हीनज्ञानकार्यत्वात् । तत्त्वे वा प्रथमज्योतिर्विदस्स्वार्थानुमानत्वरत्वे ज्योतिश्शास्त्रस्यान्तर्भावसंभवात् ।

मन्त्रतन्त्रयन्त्रज्यौतिषादिदृष्टान्तेन न वयं सर्वज्ञतां साधयामोऽपितु क्रियमा-णातिशयापलापमेवापलपामो मन्त्रादीनां जडत्वेन सर्वज्ञताहेतुतास्माकमपि न संमता तपआदिना तु मनोमालिन्यं न्यून्यते जीवस्तु सर्वज्ञ एवेत्याशन

इत्यपि दुराशय एव । तारतम्यादिना सर्वज्ञसाधकप्रकरणे कृतोत्तरत्वात्, मन्त्रादीनामिव तपआदीनामपि जडत्वात्, मनोमालिन्यदूरीकरणे तपआदीनामिव मणिमन्त्रादीनामपि समानत्वात् । मणिमन्त्रादिसंभवातिशयो नियतावधिकः तपःप्रभृतिसंभवस्तु स निरवधिकोऽन्तिमावधिको वेति द्वयोर्भेद इत्यपि भ्रम एव । प्रमाणाभावात् । तपआदीनां नानात्वेन (नानाविधत्वेन) नियतानेकफलकत्वेन च सावधिकत्वात् ।

सर्वज्ञत्वेनाभिमतानामसर्वज्ञत्वेऽपि न प्रमाणमित्यपि कस्यचित्तापोपदेशः प्रतारणमेव । प्राकृतिकपुरुषावच्छेदेनासर्वज्ञतायाः प्रामाणिकत्वे तेषामप्यसर्वज्ञत्वात्, दुराग्रहे तु कस्यापि पामरस्याप्यसर्वज्ञत्वे मानाभावात्सर्वस्यैव द्वित्रादिव्यक्तिभक्तिमतस्सर्वज्ञताया आपत्तिसंभवात् ।

स्वतन्त्रमतयो विद्वांसः प्रत्यक्षानुमानप्रधानमाना मान्या एव तत्प्रणीत आगमस्तत्कृतानुकूल उपदेशोऽप्याश्रणीय एवेत्यपि कस्यचिद्वृथामोह एव । स्वतन्त्रमतयो विद्वांस इति वाक्यस्यैव व्याहतत्वात् । प्रमाणपरतन्त्रमतयो विद्वांस इति मतस्यैव सर्वविद्वत्संमतत्वात् । स्वतन्त्रमतयस्तु मनस्विन उन्मनसो विक्षिप्ता वेति प्रसिद्धेः सर्वत्राद्रियमाणत्वात् । अनुकूलोपदेशस्यैवाश्रयणीयत्वे सर्वज्ञादीनामनावश्यकत्वात् । अनाद्यविच्छिन्नपरम्परापरिपालितवेदादिसदागमपरित्यागपूर्वकपुरुषविशेषप्रणीतागमानां प्रामाण्यकल्पने कल्पनागौरवस्योक्तत्वात् ।

सर्वज्ञस्वीकारे सर्वदार्शनिकविद्वदैकमत्यमित्यपि प्राचीनपरम्परापरित्यागमूलकदौर्भाग्यमेव । "तत्र नैवं विशिष्टोऽपि पूर्वस्मादेष भिद्यते। तत्र हेतोरसामर्थ्यादन्यत्राप्यविशेषतः ॥ यत्सत्यं नाम लोकेषु प्रत्यक्षं तद्धि कस्यचित् । प्रमेयज्ञेयवस्तुत्वैर्बधिरूपरसादिवदित्यादि वदद्भिर्दार्शनिकविद्वन्मूर्धन्यैर्मीमांसासूत्रवार्त्तिकादिकारैर्भट्टपादादिभिः, परमात्मन्येव सर्वज्ञविशेषणं मन्यमानैर्नैयायिकैः, जगति अचिन्त्यरचनारूपस्येति विशेषणं ददद्भिर्वेदान्तसूत्रभाष्यादिकारैः श्रीशंकराचार्यादिभिश्च जीवात्मनां सर्वज्ञत्वे स्वसम्मतेः प्रतिकूलताया आविष्कृतत्वात् "तस्मादनुष्ठेयगतं ज्ञानमस्य विचार्यताम् । कीटसंख्यापरिज्ञानं तस्य नः कोपयुज्यते । हेयोपादेयतत्त्वस्य साभ्युपायस्य वेदकः ॥ यः प्रमाणमसाविष्टो नतु सर्वस्य वेदकः ॥ दूरं पश्यतु वा मा वा तत्त्वमिष्टं तु पश्यतु ॥ प्रमाणं दूरदर्शी चेदेते गृध्रानुपास्महे" इति कथयतां बौद्धपण्डितमतल्लिकानां धर्मकीर्त्तिप्रभृतिमहत्तराणामपि सर्वज्ञ उदासीनत्वात् । सर्वज्ञसिद्धये बहुधा धावद्भिरपि दिगम्बरवार्त्तिककारैः सर्वज्ञः सिध्यति

न वा सर्वज्ञाभावोऽपि न सिध्यतीति "सर्वज्ञो नायमित्येतत्पुनर्ज्ञातुं न शक्यते । नास्तिकैः परचेतांसि साक्षात्कर्तुमशक्तकैः ॥ सर्वत्र सर्वदा कश्चित्सर्वज्ञो नेत्यपि स्फुटम् । सर्वात्मज्ञानविज्ञानरहितैः कथ्यते कथम्" इत्यादिवार्तिकैः प्रतिपादयद्भिः क्रुध्यद्भिः सर्वज्ञे विरोधः सर्वज्ञाभावसाधनं चैतद्द्वयं भिन्नमित्यनवधारयद्भिरन्ते सर्वज्ञसाधने आत्मनोप्यसामर्थ्यस्यैव व्यक्तीकृतत्वात् ।

नामूला प्रसिद्धिरिति न्यायपराधीनेन कोऽपि प्रामाणिकस्सर्वज्ञस्तत्कल्पो वा कल्पयितव्य एवेत्यन्येऽपि सर्वज्ञास्सन्त्वेव का कस्य हानिरित्यपि कदर्णोपदेशः सर्वाव्यवस्थास्थानमेव । यदीयसंकेतकिंकरः कलमादिनानाविधधान्यराशिः सजातीयानेकसन्तानानुवर्तनान्न विरमति । यदीयविलोकनलालिता ललनेव भगवती वसुमती गणनातिगामिगुणभेदं विभज्य भावयति भूचरखचरजलचरान् नानाजातीयान् मनुष्यपशुपक्षिवृक्षप्रभृतीन् भावान् । यदीयचक्षुस्सन्दतातपर्यपरिचितौ सूर्याचन्द्रमसौ पाचयतः पाचकाधिपती इवोच्चावचान् संख्यातिशायिनो रसालादिभी रसान् । यदीयहुंकारभीतो भृत्य इव जठरवह्निः प्रमदोदरदरीनारीचणकादिद्रव्यासक्तचर्वणापिपासितोपि न पिबति पार्श्वतरवर्तिनमपि वीर्यबिन्दुम् । यदीयशिल्पचातुर्यमाचामति अनल्पशिल्पिपाण्डित्यम् । यदीयपौरुषभूतः कालोऽनिरूपणीयेनैकेनैव व्यापारेण वायुनेवोद्भावयति परिभावयति च भावान् । यश्च पितेव पाति परीक्ष्य कर्मक्षेत्रदीक्षितान् । हिंसक इव हिनस्ति तस्करप्रकृतीन् । यश्च सर्वाश्चर्याचार्यो, यश्च यावत्तारतम्यविश्रामभूमिर्यमाराध्य विरोधा धवलायन्ते स भगवानणोरणीयान्महतो महीयान् सर्वव्यापकोऽद्वितीयस्सर्वज्ञस्तत्कल्पाश्च मन्वादयः कल्पिता एवेति नामूलन्यायपराधीनताया एवाभावात् ।

सर्वशक्तिमत्तया कौतुकितया च प्रतिपादितप्रवर्तितमायिकनियमप्रवाहातिरेकिकर्मप्रवृत्तपुरुषापसदव्यतिरेकहेतुकतत्तत्कालावश्यकजनताप्रतिग्राहितनियतकार्यकारणभावादिभावजातानुग्राहककतिपयमत्स्यकच्छपादिशरीराणां धारणेऽपि विस्मृतेरभावाच्छरीराणां नेपथ्यस्थानीयतया नानावतारवादेऽपि सर्वज्ञस्य सर्वेश्वरस्य नाद्वितीयत्वे विवाद इति सिद्धमेतद्यन्महामतयोऽपि व्याप्यैव प्रकाशन्त इति । एवञ्च तत्तत्पुरुषसरणरूपा तत्तत्पुरुषनाम्ना प्रसिद्धा नियतजनतादतास्सर्वेऽपि लौकिकसंप्रदाया अवैदिका देशवैदिका वा प्रायोऽवैदिककर्मप्रियत्वात्साक्षात्परम्परया वा वर्णधर्महासहेतुत्वात्परस्परनिन्दादिना वैमनस्यसंपादकत्वादनुपादेया एव । संप्रदायविशेषणीभूततत्तत्पुरुषे सर्वज्ञबुद्धिरीश्वरबुद्धिर्वा धैर्यमाधाय संशोधनीयैव । वैदिककर्मादरणे वर्णव्यवस्थायाः शिथिलीकृतायास्तत्त्वप्र-

कारणे चन साधेय एव। भारतस्य गौरवं प्रेयःश्रेयश्च वर्णधर्मवैदिककर्माधीनमेव । अन्यत्सर्वं स्वाहाकारस्वधाकारविकलं गानवादनाद्याडम्बरप्रधानमनुष्ठानं जलताडनमेव । गौतमोद्योतकरादिन्यायपण्डितैर्जैमिनिशबरकुमारिलादिमिर्मीमांसानिष्णातैर्व्यासशंकरादिमिर्वेदान्तविद्भिर्निजनिजकाले महतोऽपायात्पालितस्यापि वैदिकतत्त्वस्य ह्रासो ह्रस्वैरेव पुरुषैर्विधीयते इति पण्डितैरपि शोच्यमेव । विदुषां कुम्भकर्णनिद्रा सर्वस्वेन भारतस्य प्रेयःश्रेयश्च प्रतिबध्नाति । दौवारिको जागर्तीति गृहपतिः शेते दौवारिकस्तु द्वारि स्वपिति किं नायं विश्वासघातः ?। विचारत्रयीकर्तृभिस्स्वामिभिश्री १०८ कृष्णानन्दसरस्वतीचरणैस्तु यथास्वकीयाधिकारो रक्षितस्तथान्यैरपि समर्थैर्विद्वद्भिरधिकृतिः स्वकीया रक्षणीयैव ।

यद्यप्येतेषां स्वामिपादानामितिवृत्तज्ञानं विदितैतद्योग्यताज्ञानानां नातीवोपयुज्यते तथापि कालोऽयमितिवृत्तकौतुकीति तत् स्वामिपादावसानसमये सुरतवास्तव्येन महाराजगौंडलाधीश्वरभूतपूर्वप्रधानपुरुषेण श्रीलालशंकरशर्मतनुजन्मना **श्रीहरिशंकरशर्मणा द्विवेदोपनाम्ना** नागरविदुषा "गुजराती"नामकसाप्ताहिकपत्रे प्रकाशितं सनस्य प्रकाश्यते ।

श्रीकाशीस्थकैवल्यधामस्वामिनः स्वामिन इव सरस्वत्याः श्री १०८ कृष्णा**नन्दसरस्वतीस्वामिनः** १९६५ पञ्चषष्ठ्युत्तरैकोनविंशतिशततमे वैक्रमेऽब्दे मार्गशीर्षशुक्ले द्वितीयायां तिथौ भौमे दिवसे दिवसेऽशीतिवर्षदेशीय आयुषि ब्रह्मभूयंगिताः। प्रवृत्तेचैतद्वृत्ते नगरे काशीवास्तव्यैस्सर्वैरेव संस्कृतविद्वद्भिर्दुःखितैरेकमुखैः सखेदमेतदुक्तं तदा यदद्यास्तंगतो भारतभारतीप्रकाशनपण्डितो हा पण्डितमार्तण्डः । संन्यासिकजीवात्मनानेन महात्मना जन्मना **कर्णाटक**विषये **पम्पा**नामा ग्रामोऽनुगृहीतः । पिताचास्य **रामनामा** जयापरनामा **जानकी** चासीज्जननी । अस्यैव महात्मनः पितामही कुमशीकरराजपूजितस्य ब्राह्मणवरेण्यस्य काश्यां कृतमहायागस्य **रायभट्ट**शर्मणः पितामहस्यावसानसमये विरहमसहमाना शरीरमनुगमनेन त्यक्तवती । **गुरुचरित्र**नायकस्य दत्तात्रेयावतारस्य भगवतो **नृसिंहसरस्वतीस्वामिन**श्चतुर्षु शिष्यमहत्तरेषु मान्योऽन्यतमः स्वामी **सायंदेव**नामा स्वामिपादस्यास्य पूर्वजोऽभवत् । ईदृशैस्सिद्धशतसहस्रैरङ्गीकृतस्य जन्मना तत्कुलस्य ख्यातिर्योगावरूढयोगिजन्माकरतयाऽद्यापि गीयते तत्र देशे । अद्भुतस्मृतिः कुशाग्रमतिरयं स्वामी संस्कारस्य शुद्धतयाऽसमाप्त एव चतुर्दशे वर्षे ऋग्वेदं सिद्धान्तकौमुदीं चाधीत्याधिकाध्ययनाभिलाषावशीभूतो वात्सल्यं पित्रोर्बालस्य मे दूरदेशनिवासं कदाचित्प्रतिबध्नीयादिति तयोराज्ञामनादायैव

मनोरथरथारूढो लब्धेन सार्थेन समं वाराणसीमासाद्य निजग्रामजन्मनो द्विजन्मनः काशीवास्तव्यस्य कस्याप्याहिताग्नेर्गृहे कृतवसतिः सर्वतन्त्रस्वतन्त्राणां स्थविराणां **श्रीकाशीनाथशास्त्रिणामनुमत्या** पूर्वतो निश्चितेभ्यस्सङ्कल्पाध्यापकेभ्यः **श्रीराजारामशास्त्रिभ्यो** राजकीयमहाविद्यालयप्रधानाध्यापकेभ्यस्सह सतीर्थ्यैर्**बालशास्त्रि( रानडे )राजारामशास्त्रि( बोडस )**प्रभृतिभिरध्ययनमारभत । बुद्धेः कुशाग्रतयाल्पेनैव कालेन संपादितं पाण्डित्यं विचारत्रयी सुनिपुणं प्रकटयतीति सुधोदधिमाधुर्याय शर्करामुष्टिनिक्षेपो विक्षिप्ततैव । विदितेष्वपि वेदवेदाङ्गादिषु तन्त्राभ्यासमन्तरा परतन्त्रैव सर्वतन्त्रस्वतन्त्रतेति तन्त्रपरतन्त्रचित्तस्तन्त्राचार्यादपरशिवादिव **शिवानन्दगुरोः** शापानुग्रहावधिसिद्धेरगाधं बोधं तन्त्रेऽपि लब्धवान् ।

अथ पर्याप्तेऽध्ययने वादादौ दीक्षितो महाविद्यालयेऽध्यापकत्वेन नियोगाय यतमानाय गुरुवर्याय गुरोरपरस्य दास्य उदासीनोस्मीत्युक्त्वा पाण्डित्यफलं चातुर्यमूलं देशाटनमिति मत्वा काश्मीरादौ पर्यट्य विजयी भूत्वा पुनरपि काशीं प्रतिनिवृत्य श्रुतवान् यत्केनापि लोकचतुरेण रामानुजाचार्येण योग्यावसरमासाद्य सरलस्वभावा बालशास्त्रिसदृशा अपि विद्वांसोऽनुनीता नतिप्रियतयैव च तैस्तदीयनिबन्धोपि हस्ताक्षरैरनुगृहीतश्चेति । अद्वैतमेव मतं श्रुतिसम्मतमनुभवानुगृहीतं । पण्डिता अप्येतेऽद्वैततत्त्ववेदिनः किमिति **रामानुजस्य** मायाजालमायाता इति जातकौतुकस्तन्निबन्धखण्डनरूपमपरमेकं निबन्धं विधाय गुरुभ्योऽदर्शयत्तेऽपि च तदानीन्तनमोह एवास्माकमित्यवदन् । निबन्धश्च सर्वसम्मत्या प्रकाशतामानीतो मृतश्च रामानुजाचार्यस्य चातुर्यप्रपञ्चः । इतश्च गच्छति काले चिरयति तनये जनश्रुत्या श्रुतसुतानुत्तरपाण्डित्यौ पितरौ किमित्यद्यापि नायाति कृतकृत्योपि हृदयकौस्तुभमणिरस्माकं चूडामणिश्चूडामणिस्सुरसरस्वत्या इति चिन्तोत्साहितौ गङ्गास्नानविश्वनाथदर्शनकामौ काशीमायातौ गतौ च परां तटीमानन्दस्य पश्यन्तौ मुखमात्मनन्दनस्य ।

अथ स्थित्वा तत्र कतिचिद्दिनानि कृत्वा देवदर्शनपञ्चकोशीयात्रापिण्डदानादिकृत्यानि दम्पती परस्परमामन्त्र्य तनुजमाकार्याचोचताम् । **वत्स चूडामणे** जातमात्रेणैव कुलचूडामणिना त्वया न केवलं वयमेव देशोऽपि स्तुतिपात्रतां नीतः । अतः परमेक एवावशिष्यते मनोरथोऽशिथिलोऽस्माकं यदिच्छामो द्रष्टुं पत्नीद्वितीयं त्वाम् । पण्डितमणिश्चूडामणिस्तु पाण्डित्यस्य परिपक्वतया

संस्कारस्योद्बुद्धतया कर्तव्यस्य भूरितया संसारस्य समाप्तप्रायतया वैराग्यस्य सर्वाङ्गसुन्दरतया मानससंन्यासस्य प्रथमत एव धृततया हस्तौ संयोज्य पादयोर्निपत्यानुजानीतां पूज्यौ प्रव्रज्याया इत्यजरीगृह्यत पितरौ । अहो हतदैवाहं कथं मङ्गलालोकनलालसा वत्सस्य संन्यासं द्रक्ष्यामि मोक्ष एव संन्यासदीक्षायाः फलं स च काशीक्षेत्रे मरणमात्रसुलभः कृतं वृद्धाया ममाधिककालक्षेपेण सन्निहितौ भवतः पतिः पुत्रश्चेत्यादिचिन्तयन्ती **जानकी** माता तु पञ्चत्वेन प्रपञ्चमत्यजत् । पिता **रामोऽपि** वत्स ! अनिवार्यस्ते त्यागगोचरो विचार इति न प्रतिबध्नामि त्वं परन्तु त्यागिन्यपि त्वयि पुत्राभिमान इत्याज्ञापयामि यद्यवसरं लभस्व तर्ह्येकस्य योग्यस्य ग्रन्थस्य देवमन्दिरस्य च निर्माणकृते यतेथाः इति पुनः पुनराज्ञाप्य स्वदेशं प्रति निवृत्तः ।

काशीश्वरचूडामणिश्चूडामणिरपि द्रोणगिरिगुहागृहात्स्वामिश्री १०८ **सच्चिदानन्दसरस्वती**चरणात्संन्यस्य महामार्याद्युपद्रवनिवृत्तिप्रभृतिलोकोत्तरचमत्कारेण संभावितशिष्यसंपदासादनेन सर्वातिशायिसरस्वतीप्रसादेन शिश्नोदरपरायणचार्वाकोच्छृङ्खलनीचनवीननास्तिकगणपराजयकरणेन च भगवद्भाष्यकार**शंकराचार्यश्रियं** बिभ्रत्स्वामिश्री १०८ **कृष्णानन्दोऽ**भवत् । सर्वथा शान्तोऽप्येकान्तनिवासप्रियोऽपि **श्रीकृष्णानन्दसरस्वती**स्वामिपादः संन्यासिनो निर्वृत भूषणं भ्रमणमेव तपः आस्तिक्यस्य नानाविषयवासिनास्तिकलोककलङ्कितास्तिक्यतया प्रसरतः पाषण्डस्य मायायां पतित्वा क्लिश्यतां तत्रभवतां **गौतमवसिष्ठयाज्ञवल्क्यादि**तनुजन्मनां ब्राह्मणकुमाराणां, **मनुनलयुधिष्ठिरादि**सन्ततीनां **रामकृष्णादि**जन्मनां विष्णुनाप्यनुगृहीतानां भवतां क्षत्रियवीराणां समाधिसाधुप्रभृतितनुभुवां जगज्जीवनव्रतानां श्रीमतां वैश्यमहाशयानां द्विजातीनां, विश्वकर्ममातलिचन्द्रगुप्तादिजातानां भारतभवनस्तम्भभूतानां तत्र दीर्घायुष्मतां शूद्रमहोदयानां संकरीभवनोन्मुखानां स्वधर्मोपदेश एव देशसेवेति मत्वाऽनियतनिवासेनैव दिवसान्यत्यवाहयत् । अतएवच नाशक्नोत्परमातिमहतो निबन्धस्य निर्माणे प्रयतितुम् । शरीरावसानः सन्निहित इति जानन् स्मरंश्च पितुरादेशमागृहीतश्च काशीनिवासाय काशीवास्तव्यैः पण्डितप्रकाण्डैः, परमप्रियाभ्यां परिणतोपदेशाभ्यां राजपुरुषमतल्लिकाभ्यां नागरब्राह्मणाभ्यां गुर्जरराजनगरसूर्यपुरा(सुरत)लङ्कारभूताभ्यां द्विवेदोपनाममहामहिमलालशंकराङ्गजन्मभ्यां **श्रीकृष्णशंकर-हरिशंकराभ्यां** कारिते काशीकैवल्यधामनामनि मन्दिरे विच्छिन्नमिव पश्चमोर्ध्वाम्नायपीठं प्रतिष्ठाप्य तमेव बहुधाध्यतिष्ठत् । शिष्येणापि सता

संसारविरसता सम्यगवगता न मया पुनर्गुरुणापि जीर्णेनेति भावयन्निव राजारामशास्त्रिणोऽपि संन्यस्ता वृद्धत्वात्पूर्वमेव ब्रह्मीभूताः । पूज्यपादाः **श्रीकृष्णानन्दसरस्वतीस्वामिनस्तु** पश्चात् । एतेषां महामहोपाध्यायरामानुजाचार्यपण्डितस्वामिश्रीराममिश्रशास्त्रिभिस्समं शास्त्रार्थस्तत्र मिश्राणामपकर्षे, उचितस्यापि पक्षस्य यस्मिन्विपक्षे टोपरेराजारामशास्त्रिभिर्यैतमानैरपि जात उत्तराभाव आदीन्यलोकसामान्यानि शुभकृत्यान्यद्यापि श्रीकाशीक्षेत्रे वर्त्तमानान्येव सन्ति । स्वामिपादकृता अपरेऽपि सन्ति निबन्धाः परन्तु ते तादृशानां हस्ते निपतिता ये तैरेव पुस्तकैरंशतः परिवर्त्तितैर्निबन्धारो भवितार इति ते नोपलब्धा इति न मुद्रिताः । मुद्रिताश्चैते ग्रन्थाः श्रीहरिकृष्णद्विवेदसंग्रहालयादुपलब्धाः। विचारत्रयीमुद्रणे बन्धने च जातः सर्वो व्ययः श्रीलालशंकरद्विवेदपुत्रेण **श्रीप्रणवशंकरेण** सोढः । संग्रहस्य विचारत्रयीत्युचितं नाम **श्रीहरिशंकरद्विवेद**रुचिकृतम् । आत्मविचारपराणां केषाञ्चित्स्तोत्राणां ब्रह्मविचारे निधातव्यानां व्यवहारविचारे समावेशो विषयस्य मिश्रत्वान्निबन्धानां च विलम्बेन तथात्वेन विज्ञातत्वात् । निबन्धानां सङ्क्रमनेन पदविभागकरणेन शुद्धिसंपादनेन च **पणशीकरोपनामभि**र्निर्णयसागरसर्वस्वैः **श्रीवासुदेवशास्त्रिभि**र्विचारत्रयीप्रकाशकोऽनुगृहीत इत्यत्र तु नास्ति सन्देहलेशः । विचारत्रयीप्रकाशकेन श्रीकृष्णशंकरद्विवेदतनुजन्मना **श्रीप्रणवशंकरशर्मणा** च पण्डितसंसारः ऋणीभावित इत्यपि वक्तव्यं प्रशंसासम्पर्कशून्यमेव । निबन्धानां संग्रहेण **श्रीहरिकृष्णद्विवेदे**नापि सीमातिशायि श्रेयः संपादितं यतश्शतशो नास्तिक्याद्रक्षिता अपेक्षावन्तः । निबन्धानां गहनत्वान्मम मतेश्चातिन्यूनत्वात्संशोधन आहितेऽपि यत्ने मूले टिप्पने चाशुद्धयस्सन्तीति जानामि तत्कृते सहृदयपण्डितेभ्यः क्षमाभ्यर्थनैवार्थसाधिकेति तदर्थं विदुषो नमस्कुर्मः । टिप्पने कृता बाललीला पण्डितानां प्रमोदायेति तत्र प्रामाण्यप्रत्ययो नानेतव्यो गुरुवरैरिव मित्रप्रवरैरपि । पण्डिता व्यवहारविदो न भवन्ति दयानन्दादिकुतर्कस्य पुरतः स्थातुं च न शक्नुवन्ति शुष्कशास्त्रार्थेन कालं क्षिपन्तीत्याद्यनेककलङ्कमार्जनकामैरवश्यमेव विचारणीया विचारत्रयीत्यन्तिमं निवेदनं सुरसरस्वत्युपासकेषु ।

स्नेहं महेशो विदधातु वृद्धौ धर्माध्वनो धीर इलातलेऽत्र ।
चाण्डालचार्वाकचमूविभीतं पायात्स कृष्णः पुनरात्मतत्त्वम् ॥

२३।४।२१ बंबई.

रमापतिमिश्रः ।

## विचारत्रयीमुद्रणमुदितमहामहोपाध्यायन्यायवेदान्तचार्यपरीक्षोत्तीर्णसर्वतन्त्रस्वतन्त्रद्राविडपण्डितश्रीलक्ष्मणशास्त्रिसाक्षादनुभूतमहितस्वामिपादेतिवृत्तम्।

पुरा किलाऽस्मिन् भारते वर्षे समभूवन्ननेक आचार्या यैः स्वीयतपःप्रभाववशेन दिव्यज्ञानसम्पदा चाऽसत्पथमुपेयुषां भारतीयानामज्ञानान्धकारं दूरीकृत्य सन्मार्गप्रदर्शको ज्ञानालोको ग्रन्थरूपेण विरचितः। सम्प्रति तादृशानामाचार्याणामभावेन नास्तिकानां प्रादुर्भावेण च सनातनधर्मसम्प्रदायोऽयं सर्वथा विलोपमेव समुपयातः। यद्यपि नूतनरीत्या मुद्रणादिसौकर्येण बहवो ग्रन्था अधुनातनैः शिक्षितैः पण्डितैश्च प्रणीताः संमुद्यन्ते प्रकाश्यन्ते च, तथाऽपि प्रणेतॄणां सनातनसम्प्रदायलब्धज्ञानवैकल्यान्निर्मितैर्ग्रन्थैर्न कथञ्चिदपि लोकानां संशयालूनां संशयापनोदनं दृश्यते। यद्यपि च व्यासाद्यैर्ऋषिभिः प्रत्नैः शङ्करादिभिराचार्यैश्च निर्मिताः षड्दर्शनपुराणभाष्यप्रभृतयः सम्प्रत्यपि विराजन्ते, तेषां परिशीलनेन सर्वथा हृदन्तरवर्तिमोहनिरासपूर्वकं विशदाभं ज्ञानं समुदेतीत्यत्र नाऽस्ति सन्देहलेशोऽपि, तथाऽपि कलिकालप्रभाववशाद्दैवदुर्विपाकाद्वा पाश्चात्यविद्यापरिशीलन एव बद्धपरिकराणां पाश्चात्यतत्त्वज्ञानमेव ज्ञानमिति च मन्यमानानामधुनातनशिक्षितानां निसर्गत एव पूर्वोक्तेषु ग्रन्थेषु अनादरेण प्रवृत्तिर्न भवति। किं बहुना, संस्कृतभाषाज्ञानमपि विरलतमं संवृत्तम्, दूरेतरां प्राचीनग्रन्थतत्त्वज्ञानलाभः। तदेवमनवरतमनार्यभाषापरिशीलनेन पाखण्डिजनसंसर्गेण च सनातनधर्मप्रत्यनीकानामुपदेशानां व्याख्यानानां च श्रवणेन बुद्धिर्नितरां स्वीयधर्मेष्वास्थामलभमानाऽनार्यधर्मेष्वेव पुरुषान् प्रवर्तयतीति सर्वेषां नः प्रत्यक्षमेव। एवं सत्यपि केचित् केचिदीश्वरानुग्रहेण जन्मान्तरसञ्चितसुकृतवशेन सत्सङ्गमासाद्य के वयं, कोऽस्माकं धर्मः, कथमस्य सनातनत्वं, किंचाऽत्र प्रमाणं, कथं वा तस्य प्रामाण्यं, कस्मै प्रयोजनाय च स धर्म आश्रयणीय इत्यादिरूपेण सन्दिहते। नानाविधदुस्तर्कोद्भावितकुयुक्तिपरिपूरितमनसां सङ्क्षेपेण सारल्येन च सकलदुर्युक्तिनिरासपूर्वकं धर्मतत्त्वस्योपदेशकं मनोग्राहि ग्रन्थरत्नं प्रायो विरलप्रचारमेव, तथाऽपि सम्प्रतीदमेवाऽऽमोदस्थानं, (यत्) श्रीकाशीकैवल्यधामनिवासिनां ब्रह्मभूयंगतानां श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीस्वामिपादानां कृतयो विचारत्रयीनाम्ना सम्प्रति प्रकाश्यन्ते। एताः कृतीर्निपुणतरं विभावयतामत्रत्यविपश्चितां प्रायः सर्वेषामेव भवन्ति माद्यन्ति चित्तानि। पाश्चात्यशिक्षासमादरबद्धचेतसोऽपि विलोक्य परिशील्य चैतान् ग्रन्थान् निभ-

र्मेषु शिथिलितास्था बहवः सन्मार्गं प्रपेदिरे । किमधिकेन । पर्याप्तं त्वेतासां कृतीनां वैशिष्ट्यख्यापनायेदमेव यत् काशीस्थविद्वन्निकरसमादृतत्वं नाम । काशी हि भारतवर्षीयनिखिलप्रदेशेभ्योऽपि विद्यागौरवेणातिरिच्यते । तत्रत्यैः पण्डितप्रकाण्डैः समादृतश्चेद्ग्रन्थः, भारतवर्षीयैः सकलैरपि विद्वद्भिः समादृतप्राय एव । तत्राऽपि यस्मिन् काले स्वामिपादैरेते ग्रन्था निर्मितास्तदानीं काश्यां ये किल पण्डिता विरेजिरे, तेषां ज्ञानमाहात्म्यमनुपममेवाऽऽसीत् । न सन्ति तादृशाः पण्डिताः सम्प्रत्यपि । तैश्चेत् सानन्दं प्रशंसिता एते ग्रन्थास्तदा ग्रन्थानामेषां वैशिष्ट्यमस्तीत्यत्र नाऽस्ति सन्देहलेशः । स्वामिपादानां लेखनप्रणाली युक्तिमत्स्पष्टबह्वर्थी हृदयग्राहिणी चाऽऽसीदित्यत्र नाऽस्ति विशेषतो वक्तव्यम् । तेषां वाक्चातुर्यमप्यनितरसाधारणी श्रोतृजनमनोहारिणी आसीत् ।

एकदा हि काश्यां ब्रह्मघट्टे रामदुर्गकरनिर्मिते शिवमन्दिरे निवसद्भिः स्वामिपादैश्चातुर्मास्यसमये श्रोतृजनानुरोधेन योगवासिष्ठरामायणं प्रत्यहं व्याख्यातुमारब्धम् । तदानीमिदानीन्तनव्याकरणशास्त्रपरिष्करणप्रणाल्या आविष्कर्तारः पाणिनिपतञ्जलिसदृक्षास्तत्रभवन्तः कालेकरोपाह्वश्रीराजारामशास्त्रिणः स्वामिपादानां गुरवोऽपि रथ्यायां स्थित्वा गम्भीरं तेषां व्याख्यानमशृण्वन् । शृण्वन्तश्च व्याख्यानं महान्तं प्रमोदमनुभवन्तो गुरोरपि मे नाऽस्ति तादृशी वाग्मिता दर्शनशास्त्रपरिज्ञातृत्वं वेति सर्वेषां पुरतो भूयसीं प्रशंसामकुर्वन् । तदारभ्य च स्वामिपादानां विसृत्वरीं कीर्तिमाकर्ण्य नानादिग्देशेभ्यो बहवो जिज्ञासवः काशीं समागत्याऽन्तेवासित्वमासाद्योपदेशश्रवणादिना स्वजीवनमकृतार्थयन् ।

एते च प्रत्यहं सायं मठाद्बहिर्निर्गत्य विश्वेश्वरादिदेवतादर्शनं विधाय सायाह्निकमनुष्ठातुं गङ्गातीरं गच्छन्ति स्म । तत्राऽपि अनेकैर्भक्तैः सह विचित्राः कथाः प्राचीनाचार्यचरितानि च श्रावयन्तः श्रोतृजनमनांस्यानन्दसागरे निमज्जयन्त इव सकललोकस्पृहणीयतां समासादयन् । एकस्मिन् दिने नानाविधाः कथाः कुर्वन्तो विष्णुसहस्रनामस्तोत्रान्तर्गतं 'अमानी मानदो मान्यः—' इति श्लोकं तथा व्याचख्युः, येन शृण्वतां जनानामस्माकं चाऽनिर्वचनीय आनन्दः समुदभूत् । आसीच्च विस्मयः, अहो एतेषां कीदृशी तत्त्वग्राहिता ? तदा ते हि इत्थमवदन्—'भगवतः श्रीविष्णोरेतानि नामानि तत्तदाचरणप्रवृत्तिनिमित्तकानि लोकानामुपदेशरूपाणि । तथाहि भगवान् विष्णुः स्वयममानी, यो हि महर्षेर्भृगोः पदाघातं वक्षस्यविगणयन् महर्षेः पादयोः कदाचित्कठोरवक्षःस्थल-

संवहनेन व्यथा तु न समुत्पन्ना स्यादिति मत्वा हस्ताभ्यां संवाहनमकरोत्, अनेन तस्याऽमानित्वं प्रकटीकृतम्, महर्षेः प्रसादनेन मानदत्वमपि स्फुटीकृतम्, अत एव श्रीमान् नारायणो लोकानां मान्योऽभवत्, सा च मान्यता लोकस्वामित्वरूपेण क्रमेण वर्धमाना त्रिलोकप्रभुत्वे पर्यवसन्ना। अनेन चाऽऽचरितेन दर्शितप्रायेण मानदत्वेन चोत्तरोत्तरं हेतुहेतुमद्भावमापन्नेन लोका इदमनुपदिश्यन्ते, यो हि स्वयममानी सन्नन्येषां मानदः स्यात् सोऽवश्यं मान्यो भवति। स च क्रमेण मान्यतायाः परां काष्ठां त्रिलोकस्वामित्वपर्यवसायिनीमनुभवति यतो व्यवहारदशायामैतादृशैश्वर्यकामेन स्वयममानिना परेषां मानदेन च भवितव्यमित्युपदिश्यते।' एवमेव प्रत्यहमपूर्वं तत्त्वं श्रोतृश्रुतिमनोहरमनुश्रावयन्तो महाराजे समवेतानां जिज्ञासूनां ज्ञाततत्त्वानां च परिव्राजकपरिवृढानामन्येषां च गृहस्थानां मनांसि समाकर्षयन्। एवंविधानां पुण्यचरितानां महात्मनामैहिकलोकपरित्यागः कस्य वा सचेतसस्तापाय न भवेत्? महदेव शोकस्थानम्। एवमपि चिरसञ्चितं ज्ञानं ग्रन्थरूपेण तैरेव महात्मभिः समुपनिबद्धं येन कथंचिदाश्वासमेष्यन्ति लोकाः, तावताऽपि स्यामाम कथंचिदपि कियत्यपि महतां गुरुजनत्रुटिपूर्तिरित्यालोच्य गुर्जरदेशान्तर्गतसुरतनगरवासिभिस्तच्छिष्यैर्धनाढ्यैः प्रणवशङ्करकृष्णशङ्करप्रभृतिभिः स्वीयद्रव्यव्ययेन विप्रकलितान् सर्वान् ग्रन्थानेकीकृत्य मुम्बापुर्यां निर्णयसागरयन्त्रालये मनोरमैः सीसकाक्षरैर्मसृणेषु भास्वरेषु च पत्रेषु संमुद्र्य यो महानुपकारः साधितो जिज्ञासूनां, तदर्थं तेभ्योऽनेकान् धन्यवादान् वितरामः। प्रार्थयामश्च श्रीजगदीश्वरं, सर्वदैवमेव धर्मकार्यमनुतिष्ठन्तो लोकानामादर्शभूताश्चिरंजीव्यासुरिमे। एते च ग्रन्थास्त्रिधा विभक्ताः—केचन सकलदर्शनललामभूतं वेदान्तदर्शनमाश्रित्य तदीयगूढार्थानामावरणेन बोधप्रदाः, केचन गुर्वादयुपदेशपूर्वकं व्यवहारतत्त्वस्य सम्यक्परिष्कर्तारः, अपरे च धर्मविषयमधिकृत्योपदेशपराः, इति मुमुक्षूणां व्यावहारिकाणां धार्मिकाणां चाऽत्यन्तमुपादेयाः। एतान् ग्रन्थान् विमत्सरा विद्वांसः सहृदयाश्च सम्यक् परिशील्य ग्रन्थकर्तॄणां स्वामिपादानां चिरसम्भृतं ज्ञानामृतमास्वादयन्तो मुद्रणादिना प्रचारकाणां परिश्रमं सफलयन्त्विति भूयोभूयः साञ्जलिबन्धमभ्यर्थयामः।

विदुषामनुचरः

श्रीकाशी।
६-५-२१

( महामहोपाध्यायः ) श्रीलक्ष्मणशास्त्री द्राविडः।

## विचारत्रयीविषयानुक्रमणिका।


| विषयः | पृष्ठं |
|---|---|
| **अथ ब्रह्मविचारः १** | |
| १ गीतासारोद्धारः ... | १ |
| २ चतुःश्लोकीगीतारहस्यम्... | ५ |
| ३ भगवद्गीतैकदेशपरामर्शः | ६ |
| ४ गीतापरामर्शः ... | १० |
| ५ स्वानुभूतिविलासः ... | १४ |
| ६ अद्वैतसाम्राज्यम् ... | २६ |
| ७ शास्त्रकृतप्रकाशः ... | ६३ |
| ८ तिमिरोद्घाटनम् ... | ७१ |
| ९ अनुत्तरसिद्धान्तपरामर्शः | ७८ |
| १० मोक्षमीमांसा ... | ९४ |
| ११ कैवल्यगाथा ... | ९६ |
| सर्वशास्त्रार्थसंग्रहः ... | ९६ |
| सर्वशास्त्रार्थानुभवारोहः | १०० |
| स्वरूपस्थितिदृढीकरणम् | १०१ |
| गुरुरूपवाग्देवतोक्तिः ... | १०५ |
| रहस्योपदेशः— ... | १०८ |
| विशोककथनम्— ... | १२२ |
| सर्वमताविरोधिगुरुमार्ग-फलकथनम् ... | १२८ |
| सहजनिर्बीजसमाधिः ... | १३३ |
| तत्त्वनिरूपणम्— ... | १३८ |
| श्रीतत्त्वनिष्ठादृढीकरणम्... | १४० |
| विस्मृत्यपोहः— ... | १४७ |
| उपदिष्टदृष्टिस्थिरीकरणं ... | १५० |

| विषयः | पृष्ठं |
|---|---|
| ज्योतिस्तत्त्वनिरूपणम् ... | १५२ |
| तमोऽपसरणम् ... | १५४ |
| ज्ञानैकनिष्ठाफलनिरू० ... | १५१ |
| सर्वाश्रमैक्यनिरूपणम् ... | १६१ |
| पुराणपुरुषनिरूपणम् ... | १६७ |
| निर्वाणपदवीकथनम् ... | १७६ |
| १२ भगवद्गीताशास्त्रोपसंहारः | १८१ |
| १३ ब्रह्मसूत्रकुतूहलम् ... | १८६ |
| **इति ब्रह्मविचारप्रकरणम्** | |
| **अथ नीतिविचारः २** | |
| सुदर्शनसंनाहः | २१० |
| १ शास्त्रव्यञ्जनम् | २१० |
| २ भाग्यमूलकथनम् | २१३ |
| ३ धर्मप्रवृत्तिकथनम् | २१४ |
| ४ नष्टोद्धारकथनम् | २१८ |
| ५ नष्टोद्धारसरणिनिरू. | २२१ |
| ६ नष्टोद्धारावश्यकत्वम् | २२५ |
| ७ शास्त्रफलनिरूपणम् | २२७ |
| ८ पुराणानामबाधितप्रामाण्यम् | २२९ |
| ९ ,, ,, | २३३ |
| १० निर्विघ्नफलनिरूपणम् | २३४ |
| ११ मूर्तिपूजाबीजम् | २३७ |
| १२ धर्मप्रवृत्तिस्थानम् | २३९ |
| १३ सुदर्शनसंनाहः | २४० |

| विषयः | पृष्टं |
|---|---|
| **इति नीतिविचारप्रकरणम् ।** | |
| **अथ धर्मविचारः २** | |
| १ वैदिकपद्धतिः | |


| विषयः | पृष्टं |
|---|---|
| शास्त्रतर्कयोर्बलाबलादिविचारः | २४७ |
| वेदस्य शास्त्रत्वविचारः ... | २४८ |
| आयुर्विचारः ... ... | २५१ |
| वेदस्येश्वरोक्तत्वविचारः ... | २५२ |
| ईशस्य जगत्कर्तृत्वविचारः ... | २५३ |
| उत्तरोत्तरज्ञानवृद्धिविचारः ... | २५३ |
| नवीनप्राचीनकर्मविचारः ... | २५५ |
| प्रतिमापूजनविचारः ... | २५७ |
| प्रतिमाया ईशत्वे मतानि ... | २५९ |
| पुराणप्रामाण्यविचारः ... | २६१ |
| अवतारविचारः ... | २६२ |
| भूभ्रमणविचारः ... | २६२ |
| सूर्याल्पत्वविचारः ... | २६३ |
| भूमेराकर्षणशक्तिविचारः ... | २६४ |
| सूर्यभ्रमणविचारः ... | २६५ |
| ग्रहणविचारः ... ... | २६६ |
| सूर्यादीनामाश्रयविचारः ... | २६७ |
| सूर्यपरिमाणविचारः ... | २६८ |
| काचप्रामाण्यविचारः ... | २७० |
| चातुर्वर्ण्यविचारः ... | २७१ |
| चतुर्युगविचारः ... ... | २७३ |
| जातिविचारः ... ... | २७४ |
| जलोत्पत्तिविचारः ... | २७४ |
| प्रत्यक्षभेदाः ... ... | २७४ |
| शास्त्रप्रामाण्यसिद्धिः ... | २७५ |
| शास्त्रतात्पर्यम् ... ... | २७६ |


2

| विषयः | पृष्ठं |
|---|---|
| **वेदाधिकारनिर्णयः ।** | |


| विषयः | पृष्ठं |
|---|---|
| वेदाधिकारिविचारः ... | २७७ |
| उपनयनाधिकारिविचारः ... | २७७ |
| उपनयनारम्भकालविचारः ... | २७८ |
| आद्योपनेतृविचारः ... | २७९ |
| वेदोपनयनानादित्वविचारः ... | २७९ |
| सर्वसाधारणवेदाधिकारविचारः | २८१ |
| वेदव्याख्यातृविचारः ... | २८३ |
| वैदिकहिंसाविचारः ... | २८८ |
| पिष्टपशुविचारः ... ... | २९१ |
| यज्ञे मांसभक्षणविचारः ... | २९२ |
| याज्ञिकानां शास्त्रपारतन्त्र्यविचारः | २९३ |
| स्वर्गास्तित्वविचारः ... | २९४ |


**वेदशल्योद्धारः ।**


| विषयः | पृष्ठं |
|---|---|
| वेदस्य पुरातनत्वविचारः ... | २९५ |
| वेदस्यापौरुषेयत्वविचारः ... | २९६ |
| सर्वभाषापुरातनत्वविचारः ... | २९७ |
| ईश्वरस्य वेदवक्तृत्वविचारः ... | २९८ |
| वेदस्यानादित्वविचारः ... | २९८ |
| ऋषित्वविचारः ... | २९९ |
| वेदाध्ययनाधिकारविचारः ... | ३०० |
| जातिविचारः ... ... | ३०० |


**वेदार्थविमर्शनी ।**


| विषयः | पृष्ठं |
|---|---|
| श्रुतिसमन्वयः (१ पादः) | ३०१ |
| प्रमाणनिर्णयः (२ पादः) | ३०२ |
| अधिकारसिद्धिः (३ पादः) | ३०२ |
| फलनिरूपणम् (४ पादः) | ३०३ |
| अनधिकारिनिरूपणम् (५ पादः) | ३०४ |

विषयः ... पृष्ठं

समाधिः ( ६ पादः ) ... ३०४
पंचाक्षर्या अर्थविचारः ... ३०४

द्विजत्वलिङ्गनिर्णयः ।

संस्कारविचारः ... ... ३०५
भस्मधारणविचारः ... ३०६
पंचानांदेवतानांसर्वोत्तमत्वविचार३०९
दीक्षाभेदाल्लिंगभेदविचारः ... ३१०
श्रीशंकराचार्याणां जगद्गुरुत्वविचारः ... ... ३१३
गायत्रीतात्पर्यविचारः ... ३१५
त्र्यंबकमन्त्रव्याख्याविचारः ... ३१६
द्वीपांतरगमनविचारः ... ३१९
संध्याव्याख्या ... ... ३२२

गायत्रीस्तोत्रम् ।

द्विजरहस्यम् ... ... ३२३

तप्तचक्रांकमीमांसा ।

वैदिक्यादिचतुर्विधदीक्षाविचारः ३२५
मुद्रांकनविचारः ... ... ३२६
चक्रांकस्य श्रौतत्वविचारः ... ३२७
चक्रांकाधिकारिविचारः ... ३२८
फलोपसंहारः ... ... ३२९

स्त्रीरत्नप्रस्तावः ।

स्त्रीयोग्यताविचारः ... ३३१
दानविचारः ... ... ३३२
विवाहकालविचारः ... ३३३
गर्भाधानकालविचारः ... ३३३
पुनर्विवाहासंभवविचारः ... ३३४
विवाहतत्त्वविचारः ... ३३५

विषयः ... पृष्ठं

अवांतरजातिषु मिथःकन्यासंबंधविचारः ... ... ३३६
लोकतंत्रवाक्योपसंहारः ... ३३७
शास्त्रतंत्रवाक्यारंभः ... ३३७
मानवशास्त्रसंमतिः ... ३३७
विधवावपनविचारः ... ३३९
पाराशर्यशास्त्रसंमतिः ... ३३९
सहजधर्मविचारः ... ३४०
विधवादुःखविचारः ... ३४१
स्त्रीदायविचारः ... ... ३४१
त्रिविधस्त्रीविचारः ... ३४२

श्रीशिवहृदयंगमविरुदावलीस्तोत्रम् ।

कलिशमनोपायः ... ३४४
श्रुतिस्मृत्योः स्वरूपम् ... ३४७

परिकरः ।

प्रदीपः ... ... ३४८
दृष्टिभेदविचारः ... ... ३४८
जीवानादित्वविचारः ... ३४९
आहूतिः ... ... ३४९
कथा ... ... ३५०
सिद्धांतघोषः ... ... ३५०
डिण्डिमः ... ... ३५०
ध्वजपटी ... ... ३५१
आदेशः ... ... ३५१
मंगलगीतिः ... ... ३५२
फलं ... ... ३५२
प्रशस्तिः ... ... ३५२

इति वैदिकपद्धतिः संपूर्णा ।

| विषयः | पृष्ठं |
|---|---|
| २ वैदिकपद्धत्युपोद्घातः ... | ३५४ |
| ३ वैदिकमतभेदपविः ... | ३५७ |
| ४ योगानुशासनम्. ... | ३५९ |
| ५ श्रीमच्छंकराचार्यचरितं... | ३६० |
| ६ वैदिकपद्धतिपरिशिष्टं अवलाबलम् ... | ३६१ |
| ७ ब्राह्मणसर्वस्वम् ... | ३७४ |
| ८ जातिनिर्णयप्रकार-परामर्शः— ... | ३९८ |
| ९ मुण्डनानुशासनम् ... | ४०० |
| १० आचार्यकालपरामर्शः ... | ४०८ |
| शङ्कराचार्यलग्नकुण्डली ... | ४१५ |
| ११ द्वारकापीठस्थस्वामिविचारः संशयतिमिरभास्करः | ४१७ |
| १२ आतुरसंन्यासपरामर्शः | ४३९ |
| १३ संन्यासात्परावृत्तस्य मीमांसा... ... | ४२९ |
| १४ संन्यासिपादुकामीमां. ... | ४३० |
| १५ भैरवाष्टमीनिर्णयः ... | ४३४ |
| १६ एकादशीविवेकः ... | ४५९ |
| १७ एकादशीपरामर्शः ... | ४५५ |
| १८ एकादशीपरिशिष्टं ... | ४६४ |
| १९ कंण्टकत्रयोद्धारप्रदीपः ... | ४७१ |
| २० टोपराटोपपरामर्शः ... | ४७८ |
| २१ द्वितीयाटोपः ... | ४८९ |
| २२ तृतीयाटोपः ... | ४९१ |
| २३ षड्विंशतिप्रश्नपरामर्शः ... | ४९४ |
| २४ प्रश्नोत्तररत्नमालिका ... | ५०२ |
| २५ प्रश्नचतुष्टयोत्तराणि ... | ५०४ |
| २६ ज्वरनिवृत्त्युपायः ... | ५०७ |
| २७ जनमारशान्तिः ... | ५०९ |
| २८ महामहोपाध्याय-शब्दविचारः ... | ५१५ |
| २९ चमत्कारपरामर्शः ... | ५१७ |
| ३० जगद्गुरुसत्यस्वरूप स्तोत्रम् ... ... | ५२२ |
| ३१ वेदान्तस्तोत्राणि ... | ५२३ |
| शयनस्तोत्रम् ... | ५२३ |
| अष्टाष्टकम्— ... | ५२४ |
| विष्टाष्टकम्— ... | ५२५ |
| प्रश्नोत्तरमालिका ... | ५२६ |
| शिवमानसपूजा ... | ५२७ |
| गुरुतत्वविवेचनस्तोत्रम्... | ५२८ |
| निगमसारस्तोत्रम् ... | ५२९ |
| तत्त्वमसिस्तोत्रम् ... | ५३० |
| गुरुस्तोत्रम् ... | ५३१ |
| श्रीकृष्णयशोमाला ... | ५३३ |
| ३२ आनन्दचषकः ... | ५३५ |
| ३३ ताराश्वघाटी ... | ५४७ |
| ३४ चाटुदण्डकः ... | ५४८ |
| ३५ ताराष्टपदी ... ... | ५५१ |
| ३६ सूर्यसाधुचरितम् ... | ५५१ |
| ३७ कलिपरामर्शः ... | ५५८ |
| पुनर्विवाहविचारः ... | ५६२ |

# वैदिकपद्धतिप्रशंसा ।

परिशीलितयाययारोहन्ति विष्णुपदं
सूरिवेद्यं प्रामाणिकं विचक्षणाः ॥

नवं पुरातनं वापि लेखं पश्यंति सूरयः ।
सारमासाद्य तुष्यंति निःसारं रसयंति च ॥ १ ॥
धर्मज्ञा अथ नीतिज्ञा उभयज्ञा अथेतरे ।
पश्यंतु पालयंत्वेनां श्रीमद्वैदिकपद्धतिम् ॥ २ ॥
वत्से वैदिकपद्धते वस चिरं वेदैकमानाश्रित-
ज्ञानानां निजनेत्रसंस्कृतिकृते यत्नाश्रितानां सताम् ।
गेहाद्गाढतमीं निरस्य सरणिं तां दर्शयित्वा श्रुते-
र्वक्तव्यं च विबोध्य वेदविदुषां श्रेयस्करी त्वं भव ॥ ३ ॥
स्वमार्गस्थितये नृणां कृष्णानंदेन भिक्षुणा ।
प्रादर्शि प्रार्थितेनैव कैश्चिद्वैदिकपद्धतिः ॥ ४ ॥





श्रीकैवल्यधामनिवासी
स्वामि श्रीकृष्णानंदसरस्वती, क्षेत्र काशी.

जय सच्चिदानन्द ।

श्रीमत्परमहंसकृष्णानन्दसरस्वतीविरचिता[1]

# विचारत्रयी ।

## ब्रह्मविचारः ॥ १ ॥

## गीतासारोद्धारः ॥ १ ॥

श्रीकृष्णं करुणापूर्णहृदयं बुद्धिसाक्षिणम् । पार्थसंशयनीहारमिहिरं संश्रयेऽनिशम् ॥ १ ॥ स्फुरद्दन्तप्रभापूरमिलन्मधुरवाग्झरीम् । गीतां संश्रयते कृष्णमुखपद्माय ते नमः ॥ २ ॥ गीतासारोद्धारं कर्तुं प्रयते तथापि जिह्रेमि । क्व समुद्रः क्व च चटकः क्व च सा चञ्चुः क्व रत्ननिचयः सः ॥ ३ ॥ नीरनिधिर्यदि करुणापूर्णश्चटकः समानयेद्रत्नम् । ज्ञाननिधिर्यदि गीताकरुणां धत्ते ममापि किं चित्रम् ॥ ४ ॥ तत्र प्रथमाध्याये चापन्यासान्तवर्णनस्यार्थः । यत्किंचित्कर्तव्यं सुविचार्यैव प्रवर्तनीयमिति ॥५॥ १ ॥ सुविचारो नरकोटिष्वीशानुग्रहवतोऽपि कस्यापि । भवति च तस्य च पुंसः परमेशः सार्थकृदपीति ॥ ६ ॥ यो यद्वत्तविचारे तद्दातुस्तस्य सर्वनिर्वाहः । पतति गले इति भावः पार्थस्यातः कृतश्च हरिणापि ॥ ७ ॥ एतेषां हननं मम मरणं वा युज्यते रणत्यागः । इति संशयवति पार्थे कृष्णः सप्तकथोत्तराणि ददौ ॥ ८ ॥ यद्धननात्त्वं भीतो न ते

---

[1] अथाखिलशास्त्राम्भापाराकूपारपारदृश्वा परमहंसः श्रीकृष्णानन्दयतिमूर्धन्योऽखिलमानुपप्राप्यज्ञानध्वान्तापाकरणपूर्वकं विचारत्रयीमिषेण शास्त्रसारंबुबोधयिषुरिमान्पृथक्प्रकरणग्रन्थान्निबबन्ध । तत्रादौ ब्रह्मविचारः प्रस्तूयते ।

म्रियन्ते कदाचिदपि वत्स । तस्मात्त्वं न म्रियसे स्वाभावः कुत्र केन वा दृष्टः ॥ ९ ॥ मायामयविश्वं वत दृष्ट्वा ज्ञानी न मोहमभ्येति । नच भीतिस्तस्यास्ते लक्षणमशुभाद्यनासक्तिः ॥ १० ॥ कः कायः कीदृग्वा कस्य च कुत्रास्ति केन कथमिति च । न विजानाति विपश्चित्पश्यत्याश्चर्यवद्वदत्यपि च ॥ ११ ॥ आश्चर्यं मायेति च पर्यायौ नास्ति भातीति । पर्यायोऽज्ञानं तत्तस्य विनाशो न भाति नास्तीति ॥ १२ ॥ आश्चर्येऽस्मिंस्त्वं कुरु युद्धाश्चर्यप्रवाहपतितं ते । प्रावाहिककर्मकरो नैवाश्नुवति लेपमशुभशुभकृदपि ॥ १३ ॥ सच्छिष्यंप्रति हरिणा योगः सदसद्विभागनामायम् । उक्तस्तदुत्तरार्थं भ्रान्तिहरोऽयं द्वितीयकोऽध्यायः ॥ १४ ॥ २ ॥ एवं यो वेत्ति नरो न तस्य लेपोऽस्ति कर्मणा कश्चित् । कर्तव्यमपि न किंचित्तदपि प्रावाहिकं तु कर्तव्यम् ॥ १५ ॥ यदि न प्रवाहपतितं कुरुषे किंवा करोषि वद मह्यम् । अप्राप्तकार्यकर्ता प्राप्तत्यागी च निन्द्यते सकलैः ॥ १६ ॥ इति हरिणा पार्थाय प्रोक्तं कर्तव्यकर्मणां तत्त्वम् । येन न लेपः कर्तुर्यशश्च यस्मात्तृतीयकेऽध्याये ॥ १७ ॥ ३ ॥ अज्ञात्वा यदि कर्म त्यजति तदा किं भवेदकर्तासौ । ज्ञात्वा कुर्वन्कर्माण्यशेषतः किं भवेदसौ कर्ता ॥ १८ ॥ यदकल्पितवस्तु सखे तत्रासत्कल्पितं जगत्सर्वम् । तदपि न सद्भिन्नमिति ज्ञात्वा कुर्वन्विमुक्त एवास्ते ॥ १९ ॥ एतज्ज्ञानं देशिककरुणालभ्यं परंपराप्राप्तम् । राजर्षिसंमतं त्वं संशयमाच्छिद्य कुरु न ते लेपः ॥ २० ॥ एवं तुर्येऽध्याये पार्थाय श्रीनिवासेन । ब्रह्ममयैः कर्मभिरिह विदुषो लेपो नचेति संकथितम् ॥ २१ ॥ ४ ॥ किमहं कर्ताऽन्यो वा विचारय त्वं तदैव कर्माणि । तच्छीर्षणि संस्थाप्य स्वस्थो मुक्तो भवस्यवश्यं त्वम् ॥ २२ ॥ पञ्चम एवं हरिणाध्याये कर्तृत्वबन्धनच्छेदः । सोपायः संकथितो येनाग्रहमोचनाद्विमुच्येत ॥ २३ ॥ ५ ॥ आत्मानं त्वं यदि चेज्ज्ञानास्यद्धा विसंशयस्तर्हि । कर्तृत्वं तव नश्येदित्युक्तं

पष्ठ ईशेन ॥ २४ ॥६॥ विश्वं मायामयमिदमपि मयि पश्य प्रशस्तदृष्ट्या त्वम् । संशयविच्छित्तिः स्यादित्युक्तं सप्तमे हरिणा ॥२५॥ ७ ॥ गाविश्वजीवनं चेज्जानीषे भवसि पार्थ सकलात्मा । यो यद्वेत्ति तदेव प्रभवति देहं विदन्यथा देहः ॥ २६ ॥ इत्यष्टमेऽपि हरिणा ज्ञानाभ्यासस्य सत्फलं प्रोक्तम् । तस्मात्प्रवाहपतितैर्विदुषो लेपो न कर्मभिः क्वापि ॥ २७ ॥ ८ ॥ पश्य प्रथितमते त्वं चमत्कृतिं मयि समस्तमेतत्तु । अहमपि तत्र नचाहं तत्र न तन्मयि मुनीन्द्रदुर्बोधाम् ॥ २८ ॥ इति नवमे श्रीपतिमुखपङ्कजविगलन्मरन्दरससारः । श्रीराजयोग उक्तः प्रश्रितजनमोक्षदोऽप्रयासकरः ॥ २९ ॥ ९ ॥ यद्यद्विभूतियुक्तं तत्तन्मां वेत्सि चेदनल्पमते । तर्ह्यल्पकालतो मां सर्वात्मानं विमृश्य कृतकृत्यः ॥ ३० ॥ यद्वद्विभूतिवक्रमतिरभ्येति क्रमेण सर्वं माम् । तद्वन्मतिरपि च तव क्रमात्समभ्येति मामेव ३१ इत्थं दशमेऽध्याये नवमाध्यायोक्तचित्रचमत्कारम् । वेदयितुं पुनरुक्तो विभूतियोगो दयानिधिना ॥ ३२ ॥ १० ॥ विधिना कदापि जातोऽपीशानुग्रहभरेण सर्वात्मा । दृष्टिपथे तदपि नरैः सोढुं शक्यो न सामान्यैः ॥ ३३ ॥ निर्वैररूपभक्त्या भगवति सर्वात्मके पक्वः । शक्तः सोढुं ज्ञातुं बोढुं चैकत्वमीशेन ॥ ३४ ॥ एवं रुद्रेऽध्याये नवमाध्यायोक्तनिजचमत्कारम् । बोधयितुं पार्थाय प्रदर्शितं किमपि तद्रूपम् ॥ ३५ ॥ ११ ॥ सर्वात्मभक्तियुक्ते भूयादद्वेष्टृतादिगुणसंघः । ईशानुग्रहरूपो येन विजानाति निर्गुणं तत्त्वम् ॥ ३६ ॥ तस्माच्छमादिसंपत्स्वज्ञानावाप्तये परमधनम् । तत्सगुणभक्तवर्ये प्रियतम इति मे रसद्वयाध्याये ॥ ३७ ॥ १२ ॥ किं तन्निर्गुणतत्त्वं यल्लाभाय प्रयासनिर्देशः । इति मा शङ्किष्ठास्त्वं पार्थैकत्वं मया सह तदेव ॥ ३८ ॥ जानन्देहे यस्त्वं स एव देवोऽहमस्मि चिद्रूपः । यत्सामरस्यमेतन्निर्गुणतत्त्वं स एव परमार्थः ॥ ३९ ॥ यस्ते परिचय आस्ते स एव मे मम स चापि तव पार्थ । कस्मात्कर्मविलेपाद्भीतिः सर्वात्मतां

स्मर स्वीयाम् ॥ ४० ॥ अविभक्तः सर्वेभ्यो यस्मादहमस्मि तद्भवानपि च । यस्त्वं सोऽहं योऽहं स त्वं सत्तावयोर्न पृथगस्ति ४१ सच्चिन्मात्रैकघने को लेपः कर्म किं च को बन्धः । निर्गलिताऽखिलभेदे सदसच्छब्दाभिलापभीरुतरे ॥ ४२ ॥ सममिति वक्तुमशक्यं सममात्रं विद्धि निर्गुणं तत्त्वम् । तस्मादतात्त्विकात्ते भीतिर्मा भवतु मुक्त एवासि ॥ ४३ ॥ यः स्वं वेत्ति स मां चेत्यस्मात्सोऽहं ततो न चिद्रुपस्तु । बन्धः कर्मकृतः स्यादित्युक्तं हि त्रयोदशेऽध्याये ॥४४॥ १३॥ यस्त्वं प्रकृतिगुणानां विश्वस्थित्युद्भवादिहेतूनाम् । साक्षी सच्चिद्रूपः सोऽहं पार्थेति मनुमितेऽध्याये ॥ ४५ ॥१४॥ यः खलु निगमान्तानां वक्ता सोऽहं वसामि सर्वत्र । सोऽहं पार्थ शरीरे स्मर्ता ज्ञाता तमोभिभूतश्च ॥४६॥ तस्मात्पृथगभिमानं त्यक्त्वा मां विद्धि सर्वतः सर्वम् । क्व च कार्यं क्व निदानं पुरुषः स च शिष्यतेऽहमर्थो यः ४७ इत्थं गुह्यतमेयं विद्या प्रोक्ता दयानिधिना । अभ्युत्थानसमाधिः पञ्चदशाध्यायतः फलं भवति ॥ ४८ ॥१५॥ विस्रस्तदुर्गुणस्य प्राप्ताखिलसद्गुणस्य पुरुषस्य । आत्मज्ञानं संशयहीनं भवति च स एव मां वेत्ति ॥ ४९ ॥ तस्मात्त्वं दुर्गुणलवसङ्गविहीनोऽसि मां वेत्सि । शोकं मा कार्षीस्त्वं पार्थेति प्राह षोडशेऽध्याये ॥ ५० ॥१६॥ श्रद्धा त्रिविधा लोके शास्त्रीया मोहजा च काम्या च । शास्त्रश्रद्धामद्धा स्वीकुरु वेत्सीति सप्तदशकेऽपि ॥ ५१ ॥१७॥ देहेन्द्रियादिधर्मांस्त्यक्त्वात्मानं विमृश्य जहि शोकम् । मन्मयतामुपयासि क्षेमं मोक्षाख्यमेव मम तत्त्वम् ॥ ५२ ॥ अयमेव हि बन्धस्तव यद्देहेन्द्रियमतिस्थगुणदोषान् । आत्मन्यारोपयसि त्यक्त्वा तान्मुक्त इति च चरमेऽपि ॥ ५३ ॥१८॥ इत्युपदेशनिरूढः स्वात्मारामोऽर्जुनः प्रवाहगतम् । अङ्गीचकार युद्धं गुर्वनुमतमेव शर्मणे विद्वान् ॥ ५४ ॥ एवं सप्तदशोक्ता युक्तय इह कर्मलेपनाशाय । तस्माद्विचार्य कुर्वन्पातं नोपैति मानवश्रेष्ठः ॥ ५५ ॥ अविचारोत्थो बन्धः कर्मकृतो नेति

सर्वगीतायाः । तात्पर्यं हृदि धार्यं कौस्तुभ इव पार्थसारथिना ५६ गीतासारोद्धारः कृष्णानन्देन कृष्णकृपयैव । सरसजनाह्लादाय श्रीकृष्णप्रीतये कृतो जीयात् ॥ ५७ ॥ गीतासारोऽतिमधुरः कृष्णानन्देन दर्शितः । अनसूयेषु भक्तेषु कृष्णानन्दं प्रकाशयेत् ॥ ५८ ॥ नमः कृष्णाय पार्थाय मिथोमिलितचेतसे । अन्योन्यप्रीतिविख्यातिकामुकाय महात्मने ॥५९॥ ललितामलचारित्रमिलितामलचेतसे । कलिताऽखिलविज्ञानपार्थकृष्णाय ते नमः ॥ ६० ॥ मनो मे कृष्णपादाब्जमकरन्दासवं पिबत् । मत्तं सत्तच्छुभाङ्गेषु मुहुर्नृत्यति तुष्यति ॥ ६१ ॥ कृष्ण क्रीड मया सार्धं किं मोक्षेण प्रयोजनम् । त्वदङ्घ्रिप्रीतिरशनाबन्धो मेऽस्तु सुखावहः ॥ ६ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कैवल्यसिंहासनाधीश्वरश्रीसच्चिदानन्दसरस्वतीकरकमलसंजातकैवल्यपदाभिषिक्तश्रीकृष्णानन्दसरस्वतीविरचितो गीतासारोद्धारः श्रीगुरुचरणकमलयोः समर्पितः ॥

---

# चतुःश्लोकीगीतारहस्यम् ॥ २ ॥

जय सच्चिदानन्द ।

याभ्यां ज्ञातौ यथार्थौ द्वावुद्धारः शरणागतिः ।
ताभ्यां श्रीकृष्णपार्थाभ्यां नमः कृष्णयतेरिदम् ॥ १ ॥

प्रसङ्गादभिव्यक्तसाधनसंपत्तिरर्जुनः पृच्छतिस्म मित्रीभूतश्रीशम् । यथा—कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसंमूढचेताः । यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नमिति । तेन केवलं श्रेयोर्थिता व्यक्तीकृतेति मत्वोत्तरमाह भगवान् करुणाकरः कृष्णो ज्ञानदयानिधिः । यथा—सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयि-

ष्यामि मा शुच इति । अत्र बीजम्—नासतो विद्यते भावो नाऽभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरिति सिद्धान्तः परंपरायातः । इति गुरुकरुणापीयूषपारावारस्नातः शुद्धबुद्धिरसतस्त्यागे सद्विज्ञाने कः प्रयास इति तमेतं सिद्धान्तं सोपदेशं बुध्वा जगदेकवीरः पार्थो भरतकुलभूषणः संमतिमाह—नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत । स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तवेति नित्यलब्धब्रह्मीभावे स्थैर्यमापन्नोऽन्तिमजन्माङ्गीकरोमीशाभिप्रेतं प्रावाहिकं कर्मेति तत्याज हृदयदौर्बल्यं नर इति गीताशास्त्रमेतत् ॥

एतत्सुनिश्चितं ज्ञानं कृष्णस्य परमात्मनः ।
एषा मुमुक्षुता सत्या पार्थस्यान्तिमजन्मनः ॥ १ ॥
शाके श्रीशालिवाहस्य बाणचन्द्रगजेन्दुनि ।
अवादि कृष्णयतिना गोदाभूषणनासिके ॥ २ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीदृष्टं श्रीगीतारहस्यं निवेदितं श्रीकृष्णचरणे चिन्वन्तु परिचिन्वन्तु च मुमुक्षवोऽधिकारिणः ॥

---

# भगवद्गीतैकदेशपरामर्शः ॥ ३ ॥

जय सच्चिदानन्द ।

लोकेऽद्वैतब्रह्मवादो भेदब्रह्मवादो देहब्रह्मवाद इति त्रयो वादा दृश्यन्ते, तानुपक्रम्य भगवता व्यवस्थोक्ता यथा गीतायाम्—ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः । प्रोच्यन्ते गुणसंख्याने यथावच्छृणु तान्यपीति प्रतिज्ञाय, गुणसंख्यानमाह—सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकम् । येन गुरूपदिष्टज्ञानेन सर्वभूतेषु एकमद्वितीयं त्रिकालाधि-

ष्टानं परमात्मानमीक्षते विजानाति पश्यत्यनुभवति च । कथं त-दाह–अविभक्तं विभक्तेषु नानारूपाभ्यामलंकारवैचित्र्येषु सुवर्णमिव तज्ज्ञानं सात्विकं विद्धि । एषोऽद्वैतब्रह्मवादः॥ ॥ अथ भेदब्रह्मवाद-माह–पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् । वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् । यज्ज्ञानं भेदप्रकारकं सप्तपदार्था अन्योन्यं भिन्ना इति तेन ज्ञानेन स्वाङ्गीकृतेषु द्रव्यगुणादिषु सर्वेषु भूतेषु पदार्थेषु समवस्थितान् जात्यादीनपि पृथग्विधान् मिथो भिन्नान् वेत्ति मनुते स्वरूपसंवन्धं चान्तेऽङ्गीकरोति किमवशिष्टं भेदवादस्य वलं, तस्मात् तज्ज्ञानं संक्लेशकारि राजसं विद्धि ॥ ॥ अथ देहब्रह्मवादमाह—यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् । अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् । यत्तु ज्ञानमेकस्मिन्देह-नाम्नि कार्ये सक्तं तादात्म्यान्तं तदहैतुकं प्रमाणवाह्यम् । देहो-ऽहमिति वदन् विजानन्नतीन्द्रिय आत्मा । तत्र प्रमाणशब्दस्तत्रास्ति देहात्मवादे । अतीन्द्रिये हि शब्दः प्रमाणम् । देहो नातीन्द्रियः प्रत्यक्षगोचरः । आत्मा हि तमनुव्यवस्यत्ययं देह इति । तस्य देहा-त्मता दुःसाध्या । अन्यथा घटमनुव्यवस्यन्नपि घटः स्यात् तस्मादत-त्त्वार्थवत् वाधितार्थवत् । अतोऽल्पम् । देह एवात्मा भोग एव स्वर्गनरकौ मरणं मोक्ष इति सिद्धान्ताश्रयणापातात् अल्पफलं ज्ञानमल्पमुच्यते । नहि मरणं मोक्षः । मृत्युरत्यन्तविस्मृतिरिति सर्वानुभवादन्धतमोधिकारी तामसज्ञानः । स्वर्गनरकाधिकारी राजसज्ञानः । मोक्षाधिकारी सात्विकज्ञानः । सात्विकज्ञानं श्रुतौ पठितम्—ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमहमेवेदं सर्वमिति । न पठितं राजसज्ञानं मिथो विभिन्नं सर्वमिति । तथा तामसज्ञानं देह आत्मेति कुत्रचित् । तस्मात्तामसराजसज्ञानद्वयं पूर्वपक्षकोटौ । सा-त्विकज्ञानं सिद्धान्तकोटाविति सिद्धम् ॥ जयति श्रीकृष्णाभिप्रायवेत्ता

---

१ जीवेश्वरयोरस्वस्वामिभावो नित्य इति वादिनोऽपि भेदब्रह्मवादिनः ।

श्रीशंकरः। तस्येयं वाक्—न भूमिर्न तोयं न तेजो न वायुर्न खं नेन्द्रियं वा न तेषां समूहः। अनैकान्तिकत्वात्सुषुप्त्येकसिद्धस्तदेकोऽवशिष्टः शिवः केवलोऽहम्। भूतानां भौतिकानां चानैकान्तिकत्वाद्व्यभिचारित्वात्काल्पनिकत्वान्नाहं तदात्मा किंतु तेषामहमात्मेत्याह सुषुप्त्यैकसिद्ध इति। अविद्यावृतस्यैवाध्यासाधिष्ठानत्वमित्यर्थः। तत्तस्मात् काल्पनिकानां स्वाधिष्ठानेतरत्वाभावात्तेषां भानेऽप्यभानेऽप्येक एवावशिष्टः शिवो नित्यानन्दस्वरूपोऽहं प्रत्यगात्मा केवलः शुद्धः। मय्येव विभातीदं सर्वं तस्मादेव पश्यामि। यदि मयि न भायादेष संसारस्तदा न पश्येयमहं स्वप्नवत्। स्वप्ने भातेऽप्यभातेऽप्यद्वितीयो द्रष्टा चिद्रूपः। अतएव वाक्यान्तरं—विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया। यः साक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये इति निगदव्याख्यातम्। ईदृशज्ञानदाता श्रीगुरुर्दक्षिणामूर्तिः परशिवो न मानुष इत्यर्थः। दक्षिणा कुशला चासौ मूर्तिरिति विग्रहः। न संज्ञायामिति निषेधान्न पुंवद्भावः। इदं महत्कौशलं यदात्मनि विश्वदर्शनम्। अतएव श्रुतिः—आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः। न नरेणावरेण प्रोक्त एष सुविज्ञानाय प्रेष्ठेति। अतएव—उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः। यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव इति प्रतिज्ञातं भगवता। तत्त्वदर्शिनामेवाधिकार उपदेशकर्मणि। उपदेष्टव्यज्ञानस्वरूपमाह—येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि। येन ज्ञानेन विश्वमिदं सचराचरमात्मनि द्रक्ष्यसि। यस्त्वं देहस्थ इव भाससे स देहस्त्वन्निष्ठ इव भासेत। अथो तथानुभवानन्तरमिदं विश्वं मयि द्रक्ष्यसि। किं बहुना सर्वं सर्वात्मानं द्रक्ष्यसि। अत्रैतत्समर्पितमेजत्प्राणन्निमिषच्च यदिति श्रुतेः। अत्र दहरावच्छिन्ने प्रत्यगात्मनि। ननु कथमेतत्।

दृश्यवर्गैकदेशे द्रष्टरि यावद्दृश्यवर्गसंभवः । सत्यम् । बुद्धिमानसि । किंचिच्छ्रावयामि । वत्स, वद य एष दृश्यवर्गस्तव संमतः स केन बलेन तिष्ठति । स्वबलेनेति चेत्स्वतन्त्रत्वादुदयास्ताभावप्रसङ्गः । दृश्येते उदयास्तौ दृश्यवर्गस्य । न दृश्येते द्रष्टुः । तस्माद्द्रष्टुर्बलेनेति वक्तव्यम् । यथोदयास्तशीला अलंकारा अनुदयास्तशीलस्वर्णबलेन । ननु द्रष्टाप्युदयास्तशीलो जन्ममरणदर्शनादिति मा शङ्किष्ठाः । स्वोदयास्तौ किं स्वयं पश्येत् । असंभव एव वादः । देहेन्द्रियादीनामुदयास्तौ प्रत्यहं पश्यति एतावन्तौ जन्ममृत्यू । तावनुभवन्नित्यो द्रष्टा चिद्रूपस्तद्बलेनावभासनशीलमुदेति तिष्ठति लीयते च । तद्बलमवशिष्यते ततो न पुनर्मोहावकाशः । अत एतत्फलं—अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः । सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि । यथा मरुमृगजलादुत्तीर्ण एव स्वरूपबलेन । अत्र वृजिनमित्युपलक्षणमित्याह—यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा । आत्मसात्करणं—सर्वकर्माणि सुकृतं दुष्कृतं संचितं क्रियमाणमागामि च । एतदेवाह भगवान्व्यासः—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति । संचितक्रियमाणयोरगोचरयोरभ्रष्टीभूतयोरगोचरत्वं युक्तम् । गोचरस्यापि भस्मीभूतस्य प्रारब्धनाम्नो न कर्मशब्दवाच्यता । सर्वं ह्येतद्ब्रह्मेति ब्रह्मशब्दप्रवृत्तेः । यथैधःशेषे भस्मनि न पुनरेधःशब्दः । अतएव भग्नं संधार्यमिति शास्त्रम् । अस्ति ज्ञानं भग्नानि ज्ञानदग्धः संसारः संधार्य इति । अतएवाह—नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति । योगः प्रथममनुष्यत्वाङ्गीकारस्ततो वर्णाङ्गीकारस्तत आश्रमाङ्गीकारस्तत्र च प्रावाहिककर्मकरणमप्रावाहिकत्यागस्तेन यः सिद्धः स योग्यतां प्राप्तः सन् कालेन क्रमेणात्मनि विन्दति अहमेवेदं सर्वमिति । यथाह यजुः—एष नित्यो महिमा ब्राह्मणस्य

न कर्मणा वर्धते नो कनीयानिति । तस्मादुपपन्नं सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकमिति । तस्माद्भगवत्संमतज्ञानमुपाश्रित्य भेदं त्यजन्त्वधीतशास्त्राः स्वाधीतफलसिद्धये । भगवतैव खण्डितो भेदवादः ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतो भगवद्गीतैकदेशपरामर्शः ॥ श्रीकृष्णार्पणमस्तु ॥ जय सच्चिदानन्द ॥

---

# गीतार्थपरामर्शः ॥ ४ ॥

जय सच्चिदानन्द ।

अथ गीतार्थः परामृश्यते । यदर्थं प्रवृत्तं शास्त्रं स तस्यार्थः । सत्येवम् । सिंहासनाधीश्वरस्य धर्मस्य राज्यम् । धर्मकामस्य नरस्य जयः । श्रीकृष्णस्य सहाये धर्मकामस्य तत्त्वज्ञतामूला लोकज्ञता । लोकज्ञतामूला नीतिः । प्रकृतार्थसाधनयुक्तिर्नीतिः । स एव योगः । योगमातिष्ठोत्तिष्ठ भारतेति लिङ्गात् । न पातञ्जलादियोगमास्थाय युद्धायोपतिष्ठेत् । तस्मान्नीतियोगोऽत्र गीतायाम् । नीतिमूलो जयः । दुष्टनिग्रहः फलम् । अपरेऽर्थाः पूर्वाचार्यव्याख्यातास्तत्र तत्र स्थले यथार्था अपि न विशिष्टार्थपराः । भगवद्वाक्यस्याकाल्पनिकत्वादुपनिषत्त्वं वेदरहस्यत्वमित्यर्थः । अनधिगतब्रह्मविद्यस्य धर्मस्थापनानधिकार इति ब्रह्मविद्येति विशेषणफलम् । अनीतिज्ञस्य जयानधिकाराद्योगा नीतयो युक्तयः । तस्माद् गीतानाम ब्रह्मविद्यामूलं नीतिशास्त्रम् । —यथा ब्रह्म तथा नीतिर्गम्भीरेति हरेर्वचः । समाश्रयन्ति भूतानि जयत्यधिकृतो नरः । यत्परः शब्दः स शब्दार्थ इति न्यायात् । तस्मात्—सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति श्लोके

सर्वधर्मान् प्राप्तप्रसङ्गानुकूलनीतिविरुद्धान् परित्यज्य मामेकं समूलनीतिवक्तारं शरणं रक्षितारं विद्धि । व्रजेति गत्यर्थोऽपि ज्ञानार्थः । तदाऽहं त्वां सर्वापद्भ्यो मोक्षयिष्यामि । मा शोकं कार्षीः । तादृग्ज्ञानमद्वचनारस्येत्यर्थः पर्यवसितः । —कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः । ऋतेऽपि त्वां नभविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः । तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् । मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् । इति वाक्यैकवाक्यतया—क्लैब्यं मास्म गमः पार्थ नैतत्त्वय्युपपद्यते । क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतपेति वाक्यमनुसृत्य गीता व्याख्येया ॥ इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतगीतार्थपरामर्शे प्रथम उल्लासः ॥ १ ॥

अध्यात्मज्ञानान्तं शास्त्रं संपाद्य नीत्या वर्तितव्यमित्येव मदुक्तितात्पर्यमिति स्वयं भगवानाह । यथा—मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा । निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः । ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । मानवा इति मनुवंशलक्षणमुक्तम् । शास्त्रे श्रद्धावन्तो नीतयेऽनसूयन्तो मानवाः प्राप्तकर्मभिः साधनभूतैः सर्वापद्भ्यो मुच्यन्त इत्यर्थे संपन्न आह—ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः । शास्त्रं न नीतिबाह्यं न नीतिः शास्त्रबाह्येति सिद्धान्ते सत्यपि ये मिथो विरोधं मन्यन्ते ते नाशाय कल्पन्ते तत्तेषां शास्त्रं व्यर्थं सा चातुरी च तथा । तस्माद् गीता तथा व्याख्येया यथा ज्ञाननीतिभ्यां पुष्टा भवेत् । कस्मादेतत् । अस्तु ज्ञानपुष्टा मास्तु नीतिपुष्टेति चेदाह—सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि । प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ।

ज्ञानवतोऽपि प्रारब्धशेषाङ्गीकारे नीतिबलमपेक्षितं ज्ञानस्य । तेन बलवज्ज्ञानं जीवन्मुक्तिसुखं पूर्णं ददाति । प्रकृतिः प्रारब्धकर्म । तदनुसरन्ति सर्वे जीवास्तत्र निग्रहो न बलवान् । तस्मात्प्राप्तकारित्वं ज्ञानसंपन्नत्वं सचेतस्त्वं बुद्धिमत्त्वमित्यर्थः । अप्राप्तकारित्वं प्राप्तत्यागित्वं मनस्वित्वमिति च । विदुषः प्रवाहप्राप्तकर्मप्रवृत्तौ युक्तिमाह—इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनाविति । उपसंहरति स्वाभिप्रायम्—श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः । शास्त्रनीतिविधुरः परधर्मः । तद्युक्तः स्वधर्मः । अत्रार्थे संमतिमाह—इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् । एवं परम्पराप्राप्तमिमं राजर्षयो विदुः । स कालेनेह महता योगो नष्टः परंतप । स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः । भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तममिति । राजर्षयो विदुरिति राजान एवाधिकारिणोऽत्र गीतायां नीतिशास्त्रत्वात् । नीतिसंपन्नत्वाद्राजत्वम् । विद्यासंपन्नत्वादृषित्वम् । भक्तत्वात्तुभ्यं ज्ञानमुक्तं सखित्वान्नीतिरिति रहस्यमिति विदांकुर्वन्तु व्याख्यातारः ॥ इति गीतार्थपरामर्शे द्वितीय उल्लासः ॥ २ ॥

अतएव धनंजयस्योपसंहारो युज्यते । —नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत । स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तवेति । अध्यात्मविद्यया मोहो नष्टो नीतेः स्मृतिश्च लब्धा । त्वत्प्रसादफलमेतद्द्वयं तस्मादेव गतसंदेहो विदुषोऽपि नीत्यवलम्बोऽवश्यः प्रारब्धशेषक्षपणायेति सिद्धान्तात् । अध्यात्मविद्यया मानवत्वसाफल्यं नीत्या क्षात्रसाफल्यं च कुर्विति वचनमनुसरामीति प्रणिपातो भगवत्पादयोः । अतएव संजयः—संवादमिममश्रौप-

---

१ स्वच्छन्दाचारित्वं न बुद्धिमत्त्वमित्यर्थः ।

मद्भुतं रोमहर्षणम् । व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् । योगं योगेश्वरात् कृष्णात् साक्षात्कथयतः स्वयम् । नीतिब्रह्मविद्ययोरेकवाक्यत्वमपूर्वमिति रोमहर्षणं गुह्यं च । एष एव योगो भगवत्संमतो यन्मिथो विरुद्धयोरिव भासतोरेकवाक्यत्वज्ञानम् । ईदृशश्रवणं गुरुप्रसादलभ्यमित्यर्थः । नानीश्वरकथितं फलाय कल्पत इत्याह—तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः । विस्मयो मे महान् राजन् हृष्यामि च मुहुर्मुहुः । बहुलब्धं बहुलब्धमिति हर्षः । कुत्र मानुषसमता कुत्र सा विभूतिर्भगवत इति विस्मयः । –आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः । न नरेणावरेण प्रोक्त एष सुविज्ञानाय प्रेष्ठेति श्रुतिः समन्विता दृष्टा केशवार्जुनयोः प्रसङ्गे । ननु गीता नाम नीतिशास्त्रं ब्रह्मविद्यामूलमिति तदसत् समुच्चयवादप्रसङ्गादिति चेन्न । ब्रह्मविद्यायाः प्रारब्धकर्मसमुच्चयोऽङ्गीकृतो व्यासेन तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति सूत्रणात् । –कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तदिति भगवदभिप्रायाच्च विद्वत्प्रारब्धशेषस्य कृतकार्यस्य न बन्धहेतुत्वं नापि ज्ञानविरोधित्वं ज्ञानाभावेच्च हूयमानत्वादिति दिक् । आह नीतिशास्त्रत्वं गीतायाः संजयः–यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्ममेति विशिष्टार्थोपसंहारात् । भूतिर्ज्ञानम् । ध्रुवेति चतुर्णां विशेषणम् । वक्ता कृष्णः शंकरो वा जगत्सु श्रोता पार्थो मण्डनो वाऽथ मिश्रः । वक्तारोऽन्ये सन्ति सन्तो महान्तः श्रोतारोऽन्ये सन्ति तेभ्यो नमोऽस्तु । पण्डितो यत्र वक्तास्ति श्रोता यत्रास्ति धीरधीः । स संवादो लिख्यते च पठ्यते च पुनः पुनः । इति गीतापाठप्रवृत्तिहेतुः ॥ इति गीताऽर्थपरामर्शे तृतीय उल्लासः ॥३॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतौ
गीतार्थपरामर्शः समाप्तः ॥

---

# स्वानुभूतिविलासः ॥ ५ ॥

जय सच्चिदानन्द ।

श्रीगुरुं ज्ञानदातारं सच्चिदानन्दरूपिणम् । स्मारंस्मारं मुहुर्नौमि येनाहमनृणी कृतः ॥ १ ॥ भाष्यकारान्भवाम्भोधिशोषणे कुम्भसंभवान् । अविद्याध्वान्तविध्वंसे भास्कराञ्शंकरान्भजे ॥ २ ॥ अथासहायं सद्ब्रह्म विश्वरूपं कथं भवेत् । जीवो विरुद्धधर्मायं ब्रह्म स्याच्च कथं शृणु ॥ ३ ॥ फलोन्मुखैः कर्मभिरात्तमायावेशेन जीवेन परात्मतत्त्वे । आरोपितं रज्जुभुजङ्गवत्तद्भेदो न तद्भास्यतया यथाहौ ॥ ४ ॥ शास्त्रस्य साफल्यनिरूपणाय सिद्धा त्वविद्या चितिगाहिनी ताम् । ब्रह्मप्रमा नाशयतीन्द्रियाणामगोचरे सिद्ध्यति विश्वक्लृप्तिः ॥ ५ ॥ किंचित्त्वसौख्येन विभात्यविद्या कुक्षौ ततो जागरिते न किंचित् । अवेदिपं तत्र महत्सुखं चेत्यतः स्मृतिस्तत्र जगत्प्रक्लृप्तिः ॥ ६ ॥ भातेऽप्यभातत्वविधायिनी सा तथा न भातेऽपि विभातता‌दा । नाभावरूपावरणस्य हेतुर्न भावरूपाद्वितयप्रसङ्गात् ॥ ७ ॥ न प्रागभावो रजतस्य शुक्तौ तयाभिसृष्टं सह बाध्यते तत् । तस्मादनिर्वाच्यतनूरविद्या विद्याविरोधोऽत्र नव्यर्थकः स्मृतः ॥ ८ ॥ निरुक्त्यभावेन च किंचिदुक्ते स्थिताः सदाद्या जगति प्रक्लृप्ताः । यथा यथारोपमिमे विभान्ति मूलं सदा सत्सुखमेव भाति ॥ ९ ॥ प्रत्यक्परत्वाध्यसनं पुरस्तादादाय तन्नूनमिदं त्वभानम् । अयं घटोऽस्त्यस्म्ययमित्यपन्हुतेतरद्धि भानं जगति प्रसिद्धम् ॥ १० ॥ प्रत्यक्परत्वावधिरस्ति चात्मा लब्ध्वा तमेतद्द्वितयं विनश्येत् । अध्यस्तबाधोत्तरमद्वितीयब्रह्मैव जीवो भवतीति सिद्धम् ॥ ११ ॥ ततोऽध्यासं परित्यज्य युक्तिर्जगति कापि न । अवस्तूपाधितो जीवे ब्रह्मभेदोऽप्यवास्तवः ॥ १२ ॥ तार्किकास्तर्कतो हेतूनणूंश्चजगति चक्षते । सांख्याः प्रधानं ब्रुवते तत्र

युक्तं यथा शृणु ॥ १३ ॥ स्वतो वा परतो वापि निरंशे न क्रिया भवेत् । तदभावान्न संयोगस्तदभावात्पराणुषु ॥ १४ ॥ नोपपन्नो ऽणुस्तद्वत्त्रसरेण्वादिकं जगत् । विचित्रेश्वरशक्त्या चेत्किं तेन परमाणुना ॥ १५ ॥ श्रुतिसिद्धेनेश्वरेण कोऽपराधः कृतस्तव । सच्च त्यशाभवद्ब्रह्मेत्येवं हि वदति श्रुतिः ॥ १६ ॥ उपादानस्य कृतिमद्भिन्नत्वव्यभिचारतः । ऊर्णनाभौ विचित्रेशशक्त्यङ्गीकरणादपि ॥ १७ ॥ विरुध्यते नास्मिन्नत्वं कर्त्रुपादानयोरिति । प्रधानस्य प्रवृत्तौ तु पुरुषः कारणं न वा ॥ १८ ॥ आद्ये किं कृतिमत्त्वेनाथवा चुम्बकवद्वद । आद्ये कथमुदासीनो द्वितीये सर्वदा भवेत् ॥ १९ ॥ प्रवृत्तिस्तेन ते मोक्षो न कथंचन युज्यते । प्रवृत्तिर्वा निवृत्तिर्वा जडनिष्ठा चिदाश्रिताम् ॥ २० ॥ कृतिमाश्रित्य दृष्टान्तो द्वितीयो नोपपत्तिमान् । मायामाश्रित्य सर्वं न उपपन्नं यथा शृणु ॥ २१ ॥ द्रौपद्यर्थं श्रीनिकेतो वसनानि बभूवह । तथैव जगदाकारस्वीकारे का क्षतिः प्रभोः ॥ २२ ॥ पार्थसंशयविच्छेदे विश्वरूपो जनार्दनः । तथैव जगदाकारस्वीकारे का क्षतिः प्रभोः ॥ २३ ॥ वत्साहरणवेलायां गोगोपादिरभूद्धरिः । तथैव जगदाकारस्वीकारे का क्षतिः प्रभोः ॥ २४ ॥ प्रल्हादपीडासंक्षुब्धो नृहरिर्जात ईश्वरः । तथैव जगदाकारस्वीकारे का क्षतिः प्रभोः ॥ २५ ॥ मत्स्यकूर्माद्यनेकानि रूपाणि भगवान्दधौ । तथैव जगदाकारस्वीकारे का क्षतिः प्रभोः ॥ २६ ॥ न बाह्यसाधनाकाङ्क्षा न भेदस्तस्य तत्र तु । न तत्सत्यं नापि शून्यं किंतु मायेति निश्चयः ॥२७॥ एकमेव तु चैतन्यं जीवेशब्रह्मशब्दभाक् । जीवत्वं देहयुगलावच्छेदेन भवेत्तथा ॥ २८ ॥ संस्कारसहिताविद्यावच्छेदेनेशता भवेत् । आरोपीयविशेष्यत्वाद्ब्रह्मता ब्रह्मणि स्थिता ॥ २९ ॥ आरोपकर्तृता वा स्याज्जीवत्वं ब्रह्मणि स्थितम् । जीवरूपानुप्रवेशोत्तरं व्याकरणश्रुतेः ॥ ३० ॥ संस्कारसहिताविद्याभिमानात्सा च कर्तृता । अव्याकृताभिमु-

खता भवेदीशत्वमात्मनि ॥ ३१ ॥ अन्वितत्वं सर्वबाधशेषत्वं ब्रह्मता भवेत्। एतत्त्रितयमेकत्र कल्पितं माययास्ति हि ॥ ३२ ॥ यथा मृदि घटत्वं च घटहेतुत्वमप्यथ । तदन्वितत्वं तद्बाधशेषत्वं लोककल्पितम् ॥ ३३ ॥ जलाहरणहेतुत्वं घटत्वेन भवेन्मृदः । संस्कारसहितत्वेन घटहेतुत्वमिष्यते ॥ ३४ ॥ अन्वयो बाधशेषश्च भवेत्केवलमृत्तया । घटो हित्वा निजाकारं मृदेकीभवति क्षणात ॥ ३५ ॥ तथा हित्वा निजाकारं जीवो ब्रह्म भवेत्पुनः । संस्कारेषु प्रबुद्धेषु पुनर्जीवः पुनर्घटः ॥ ३६ ॥ विचारबाधितेऽज्ञाने पुनर्याति न जीवताम् । जीवधर्मे च दृष्टेऽपि ब्रह्मैक्यं न विरुध्यते ॥ ३७ ॥ अज्ञत्वेऽपि च रामस्य ब्रह्मत्वं सर्वसंमतम् । तथैव सर्वजीवानां ब्रह्मत्वं श्रुतिसंमतम् ॥ ३८ ॥ अज्ञस्याप्यर्जुनस्यास्ति ब्रह्मत्वं सर्वसंमतम् । तथैव सर्वजीवानां ब्रह्मत्वं श्रुतिसंमतम् ॥ ३९ ॥ बुद्धस्य शून्यनिष्ठस्य ब्रह्मत्वं सर्वसंमतम् । तथैव सर्वजीवानां ब्रह्मत्वं श्रुतिसंमतम् ॥ ४० ॥ विष्णुब्रह्मेशदुर्गाणां ब्रह्मत्वं सर्वसंमतम् । तथैव सर्वजीनां ब्रह्मत्वं श्रुतिसंमतम् ॥ ४१ ॥ औपाधिकेषु धर्मेषु त्यक्तेषु चिति का भिदा । तथापि चेद्ब्रूहि तेषु का युक्तिर्ब्रह्मतामतौ ॥ ४२ ॥ इष्टं चेद्धर्मवैशिष्ट्यं तदा स्याद्ब्रह्म दूषितम् । अनिष्टं चेत्तदा सर्वजीवानां ब्रह्मता भवेत् ॥ ४३ ॥ न द्वैतं मायया किंचिद्रज्जुसर्पस्थले यथा । केन दृष्टं रज्जुसर्पद्वयं तस्माद्द्वहिर्मृषा ॥ ४४ ॥ एकेन रज्जुरन्येन सर्पश्चेदपि न द्वयम् । परस्परं चाप्रसिद्धेरिष्टासिद्धेस्तदापितु ॥ ४५ ॥ पितुः पत्नी सुतस्याम्बा भिन्ना स्यादन्यथा तव । तस्मान्न दृष्टिभेदेन भेदः स्याद्ब्रह्मसर्गयोः ॥ ४६ ॥ स्वाभाववत्स्थितत्वं यत्तन्मिथ्यात्वं प्रकीर्तितम् । अविद्यया स्वयं ग्राह्यं स्वाभावस्तु विचारतः ॥ ४७ ॥

१ प्रलयधर्मेण ब्रह्मीभूतजीवविषय एष सिद्धान्तः । ज्ञानेन तथाभूततद्विषयस्तूत्तरत्र ।

अभावोऽत्र न च ध्वंसः संस्कारात्मतया स्थितेः । ततः सत्कार्यवादोऽपि सिद्धोऽविद्यादशासु च ॥ ४८ ॥ आविर्भावतिरोभावौ सन्तौ चेत्स्तः सदातनौ । असन्तौ चेदसद्वादः सत्कार्यं नोपपत्तिमत् ॥ ४९ ॥ अपूर्वं किंचिदेष्टव्यं कृतिसाफल्यसिद्धये । स्वभाववादसंपातोऽनिष्टेऽपूर्वे श्रुतिर्वृथा ॥ ५० ॥ संबन्धानुपपत्तेश्च सतः कार्यस्य नोद्भवः । असन्निष्ठा यदोत्पत्तिः शशशृङ्गजनिस्तदा ॥ ५१ ॥ नोत्पत्तिनियमोऽस्माकं किंत्वसन्नियमो मतः । इति चेन्न कुलालस्य संशयस्तत्र दृश्यते ॥ ५२ ॥ यथा दृष्टं तथा कल्प्यमिति चेत्कल्पना वृथा । दृष्टं पश्यन्सुखं तिष्ठ किं ते कल्पनया भवेत् ॥ ५३ ॥ प्रागभावावधिः कः स्यात्सन्वाऽसन्वा घटो वद । उभयत्राऽवधित्वं तु न युक्तं सिद्ध्यसिद्धितः ॥ ५४ ॥ भविष्यत्त्वप्रतीतिस्तु योग्यतामवलम्बते । योग्यता कार्यसत्ता च पर्यायाववधारय ॥ ५५ ॥ अतएव न वृद्धायां पुत्रोत्पत्त्यै प्रवर्तते । सिकतासु न तैलाय प्रवृत्तो दृश्यते नरः ॥ ५६ ॥ यस्मात्सतोऽसतो वापि कार्यत्वं नोपपद्यते । तस्मादजातसिद्धान्तः स्थितिमाप्नोति शाश्वतीम् ॥ ५७ ॥ यथा रज्जावहिर्नष्टो नोत्पन्नो न स्थितोऽपि न । अजातो दृश्यते भ्रान्त्या विचारेण निवर्तते ॥ ५८ ॥ अधिष्ठाने समारोप्याऽभावः सत्यो न वा वद । सत्यश्चेद्द्वैतसंप्राप्तिर्न चेत्कार्यस्य सत्यता ॥ ५९ ॥ इति चेन्न द्वयापत्तिरनन्यत्वान्न सत्यता । विचारक्षणबाधाच्च तस्माददृयता स्थिता ॥ ६० ॥ अथवा न दृशाभेदाद्भावाभावौ स्थितिं गतौ । यथा वा शशशृङ्गस्य नाभावो नापि सत्यता ॥ ६१ ॥ भ्रमेऽनन्यत्वतो बाधे प्रतियोग्यप्रसिद्धितः । तदित्थं शशशृङ्गाभं जगज्ज्ञानेन बाध्यते ॥ ६२ ॥ अधिष्ठानानन्यमतिर्ज्ञानं वेदान्तसंमतम् । येन द्रष्ट्रादिभेदोऽयं न जाने क्व पलायते ॥ ६३ ॥ अजातवादबुद्धस्य वीचीवत्पश्यतो जगत् । अतिपक्कं यदा चित्तं तदा दृश्यं विलीयते ॥ ६४ ॥ आत्मगुर्वीश-

शास्त्राणां प्रसादा युगपद्यदि। तदोपदेशसमये लीयते रज्जुसर्पवत् ॥ ६५ ॥ ननु स्याद्यदनन्यत्वं जगता ब्रह्म दूषितम्। घटकार्यं च मृत्कुर्याद्धटसृष्टिर्वृथा तथा ॥ ६६ ॥ इति चेत्कारणाभेदं कार्ये ब्रूमो न कारणे। तदनन्यत्वमित्थं च कारणे नास्ति दूषणम् ॥ ६७ ॥ सृष्टिभ्रान्तिर्वृथैवातः शास्त्रं सफलमुच्यते। सर्वस्य व्यवहारस्य भ्रमो निर्वाहको भवेत् ॥ ६८ ॥ भ्रमेऽपि पुरुषार्थश्चे-त्स्वप्नेऽपि फलवान्भव। शास्त्रस्यापि भ्रमत्वेन सत्यबोधः कथं भवेत् ॥ ६९ ॥ इति चेत्स्वाप्नसिंहेन कथं ते सत्यजागरः। किंच विद्वानविद्वान्वा पृच्छ्यते ब्रूहि नस्त्वया ॥ ७० ॥ अविद्वान्वेद नो बोधं विद्वान्नो वेद कारणम्। विद्वद्दृष्ट्या त्वविद्यैषा न कालत्रयभागिनी ॥ ७१ ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ७२ ॥ यत्र नान्यद्विजानाति नेह नानास्ति किंचन। इत्यादिश्रुतयोऽज्ञानं तन्निवृत्तेश्च कारणम् ॥ ७३ ॥ नैवेत्याहुरतो विद्वान्नाज्ञानं वेद न श्रुतिम्। तथाप्यतर्क्यबोधे तु श्रुतिरेव प्रमाणकम् ॥ ७४ ॥ तर्कागम्यापूर्वबोधे पूर्वकाण्डवदिष्यताम्। विशेषस्तु ब्रह्मबोधोत्तरं मिथ्या स्वयं भवेत् ॥ ७५ ॥ श्रुतिस्मृतिपुराणानि त्यक्त्वा मानुषकल्पितान्। तर्कानाश्रित्य मूढाश्चेत्का नो हानिः श्रुतेरपि ॥ ७६ ॥ धर्मवद्वेदकथितं मन्तव्यं चेत्कुतोऽनुभूः। इति चेदपरोक्षत्वादनुभूतिर्न बाध्यते ॥ ७७ ॥ मृत्तादात्म्यं घटे चेत्स्याद्धटोऽपि घटकारणम्। इति चेत्किं घटत्वेनाथवा मृत्त्वेन हेतुता ॥ ७८ ॥ कार्यकारणतावच्छेदकैक्यात्प्रथमेन हि। मृत्त्वेन घटहेतुत्वं मृत्स्नायामिष्टमेव नः ॥ ७९ ॥ अतएव घटस्तत्र दृश्यते नास्त्यपह्नवः। कुलालकृत्ययोग्यत्वान्न घटेऽस्ति घटान्तरम् ॥ ८० ॥ पुनर्व्यापारयोग्यत्वे भविष्यति पुनर्घटः। सोपाधिके भ्रमे ह्यस्मिंश्चोदना ते न युक्तिभाक् ॥ ८१ ॥ तादात्म्यं हेतुसंबन्धं वदतस्तेऽपि दूषणम्। मृत्तादात्म्यं

घटे नास्ति भेदवक्तुर्ममेति चेत् ॥ ८२ ॥ कथं संबन्धता तस्य द्विनिष्ठत्वमृते वद । कार्यकारणयोर्भेदे कान्तर्भवति वीचिका ॥ ८३ ॥ जलभेदात्पृथिव्यादिभेदान्न द्रव्यता भवेत् । अतिरिक्तत्वपक्षे तु संख्याबाधः प्रसज्यते ॥ ८४ ॥ सांशद्रव्यत्वतश्च स्यात्संयोगो हेतुकार्ययोः । स्तम्भकुम्भादिवत्तस्माद्भेदवादो न युक्तिमान् ॥ ८५ ॥ बुद्धिग्राह्यं परब्रह्म जगच्च ग्राह्यमिन्द्रियैः । शब्दस्पर्शादिवद्भेदो मिथः स्यादिति चेन्नहि ॥ ८६ ॥ उभयग्राहिणी बुद्धिर्विश्वे त्विन्द्रियसारथिः । शुद्धातिरेकाभावेन विशिष्टे न भिदा तयोः ॥ ८७ ॥ विशिष्टस्य मिथो भेदाद्भिन्नाः शब्दादयः खलु । आरोपितस्याधिष्ठानाद्भेदवार्ता न युज्यते ॥ ८८ ॥ यथा द्वैते तथाऽद्वैते तर्काः सन्ति सहस्रशः । मिथः सत्प्रतिपक्षत्वाद्ग्राह्या वेदानुमोदिताः ॥ ८९ ॥ आस्तिकेन त्वया नोचेन्नास्तिकस्त्वं बहिर्व्रज । किं ते तर्काद्वैतसिद्धिर्विषयेऽविषयेऽथवा ॥ ९० ॥ आद्ये चेत्कार्ययोर्द्वैतं कार्यकारणयोरुत । आद्ये चेदिष्टमस्माकं द्वितीये नियतान्वयात् ॥ ९१ ॥ न द्वैतं तद्ब्रह्मग्राह्या गुणा अपि तदात्मकाः । त्वत्तर्कविषयत्वेनाविषयत्वं हृतं तव ॥ ९२ ॥ अतर्क्ये चेत्कथं तर्कस्ततस्तूष्णीं स्थितो भव । अज्ञातपक्षे साध्यस्य साधकश्चेदलंमतिः ॥ ९३ ॥ ब्रह्मणो विषयत्वे तु मिथ्या स्याद्रज्जुसर्पवत् । तस्यापि सत्यता चेत्स्यादर्थः को भ्रमशब्दके ॥ ९४ ॥ भ्रमशब्दस्य विश्वं नः सत्यशब्दस्य तत्परम् । सत्यशब्देन वाच्यत्वे मिथ्यात्वं ब्रह्मणो भवेत् ॥ ९५ ॥ इति चेन्न गृहीत्वा तु सत्यत्वं व्यावहारिकम् । शक्तिर्वेदे लक्षणया ब्रह्मार्थः स्यादबाधितम् ॥ ९६ ॥ व्यवहारे न गौणत्वं मुख्यादर्शनतो घटे । परमार्थदशायां तु सर्वे शब्दा निरर्थकाः ॥ ९७ ॥ सर्वेषामपि शब्दानां ब्रह्मैवार्थस्तदा भवेत् । वाच्यवाचकभावेन कल्पितत्वाद्ब्रह्मार्थता ॥ ९८ ॥ शक्यं त्यक्त्वा यथा शब्दः कल्प्यं त्यक्त्वा मतिस्तथा । युगपद्व्याप्नुतो ब्रह्म निर्विशेषं गतद्वयम्

॥ ९९ ॥ निर्व्यापारदशां प्राप्तौ तदा स्तो मतिशब्दकौ । व्याप्तेः पूर्वं शक्यकल्प्यत्यागमादाय सा श्रुतिः ॥ १०० ॥ यतो वाचो निवर्तन्ते अप्राप्येति प्रभाषते । मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ॥ १०१ ॥ इति श्रुतिर्द्वैतबाधशेषस्य मतिगाह्यताम् । ब्रवीति तत्कथं शब्दो यदि न ब्रह्म गाहते ॥ १०२ ॥ मतिर्गाहेत गाहेत तर्कोचेन्न प्रमा भवेत् । अतीन्द्रियत्वात्तर्काणामप्रतिष्ठानयोगतः ॥ १०३ ॥ तस्मादुपनिषद्वाक्यैर्मतौ ब्रह्मप्रमा भवेत् । प्रमाविरोधिनी नश्येदविद्या नान्यथा सखे ॥ १०४ ॥ यथोपदेशं सा च स्यादहं ब्रह्मेति वा प्रमा । सर्वं ब्रह्मेति वा नूनं सर्वथा न परोक्षता ॥ १०५ ॥ उभयत्र जगद्बाधात्स्वप्रकाशात्मगाहनात् । तदर्थस्य जगद्धेतोः सर्वज्ञस्य सदात्मनः ॥ १०६ ॥ त्वमर्थस्य सदेहस्याल्पज्ञस्य मृतिमीयुषः । परस्परविरोधेन कथमैक्यमितिश्रुतिः ॥ १०७ ॥ विकारो नामधेयं च वाचारम्भणमात्रकम् । उक्त्वा सदात्मनोर्मुख्यमैक्यं ब्रूते दयावती ॥ १०८ ॥ रङ्गत्वरजतत्वाभ्यां भाता शुक्तिर्विचारणात् । शुक्त्यैक्यं भजते तद्वत्सत्सदैक्यं विचारणात् ॥ १०९ ॥ सर्वं ब्रह्मेति वाक्यं तु बाधाभेदेऽभिसंहितम् । कल्पितं सर्वशब्दार्थो जीवोऽकल्पितचित्प्रभः ॥ ११० ॥ अर्थः स्याद्ब्रह्मशब्दस्य ब्रह्मलक्षणयोगतः । प्रतिबिम्बत्वपक्षस्तु नोपपन्नः कथंचन ॥ १११ ॥ प्रतिबिम्बव्यापकस्य रूपस्य विरहाच्चितः । प्रतिबिम्बं न मायायां मरुतो न यथाम्भसि ॥ ११२ ॥ शुक्तावारोपिते रौप्ये न शुक्तिः प्रतिबिम्बिता । तथैवानन्यमायायां न ब्रह्म प्रतिबिम्बभाक् ॥ ११३ ॥ बाध्यस्य मुक्त्ययोगाच्च तस्माच्चिज्जीवशब्दभाक् । चित्रभोगव्यवस्था तु सिद्ध्यत्यज्ञानलीलया ॥ ११४ ॥ तस्मान्न सर्वशब्दार्थो बाध्यकोटिप्रसङ्गतः । सर्वथा नापरोक्षस्य परोक्षत्वं हि युज्यते ॥११५॥ यदि ब्रूयात्परोक्षत्वं न प्रमा तस्य मन्यते । अपरोक्षे परोक्षत्वस्यारोपान्न प्रमा भवेत् ॥ ११६ ॥ तथापि चेद्रज्जुसर्पज्ञानं

किं न प्रमा भवेत् । शब्दाभावात्प्रमा कस्मादवाक्प्रवचने वद ॥११७॥ इति चेच्छ्रीगुरोः शक्तिरचिन्त्या तत्प्रभावतः । तदिङ्गितांद्यैर्भवति मुख्यानामधिकारिणाम् ॥ ११८ ॥ यथैव कामिनी कामं जनयेदधिकारिषु । तथेङ्गिताद्यैर्जनयेत्प्रमां मुख्याधिकारिषु ॥ ११९ ॥ अतएव च कौशल्यं श्रुतिः श्रीगुरुशिष्ययोः । वक्त्याश्चर्योऽस्य वक्तेति लब्धा कुशल इत्यपि ॥ १२० ॥ अथवा वाक्समाप्येतां व्याख्यानं श्रुतिवाक्यतः । अवाक्प्रवचनं प्रोक्तं मौनिनौ यत्र तावुभौ ॥ १२१ ॥ यदासाद्य जगद्बीजं मूकीभवति वाक्पतिः । गौतमस्य मतिर्यत्र कुण्ठीभवति तर्कतः ॥ १२२ ॥ यदि बुद्धेर्गोचरं तन्मिथो भेदोऽनयोर्भवेत् । अगोचरं चेदज्ञानं न नश्येच्च कथंचन ॥ १२३ ॥ इति चेदद्वितीयत्वं ब्रह्मधर्मं श्रुतेर्गिरा । बुद्ध्वाऽज्ञानं संत्यजति प्रतीचि चकिता मतिः ॥ १२४ ॥ यथाऽऽलोकं समालोक्य नेत्रमुज्झति मन्दताम् । तदेव चकितं भूयः सूर्यालोकनलालसम् ॥ १२५ ॥ विदिताविदितान्यत्वमतः प्राह गुरुः श्रुतौ । शिष्यश्च प्राह योऽस्माकं वचनं वेद तावकम् ॥ १२६ ॥ नो न वेद न वेदेति वेदेत्युच्चरमग्रतः । यद्वेद तच्च दभ्रं स्यात्परोक्षं स्यान्न वेद यत् ॥ १२७ ॥ इति स्थितं ततो बुद्धेः प्रत्यक्त्वाल्लब्धरूपकम् । अगोचरत्वात्तद्भिन्नमतश्चकितता मतेः ॥ १२८ ॥ सर्वथा द्वैतबाधेन त्यागेन प्रत्यगात्मनि । मतेर्विश्रमणं ब्रह्माकारा वृत्तिरिहोच्यते ॥ १२९ ॥ अतस्त्यागेनामृतत्वं भूयो वेदः प्रभाषते । अन्यप्रकाशबाधे तु स्वप्रकाशे मतिः स्थिता ॥ १३० ॥ बहिर्यातुं न शक्नोति मार्जारीव जटौषधेः । वोभूत्वानन्दकल्लोला तत्रैव समतामियात् ॥ १३१ ॥ संशान्तसर्वसंकल्पा या शिलावद्वस्थितिः । जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ १३२ ॥

---

१ तदिङ्गितेन तन्निमिषितेन तच्चेष्टितेन चार्याणामभिप्रायो बोध्यते महाभाष्ये.

इति श्रुतिरतः सर्वे वेदान्ता द्वैतबाधनात् । कृतार्थाः शेषविश्रान्ताः प्रतीचि चकितास्तथा ॥ १३३ ॥ जगद्गुरोरीश्वरस्य सर्वप्रत्यक्स्वरूपिणः । प्रसादलभ्या विद्यैषा न पाण्डित्यैर्न जल्पनैः ॥ १३४ ॥ बहुजन्माराधितेन परेशेनैव सन्मतिः । स्वेनैकीक्रियते जीवो न कुतर्कसरिद्धृतः ॥ १३५ ॥ युगपत्सर्वपुण्यानां फलं दित्सति चेच्छिवः । तदाऽऽत्मज्ञानसंपत्तिं ददात्यानन्दवारिधिः ॥ १३६ ॥ वदत्याश्चर्यवद्वक्ता पश्यत्याश्चर्यवत्परः । उभयोः प्रत्यगर्थत्वान्न जानीतः परं पदम् ॥ १३७ ॥ उक्त्वा गुरुः कृतार्थोऽभूत्प्रतिपाद्य श्रुतिस्तथा । श्रुत्वा चाहं कृतार्थोऽस्मि त्रयाणामप्यगोचरम् ॥१३८॥ ईदृशज्ञानसंपन्नो मुक्त इत्युच्यते बुधैः । ननु मुक्तौ प्रमाणादिव्यवहारोऽस्ति वा न वा ॥ १३९ ॥ अस्ति चेद्बद्धतापत्तिर्नोचेत्तज्जीवनं कथम् । इति चेन्न न मुक्तानां व्यवहारो मनागपि ॥ १४० ॥ दृश्यते चेत्तव भ्रान्तिर्न मुक्तानां महात्मनाम् । जीवनं मरणं वापि न जानन्ति महाधियः ॥ १४१ ॥ दृष्टं चेज्जीवनं तेषां महापुण्योदयस्तव । व्यवहारविदूरस्य कृष्णस्य परमात्मनः ॥ १४२ ॥ व्यवहारं हि पश्यन्तो महाभाग्योदया यथा । अस्तु वा व्यवहारोऽसौ न तेषां बद्धता भवेत् ॥ १४३ ॥ यतो ब्रह्ममयं सर्वं जगत्तद्दृष्टिगोचरम् । शोकमोहाद्यभावेन न त्वत्तुल्या महाजनाः ॥ १४४ ॥ शर्करामीनमांसादः कः पापी शोकवांश्च कः । निर्ममा निरहंकारा वाचैवाज्ञानभेदकाः ॥ १४५ ॥ यथाप्राप्तं सुसन्तुष्टाः कथं बद्धा महाशयाः । संकल्प्य बद्धतां तेषु कुतः पापाय यत्नवान् ॥ १४६ ॥ मैवं कुरु महाप्राज्ञ तत्पादाब्जनतो भव । विचारमात्रहीनोऽसि त्वं कुतो बन्धवानसि ॥ १४७ ॥ यतो विचारमात्रेण मुक्तास्ते नान्यहेतुना । अविद्याकर्मणी च द्वे परस्परसहायके ॥ १४८ ॥ जगत्कारणतां याते ईश्वरानुग्रहान्विते । तत्र कर्म स्वप्रधानं दृश्याकारस्य कारणम् ॥ १४९ ॥ अविद्या तत्र सत्यत्वहेतुः

स्यात्स्वप्रधानिका । अविद्यायां हि नष्टायां नष्टा तत्सत्यतापि तु ॥ १५० ॥ विद्यया दृश्यसंघाते ब्रह्मता भाति केवला । चैतन्यविषयत्वस्य मिथ्यात्वव्यापकस्य तु ॥ १५१ ॥ अभावेन न चैतन्यं मिथ्येति ब्रह्मवादिनः । कर्मनाशे नामरूपनाशोऽथ स्याद्विदेहता ॥ १५२ ॥ अविद्यारहितं कर्म नाग्रे दृश्यस्य कारणम् । यथैवैकदले नष्टे नापरं चाणकं दलम् ॥ १५३ ॥ अङ्कुरोत्पादने शक्तं तथा कर्मेति चक्ष्महे । नष्टेऽज्ञाने कर्म सृष्टं भाति ब्रह्मतया तु यत् ॥ १५४ ॥ जीवन्मुक्तिः सैव सिद्धज्ञानिभिः कथ्यतेतराम् । वासुदेवः सर्वमिति वासुदेवोऽब्रवीत्स्वयम् ॥ १५५ ॥ नान्यद्यत्रेति वेदान्ता अप्याहुर्बोधलक्षणम् । अयमेव समाधिस्तु यद्ब्रह्मैक्यावलोकनम् ॥ १५६ ॥ भाने विशेषो माया स्याद्भानं ब्रह्मैव केवलम् । इति यः सुदृढो बोधः स समाधिरिति स्मृतः ॥ १५७ ॥ कृतिसाध्यो निरोधात्मा मूर्खकल्पित इष्यताम् । प्रमाणजन्यवृत्तिः किं न ब्रह्मविषया मता ॥ १५८ ॥ भित्तौ लिखितरज्ज्वात्मसर्पनाशेन नो सुखम् । किंतु तत्सत्यताबाधात्ततो नश्यतु तिष्ठतु ॥ १५९ ॥ निश्चिते रज्जुभुजगे नाभयं नेत्रमीलनात् । निरोधाच्चेतसो वापि तस्माद्बाधः सुखावहः ॥ १६० ॥ निश्चित्य यक्षं तमसि किं सुखं नेत्रभञ्जनात् । तथा निश्चित्य विश्वं ते किं सुखं चित्तभञ्जनात् ॥ १६१ ॥ यो विश्वसत्यताबोधस्तच्चित्तं तच्च दुःखदम् । बाधिते विश्वसत्यत्वे ब्रह्मसद्ब्रह्म गाहते ॥ १६२ ॥ को वा विधिः श्रुतौ वेदे ब्रह्मोद्दिश्य सखे वद । जीवो ब्रह्मेति शतधा श्रुत्वा कर्ता भवेत्कथम् ॥ १६३ ॥ यथा तथा स्थितो विज्ञः समाधिस्थो न चान्यथा । यथा तथा स्थितं ब्रह्म केवलं सर्वसंमतम् ॥ १६४ ॥ निमिषार्धं न तिष्ठन्ति वृत्तिं ब्रह्ममयीं विना । अन्यस्यानुपलब्धत्वाज्जीवन्मुक्ता महाशयाः ॥ १६५ ॥ तृणीकृत्य जगत्सर्वं ब्रह्मीकृत्य च तत्पुनः । निश्चिन्ता निरहंकाराः शुद्धसत्वाः समस्थिताः ॥ १६६ ॥ विहरन्ति

यथाकामं सार्वभौमार्भकौ यथा । वेदोऽनुशासितुं नेष्टे ब्रह्मज्ञानीश्वरं यथा ॥ १६७ ॥ श्रीगुरोः करुणा चेत्स्याल्लभ्या मुक्तदशा तदा । अतः श्रीगुरुपादाब्जकैङ्कर्यं न त्यजेद्बुधः ॥ १६८ ॥ येनाकिङ्करतां याति देवादीनां महामतिः । अनृणी जायते सद्यः कृतकृत्यश्चरेन्महीम् ॥ १६९ ॥ येनकेनचिदाच्छन्नो येनकेनचिदाशितः । यत्रकचनशायी सन्मोदते ब्रह्मनिष्ठया ॥ १७० ॥ लोका नन्दन्तु निन्दन्तु किं मूर्खकथया मम । शतधा स्तौति मां वेद इति विश्रान्तिमागतः ॥ १७१ ॥ अहं वेद्मि श्रुतेर्हृद्यं मम हृद्यं श्रुतिस्तथा । को वा जानाति मां मूढ इति विश्रान्तिमागतः ॥ १७२ ॥ यच्च प्रारब्धशेषेण भविष्यति तथास्तु तत् । उचितात्र च संशान्तिरिति विश्रान्तिमागतः ॥ १७३ ॥ सत्कर्माणि कुकर्माणि यदि स्युः कर्मयन्त्रणात् । न नूनं बन्धहेतूनि तेषामाप्ततया मम ॥ १७४ ॥ लूतातन्तुः पुनर्लूतां न बध्नात्याप्ततावशात् । अन्येषां मूढचित्तानां क्रिमीणां दृढवागुरा ॥ १७५ ॥ सेवका निन्दकाश्चेमे दायादा मम कर्मणः । तेनैव मे यथेष्टत्वमिति विश्रान्तिमागतः ॥ १७६ ॥ यः कुर्वन्नप्यकुर्वाणो यो भुञ्जन्नप्यभोगवान् । श्रीमद्गुरुकृपापात्रं धन्यो ब्रह्मपदं गतः ॥ १७७ ॥ श्रीमद्देशिकवाक्येन ब्रह्मीभूतस्य किं मम । उत्पाटयन्ति कर्माणि बाढं विश्रान्तिमागतः ॥ १७८ ॥ आश्चर्यं ब्रह्म न ब्रह्मेत्येवं रोदिति रोदिति । स्वीकृत्य गुरुसांमुख्यं हसन्नृत्यति नृत्यति ॥ १७९ ॥ आश्चर्यं ब्रह्म नानाभूदहित्वाद्वयरूपकम् । अत्यक्त्वा तच्च नानात्वमद्वयं भाति सुन्दरम् ॥ १८० ॥ मदुन्मेषनिमेषाभ्यां संसारस्योदयक्षयौ । विभातो मे न कर्तृत्वं किमाश्चर्यमिदं सखे ॥ १८१ ॥ अरोदिषं देहबुद्ध्या ब्रह्मभावं गतोऽधुना । तथाविधाञ्जनान्दृष्ट्वा हसाम्युपदिशामि च ॥ १८२ ॥ अदृष्टं ब्रह्म वमति ब्रह्माण्डानि सहस्रशः । दृष्टमत्ति क्षणेनैव तस्माद्भ्रान्ताशिसंमतम् ॥ १८३ ॥ अयोनि च जगत्सूते विनास्यं

गिलति क्षणात् । किमाश्चर्यमिदं ब्रह्म किंचित्कपटमस्ति किम् ॥ १८४ ॥ तर्कतर्कित आत्मा तु नानाविधतया स्थितः । श्रुतिश्रुतस्त्वेकविधस्तमाश्रित्य सुखी चिरम् ॥ १८५ ॥ मृत्कल्पितघटे यद्वन्न भूतान्तरमस्ति हि । तद्वच्चित्कल्पिते विश्वे न भूतानि चितिं विना ॥१८६॥ शुक्तावारोपितं रौप्यं यथाशुक्तिघनं मतम् । तद्वच्चित्कल्पितं विश्वं चिद्घनं भाति मे सदा ॥ १८७ ॥ आत्मसात्त्रिपुटी यत्र धन्यं मे दर्शनं सखे । धन्या मे शास्त्रकलना यत्र शान्तिः सुशीतला ॥ १८८ ॥ धन्या मे गुरवो येषां पादाः कल्पमहीरुहाः । यदाश्रितस्य मे नूनं सर्वलाभः क्षणादभूत् ॥ १८९ ॥ अविद्यैक्यानि नष्टानि संचितानि तया सह । शिष्टं प्रारब्धमपि मे मुमूर्षति लवे-लवे ॥ १९० ॥ अदायादमनायासमानन्दं प्राप्तवानहम् । ततो गर्ववशो नूनं मत्समोऽस्ति न वा भुवि ॥ १९१ ॥ क्षेत्राणामप्यहं क्षेत्रं तीर्थानां तीर्थमस्म्यहम् । अतः क्वापि मरिष्यामि वसामि विहरामि च ॥ १९२ ॥ इत्थं नानाविधैर्भावैः क्रीडति स्वात्मलीलया । सर्वानन्दतृणीकारो यदानन्देन जायते ॥ १९३ ॥ धन्या माता ब्रह्म यस्यास्तु गर्भे धन्यस्तातो लालितं ब्रह्म येन । धन्यः श्रीमत्सद्गुरुर्बोधदाता धन्याः सर्वे विज्ञसंबन्धिनस्ते ॥ १९४ ॥ धन्यो विज्ञो यस्य दृष्टौ जगत्स्याद्ब्रह्माद्वैतं केवलं शान्तशान्तम् । शुद्धाद्वैतज्ञानयोगेन यस्य श्रौतं स्मार्तं कर्म सर्वं समाप्तम् ॥ १९५ ॥ धन्या वाचो यस्य चिद्ग्राहशीला धन्या धन्या यत्क्रिया ब्रह्मलीलाः । श्रुत्वा दृष्ट्वा सज्जना मोददोलाः संतप्तानां यस्तु विश्रान्तिशाला ॥ १९६ ॥ धन्या पृथ्वी यस्य संचारपूता धन्यं विश्वं ब्रह्मतामेति सद्यः । धन्यं दैवं येन मुक्तोऽभिसृष्टो धन्यं मौनं यद्वचो नो रुणद्धि ॥ १९७ ॥ धन्योत्पत्तिर्यस्य पश्चान्न जन्म धन्यो मृत्युर्यस्य पश्चान्न मृत्युः । धन्यो भोगो यस्य पश्चान्न भोगो धन्यो लाभो यस्य पश्चान्न दुःखम् ॥ १९८ ॥ धन्यस्त्यागः सर्वसत्त्वेऽपि यस्य

धन्यो रागो यस्य नो बन्धहेतुः । धन्यं सौख्यं सर्वशून्येऽपि यस्य धन्यो मोदो विश्वमापूर्य गच्छन् ॥ १९९ ॥ द्वितीयमात्रादृष्टान्तान्मिथ्या प्रथमसात्त्विका । नष्टा तृतीया बीजाख्या तदा तुर्यमखण्डितम् ॥ २०० ॥ ब्रह्मनिष्ठवरिष्ठाय वसिष्ठाय नमोनमः । नमो रामाय कृष्णाय देशिकाय नमोनमः ॥ २०१ ॥ यदूनं सज्जनाः सर्वं पूरयन्ति स्वभावतः । यथा सगरखातानि पूरयामास जाह्नवी ॥ २०२ ॥ स्वानुभूतिविलासोऽयं कृष्णानन्देन भिक्षुणा । अलेखि दृष्ट्वा तं लोको नन्देच्चेदनुभूतिमान् ॥ २०३ ॥ इति श्रीमत्कृष्णानन्दसरस्वतीविरचितः स्वानुभूतिविलासः समाप्तः ॥

सौजन्यनिधयः श्रीमद्राजारामाख्यशास्त्रिणः ।
गता मे पूर्वगुरव इति चिन्तक मा शुचः ॥ १ ॥

---

# अद्वैतसाम्राज्यम् ॥ ६ ॥

जय सच्चिदानन्द ।

ॐ सर्ववादविदूराय स्वप्रकाशैकदीप्तये । नित्यमुक्ताय शान्ताय प्रतीचे ब्रह्मणे नमः ॥ १ ॥ यत्कृतेक्षाक्षणेनैव ब्रह्मैवाहमिति प्रथा । तस्मै श्रीसच्चिदानन्दमूर्तये गुरवे नमः ॥ २ ॥ श्रीमद्राजारामयतीन्द्रान्कविचन्द्रान्विद्वद्वादिद्विरदक्षोभेषु मृगेन्द्रान् । आपन्नार्तित्राणे करुणारससान्द्रान्वन्दे विद्वद्गौरवदीक्षागततन्द्रान् ॥ ३ ॥ तच्छिष्याः प्रथिताश्च सन्ति बहुशोऽप्यासेतुसीताचलं तेषां मौलिमणीयमानचरणा बालाभिधाः शास्त्रिणः । विद्याभिस्त्वनवद्यहृद्यकविभिर्गण्याश्च वाग्देवतास्तेतेषां स्मृतिरेव मङ्गलमिमं ग्रन्थं नयेत्पूर्णताम् ॥ ४ ॥ आबाल्याच्छास्त्रवेत्तृत्वाद्बालशास्त्र्यभिधाजुषाम् । भवेन्मम सहायश्चेद्ग्रन्थोऽयं विपुलीभवेत् ॥ ५ ॥ ऋते गुरूपसत्तिं न ज्ञानं कस्यापि जायते । अतो वसिष्ठशिष्याय रामायास्तु नमो

नमः ॥ ६ ॥ द्वैताद्वैतविचारकौतुकवशाद्विध्वस्तभेदः सुधीरद्वैते परिनिष्ठितः परशिवः काप्यस्ति तस्मै नमः । द्वैतध्वान्तसमुन्मिषद्दृगपरो मध्वादिनक्तंचरो भूयिष्ठः श्रुतियुक्तिभूतिरजसा प्रोत्सार्यते फूत्कृतैः ॥ ७ ॥ न कोपः कर्तव्यो भवति महतां बालचरिते मुहुर्दृष्ट्वा वृद्धाचरणमिह बालोऽपि यतते । न तत्कर्तुं शक्तस्तदपि महतां प्रीत्युदयतस्तदङ्के संवेशं फलमभिमतं चापि लभते ॥ ८ ॥

इह खलु यथार्थप्रतिपत्तिहेतुश्रुतितात्पर्यं द्वैतनिन्दनादद्वैतदर्शनस्य मोक्षफलश्रवणादद्वितीये ब्रह्मण्येवेति राद्धान्तो घाण्टापथिकः। तत्र द्वैतवादिनः पृच्छ्यन्ते ॥

ॐ श्रीः ॥ द्वैतस्य साधकं द्वैतमुताद्वैतं सखे वद । आत्माश्रयत्वमाद्ये स्यादेककोटिप्रसङ्गतः ॥ १ ॥ द्वितीये स्वविरुद्धस्य साधकं स्वं भवेत्कथम् । न चण्डभानुस्तमसि मानं भवितुमर्हति ॥ २ ॥ यत्सत्त्वे यदभावस्य नियतत्वं विरोधि तत् । भानुसत्त्वे तमःसत्त्वं केन दृष्टं क्षितौ वद ॥ ३ ॥ प्रत्यक्षादिप्रमाणानि द्वैते सन्तीति चेद्वद । मानानि केन सिद्धानि किं तस्याप्यस्ति साधकम् ॥ ४ ॥ अनवस्थादिदोषः स्यान्मानान्तरपरिग्रहे । मानाऽसिद्धानि चेत्तानि भ्रमोऽयमिति भण्यते ॥ ५ ॥ भ्रमसिद्धेन यत्साध्यं सोऽपि भ्रम इतीष्यताम् ॥ ६ ॥ प्रमाणागोचराणां चेत्सत्त्वं वन्ध्यासुतोऽपि सन् । प्रमाणगोचरत्वं चेदुक्तदोषे निमज्जसि ॥ ७ ॥ स्वतःप्रमाणभूतेन सर्वस्यानुभवेन हि । प्रमाणानि हि सिध्यन्ति तैः सिद्धं द्वैतमक्षतम् ॥ ८ ॥ इति चेदनुभूतिस्तु न प्रामाण्यप्रयोजिका । मेयस्यापि च मानत्वं भवेत्तव मते तदा ॥ ९ ॥ येन रूपेण यज्ज्ञातं तत्तथेति विनिश्चयः । कर्तुं न शक्यते कापि रज्जुः सर्पायते नहि ॥ १० ॥ मेयसिद्ध्यैव मानत्वं मानसिद्ध्यैव मेयता । अन्योन्याश्रयदोषेण न सिद्ध्येदुभयं तव ॥ ११ ॥ भ्रमप्रमासमानस्यानुभवस्य न कस्यचित् ॥१२॥ साधकत्वं भवेन्नूनमतो मानान्तरं

वद। मानाभावात्प्रमाणानामसिद्धिरिति हेतुना। द्वैतासिद्धिर्यदि भवेत्तावकीनमतेऽपि हि। किं मानमद्वयेऽस्मिंश्चेद्वन्ध्यायास्तनयोऽपि कः ॥ १३ ॥ यदि स्यात्तनयस्तस्याः कथं वन्ध्येति गीयते। तनयेऽपि च वन्ध्या चेत्प्रश्नोऽयमुपपद्यते ॥ १४ ॥ मानमेयादिविरहे मीमांसा मानगोचरा। उपहासाय ते भूयाद्वन्ध्यासुत इवाधुना ॥ १५ ॥ मानाभावादद्वयस्य न सिद्धिरिति चेत्तदा। पुत्राभावान्न सिद्धिः स्याद्वन्ध्याया अपि ते मते ॥ १६ ॥ पुत्राभावः स्वरूपं चेन्मानाभावोऽपि तस्य तत्। शून्यवादप्रसङ्गश्चेच्छून्यं द्वैतस्य मे मतम् ॥ १७ ॥ प्रमाणाभावतो द्वैतं शून्यमेव समाविशेत्। नाद्वैतशून्यता सा तु भवेन्मानादिसंभवे ॥ १८ ॥ यदन्यस्य प्रमाणानि न सहेत कथं नु तत्। स्वस्मिन्सहेत मानानि विवस्वानिव तत्तमः ॥ १९ ॥ तस्मात्तूष्णीं तिष्ठ वत्स तदेवाद्वैतमिष्यते। नाज्ञाननाशो मानस्यानङ्गीकारे भवेत्तव ॥ २० ॥ यत्र स्यान्मानसंपर्कस्तत्राज्ञानं विनश्यति। इतिचेन्मानसंपर्कः कुत्र दृष्टस्त्वया वद ॥ २१ ॥ असिद्धानां हि मानानामसिद्धविषयेषु चेत्। संपर्कः स्नाति वन्ध्यायाः सुतो मृगजलोर्मिषु ॥ २२ ॥ स्नात्वा त्वमपि तत्रैव ब्रह्ममानी करोषि हि। मृगवारिजलैश्चेत्स्युः शीता भानुमरीचयः ॥ २३ ॥ तदा त्वन्मतमानेन ब्रह्मापि विषयीकृतम्। मानमेयाद्यभावे तु सुषुप्तिस्ते मते स्थिता ॥ २४ ॥ सत्यं तदा सुषुप्तिः स्यादपि मानादिगोचरे। निश्चये सति विश्रान्तिर्न तथेयं स्थितिर्मता ॥ २५ ॥ अवस्थात्रयसद्भावो मानाभावान्न सिद्ध्यति। इति बोधः सुषुप्तिश्चेज्जन्म ते सफलीकृतम् ॥ २६ ॥ विचारागस्त्यसंपीतद्वैतनाम्नि महोदधौ। चिन्तामणिर्मोक्षनामा कर एव स्थितस्तव ॥२७॥ मानानङ्गीकारपक्षे व्यवहार उपप्लुतः। स्याच्चेत्त्वदङ्गीकरणान्मदनङ्गीकृतेरथ ॥ २८ ॥ प्रवृत्तो वा निरुद्धो वा किंत्वसावज्ञगोचरः। मया सह विचारेण त्वदीयो

यदि रुध्यते ॥ २९ ॥ तर्हि त्वमद्य मुक्तोऽसि श्रुत्याप्यङ्गीकृतो भवान् । पश्येत्केन च कं जिघ्रेद्विजानीयाच्च केन कम् ॥ ३० ॥ यत्र नान्यत्पश्यतीति श्रुत्या प्रोक्तं निरोधनम् । व्यवहारेऽस्ति चेन्दूरिकरुणा भवतस्तदा ॥ ३१ ॥ अङ्गीकुरुष्व मानानि ततो जीवन्तु जन्तवः । अद्वैतनाम्नि दीप्तेऽग्नौ द्वैतिभिः शलभैरिव । पक्षद्वयविलोपेन भस्मसाद्भूयतेऽधुना ॥ ३२ ॥ सच्चेन्न शाम्यति कदाचन दृश्यदुःखं दृश्ये त्वशाम्यति न बोद्धरि केवलत्वम् । दृश्ये त्वसंभवति बोद्धरि बोद्धृभावः शाम्येत्स्थितोऽपि हि तदस्य विमोक्षमाहुः ॥ ३३ ॥

अस्तु मानं भ्रमोऽस्माकं यथा तव मते श्रुतिः । मानमद्वैतके तद्वद्द्वैते मानानि तानि हि ॥ ३४ ॥ इति चेच्छृणु वेदस्य द्वैताभावे हि मानता । न तद्वति यतो वक्ति यतो वाचो निवर्तनम् ॥ ३५ ॥ द्वैतव्यावृत्तिपर्यन्तं वेदस्य व्यापृतिर्भवेत् । तन्निवृत्तौ निर्विशेषं शिष्यते केवलं परम् ॥ ३६ ॥ शशिसंबन्धशून्यापि शाखा शशिविबोधने । द्वारं न मानं तद्वत्स्याद्द्वैताभावः परात्मनि ॥ ३७ ॥ असङ्गस्य च सम्बन्धो द्वैतेनार्थेतरेण वा । कथं भवेदतो वक्ति श्रुतिरव्यवहार्यताम् ॥ ३८ ॥ अतस्त्वमेव चोद्योऽसि व्यवहारः कथं तव । उपपन्नो न चेदस्मदिष्टं सिद्धं सुखी भव ॥ ३९ ॥ द्वैताभावे श्रुतिं मानमुररीकुर्वतस्तव । मानमेयव्यवहृतौ न भ्रमोऽस्त्युपपत्तिमान् ॥ ४० ॥ इति चेद्व्यवहारोऽसौ त्वयैवाङ्गीकृतस्ततः । त्वन्मतेनोत्तरं दत्तं त्वद्बोधाय न मे क्षतिः ॥ ४१ ॥ ननु मत्संमते वेदे द्वैतमप्युक्तमस्ति हि । तदेव मे मतं यस्मात्प्रत्यक्षमनुभूयते ॥ ४२ ॥ इति चेद्ब्रूहि जगतो ब्रह्मणो भेद उच्यते । उत जीवादथान्योन्यं क्व कस्माद्भेदसंभ्रमः ॥ ४३ ॥ ऐतदात्म्यमिदं सर्वं सर्वं ब्रह्मेति वाक्यतः । प्रपञ्चब्रह्मणोर्भेदो निरस्तोऽस्ति न वा वद ॥ ४४ ॥ न भेदः सृष्टिवाक्यार्थो भिन्नसृष्टेरसंभवात् । यस्माद्भिन्नं यत्र

लोके तस्य कार्यं न तद्भवेत् ॥ ४५ ॥ स्तम्भकुम्भादिवत्तस्मात्प्रकृतौ पञ्चमीं स्मर । अतएव ध्रुवा द्यौरित्यादिश्रुतिसमन्वयः ॥ ४६ ॥ द्यवादीनां च कार्यत्वात्कार्याणां नाशदर्शनात् । स्वतो ध्रुवत्वायोगेन ब्रह्मणाऽभेद इष्यताम् ॥ ४७ ॥ ब्रह्मैव ध्रुवशब्दार्थः परं ध्रुवमिति श्रुतेः । यस्मादभिन्नं यच्च स्यात्तस्य कार्यं न तद्भवेत् ॥ ४८ ॥ यथा मृन्न मृदः कार्यमिति चेद्बुद्धिमान्भवान् । अभिन्नत्वं च कार्यस्य श्रुत्यैवाङ्गीकृतं यतः ॥ ४९ ॥ भवतापि तदेष्टव्यं श्रुत्येकशरणेन हि । अभिन्नत्वविरोधेन कार्यत्वं नेष्यते यदि ॥ ५० ॥ तदा भ्रमानुवादेन कृतार्थाः श्रुतयोऽनघाः । किंच प्रत्यक्षमानेन भेदभ्रुवचरेण हि ॥ ५१ ॥ प्रमाणान्तरसिद्धत्वादनुवादित्वमिष्यताम् । भेदेऽभेदेऽपि कार्यत्वं नोपपन्नं कथंचन ॥ ५२ ॥ व्याप्तिद्वयविरोधेन भ्रम इत्येव वास्तवम् । आरोपितस्याधिष्ठानाभेदो रज्जुभुजङ्गवत् ॥ ५३ ॥ हित्वाधिष्ठानमारोप्यमप्रसिद्धं यतस्ततः । अधिष्ठाने समारोप्य भेदो नास्ति कथंचन ॥ ५४ ॥ हित्वेदमर्थं रजतं न प्रतीयेत केनचित् । अतएव विजातीयभेदोऽपि च निराकृतः ॥ ५५ ॥ हाटकस्थस्य रौप्यस्य भेदेऽप्यारोपितस्य तु । न भेदोऽस्तीदमर्थे हि चैका सत्ता तयोर्यतः ॥ ५६ ॥ आरोपितं हाटकस्थमिति चेच्छृणु बुद्धिमन् । अत्रत्यत्वं कथं तत्र निर्वाह्यं भवता वद ॥ ५७ ॥ अत्रत्यत्वं शुक्तिगतं रजते भाति चेद्वद । आपणस्थादिदं भिन्नमभिन्नं वास्ति रूपकम् ॥ ५८ ॥ अभिन्नं चेदापणस्थेऽत्रत्यत्वमुररीकृतम् । न चायं रजतारोपः किंत्वत्रत्यत्वकस्य सः ॥ ५९ ॥ न तेन संप्रयोगोऽस्ति नारोपस्तत्र युज्यते । भिन्नं चेन्मूलमेवेदमिदमर्थमृते नहि ॥ ६० ॥ तस्मान्न तस्य भेदोऽस्तीदमर्थे शुक्तिखण्डके । धर्मारोपेऽपि धर्मोऽयं वास्तवाद्भिद्यते न वा ॥ ६१ ॥ द्वितीये वास्तवं तत्स्यात्प्रथमेऽभिनवं भवेत् । समागतानिर्वचनीयख्यातिर्मम संमता ॥ ६२ ॥ आरोपितत्वाभानेन

भ्रान्तस्याभेदविभ्रमः । यस्याभिलापशब्दस्य न धर्मे लक्षणा भवेत् ॥ ६३ ॥ न भ्रान्तेर्गौरवं दोषः स्वयं दोषो यतो भ्रमः । धर्मारोपेऽपि नो भेदस्तद्ग्रहग्राह्यता यतः ॥ ६४ ॥ संसर्गारोपपक्षोऽपि दत्तोत्तर इति स्मर । तस्मान्न ब्रह्मजगतोर्भेदो वक्तुं हि युज्यते ॥ ६५ ॥

ब्रह्माभेदान्न जीवस्य भेदोऽस्ति जगता सह । सुपर्णऋतपानाख्यश्रुतिभ्यां भेद उच्यते ॥ ६६ ॥ इति चेद्ब्रूहि कस्त्वं भो जीवो ब्रह्माऽथवेश्वरः । जीवश्चेदीश्वराद्भिन्नो ब्रह्मणो वाथ मे वद ॥ ६७ ॥ भिन्नश्चेदीश्वराद्ब्रूहि को भेदे हेतुरञ्जसा । सर्वज्ञत्वादयो धर्मा ऐश्वरा मयि नेति चेत् ॥ ६८ ॥ सर्वज्ञ ईश्वर इति ब्रुवता ज्ञात एव हि । सर्वशब्दार्थको नोचेद्व्यर्थता वुभ्रशब्दवत् ॥ ६९ ॥ प्रातिस्विकं न जानामीतिचेच्छब्दार्थविद्भवान् । न वा वदाद्ये यत्किंचिद्वक्ति जानाति तद्भवान् ॥ ७० ॥ नचेत्त्वमीश्वरे कं वा धर्मं साधयितुं प्रभुः । यदि सर्वज्ञता जीवे वद किं मे मनःस्थितम् ॥ ७१ ॥ इति चेत्प्रश्नविषयस्तत्किं चेत्स किमर्थकः । कः किंशब्दार्थ इति न प्रश्नः किंतूत्तरं हि तत् ॥ ७२ ॥ अस्तु सर्वज्ञताऽस्माकं सर्वकर्तृत्वकं कथम् । इति चेच्छक्यसर्वस्य कर्तृत्वं त्वयि चेश्वरे ॥ ७३ ॥ अशक्यसर्वकर्तृत्वं नेश्वरे नापि च त्वयि । नित्यसिद्धासर्जने न युक्तं शक्यविशेषणम् ॥ ७४ ॥ सत्यसंकल्पता चेशे मयि नास्तीति चेद्वद । संकल्पे वाथ विषये क्व वा सत्यविशेषणम् ॥ ७५ ॥ त्वत्संकल्पेऽपि सत्यत्वं न चेत्तत्रापि नास्ति तत् । येनैव हेतुना मिथ्या त्वत्संकल्पो विचारितः ॥ ७६ ॥ तेनैव हेतुना मिथ्या स भवेदीश्वरस्य हि । कल्पितत्वं यदा हेतुरुभयत्र समोऽस्ति सः ॥ ७७ ॥ ईशसंकल्पसंशान्त्या लयश्रुतिसमन्वयः । पुनः संकल्पजननात्सृष्टिश्रुतिसमन्वयः ॥ ७८ ॥ उभयत्रैकसंकल्पो नित्यश्चेदीश्वरे भवेत् । नित्यत्वं च न मिथ्यात्वविरुद्धं दृष्टमीश्वरे ॥ ७९ ॥

त्वत्संकल्पः कल्पितश्चेत्कल्पना कल्पिता न वा । आद्येऽनवस्था-दोषः स्याद्द्वितीये नित्यतेशवत् ॥ ८० ॥ यादृगीश्वरसंकल्पस्तादृगेव तवापि हि। यादृक्तवास्ति संकल्प ईश्वरस्यापि तादृशः ॥ ८१ ॥ नासदासीदिति श्रुत्या प्रलये सर्वनास्तिता । श्रूयतेऽतः परेशस्य न संकल्पस्तदाऽस्ति हि ॥ ८२ ॥ लये लयस्य संकल्प इतिचेन्न लयस्तदा। कुतः सर्जनसंकल्पस्तदानीं संभवेद्वद ॥ ८३ ॥ अतः कल्पितसंकल्पो मिथ्यैव भवतीश्वरे । उक्तयुक्त्या कल्पितोऽपि न भवेन्मास्तु का क्षतिः ॥ ८४ ॥ नेश्वरं साधयामोऽस्य भेदमात्रनि-वारकाः। विषये स्वप्नतुल्ये च सत्यवार्ता न युज्यते ॥ ८५ ॥ सर्व-ज्ञसर्वकर्तृत्वे जीवसाधारणे मते । अतो नेश्वरभेदस्ते ब्रह्मभेदोऽपि नास्ति ते ॥ ८६ ॥ सर्वज्ञत्वव्यापकत्वमल्पज्ञत्वस्य विद्यते। नातो विरोधशङ्कापि कुतो जीवेशयोर्भिदा ॥ ८७ ॥ सत्यं ज्ञानमनन्तेति ब्रह्मलक्षणयोगतः। ब्रह्मत्वमास्तां सर्वान्तर्यामिता मयि नास्त्यतः ८८ ईशत्वं दुर्घटं मन्ये इति चेच्छृणु बुद्धिमन् । सर्वान्तर्यामिता का ते ययेशत्वं हि दुर्घटम् ॥ ८९ ॥ व्यवहारनियन्तृत्वमुत सत्ताप्रदा-तृता। अधिष्ठानस्य धर्मोऽयं या च सत्ताप्रदातृता ॥ ९० ॥ यत्स-त्तयेश्वरोऽयं ते सत्तावान्न स्वतस्तथा । स्वीयदेहेन्द्रियादीनां निय-न्तृत्वं तवापि हि ॥ ९१ ॥ प्रतिस्थलं विभिन्नत्वात्सर्वार्थोऽनेकधा भवेत्। यत्किंचित्प्रकृतं तत्तु सर्वशब्दार्थ इष्यते ॥ ९२ ॥ स्वसर्व-देहेन्द्रियादेर्नियन्तृत्वं यतस्त्वयि। अतः सुघटमीशत्वं चिन्तां मा वह मा वह ॥ ९३ ॥

किंचेश्वरः सर्वकर्ता भेदवादे कथं भवेत् । यच्च जीवकृतं तत्तु नेश्वरेण कृतं तव ॥ ९४ ॥ तदभावान्न सर्वस्य कर्ता स्यात्तदभा-वतः। न स्यात्सर्वज्ञता तस्य सर्वान्तर्यामितापि च ॥ ९५ ॥ अतो नेश्वरसिद्धिस्ते कथं भेदः प्रसाध्यते । यदि जीवकृतं तेन कृतं स्यात्तत्कृतं कुतः ॥ ९६ ॥ नच जीवकृतं तस्मात्सर्वेषामपि चेशता।

क्षित्यङ्कुरादिकर्तृत्वं धर्मिग्राहकमानतः ॥ ९७ ॥ तावत्येव हि विज्ञत्वे कल्प्ये सर्वज्ञता कुतः । एतावताल्पकर्तृत्वाज्जीवकोटौ निवेशितः ९८ अधिकज्ञत्वकर्तृत्वे नेश्वरत्वप्रयोजके । आंशिकाज्ञत्वमेतस्य को वा वारयितुं क्षमः ॥ ९९ ॥ यदि स्यात्सर्वकर्ता स जीवानां स्यादकर्तृता । जीवाः स्युर्यदि कर्तारोऽन्यथासिद्धस्त्वदीश्वरः ॥ १०० ॥ घटादयः कुलालादिकर्तृका नेश्वरं प्रति । साकाङ्क्षा अङ्कुराद्यास्तु भवन्त्वीश्वरकर्तृकाः ॥ १ ॥ सर्वात्मत्वात्सर्वकर्ता सर्वज्ञः सुशको मम । त्वयैवाविद्यया स्वस्मिञ्जगदारोपितं खलु ॥ २ ॥ अज्ञानबाधात्तद्बाधस्त्वमीशो भगवांस्ततः । माण्डूक्ये प्राज्ञमात्मानं प्रकृत्येशत्वमुच्यते ॥ ३ ॥ अपि दुर्घटमीशत्वं घटनीयं विचारतः । ईशानन्त्यं भवेदस्मिन्मते चेत्कथमस्ति तत् ॥ ४ ॥ संख्यातः परिमाणाद्वा द्वितीये त्विष्टमेव नः । [1]संख्योपाधिग्रहग्राह्या नेशानन्त्याय कल्पते ॥ ५ ॥ दशावतारभेदेन न विष्णोर्दशता यथा । दशानामपि विष्णुत्वं विष्णोरेकत्वमप्यथ ॥ ६ ॥ एवं जीवानन्त्यमपि गतं हस्ताच्च तार्किक । तत्र तत्र व्यक्तचित्ता तत्तद्भोगो हि युज्यते ॥ ७ ॥ न तेन भोगसांकर्यं न वा ज्ञानस्य संकरः । तेन भुक्तं मया नेति न वक्तुं शक्यते त्वया ॥ ८ ॥ यतस्त्वमेव भोक्तासि सर्वोपाधिषु चैकलः । अविद्ययाध्यास्य दातेन्द्रियैर्भुक्त्वासि भोगवान् ॥ ९ ॥ सर्वोपाधिनियन्तृत्वात्सर्वज्ञत्वाच्च सर्जनात् । ईशत्वं तव भोक्तृत्वादज्ञत्वाज्जीवतापि च ॥ ११० ॥

य इमं मध्वदेत्यत्र जीवं प्रक्रम्य चाग्रतः । ईशानं भूतभव्यस्येत्यभेदोक्तिः समञ्जसा ॥ ११ ॥ असङ्गोदासीनचित ईशितृत्वं न युज्यते । अत ईशानशब्दस्य चेश्वरोऽर्थो न शुद्धचित् ॥ १२ ॥

---

१ न्यायनयेऽपि रूपरसादौ द्वित्वपद्मत्वादीनामाश्रयद्वारैव समाहितत्वान्नात्राग्रहलेशः शास्त्ररहस्यविदाम्.

एतच्छब्देनोभयस्याध्यासाधिष्ठानमुच्यते । तदेव पृष्टं ब्रह्मेति तच्छब्देनोपसंहृतम् ॥ १३ ॥ जीवेशयोरभेदश्चेल्लक्षणा तत्त्वमादिषु । कथमाश्रीयते युष्मत्पूर्वाचार्यैर्विचारय ॥ १४ ॥ तत्र हेतुद्वयं विद्धि त्वदृध्यस्ता हि भिन्नता । शुद्धे ब्रह्मणि शब्दानां शक्त्ययोगो द्वितीयकः ॥ १५ ॥ त्वदृध्यस्ता भिन्नता तु त्वद्बोधप्रतिबन्धिका । अतस्त्वद्बोधनायैव लक्षणा प्रोच्यते बुधैः ॥ १६ ॥ सर्वनाम्नां लक्षणा न तैर्थिकेष्टेति चेच्छृणु । ब्रह्म शक्यं न कस्यापि शब्दस्य भवितुं क्षमम् ॥ १७ ॥ निर्धर्मकत्वाच्छबलमीक्षादि जगतः प्रभुः । तदर्थस्त्वंपदार्थोऽपि देहेन्द्रियगणान्वितः ॥ १८ ॥ अशोधितत्वाच्छोधे तु तयोरैक्यं सुपुप्तके । अविद्योपाधिको जीवो मायोपाधिर्महेश्वरः ॥ १९ ॥ उपाधिभेदादनयोर्नैकत्वमिति चेच्छृणु । अविद्यैव हि माया स्याद्वचनानर्हरूपतः ॥ १२० ॥ अविद्यावरकत्वेनाव्याकृतं बीजरूपतः । तदेवाज्ञानमित्युक्तं प्रमावाध्यत्वयोगतः ॥ २१ ॥ देहेन्द्रियगणाध्यक्षः सौषुप्तान्न विभिद्यते । योऽहं सुप्तोऽभवं पूर्वं सोऽहं व्यवहृतौ स्थितः ॥ २२ ॥ इति सार्वजनीनेयं प्रत्यभिज्ञा प्रदृश्यते । बीजावस्थां य आपन्नोऽध्यस्येदं जगदात्मकः ॥ २३ ॥ पुनर्भ्रंसित्वा बीजाख्य इत्थमेवाभ्रमं स्थितः । कूर्माङ्गानि प्रविष्टानि कूर्मे प्रोक्तानि कूर्मकः ॥ २४ ॥ प्रसारे मुखपादादिव्यवहारो न कूर्मभित् । जगत्तथाविष्टबीजं बीजमुक्तं च निर्गमे ॥ २५ ॥ घटः पटो जीव ईश इत्यादिव्यवहारभूः । आदृत्य कूर्मदृष्टान्तं सत्कार्यमुपपादितम् २६ सर्वाधारः काल इति वदतापीदमुच्यताम् । सत्कार्यवादो नो कस्मान्नाङ्गीकृत इति स्वयम् ॥ २७ ॥ विशेषोऽन्यत्र यद्दृष्टं तदन्यत्र स्थितं तव । नित्यजात्याद्याश्रयत्वे तत्तद्व्यवहृतिर्भवेत् ॥ २८ ॥ आस्तामेतच्च सर्वात्मा त्वमेव जगदीश्वरः । पृथग्देहाभिमानेनाच्छादितेश्वरता तव ॥ २९ ॥ विचारे त्वीश्वरत्वं ते को वा वार-

यितुं क्षमः । [1]नित्यं परोक्ष ईशस्तु जीवो नित्याऽपरोक्षकः ॥ १३० ॥ तयोरैक्यं कथं चेत्ते तथाध्यासोऽविचारतः । त्वदध्यासाच्छत्त्वयोगाद्ब्रह्मप्रकरणादपि ॥ ३१ ॥ लक्षणा तत्त्वमोर्युक्ता तथैवासिपदस्य च । लकारार्थानन्वयेन वाक्यं लक्षणयाऽर्थवत् ॥ ३२ ॥ तदर्थोऽन्वेत्यभेदेन त्वमर्थेन त्वमर्थकः । असर्थेनाप्यभेदेन नान्यसंसर्गसंभवः ॥ ३३ ॥ अभेदस्तु न संसर्गस्तत्त्वे षष्ठी भवेद्यतः । विशेषणे विशेष्ये च धर्मत्यागादखण्डता ॥ ३४ ॥ धर्मिमात्रस्यैकसत्तारूपोऽभेदो न खण्डकृत् । ये त्वभेदेऽपि खण्डत्वभीत्याऽभेदं त्यजन्ति हि ॥ ३५ ॥ धर्मिमात्रोपस्थितिरित्याहुर्मान्या यतो बुधाः । उपस्थितेः प्रमात्वं च पदानां वाक्यतापि च ॥ ३६ ॥ कथं निर्वाह्यते ब्रह्मपदादपि भवेत्प्रमा । मानाभावश्च तत्त्यागे न च मानमखण्डता ॥ ३७ ॥ यतो बोधस्वरूपं तत्फलं बोधस्य वा भवेत् । घटो घट इतीवात्र नाभेदश्चेदलं शृणु ॥ ३८ ॥ तत्त्वंपदाभ्यां शबलावीशजीवावुपस्थितौ । अनेकरूपतस्तस्मान्नोक्तदृष्टान्तसंगतिः ॥ ३९ ॥ नोपस्थित्यन्तरं तत्र धर्मत्यागेऽपि च द्वयोः । लक्षणाव्यवहारस्तु धर्मत्यागे न युज्यते ॥ १४० ॥ नच वृत्त्यन्तरं येन रूपान्तरमभीप्सितम् । [3]संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र संमतः ॥ ४१ ॥ अखण्डैकरसत्वेन वाक्यार्थो विदुषां मतः । प्रत्यग्बोधो य आभाति सोऽद्वयानन्दलक्षणः ॥ ४२ ॥ अद्वयानन्दरूपश्च प्रत्यग्बोधैकलक्षणः । इत्थमन्योन्यतादात्म्यप्रतिपत्तिर्यदा भवेत् ॥ ४३ ॥ अब्रह्मत्वं त्वमर्थस्य व्यावर्तेत तदैव हि । इति श्लोकत्रयेणार्या वाक्यवृत्तावखण्डताम् ॥ [2]४४ ॥ अभेदं चाभेदबो-

---

१ नित्यं परोक्ष इत्येकमीशविशेषणम् । २ ओऽर्थेनेत्युक्तावर्थाप्रतीतिरिति रूपाभावः । ३ भवतीत्यादावपि शक्तपदोपस्थितपदार्थयोः संसर्गविधयैवान्वयो नच तत्र वाक्यार्थत्वव्यवहार इति पदार्थसाधारण एष इति पक्षान्तरम्.

धफलं चाहुर्मनीषिणः । त्वमर्थस्य च धात्वर्थेनाभेदेऽपि न कर्मता ॥ ४५ ॥ फलाविशेषिता सत्ता धात्वर्थो व्यापृतिर्न हि । आरोपितव्यापृतित्वाद्धातुसंज्ञा न वाध्यते ॥ ४६ ॥ उपाध्यभिव्यक्तियोगादारोपोऽपि हि युज्यते । उपाध्यभिव्यक्तिकर्तृब्रह्माभेदाद्घटादि च ॥ ४७ ॥ कर्तृ स्याद्ब्रह्म विख्यातं सत्तामात्रमिति श्रुतौ । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ ४८ ॥ इति श्रुतिरतः सत्ता न व्यापारोऽविकारतः । तत्त्वभावविरोधाच्च तस्मान्नैवास्ति कर्मता ॥ ४९ ॥

साधुत्वायैव पुरुषो युष्मच्छब्दसमन्वयात् । पुरुषार्थोऽस्तु चैकत्वं सत्तायामन्वितं भवेत् ॥ १५० ॥ इति केचित्तन्न युक्तं न संख्या निर्विशेषके । एकमेवाद्वयमिति कथमादौ विशेषणम् ॥५१॥ इति चेदद्वितीयत्वं संख्यापक्षे विरुध्यते । संख्यापि सद्वितीयत्वादद्वये न विरुध्यते ॥ ५२ ॥ विरोधादुभयोरेवकारोऽपि च विरुध्यते । तस्माद्भेदत्रयाभावो वाक्यार्थोऽन्वेति वै सता ॥ ५३ ॥ अभावात्सद्वितीयत्वं नाभावो नाश्रयात्पृथक् । निर्विशेषप्रकरणाल्लक्षणा तत्त्वमोरपि ॥ ५४ ॥ जडकारणताबोधबाधायेक्षादिसंकथा । कार्यकारणभेदापहत्यै सर्वात्मताकथा ॥ ५५ ॥ आरोपितत्वमीक्षादेः सति सत्यविशेषणात् । एकज्ञप्तेः सर्ववित्तिसिद्धये तत्त्वमोः कथा ॥ ५६ ॥ महावाक्यार्थबोधस्य प्रमात्वान्मोक्षयुक्तता । ननु चाव्याकृते भेदत्रयाभावो हि युज्यते ॥ ५७ ॥ तस्माच्च शबलं ब्रह्म प्रकृतं ननु शुद्धसत् । इति चेत्सत्यमिति च तद्व्यावृत्त्यर्थमिष्यते ॥ ५८ ॥ कालान्तरे वाध्यते तद्विचारेणापि वाध्यते । कथं स्यात्सत्यता तस्य ब्रह्मैव प्रकृतं ततः ॥ ५९ ॥ पदत्रयं लक्षयित्वाऽस्यर्थैनैक्यं वदन्ति ये । तेषामभिप्राय एषोऽस्यर्थोऽभेदान्न सिध्यते ॥ १६० ॥ एकसत्तात्वभेदः स्यात्तद्व्यक्तित्वं तदेव हि । नेयं वैशेषिकी सत्ता जात्यादिष्वपि भासनात् ॥ ६१ ॥ संसर्गे

चैकताभानं न ब्रह्म द्वैतकारणम् । संसर्गैकत्वमुभयोः सामरस्य-प्रयोजकम् ॥ ६२ ॥ तथाऽऽग्रहश्चेद्भवतु चैकत्वमुपलक्षणम् । अस्य-र्थस्य च संसर्गरूपभानेऽपि न क्षतिः ॥ ६३ ॥ अभेदो नित्य इत्यादौ तथोदाहृतिदर्शनात् । लक्ष्यत्रयैक्यबोधोऽयं न वाचां विषयो भवेत् ॥ ६४ ॥ निर्धर्मि वस्तु केनापि सुशकं नाभिभाषि-तुम् । अतिव्युत्पन्नमतिना वाक्यार्थो बुध्यते तथा ॥ ६५ ॥ वक्तुं न शक्यते तस्मान्न सत्तन्नासदुच्यते । इत्याह भगवान्साक्षात्स-र्वज्ञोऽप्यर्जुनं प्रति ॥ ६६ ॥ इत्थं लक्षणया स्तम्भकुम्भयोरेकता भवेत् । इति चेद्धर्मिभेदेन नैकतास्ति समञ्जसा ॥ ६७ ॥ भिन्न-रूपोपस्थितस्य धर्मिणस्त्वैक्यमिष्यते । यत्र धर्मिद्वयं तत्र कथमैक्यं भवेद्वद ॥ ६८ ॥ धर्मिभेदेऽप्यभेदश्चेल्लक्षणोक्तिर्न युक्तिभाक् । अत्र प्रकरणादेकं ब्रह्म सद्धर्मि तत्र हि ॥ ६९ ॥ ईक्षादिकर्ता भगवानतो भोक्ता च जीवकः । आरोपितौ तयोरैक्यं तत्त्वमि-त्याह च श्रुतिः ॥ १७० ॥ आरोपितत्वमैक्यस्य बोधात्सिद्ध्यति तत्त्वमोः । अविरोधः कुतो न स्यादिति चेल्लक्ष्यते त्वया ॥ ७१ ॥ विरोधं न वयं ब्रूमस्त्वयाध्यस्तोऽस्ति सुस्थिरः । प्रकृतार्थपरा-मर्शि तत्पदं लक्षितं भवेत् ॥ ७२ ॥ लक्षणा त्वंपदस्यात्र न प्रयो-जनमर्हति । घटत्वादिविशिष्टस्य मृदभेदो यथा तथा ॥ ७३ ॥ सविशेषे निर्विशेषाभेदो भवति सांप्रतः । इति चेत्परिणामोऽयं जीवो न ब्रह्मणो भवेत् ॥ ७४ ॥ तथा चेत्कालवशतो नाशो नास्तिक जीववत् । नापि धर्म्यन्तरं जीवस्तत्त्वमैक्यविरोधतः ७५ नैक्यज्ञानमुपासार्थं सर्वज्ञानविरोधतः । अतो विवर्तो जीवो न बाधाभेदे मृषा भवेत् ॥ ७६ ॥ न स्यान्मोक्षसुखं तस्य मृषात्वा-च्छोकमावहेत् । धर्मत्यागाद्धर्मिणैक्यासिद्ध्यर्थं लक्षणा त्वमः ॥७७॥ तदैव मुख्यमैक्यं स्यादहं ब्रह्मेत्यबाधितम् । देहादिवन्न जीवोऽयं धर्म्यध्यस्तोऽस्ति चित्प्रभे ॥ ७८ ॥ किंतु प्राणादियोगेन जीव-

त्वाध्यास इष्यते । औपाधिकत्वान्मिथ्या तद्ब्रह्मत्वं वास्तवं मतम् ॥ ७९ ॥ उपाधीनां तु मिथ्यात्वं वाचारम्भणवाक्यतः । तस्मादीश्वरभेदो न ब्रह्मभेदोऽपि नास्ति ते ॥ १८० ॥ द्वासुपर्णेत्यादिमन्त्रास्त्वद्क्रमेणैव सार्थकाः । प्रत्यक्षं वद कीदृक्के कं भेदमवगाहते ॥ ८१ ॥ जीवेशयोश्चेज्जीवेशौ नेन्द्रियार्थौ स्वयंप्रभौ । कथं भेदस्तयोः स्वीयप्रत्यक्षपथमर्हति ॥ ८२ ॥ येनेन्द्रियेण यद्ग्राह्यं तत्र भेदोऽपि तेन वै । विरुद्धधर्माक्रान्तिश्च न हेतुरुपयुज्यते ॥८३॥ नच प्रात्यक्षिकं ज्ञानं हेतूपन्यासमर्हति । हेतूपन्यासतो भेदः साध्यश्चेदनुमा भवेत् ॥ ८४ ॥ दृष्टान्तस्तत्र वक्तव्यो घटादिः सर्व एव हि । घटादिसर्वभिन्नत्वादभेदोऽपि भवेत्तदा । व्यतिरेके घटादिस्तु दृष्टान्तः स्वयमूह्यताम् ॥ ८५ ॥ किंचेश्वरो जीवभिन्नः सर्वज्ञत्वादिति त्वया । वक्तुं न शक्यते तत्र दृष्टान्ताभावयोगतः ॥ ८६ ॥ एवं जीवेऽपीशभेदोऽज्ञत्वाद्धेतोरपि त्वया । दुःसाधो हेतुना तेनाभेदोऽपि स्याद्यथाक्रमम् ॥ ८७ ॥ विरुद्धधर्मसिद्धिश्च भेदसिद्ध्या भवेत्तव । भेदसिद्धिस्तदैव स्याद्विरुद्धाक्रान्तिसंभवः ॥ ८८ ॥

किंच जीवाभिन्न ईशो ज्ञत्वाद्रामादिवद्भवेत् । इत्थमेवेश्वराभिन्नो जीवोऽपि भवितुं क्षमः ॥ ८९ ॥ ईश्वरेऽप्यज्ञतापत्तिरिति वक्तुं न शक्यते । सर्वात्मत्वादज्ञतापि युक्तैव परमात्मनः ॥ १९० ॥ सर्वज्ञताल्पज्ञतयोर्विरोधो न कथंचन । सर्वज्ञत्वव्यापकत्वमल्पज्ञत्वस्य दृश्यते ॥ ९१ ॥ स्वाध्यस्तसर्ववेत्तृत्वं सर्वस्यापि हि विद्यते । स्वानध्यस्तानभिज्ञत्वमपि सर्वस्य विद्यते ॥ ९२ ॥ यदीश्वरो जीवभिन्नस्त्वमेवाङ्गीकरोषि तत् ॥ ९३ ॥ यद्यभिन्नस्तदा स्वीयमताद्विप्रच्युतो भवान् । यत्नेश्वरे जीवभेदः साध्यस्तं वेत्सि वा न वा ॥ ९४ ॥ आद्ये किं विषयत्वेनाथवा स्वत्वेन वा वद ।

१ चेदिति शेषः.

विषयत्वे तु मिथ्यात्वं स्वत्वे भेदः कथं भवेत् ॥ ९५ ॥ न वेत्सि चेद्भेदसिद्धिः कथं वा क्रियते त्वया । अनेनैव प्रकारेण जीवभेदोऽपि धिक्कृतः ॥ ९६ ॥ उपाधिभेदग्राह्यत्वाज्जीवभेदो न वास्तवः । मणिभेदान्न सूत्रस्य भेदो मालासु दृश्यते ॥ ९७ ॥ मणिवैचित्र्ययोगेन चेत्सूत्रे भेदविभ्रमः । मिथ्यैव भवितुं युक्तः केवले तददर्शनात् ॥ ९८ ॥ स्वप्ने जाग्रति दृष्टोऽपि भेदो नास्ति सुषुप्तके । जीवस्तस्मादेक एव सर्वोपाधिविलासवान् ॥ ९९ ॥ नोपाधिसंपरित्यागः सुषुप्तेऽप्यस्ति येन हि । जीवस्य केवलीभावो येन स्याद्भेदविभ्रमः ॥ २०० ॥ इति चेदस्तितोपाधेः केन दृष्टा सुषुप्तके । त्वयेतरेण वा चाद्ये सुषुप्तिस्ते कथं भवेत् ॥ १ ॥ द्रष्टोपाधेस्त्वया दृष्टो न वा ब्रूहि सुषुप्तके । कथं सुषुप्तिर्दृष्टश्चेन्न चेत्सत्तोपधेः कथम् ॥ २ ॥ मदीयसुप्तिसमये यो जाग्रत्तत्कथावशात् । उपाधिसत्ता चेत्तर्हि तज्जाग्रत्केन सिध्यति ॥ ३ ॥ तज्जागृतिस्त्वया दृष्टा चेत्त्वं जाग्रन्न सुप्तिमान् । तस्मात्तादृक्त्वदध्यासस्तस्मात्सत्यं जगन्न हि ॥ ४ ॥ अध्यस्तं जगदादाय न किंचित्तव सिध्यति । महाह्रदे यथा वह्निर्धूमाभासान्न सिध्यति ॥ ५ ॥ मानमेयव्यवहृतेः संभवाभावतः खलु । अध्यस्तत्वं त्वयेष्टव्यं नचारम्भादिसंभवः ॥ ६ ॥ कार्यकारणयोर्भेद आरम्भे संमतो न वा । न चेदप्रत्यक्षता स्यादप्रत्यक्षाण्वभेदतः ॥ ७ ॥ तुल्यः सांख्येऽप्ययं दोषः किंचापरमिमं शृणु । स्वकार्यत्वं स्वहेतुत्वं नैकधर्मिणि संभवेत् ॥ ८ ॥ आद्ये न कारणं कार्यमिति वक्तुं न युज्यते । मृत्कार्यस्य कपालस्य घटकारणता यतः ॥ ९ ॥ घटहेतोः कपालस्य मृत्कार्यत्वस्य दर्शनात् । न कार्यं कारणमिति न वक्तुं सुशकं तव ॥ २१० ॥ यत्तच्छब्दनिवेशे तु दोषोऽननुगमो भवेत् । कार्यकारणतावच्छेदकरूपेण चेद्भिदा ॥ ११ ॥ अवच्छेदकधर्मस्य भेदः स्यान्नतु धर्मिणः[1] ।

---

१ कार्यकारणयोः.

अवच्छेदकधर्मस्य भेदोऽपि च न सिध्यति ॥ १२ ॥ उभयावच्छेदकत्वं कपालत्वस्य दृश्यते । यत्तच्छब्दनिवेशे तु दोषोऽननुगमो भवेत् ॥ १३ ॥ अस्तु वा धर्मभेदोऽयं न धर्मि द्वैतसाधकम् । कपालकं न कलश इति ख्यात्या विभिन्नता ॥ १४ ॥ कल्पनीयेति चेत्केनावच्छिन्ना प्रतियोगिता । कपालकलशत्वाभ्यां चेत्त्वदुक्तो न सिध्यति ॥ १५ ॥ द्वयोपलक्षितत्वं तु प्रत्येकस्यापि विद्यते । कार्यं स्वकारणाद्भिन्नमिति वक्तुं न शक्यते ॥ १६ ॥ कार्यमेव स्वशब्दार्थे उक्तदोषः स्थितस्ततः । तस्माद्भिन्नमभिन्नं वा कार्यं वक्तुं हि दुःशकम् ॥ १७ ॥ तस्मान्मिथ्यैव विश्वं स्यात्कस्य वा साधकं भवेत् । अकार्यं चेत्सर्वयत्नवैयर्थ्यापत्तिरापतेत् ॥ १८ ॥ विश्वनिष्ठं च मिथ्यात्वं सत्यं मिथ्याथवा वद । आद्ये द्वैतं द्वितीये तु जगत्सत्यत्वमापतेत् ॥ १९ ॥ इति चेच्छृण्वनिर्वाच्यस्थितो धर्मोऽपि तादृशः । वन्ध्यापुत्रस्थिता धर्मास्तादृशा एव नान्यथा । यावन्मिथ्यावस्तुभावि मिथ्यात्वं दृश्यवस्तुनः ॥ २२० ॥ मिथ्यात्वस्यापि मिथ्यात्वे सत्यत्वं नहि सिध्यति । तथा सत्यविरोधित्वं तथा तुच्छविरोधिता ॥ २१ ॥ सदसद्भिन्नभिन्नत्वे सदसद्रूपता स्थिरा । इदमेव त्वनिर्वाच्यमुच्यते ब्रह्मवादिभिः ॥ २२ ॥ मिथ्यावस्तुनिवृत्त्यैव निवृत्तं यद्भवेत्ततः । न द्वैतमप्रसिद्धत्वादन्योन्यं शुक्तिरौप्यवत् ॥ २३ ॥ किमत्र बहुनोक्तेन ग्राह्यसंभावना नहि । यत्किंचिद्गृह्यते तत्तु ज्ञानयोगेन गृह्यते ॥ २४ ॥

ज्ञाने ज्ञेयस्य संबन्धो विषयित्वं न चापरः । तच्च स्वरूपं ज्ञानस्य सर्वतैर्थिकसंमतम् ॥ २५ ॥ भिन्नत्वे कल्पनीयं स्यात्संबन्धान्तरमप्यथ । अनवस्थादिदोषः स्याज्ज्ञानाभिन्नं जगत्ततः ॥२६॥ ज्ञानं ज्ञेयमिति द्वेधा पदार्थोऽस्ति न चेतरः । इतरत्वे तुच्छता स्याज्ज्ञानत्वे तु मदिष्टता ॥ २७ ॥ ज्ञेयत्वे ज्ञानसंबन्धो न स्यात्तस्मान्न ते गतिः । इदमेव हि तादात्म्यं ज्ञानस्य ज्ञेयवर्गके ॥ २८ ॥

यत्स्यातिरिक्तसंबन्धासंभवोऽस्ति विचारिते । ज्ञानस्याखण्डरूपस्य निर्विकल्पस्य नो भवेत् ॥ २९ ॥ जगद्विकल्पनारूपं तस्मान्मिथ्या जगत्स्मर । तच्च ज्ञानं स्वप्रकाशं सर्वग्राहकता यतः ॥ २३० ॥ ग्राह्यबाधे सर्वशास्त्रतात्पर्यं ज्ञेयमादरात् । नच शास्त्रसहस्रेण पदार्थः क्रियतेऽन्यथा ॥ ३१ ॥ तस्मादेकार्थता युक्ता शास्त्राणां बुधसंमता । यथार्थवक्ता वेदोऽसौ नानात्वं धिक्करोति हि ॥ ३२ ॥ प्रशंसति नच द्वैतमद्वैतं च प्रशंसति । तस्माद्यथाधिकारं हि शास्त्रवृत्तिः समञ्जसा ॥ ३३ ॥ स्वयंप्रकाशे प्रज्ञाने सर्वप्रत्यक्स्वरूपके । सर्वावभासके भेदो न कथंचन युज्यते ॥ ३४ ॥ भेदग्रहश्चानुयोगिप्रतियोगिग्रहोद्भवः । स्वप्रकाशस्य ग्राह्यत्वाभावाद्भेदग्रहो नहि ॥ ३५ ॥ ज्ञानं च यदि भिद्येत भेदस्य ग्राहकोऽस्ति कः । गृहीता यदि भिद्येत जडो गृह्णाति किं कथम् ॥ ३६ ॥ ज्ञानस्य जडतापत्तिर्ग्राह्यत्वाच्च घटादिवत् । गृहीता ज्ञानभिन्नत्वाज्जड एव भवेत्खलु ॥ ३७ ॥ जडोऽपि च गृहीता चेद्घटादीनां च तद्भवेत् । उभयोर्जडता चेत्स्याज्जगदान्ध्यं भवेत्तदा ॥ ३८ ॥ स्वयंप्रकाशता क्वापि मन्तव्या भवता ततः । यश्च स्वयंप्रकाशः स्यात्तज्ज्ञानं स्वयमुच्यते ॥ ३९ ॥ परप्रकाश्य आत्मा चेज्ज्ञानवानहमित्यपि । न वक्तुं शक्यते तेन घटतुल्यजडेन हि ॥ २४० ॥ जडोऽपि चेत्तथा विन्द्याद्घटोऽपि गुणवानहम् । इति विद्याच्च ननु स ज्ञानाभावान्न वेत्ति चेत् ॥ ४१ ॥ त्वयि ज्ञानं केन सिद्धं ज्ञानेनाथेतरेण वा । आद्ये स्वसाधके ज्ञाने दोष आत्माश्रयो भवेत् ॥ ४२ ॥ अनवस्थादिदोषः स्याज्ज्ञानान्तरपरिग्रहे । द्वितीये तद्द्वितीयं तु स्वेनान्येनोत सिद्धिभाक् ॥ ४३ ॥ पक्षद्वयेऽप्युक्तदोषास्तस्मादात्मा स्वयंप्रभः । ज्ञानरूपो नित्यसिद्धोऽभ्युपगन्तव्य एव ते ॥ ४४ ॥ उत्पद्यते चात्ममनःसंयोगाज्ज्ञानमात्मनि । इत्याह तस्य चान्ध्यं

---

१ अनुभवाननुगृहीततर्कप्रधानशास्त्रसहस्रेणेति भावः.

स्यान्मध्ये ज्ञानविनाशतः ॥ ४५ ॥ ज्ञानान्तरोत्पत्तिनाद्यं ज्ञानं चेन्नोपपत्तिमत् । प्राक् संयोगात्तदुत्पत्तिः संयोगान्तरतोऽथ वा ॥ ४६ ॥ आद्ये तु सर्वज्ञानानां यौगपद्यं भवेत्तव । द्वितीयेऽप्यणुमात्रे तु न संयोगान्तरोद्भवः ॥ ४७ ॥ स्वावच्छेदेन संयोगान्तररोधित्वयोगतः । निष्प्रदेशे चात्मनि च न संचारस्य संभवः ४८ संयोगश्च विभागश्च येन स्तः सोपपत्तिकौ । सप्रदेशत्वपक्षे तु नित्यत्वं नात्मनो भवेत् ॥ ४९ ॥ निष्प्रदेशेऽपि चाकाशे यथास्ते पक्षिणां गतिः । मनोगतिस्तथा चेत्किमाकाशं दृश्यते त्वया ॥२५०॥ येन दृष्टान्तसिद्धिः स्यात्किंच संचारसंभवः । मनसो न भवेत्क्वापि पादपक्षाद्यभावतः ॥ ५१ ॥ सुषुप्तौ चरमज्ञाननाशो न स्यात्कथंचन । पुरीतदान्तरज्ञानान्नाशो नैवोपपत्तिमान् ॥ ५२ ॥ सामानाधिकरण्यस्याभावात्किंचादराच्छृणु । भावावगाहि तज्ज्ञानमुताभावावगाहि वा ॥ ५३ ॥ आद्ये न स्यात्सुषुप्तिः सा द्वितीये प्रतियोगिनम् । विनिर्मुच्याभाववित्तिर्न दृष्टा क्वापि केनचित् ५४ प्रतियोगिज्ञानपक्षे न सुषुप्तिर्भवेत्तु सा । येनेन्द्रियेण यद्ग्राह्यं तदभावोऽपि तेन हि ॥ ५५ ॥ इत्थं नियमसद्भावादभावग्रहणं कथम् । इन्द्रियाणां हि संयोगे जागृतिः स्यान्न सुप्तता ॥ ५६ ॥ तस्माच्च चरमज्ञाननाशो नैवोपपद्यते । पुरीतदन्तःसंयोगान्नाशश्चेज्ज्ञाननाश्यता ॥ ५७ ॥ गता तथा चरमता कथं सिध्यति तद्वद । नाशाच्चरमतासिद्धिश्चरमत्वाच्च नाश्यता ॥ ५८ ॥ इत्थमन्योन्याश्रयतादोषान्नाशो न सिध्यति । संयोगान्तरसिध्यर्थं व्यापारश्चेष्यते नवा ॥ ५९ ॥ आद्ये व्यापारसमये पूर्वसंयोगनाशतः । ज्ञाननाशो भवेन्मध्य आन्ध्यं दुर्वारमेव हि ॥ २६० ॥ द्वितीयेऽपि च संयोगान्तरासंभवतः खलु । ज्ञानोत्पत्तिर्न सिध्येच्च तेन चेद्युगपद्भवेत् ॥ ६१ ॥ परस्परविरोधेन युगपन्नाशिता भवेत् । अविरोधे तु तिष्ठेच्च गता नाशीयहेतुता ॥ ६२ ॥ चिद्रूप आत्मनि तथा

सांशेऽन्तःकरणेऽपि च । कः क्लेशो ज्ञाननिष्पत्तिः कथं चेच्छृणु तत्क्रमम् ॥ ६३ ॥ देहोत्पत्तिविनाशाभ्यामात्मोत्पत्तिविनाशकौ । यथा तथा बुद्धिवृत्तिनाशोत्पत्तिमिरिष्यते ॥ ६४ ॥ तदभिव्यक्तियोगेन व्यवहारोऽस्ति लौकिकः । अन्यथा त्वात्मनित्यत्वं व्यवहारं च लौकिकम् ॥ ६५ ॥ कथं च निर्वाहयसि तस्मादात्मैव चित्प्रभः । सच्चिदानन्दगुणकं ब्रह्म मध्वावगच्छसि ॥ ६६ ॥ गुणाद्भिन्नमभिन्नं वा तद्ब्रह्म प्रतिपादय । भिन्नं चेज्जडतापत्तिरभिन्नं चेच्चिदेव हि ॥६७॥ चिद्भिन्नत्वे च जडता सद्भिन्नत्वे च तुच्छता । सुखभेदे दुःखतेति दोषत्रयमुदाहृतम् ॥ ६८ ॥ चिद्भिन्नत्वेऽपि चिद्वत्त्वान्न जडत्वं वदेद्यदि । सद्भिन्नत्वेन तुच्छत्वाच्चिद्वत्ता न हि संभवेत् ॥ ६९ ॥ सुखवत्तापि तद्वत्स्यात्तुच्छे सर्वमसंभवि । जीवसाधारणा एते भवतः संमता न वा ॥ २७० ॥ जीवसाधारणत्वे तु ब्रह्मलक्षणता कथम् । असाधारणपक्षे तु जीवस्य जडता तथा ॥ ७१ ॥ तुच्छता दुःखता चेति मोक्षोऽपि च न संभवेत् । तल्लक्षणं पूर्णता चेदाकाशस्यापि दृश्यते ॥ ७२ ॥ प्रत्यक्त्वं चेदस्ति जीवे न श्रुतं लक्षणान्तरम् । ज्ञानानां तारतम्यं च वदन्संपृच्छ्यते मया ॥७३॥ न्यूनाधिकग्राहकत्वमुत सर्वैकदेशिता । आद्ये गृध्रो दूरदृष्टिस्त्वत्तोऽधिकतरो भवेत् ॥ ७४ ॥ मन्देन्द्रियः पण्डितश्च बालान्न्यूनतरो भवेत् । द्वितीये देशवत्त्वेन नाशः स्यादात्मनामपि ॥ ७५ ॥ उज्ज्वलानुज्ज्वलत्वे तु न शक्ये कल्पितुं त्वया । ते किं स्वाभाविके नो वा स्वभावश्चेदलं शृणु । बालो न पण्डितः स्यात्तेन चेद्धेत्वन्तरं भवेत् ॥ ७६ ॥ उपाधौ तारतम्यं स्यान्न ज्ञाने स्यात्कथंचन ।

विष्णुः सर्वोत्तम इति वदन्नप्यत्र पृच्छ्यते ॥ ७७ ॥ को वा स्याद्विष्णुशब्दार्थो जडश्चिद्वाथ मे वद । जडश्चतुर्भुजो देहो व्यापको नैव संभवेत् ॥ ७८ ॥ चैतन्ये व्यापके देहो न कथंचन युज्यते । देहाभावादुत्तमता दुर्निरूपा भवेत्तव ॥७९॥ चिज्जडैक्यं वास्तविकं

न कथंचन सिध्यति। जडस्य चित्त्वापत्तिः स्याच्चितश्च जडतापि च ॥ २८० ॥ विरोधादुभयं न स्यादनिर्वाच्यत्वमापतेत्। न तज्जडं किंतु मायाकल्पितं चिन्मयं भवेत् ॥ ८१ ॥ इति चेत्परिणामे तु विकारित्वं समापतेत्। विवर्ते तु मतात्स्वीयात्प्रच्युतिस्तव संभवेत् ॥ ८२ ॥ सदातनत्वाच्चक्राब्जपाणिमूर्तिर्न मायिकी। इति चेद्रामकृष्णाद्या नूत्ना वाऽथ सदातनाः ॥८३॥ सदातनत्वेऽवतारशब्दो न स्याच्च तेषु तु। नूत्नत्वे परिणामो वा विवर्तो वाथ मे वद ॥ ८४ ॥ आद्ये चितो वा मूर्तेर्वा परिणामो भवेद्वद। चितस्तु परिणामेऽपि नाशापत्तेर्न सांप्रतम् ॥ ८५ ॥ द्वितीये मूलमूर्तेश्च स्वरूपेण कथं स्थितिः। अचिन्त्या शक्तिरीशस्य तया रामादिसंभवः ॥ ८६ ॥ इति चेन्मन्मता माया कुतो न स्वीकृता त्वया। सतीत्वे शक्तिता न स्यात्स्तम्भे कुम्भे क शक्तिता ॥ ८७ ॥ असती शशशृङ्गाभा कथं वा स्वीकृता त्वया। उक्तोभयविरुद्धा चेत्सैव माया प्रकीर्तिता ८८ तया रामादिसृष्टिश्चेज्जगत्सृष्टिः कुतो नहि। रामादीनामभिन्नत्वे जगतोऽपि कुतो नहि ॥ ८९ ॥ अभिन्नत्वे तु सर्वासा ह्येक एव हरिः स्थितः। कथं सर्वोत्तमत्वं स्यादेकवस्तुनि निर्द्वये ॥ २९० ॥ सर्वं पुरुष एवेति प्रोक्तं पुरुषसूक्तके। बलाबलविचारे तु शिवाद्या अपि चोत्तमाः ॥ ९१ ॥ अंशांशितायामपि च भेदो जीवेशयोर्यदि। अंशांशिता नोपपन्ना भिन्नत्वात्स्तम्भकुम्भवत् ॥ ९२ ॥ किंच भेदं समाश्रित्य तत्त्वमित्यत्र वाक्यके। तस्य त्वमिति माध्वोऽसौ समासं प्राह सादरम् ॥ ९३ ॥ समासो नैव युक्तोऽयं युष्मदर्थविशेष्यकः। समासेऽपि च किंवात्र विधेयं ब्रूहि सादरम् ॥ ९४ ॥ षष्ठ्यर्थश्चेत्समासेषु तादृग्बोधो न युक्तिमान्। अस्त्यर्थश्चेदपूर्वत्वं न तस्यास्तीति संस्मर ॥ ९५ ॥ तदित्यव्ययनिर्देशः षष्ठ्यर्थे चेन्न युक्तिमान्। निषादस्थपतिन्यायविरोधात्प्रथमा ततः ॥ ९६ ॥ स आत्मा तत्त्वमित्यत्र नञ्रच्छेदो न सांप्रतः।

प्रक्रान्त आत्मा कथितस्तद्भिन्नत्वे त्वनात्मता ॥ ९७ ॥ सादृश्यं न समस्तस्य नञोऽर्थः स्यात्तथैव चेत् । अचन्द्रं मुखमित्यत्र न सादृश्यं प्रतीयते ॥ ९८ ॥ अगौरिति पदार्थद्वन्द्वोभिन्नो गोसदृग्भवेत् । अतदित्यत्र तद्वत्स्यादिति चेद्वचनैरलम् ॥ ९९ ॥ भेद एव हि वाक्यार्थो न सादृश्यं तथापि हि । अनात्मत्वे तु जीवस्य वाक्यमेतद्वृथा भवेत् ॥ ३०० ॥ अनात्मा बोधयोग्यश्च कुत्र दृष्टस्त्वया वद । अस्त्यध्याहारपक्षेऽपि वाक्यभेदोऽपि गौरवम् ॥ १ ॥ तस्मादात्मानमेवावेदहं ब्रह्मेति वाक्यतः । विरोधात्सर्वविज्ञानविरोधादैक्यमेव हि ॥ २ ॥

वाक्यार्थो वर्णनीयस्ते न भेदस्तु कथंचन । एकविज्ञानतः सर्वविज्ञानं प्रकृतं ततः ॥ ३ ॥ तत्र प्रकरणे भेदकथा नैवोपयुज्यते । जडानामीश्वराभेदमुररीकुरुषे न वा ॥ ४ ॥ द्वितीयं भेदनिन्दायाः श्रुतत्वान्न हि युज्यते । आद्ये मुख्यममुख्यं वाऽभेदमङ्गीकरोषि हि ॥ ५ ॥ मुख्यं चेच्चित्रमेतत्तु यज्जडाभेदकश्चिति । बाधायां चेद्भेदहेतुर्न वास्तविकतामियात् ॥ ६ ॥ कथं जीवेशयोर्भेदो वास्तवः स्याद्विचारय । वास्तवत्वे निष्फलं स्यात्ततः सत्यविशेषणम् ॥ ७ ॥ अतो विश्वमृषात्वाय युक्तं सत्यविशेषणम् । दृष्टान्ते मृत्तिकेत्येव सत्यमित्युक्तमित्यतः ॥ ८ ॥ दार्ष्टान्तिकेऽप्यधिष्ठाने युक्तं सत्यविशेषणम् । भेदहेतोर्मृषात्वेन भेदोऽपि च मृषा भवेत् । दुःखी जीवः कथं ब्रह्मेति चेद्विष्णुर्यथा तव ॥ ९ ॥ वृन्दासीतावियोगाभ्यां दुःखित्वं श्रूयते बहु । तन्मिथ्या चेदिदं मिथ्या कुतो न भविता वद । अनयैव दिशा विज्ञः कर्तृत्वादि विचारयेत् ॥ १० ॥ अन्तर्नियन्ता सर्वेशः कथं जीवो भवेदिति । नाशङ्क्यं निष्प्रदेशान्तः स्थितेर्नियमनस्य च ॥ ११ ॥ असंभवादतो जीवोपाधेरन्तर्नियामकः । आकाशान्तर्नियन्तृत्वं कार्यत्वात्संभवेद्यथा ॥ १२ ॥ घटे मृत्तद्वदत्रापि न जीवे कार्यता नहि ।

कार्यत्वे नास्तिकमतप्रविष्टस्त्वं विभासि मे ॥ १३ ॥ प्रच्छन्नबौद्धा इति च वृथा लोकान्विनिन्दसि । अतो जीवेशयोर्भेदे न कश्चिद्धेतुरस्ति हि ॥ १४ ॥ जडानामीशभेदश्चेत्सर्वज्ञानं न सिध्यति । सत्यं भिदेति वाक्यं तु निर्मूलं धूर्तकल्पितम् ॥ १५ ॥ लब्धं चेदपि कुत्रापि नास्माकं कापि च क्षतिः । अहैव सत्यशब्दार्थः सत्यं ज्ञानमिति श्रुतेः ॥ १६ ॥ तदभेदो भिदायाश्च सर्वं ब्रह्मेतिवद्भवेत् । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १७ ॥ इत्यादिवचनैः स्मार्तानासुरान्मन्यतेऽधम । ईश्वरोऽहमिति प्रज्ञावतामासुरता यदि ॥ १८ ॥ जीवं वास्तवभोक्तारं मन्वानस्यापि तद्भवेत् । ईश्वरोऽहमिति प्रज्ञावतीशेऽपि तदापतेत् ॥ १९ ॥ ईशस्य युक्तं जीवानामयुक्तं तत्कथं नु तत् । जीवेश्वरैक्यमेतावदुक्तं किं न श्रुतं त्वया ॥ २० ॥ लौकिकेश्वरताहन्तानिषेद्धृ वचनं हि तत् २१ त्वामात्मानं परं मत्वा परमात्मानमेव च । आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञता । इत्थं ब्रह्मापीशभेदं मन्वानं धिक्करोति हि ॥ २२ ॥ यं सर्वाणि च नामानि बोधयन्तीति मध्वकः । स्वीकृत्य नानाशक्तित्वं स्वीकरोति हि शब्दके ॥ २४ ॥ ईशसर्वात्मतायां तु कस्माद्द्वेषो न विद्महे । आनन्दमात्रावयवोऽनवद्यगुणसागरः ॥ २४ ॥ स्वगतेन च भेदेन वर्जितः परमेश्वरः । ब्रह्मा वायुश्च तस्यैव प्रतिबिम्बौ पुमाकृती ॥ २५ ॥ रमापि योषिदाकारः प्रतिबिम्बो हरेरिति । तारतम्यप्रक्रियायां ब्रुवन्मध्वोऽत्र पृच्छ्यते ॥ २६ ॥ आनन्दावयवत्वे तु कथं नो नाशिता भवेत् । यद्यत्सावयवं वस्तु तत्तन्नाशीति निर्णयात् ॥ २७ ॥ नो चेन्नित्यत्वमस्माकं को निवारयितुं क्षमः । असन्नित्यत्वमिष्टं चेत्किमीशेन कृतं तव ॥२८॥ किंच स्वगतभेदेन वर्जितत्वं तु दुःशकम् । अभेदोऽवयवानां चाथवाऽवयवशून्यता ॥ २९ ॥ कोऽर्थः स्वगतभेदेन वर्जितत्वस्य ते मते । आद्ये हस्तक्रिया पादे नेत्रे पादक्रिया तथा ॥ ३० ॥

एवं सर्वक्रियाकर्ता प्रत्येकावयवो भवेत् । तदनेकत्वक्लृप्तिस्तु व्यर्था स्यान्मध्व बुद्धिमन् ॥ ३१ ॥ यथाऽस्याऽपानयोरैक्यं दिवसान्धपतत्रिषु । हस्तत्वादिस्वरूपेण भेदश्चेत्केन भिन्नता ॥ ३२ ॥ आनन्दत्वेन चेल्लोके पार्थिवत्वेन भिन्नता । न दृष्टावः को विशेषो विष्णोः स्वाभेदसंश्रये ॥ ३३ ॥ अथावयवशून्यत्वे प्रतिज्ञाहानिमाश्रय । ब्रह्मा वायू रमा चेति प्रतिबिम्बा इति ब्रुवन् ॥ ३४ ॥ वदतु क त्वया दृष्टः प्रतिबिम्बोऽयमीदृशः । बिम्बानुरूपता दृष्टा तर्ह्येव प्रतिबिम्बता ॥ ३५ ॥ वचनानां बलाच्चेत्किं यूप आदित्यतामियात् । यावत्स्याद्बिम्बसान्निध्यं तावत्तु प्रतिबिम्बकः ॥ ३६ ॥ प्रतिक्षणव्यापृतानां ब्रह्मादीनां प्रतिक्षणम् । विष्णुविश्लेषतो नाशः प्रतिक्षणमहो भवेत् ॥ ३७ ॥ व्यापकत्वान्न विश्लेष इति चेदिह दर्पणे । प्रतिबिम्बस्त्वया केन हेतुना विनिवार्यते ॥ ३८ ॥ मुक्तावप्येवमेवैते ब्रह्माद्यास्तारतम्यतः । तिष्ठन्ति तव सिद्धान्ते मुक्त्या किं तैः समर्जितम् ॥ ३९ ॥ दुःखहेतौ तारतम्ये कथं ते सुखभागिनः । निष्कामत्वान्मुक्त्यवस्था न तेषां दुःखकारणम् ॥ ४० ॥ इति चेत्प्राड्मुक्तितस्ते स्युस्तुल्या अस्मदादिभिः । मुक्तावदुःखहेतुत्वात्तारतम्यं वृथेष्यते ॥ ४१ ॥

सूक्ष्मचिदचिद्विशिष्टं ब्रह्म । स्थूलचिदचिद्विशिष्टं ब्रह्म जगत् । सूक्ष्मचिदचितोर्ब्रह्मशरीरत्वाद्ब्रह्माभेदो वास्तवः ॥ इत्थं स्थूलयोरपि ब्रह्माभेदः । अणुश्चिद्रूपो जीवः । ब्रह्मशरीरत्वाद्ब्रह्माभिन्नः स्वरूपस्वभाववैलक्षण्याद्भिन्नाश्चैते इति रामानुजः प्राह । तत्रैतच्च विचार्यते । सर्वज्ञचिता सूक्ष्मे चिदचितौ अभिन्ने इति वदताऽचिच्छब्दश्चिच्छब्दो वा कथं प्रयुज्यते ? चिदभेदेऽचित्त्वाभावादचिदभेदे चित्त्वाभावाच्च । प्रकाशतमसोरिवाभेदासंभवाच्च । अभेदेऽपि कारणत्वासंभवात् । तथाहि सूक्ष्मचिदचिद्विशिष्टं ब्रह्म जगत्कारणमिति वदता सूक्ष्मचिदचितोर्जगत्कारणता-

वच्छेदकत्वमङ्गीकृतं तत्र प्राथमिकमहत्तत्त्वपरिणामे सूक्ष्मत्वापगमात् कारणतावच्छेदकरूपाभावात्कारणाभावादुत्तरपरिणामो न स्यात् । चिदचिदनुवृत्तिवत्सूक्ष्मत्वस्याप्यनुवृत्तावुत्तरोत्तरकार्ये स्थूलत्वासंभवात्स्थूलचिदचिदात्म जगदित्युक्तिर्न संगच्छेत । तत्र स्थूलत्वासंभवात् । न चापेक्षिकं सूक्ष्मत्वं स्थूलत्वं च समादायोत्तरोत्तरकारणता निर्वोढुं शक्या चरमकार्ये ब्रह्मत्वासंभवात्सर्वं ब्रह्मेति वाक्यविरोधः । निरपेक्षसूक्ष्मत्वेन सापेक्षसूक्ष्मत्वस्य विरोधात्तत्सामानाधिकरण्येन तदुत्पत्तेरसंभवात् । किंच सापेक्षसूक्ष्मत्वस्यापि कार्यत्वान्निरपेक्षसूक्ष्मत्वानुप्रवेशस्य तत्रासंभवात्सापेक्षसूक्ष्मत्वोत्पत्तिरेव न स्यात् । तदभावे च तत्सामानाधिकरण्येन स्थूलत्वानुत्पत्तेर्जगदनुपपन्नं स्यात् । किंचावयवोपचयं विना प्राग्विद्यमानैरेवावयवैः स्थूलत्वासंभवात्स्वकारणावयवातिरिक्तावयवासंभवाज्जगदनुपपन्नमेव । किंच चिज्जडब्रह्मवादिमतेऽचिदंशस्यैव परिणामाज्जगत्कारणत्वं छत्रिन्यायेन समुदाये औपचारिकमापतेत् । आपन्ने च मुख्यकारणत्वं प्रकृतिशब्दवाच्येऽचिदंशे एव पर्यवसन्नम् । पर्यवसन्ने च सांख्यमतादविशेषः । अविशेषे च ईक्षणाद्यसंभवाज्जगत्कारणत्वानुपपत्तिः । अनुपपन्ने च छत्रिन्यायेनाप्युपचाराभावाद्ब्रह्मत्वासंभवः । यदि शक्तित्वार्थं भिन्नां सत्तां नाङ्गीकरोषि तर्हि प्रकृतिर्ब्रह्मशक्तिरिति वदता ब्रह्मत्वं चिदंशे एवाङ्गीकृतं तत्र चिदभिन्नायाः शक्तेरचित्त्वासंभवादचितः स्तम्भकुम्भादिवच्छक्तित्वासंभवात्केवलचिद्रूपत्वे स्वस्य स्वशक्तित्वायोगाचानिर्वचनीया मायेयमेवेति स्वस्यापि मायावादित्वादन्यान्यथार्थवक्तॄन्विनिन्दन् कुतो न लज्जति भवान् । किंच जीवोपाधेः स्थूलस्य सर्वं ब्रह्मेति वाक्यसमन्वयाय मुख्याभेदमङ्गीकुर्वता स्थूलचिदचितोरप्यभेदाङ्गीकाराज्जीवब्रह्मैक्यं कुतो न स्वीक्रियते च नित्यमुक्तत्वादीश्वरस्य तदभेदाज्जीवस्यापि नित्यमुक्तत्वाद्बन्धसि-

थ्यात्वं प्रसज्येत। प्रसक्ते विश्वमिथ्यात्वं विना तदनुपपत्तिः। अनुपपन्नत्वाद्विश्वमिथ्यात्वाङ्गीकारे स्वमतादत्यन्तं प्रच्युतो भवान्। किंच स्थूलचिदचितोर्ब्रह्माभेद इत्यत्र स्थूलविशेषणं चिदंशे वाऽचिदंशे वोभयत्र वा समन्वियात्। चिदंशे वोभयत्र वा न संभवति। पक्षद्वयेऽपि चिदंशे विकारापत्त्या जडत्वाज्जगदान्ध्यप्रसङ्गः। अचिदंशे चेदप्यविकृतसूक्ष्मचितो जीवस्येश्वरस्य वा विकृतस्थूलाभेदस्याध्यासं विनाऽनुपपन्नत्वान्मुख्याभेदो दूरनिरस्तः। सूक्ष्माचिदंशस्यापि विकारिणो विकृतचिदभेदो मुख्योऽनुपपन्नः। अनुपपन्ने भेदेऽभेदे चानिर्वचनीयख्यातिः सुस्थिरा। किंच सर्वाणि नामानि चेतनस्यैवाचेतनेषु देहादिषु गौणानीति वदतो दाशरथिरित्यादौ चेतनेऽपत्यत्वस्य जन्यत्वव्याप्यस्यानुपपत्तिः। तदुपपत्त्यर्थं जन्यत्वाङ्गीकारे नास्तिकमतप्रवेशः। देहगतं जन्यत्वं आत्मन्यध्यस्य यदि शब्दप्रवृत्तिस्तदा गौणत्वं गले पतितम्। चैत्रादिशब्दानां चैत्राद्यात्मन्येव मुख्यवृत्तिं स्वीकुर्वतो द्वितीयचैत्रशब्दार्थ आत्मोतान्यः। अन्यश्चेच्चेतननामता न स्यात्। आत्मा चेद्देवदत्तादिपर्यायतापत्तिः। चैत्रदेहाद्युपलक्षितश्चेदत्रापि चैत्रदेहशब्दयोरात्मनैवार्थवत्त्वान्न देहोपस्थितिः। देहशब्दस्य देहे एव वृत्त्यङ्गीकारेऽपि देहत्वेन यावद्देहानामुपलक्षणत्वेन पुनः पर्यायतापत्तिः चैत्रशब्दवैयर्थ्यापत्तिश्च। चैत्रोऽहं जानामीति प्रतीत्या देहात्मनोरभेदाङ्गीकारप्रयासो निष्फलः। चैत्राहंशब्दयोरात्मनैकार्थ्यात्। देहवाचित्वे त्वभेदद्वारा शब्दप्रवृत्तेर्गौणता। परिणाम्यपरिणामिनोर्वास्तवाभेदासंभवादाध्यासिकः सः। वास्तवाभेदाङ्गीकारे देहनाशेऽनात्मत्वप्रसङ्गात्। चिदंशपरिशेषेऽपि तस्य नात्मता स्यात्। तव चिदचिदात्मवादित्वात्। कस्यचिज्जडांशस्य परिशेषेऽपि आंशिकनाशस्य दुर्वारत्वात्। यस्मिन्देशे देहः पतेत्तत्रैव तिष्ठेद्यत्र घटस्तत्र मृद्वत्। शुद्धचिदंशस्यैवात्मताङ्गीकारे चैत्रोऽहं जानामीत्यादिप्रतीतिसहस्र-

णाप्यभेदो दुःसाधः। चैत्रोऽहं मरिष्यामीति प्रतीत्याऽऽत्मनाशोऽप्यङ्गीकृतः स्यात्। गतं तव वैकुण्ठगमनमुपासनाफलम्।

ननु शरीरशरीरिणोः स्वरूपस्वभाववैलक्षण्याद्भेदोऽपि तेन भवेल्लोकान्तरगमनमिति चेन्न। भेदाभेदयोरन्यतरस्यावास्तवत्वापत्तेः। वास्तवत्वेऽन्यतरबुद्धिरन्यतरबुद्धिं प्रतिबध्नीयात्। अप्रतिबन्धकत्वे सर्वत्र सर्वबुद्धिप्रसङ्गः। यथा शरीरशरीरिणोर्भेदे सत्यप्यभेदमङ्गीकरोपि तथा घटपटयोरप्यभेदे किं प्रतिबन्धकं तव भवेत्। यथाप्रतीति तदङ्गीकार इति चेत्किमयुक्ता स्यान्मेरुः सर्षप इति प्रतीतिः। किंच भेदाभेदयोः प्रतियोग्यभावरूपयोः सामानाधिकरण्ये घटघटाभावयोरपि सामानाधिकरण्यं स्यात्। किंच सर्वे शब्दाः प्रकृतिप्रत्यययोगेनाभिधायकतया प्रसिद्धा लोके तत्तद्वाच्यतया प्रतीयमानतत्तत्संस्थानवद्वस्तुमुखेन तदभिमानिजीवतदन्तर्यामिपर्यन्तसंघातस्य वाचका इत्यपि वदता शब्दशक्तिपर्याप्तिः किं देहजीवपरमात्मसमुदाये, उत प्रत्येकस्मिन्, अथवाऽन्यतमे, अथवाऽन्यतमेष्वेकस्मिन्, एकस्मिन्नपि किं देहे, उत जीवे, अथान्तर्यामिणि। आद्ये तत्तद्वाच्यतयेत्यसंगतम्। आद्यपक्षत्रये तत्तत्संस्थानवद्वस्तुमुखेनेत्यसंगतम्। चतुर्थे शक्यतावच्छेदकाभाववद्वाचकत्वापत्तिः। चित्रमेतदन्यशक्त्यान्यप्रतीतिरिति। परमात्मवाचित्वे देहजीवयोः शब्दादप्रतीत्यापत्तिः। देहजीवान्यतरवाचकत्वपक्षेऽपि स्वेतरान्यतरप्रतीत्यनापत्तिः। देहादीनां प्रकारत्वे कृष्णश्चैत्र इत्यादौ एकदेशान्वयापत्तिः। जीवः संसारीत्यत्र जीवशब्दस्य जीवान्तर्यामिवाचकत्वेन परमात्मनि संसारित्वप्रतीत्यापत्तिः। अन्यथा एकदेशान्वयापत्तिरुक्तैव। जीवशब्देऽन्तर्यामिविनिर्मोकेण शक्त्यङ्गीकारे सर्वे शब्दाः परमात्मवाचका इति प्रतिज्ञाहानिः। लक्षणापक्षे त्वनन्तस्थललक्षणापेक्षया परमात्मनि शक्तित्याग एव युक्तः। अतश्चैत्रादिशब्दानां देह एव, जीवशब्दस्य भोक्तृचैतन्य एव, घटा-

दिशब्दानां तत्तत्संस्थाने एव, परमात्मादिशब्दानां परमात्मन्येव शक्तिर्युक्ता । किंच जीवस्य ब्रह्मशरीरतया ब्रह्मात्मत्वं वदता 'तत्त्वमसी'त्यत्र तत्पदं निरस्तसमस्तदोषमनवधिकातिशयासंख्येयकल्याणगुणास्पदं जगदुदयविभवलयलीलं ब्रह्म प्रतिपादयति, समानाधिकरणं त्वंपदं चाचिद्विशिष्टं जीवशरीरं ब्रह्माचष्टे, इति पदद्वयार्थं निर्णीय प्रकारद्वयविशिष्टैकपरत्वात्सामानाधिकरण्यस्येति जीवान्तर्यामिब्रह्मणो जगत्कारणब्रह्माभेदः कथितस्तन्मन्दप्रज्ञरमणीयम् । त्वंपदस्य जीवान्तर्यामिवाचकत्वाभावात् । अन्यथा त्वं मूर्ख इत्यादौ ब्रह्मणो मूर्खत्वापत्तेः । अन्तर्यामिणः संबोध्यत्वाभावादसिपदासंगत्यापत्तेः श्वेतकेतुजीवस्यैव संबोध्यत्वात् । किंच शरीरशरीरिणोरभेदवादिनः किं प्रतिबन्धकं तत्त्वमसीत्यत्रैव जीवब्रह्मैक्यबोधे । किंच निरवयवचिद्रूपस्य जीवस्यान्तःप्रवेशासंभवात्तदन्तर्यामित्वं ब्रह्मणो न संगच्छते । प्रदेशवत्येव पदार्थान्तरप्रवेशसंभवात् । अन्तर्यामित्वेऽपि न जीवशरीरत्वं ब्रह्मणः । यथा न मणिशरीरत्वं मालासूत्रस्य । किंच तत्त्वमसीत्युपदेशवाक्यं । उपदेशो ह्यज्ञाननिवृत्तये भवति । नाज्ञानं ब्रह्मणि त्वयाभ्युपगम्यते येनायमुपदेशः सफलीक्रियेत । नापि जीवे भावरूपमज्ञानमङ्गीक्रियते नाभावरूपमज्ञानं । संभवति ज्ञानवति ज्ञानाभावायोगात् । नचोत्पन्नज्ञानवत्त्वेनाभाव उपपादयितुं शक्यः । नहि ज्ञानरूप आत्मा ज्ञानान्तरमपेक्षेत विषयं प्रकाशयितुं यथा न दीपो दीपान्तरम् । यदि स्वरूपज्ञानस्य दीपस्य वा विषयप्रकाशनसामर्थ्याभावः तर्हि तन्न ज्ञानं नापि दीपः । किंचात्मसमवेतं ज्ञानं ज्ञानान्तरसापेक्षं विषयप्रकाशनाक्षमं वा ज्ञानत्वादात्मज्ञानवदित्यनुमानेनानवस्थाजगदान्ध्ययोः प्रसङ्गात् । विषयप्रकाशक्षमत्वेन ज्ञानान्तरापेक्षा ज्ञानान्तरापेक्षत्वे विषयप्रकाशाक्षमत्वमित्यन्योन्यविरोधाज्ज्ञानरूपत्वं ज्ञानवत्त्वं च न सिध्येत् । तस्माद्भावरूपमज्ञानं ज्ञानसामा-

न्याविरोधिप्रमाबाध्यं स्वकार्यपरीक्षाबाध्यं वा जीवेऽस्तीति भवते-ष्टव्यम्। तस्यैव तत्त्वमसीत्युपदेशः। तदेव तत्त्वावेदकवेदान्तशास्त्रसाफल्यम्। नह्यज्ञाननिवृत्तिमन्तरेण भूतार्थवेदनस्य किंचित्प्रयोजनं संभवति। किंच चिद्रूपाणां जीवात्मनामसंकुचितापरिच्छिन्ननिर्मलज्ञानरूपाणामनादिकर्मरूपाविद्यावेष्टितानां तत्तत्कर्मानुरूपज्ञानसंकोचविकासावित्युक्तं तत्र स्वरूपभूतज्ञानेऽसंकुचितापरिच्छिन्नेति विशेषणाभ्यां विभुत्वं नित्यत्वं चाङ्गीकृतं तच्च 'आराग्रमात्रः पुरुषः, एषोऽणुरात्मा चेतसा वेदितव्यः, वालाग्रशतभागस्ये'त्यादिश्रुतिभिरणुजीवाङ्गीकारेण विरुध्यते। नह्यणुर्जीवोऽसंकुचितापरिच्छिन्नज्ञानरूपो भवितुं युक्तः। किंच यदविद्यायाः कर्मरूपत्वमुच्यते तदपि न युज्यते। नहि शुक्तिसाक्षात्कारस्य शुक्त्यावरककर्मनाशकत्वं युज्यते। अप्रायश्चित्तत्वात्। तदङ्गीकारेऽपि न यावज्ज्ञानं संभवति येन यावदविद्यानाशः स्यात्। पदार्थानामानन्त्यादनिर्मोक्षप्रसङ्गः। नापि ज्ञानसंकोचविकासावुपपद्येते। परिणामित्वेन जडत्वप्रसङ्गात्। किंच 'मायां तु प्रकृतिं विद्यात्, अजामेकामि'त्यादिना मायाप्रकृत्यजाशब्दवाच्यस्य 'पराऽस्य शक्तिर्विविधैव श्रूयत' इति श्रुत्या शक्तित्वमङ्गीकृत्यापि ब्रह्मशरीरत्वमुच्यते। तदसत्। नहि वह्निशक्तेर्वह्निशरीरत्वं दृष्टम्। अस्तु वा शरीरं तथापि ब्रह्मापि स्वशरीरभूतं प्रधानं तथा तथा परिणमय्य स्वस्वभावमजहदेव तत्रतत्र वर्तमानं सत्तान्तां संज्ञां लभत इत्युक्तं न संगच्छते। ब्रह्मशरीरसूक्ष्माचिद्वाचकप्रधानशब्दस्य ब्रह्मण्येव मुख्यतया प्रवृत्तत्वात्परिणामस्यापि तत्रैव मुख्यतया प्रतीत्यापत्त्या स्वस्वभावमजहदित्ययुक्तं स्यात्। नहि परिणममानं कूटस्थमजडं वा दृष्टचरम्। स्वस्वभावमित्यत्रैकः स्वशब्दोऽधिकः। अन्यत्र परिणामाङ्गीकारेऽपि कार्याणां स्वोपादाने एवाभेदान्न चिद्वस्तुनि ब्रह्मणि ब्रह्मशरीरत्वाद्ब्रह्माभेद इति चेच्छरीरं शरीरी चेति वस्तु-

द्वयं एकं वा । आद्ये वस्तुद्वयमभेदश्चेति विरुद्धम् । द्वितीये चिद्-चिदीश्वररूपतत्त्वत्रयगणनाप्रतिपक्षीभवेत् । चिदचितोरीश्वरशरीर-त्वात्तदभेदेनेश्वरैकतत्त्वापत्तेः । किंच 'अनश्नन्नन्यो अभिचाकशी-ती'ति मन्त्रवर्णादभोक्तुर्भोगोपाधिभूतशरीरकल्पनाया अयुक्त-त्वात् । 'यस्यात्मा शरीरमि'त्यादि तूपासनार्थमिति मन्तव्यम् । यत्तु रङ्गाचार्येण 'सर्वस्य जगतो ब्रह्मशरीरत्वाच्छरीरवाचकानां शरीरिण्येव मुख्यतया प्रवृत्तिदर्शनात्सर्वं खल्विति सामानाधिक-रण्यनिर्देशो युक्त' इत्युक्त्वाऽग्रे 'सूक्ष्मचिदचिद्विशिष्टब्रह्मरूपकार-णवाचिब्रह्मपदेन स्थूलचिदचिद्विशिष्टब्रह्मरूपकार्यवाचिसर्वपदस्य सामानाधिकरण्यं कार्यकारणयोरभेदबोधकं मुख्यमेवोपपन्नतर'-मित्युक्तं तत्तु रङ्गक्षेपणं नतु मानुपभाषणम् । कार्यकारणयोरभेदे शरीरवाचकानां शरीरिणि मुख्यप्रवृत्तिदर्शनहेतुकथनासामञ्ज-स्यात् । तादृशशब्दप्रवृत्त्यापि स्थूलचिदचिद्विशिष्टब्रह्मणः सूक्ष्म-चिदचिद्विशिष्टब्रह्माभेदो बुद्धः स्यान्नतु कार्यप्रपञ्चस्य ब्रह्माभेदः सिध्येत् । तच्छरीरत्वात्तदभेद इति चेत्कार्यकारणयोरभेदबोधक-मिति कथनं न युक्ततामर्हति । किंच स्थूलचिदचिद्विशिष्टब्रह्मण एव प्रपञ्चत्वादित्युक्तं, तत्र किंनाम ब्रह्मत्वं सर्वज्ञचित्त्वं, उत सूक्ष्मचिदचिद्विशिष्टतादृशचित्त्वं, अथवा स्थूलतद्विशिष्टतादृशचि-त्त्वम् । आद्ये न तस्य कार्यत्वं सिद्धत्वात्, अविकारित्वात् । द्वितीये स्थूलतद्विशिष्टेऽव्याप्तेः, तृतीये सूक्ष्मतद्विशिष्टे अव्याप्तेः । किंच 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति लक्षणवाक्येन सूक्ष्मचिदचितोर्विशेषण-ता गम्यते येन तद्विशिष्टे ब्रह्मता त्वन्मता स्यात् । नहि शब्दादप्र-तीयमानवैशिष्ट्यं वक्तुं शक्यम् । विशिष्टे ब्रह्मत्वेऽपि कार्यावस्थायां ब्रह्मविशेषणे चिदचिदंशे सूक्ष्मत्वाभावेन ब्रह्मपदेनान्वयितावच्छे-दकरूपेणानुपस्थितेः सर्वं ब्रह्मेति वाक्यमनन्वितं तव भवेत् । सुवर्णं कुण्डलमित्यादौ कुण्डलावस्थायामपि सुवर्णत्वस्यान्वयिता-

वच्छेदकस्य सत्त्वादन्वयोपपत्तिः। दुग्धं दधीत्यत्र दुग्धत्वोपलक्षितं द्रव्यं दुग्धशब्दार्थः। इत्थं सूक्ष्मचिदचितोरुपलक्षणत्वे सर्वज्ञचैतन्यस्यैव कारणत्वाद्विकारापत्तिः। यत्तु रङ्गाचार्यः जगद्ब्रह्मणोः शरीरशरीरिभावे'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे'ति श्रुतिमाह तदयुक्तम्। ब्रह्मत्वसामानाधिकरण्येन मूर्तत्वामूर्तत्वयोर्विधानाद्गन्धस्य द्वे रूपे पूतिः सुरभिश्चेति वाक्याद्गन्धद्वैविध्यवद्ब्रह्मद्वैविध्यापत्तेः। नत्वन्यतरस्य मिथ्यात्वं त्वदिष्टं येनैकमेवाद्वितीयमित्यविरुद्धं स्यात्। यत्तु जडभागस्य मिथ्याभूतस्य सर्वशब्दार्थत्वे ब्रह्मस्वरूपतादात्म्यासंभव इत्युक्तं। तन्न। चोरस्थाणुन्यायेन तत्संभवात्। यत्तु यावत्कृत्स्नं ब्रह्मात्मकमिति वेदान्तार्थज्ञानं सम्यङ्न जायते तावद्विशेषणेष्वेव मुख्यवृत्तिरिति तत्तुच्छम्। सम्यग्ज्ञानोत्तरं शक्तिग्रहस्तदुत्तरं सर्वं ब्रह्मेति वाक्यार्थबोधात्सम्यग्ज्ञानमित्यन्योन्याश्रयात्। यत्तु 'जगद्व्यापारवर्जमि'ति बादरायणसूत्रमवलम्ब्य मोक्षदशायामपि व्यापाराव्यापाराभ्यां जीवब्रह्मणोर्भेदं ब्रूते। तन्न। जगद्व्यापारकर्तृतावच्छेदकं ब्रह्मत्वं न जीवन्मुक्तत्वमिति तदर्थसंभवात्। यत्तु सत्यसंकल्पादिगुणकतया न निर्गुणं ब्रह्मेति। तन्न। जगत्सत्यत्वे एव तदुपपत्त्या तदभावात्तदभावः। यत्तु केवलवाक्यार्थज्ञानं न मोक्षोपायः सहसैव मोक्षप्रसङ्गात्किंतूपासनाकर्मसहितमिति। तन्न। वाक्यार्थज्ञानेनाज्ञाने निवृत्ते मोक्षे किं प्रतिबन्धकं भवेत्। नहि वाक्याद्रज्ज्वधिगमे सर्पभयनिवृत्तौ किंचित्प्रतिबन्धकं दृष्टचरम्। देहात्मनोरभेदवादित्वान्नास्तिकाग्रेसरश्चक्रवर्तिनश्चार्वाकतो मतमनादेयतरम्। तस्मादेतन्मतं विहाय केवलकापिलप्रवेशेऽपि न निस्तारः। तत्र जगत्कारणं प्रकृतिरिति स्थितम्। तत्र प्रकृतिशब्दस्य कारणवाचित्वात्स्वातिरिक्तकार्यसंभवात्स्वस्य स्वकारणत्वायोगात्स्वस्यान्यस्य वा कारणमिति विकल्पासहिष्णुत्वात्प्रकृतिशब्दोऽनुपपन्नः। अप्रकृतौ जगत्कारणत्वमनुपप-

न्नमेव । प्रधानशब्दवाच्यत्वमप्यप्रकृतेरेव स्यात् । किंच गुणत्रय-साम्यावस्थायाः प्रकृतित्वाङ्गीकाराद्विकृत्यवस्थायां प्रकृतित्वाभा-वात्प्रकृतिविकृत्योरभेद इत्ययुक्तं स्यात् । कपालावस्थायां पिण्डा-वस्थाया इवोत्तरोत्तरपरिणामे पूर्वावस्थाया नाशे पञ्चविंशतित्वं तत्त्वानामसमञ्जसं स्यात् । माध्यमिकपरिणामैः संख्यापूर्तिश्चेन्नू-वेत्संख्यापूर्तिर्न तूपलभ्येरन् । प्रकृतेः सावयवत्वेन यत्किंचि-दवच्छेदेन यत्किंचित्परिणामे महदादीनां प्रकृतिविकृतित्वं दुर्नि-रूपम् । पूर्वावस्थामविनाश्यैवोत्तरकार्याङ्गीकारेऽयमेव विवर्त इत्यलं पल्लवीभावेन वाचाम् । विवर्तपक्षे तु सर्वस्याध्यासिकत्वे-नाध्यस्तस्याधिष्ठानैकरसत्वेनैकरसे प्रमाणप्रमेयकार्यकारणादिव्यव-हारस्य सुतरामनुपपन्नत्वादनुपपन्नस्य जगत आत्मनः स्वप्रकाशस्य वा चिन्ताया अयुक्तत्वान्निश्चिन्त्यमेव विवेकसिद्धं परमब्रह्मनिष्ठां मन्यन्ते ब्रह्मवादिनः । अध्यस्तस्य जगतोऽधिष्ठानातिरेकेण सत्वा-संभवादध्यासस्यात्मनोऽन्यत्रासंभवादेतदुभयविज्ञानेनात्मैकत्वविज्ञा-ने नित्यमुक्तत्वमित्यत्र श्रुतिस्मृतीरुदाहरामः । —'सर्वभूतस्थमा-त्मानं सर्वभूतानि चात्मनि । संपश्यन् ब्रह्म परमं याति नान्येन हेतुना । यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते । यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्वि-जानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । सर्वभूत-स्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र सम-दर्शनः । यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति । सर्वभूतस्थमात्मानं सर्व-भूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छती'ति । अध्यस्तस्य जगतोऽधिष्ठानसन्मात्रत्वेन जलं तरङ्गेण, रज्जुर्भुजङ्गेन, सूर्यकिरणाः कुरङ्गजलेनेव न स्पृश्यते अधिष्ठानसन्मात्र आत्मा जगता । अतएव 'असङ्गो ह्ययं पुरुष' इति श्रुतिः । नित्यासङ्गत्वेन

नित्यमुक्ते परमात्मनि जीवन्मुक्तिविदेहमुक्ती भ्रमः । स च ज्ञानपरिपाकतारतम्येन विभाति । तच्च ज्ञानं प्रमाणप्रमेयादिव्यवहारासंभवादध्यस्तत्वेनाध्यस्तस्याविद्यामयत्वेनाविद्यायाः स्वप्रकाशचिदेकरसेऽहमिति प्रथमानेनावृतेऽसंभवात्स्वातिरिक्तस्य कस्यचिदप्यसंभवादहमेवाहमिति सहजविश्रान्तिः । तत्साधनं च निखिलवेदबीजस्य यावद्वाक्प्रपञ्चसारस्य तारस्यार्थविचारः । यद्विचारेण यावन्तो वेदा विचारिता भवन्ति, यदध्ययनेनाधीता भवन्ति, यज्जपेन जप्ता भवन्ति, येन प्राणवन्तो भवन्ति, यदनुसंधानेन यतयोऽन्ते मुक्ता भवन्ति, यज्जपमात्रेण ब्रह्मलोकमारोहन्ति, यदुपासनया सर्वेऽप्युपासिता भवन्ति, यन्माहात्म्यवर्णने शेषप्रभृतयो विकुण्ठिता भवन्ति, यदर्थविचारेण बुद्धिमन्तो मुक्तास्तिष्ठन्ति तदर्थस्तु अखण्डैकरसं ब्रह्मैव । तत्र प्रणवस्य चत्वारि पदानि ता एव मात्रा उच्यन्ते । तत्र प्रथममात्राया विश्वविराट्शब्दवाच्यो निखिलः स्थूलप्रपञ्चस्तद्द्रष्टा चार्थः । द्वितीयमात्रायास्तैजसहिरण्यगर्भशब्दवाच्यः स्वाप्नः सूक्ष्मः प्रपञ्चो द्रष्टा चार्थः । तृतीयमात्राया अव्याकृतशब्दवाच्यमूलाविद्या तदनुभविता चार्थः । अर्धमात्रारूपस्योङ्कारस्य 'नान्तःप्रज्ञ'मित्यादिनिषिद्धसकलविशेषमहमिति सामान्यतः प्रथमानमनुभवमात्रं तुरीयमर्थः । अनुभूयमानस्यान्तःप्रज्ञत्वादेर्निषेधेऽप्यात्मानुभवस्य निषेधायोगात् । तत्र स्थूलप्रपञ्चस्य प्रथममात्रार्थस्य द्वितीयमात्रार्थे सूक्ष्मे प्रातिभासिकेऽभेदेनान्वयः । तस्य द्रष्टापि विश्वः सूक्ष्मद्रष्टरि तैजसेऽभेदेनान्वेति । सूक्ष्मस्य प्रातिभासिकस्य सौषुप्ते मूलाज्ञानेऽभेदान्वयः तैजसस्यापि मूलाविद्यानुभवितरि प्राज्ञेऽभेदेन । सौषुप्तमूलाविद्यायाश्च नान्तःप्रज्ञमित्यादिलक्षिते तुरीये बाधसामानाधिकरण्येन, तत्रैव प्राज्ञस्य मुख्यसामानाधिकरण्येन, स्थूलस्य स्वाप्नाभेदेन प्रातिभासिकत्वापादनेन, प्रातिभासिकस्याविद्यामयत्वेनाविद्यायाः एक-

रसे ब्रह्मणि कथमप्यसंभवादसंभवाविद्यस्वप्रकाशतुरीयाभेदेनाव-स्थात्रयानुभवितुरसङ्गनित्यमुक्तत्वमिति विशिष्टवाक्यार्थः । 'त्रय आवसथास्त्रयः स्वप्नाः, अयमात्मा ब्रह्म सर्वानुभूः, असङ्गो ह्ययं पुरुष' इत्यादिश्रुतिभ्यः । अवच्छेदकोपाधाववच्छिन्ने चैतन्ये च खण्डशः शक्त्यङ्गीकारात्पृथगन्वयेऽपि न क्षतिः । भागत्यागलक्ष-णयाऽवच्छिन्नत्वांशपरित्यागेन शुद्धचिदंशस्यापि तुर्यान्वयो न विरुध्यते । स्वकार्यपरीक्षयाऽविद्याया नष्टत्वादविद्याकार्याणां पूर्व-मेव बाधितत्वात्स्वयंप्रकाशसच्चिदानन्दसामान्ये तुरीयेऽदृष्टमव्य-वहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारमिति ल-क्षिते बुद्धेरप्रवेशात्सर्वचिन्तां परिहाय तूष्णीमवस्थानं वाक्यार्थ-बोधस्वरूपं फलं च ।

ननु अदृष्टनित्यादिविशेषणैरुक्तेऽपि वृत्तिव्याप्त्यभावे एकात्मप्र-त्ययसारमिति विशेषणेनावश्यको वृत्तिव्याप्त्यङ्गीकारः । अतएवा-विद्याबाधोऽपि युक्त इति चेन्न । सूर्यकिरणेषु मृगजलवदध्यस्तया बुद्ध्याधिष्टान आत्मा न विषयीकर्तुं शक्यते । यथा सूर्यकिरणाः स्वाध्यस्तजलैर्न शीतलीक्रियन्ते भिन्नसत्ताकत्वात् । अतएव प्रति-बिम्बाभासवादौ निराकृतौ । नहि मृगजले सूर्यप्रतिबिम्ब आभासो वा संभवति । ननु अध्यस्तस्याप्याकाशनीलिम्नः प्रतिबि-म्बदर्शनाद्भिन्नसत्तायामपि बुद्धौ वास्तवसतोऽप्यात्मनः प्रतिबिं-म्बाभासौ संभवेतामिति चेन्न । आकाशनीलिम्नः सोपाधिकभ्रम-त्वेनाप्रलयमनिवृत्तेर्व्यावहारिकतुल्यत्वेन व्यावहारिकत्वेनैव वा समसत्ताकत्वेन प्रतिबिम्बः । अतएव न मृगजले तत्प्रतिबिम्बो दृष्टः । ननु वृत्तिव्याप्त्यनङ्गीकारेऽविद्याबाधोऽनुपपन्न इति चेन्न । यत्र विषयविषयिभावो वास्तवः स्यात्तत्र विषययाथार्थ्यज्ञानेना-विद्याया बाधनं युक्तं । यत्र तु विषयविषयिभावोऽविद्यया कल्पित-स्तत्र विषयत्वासंभवादविद्यायाः स्वकार्यासंभवदर्शनेनैव नाशं

इत्यभ्युपगन्तव्यम्। अतएव 'अन्यदेव तद्विदितादथो अविदितादधी'ति श्रुत्या विद्याविद्याविषयत्वं निरस्तं संगच्छते। यदि हि कार्यं नाम किंचिदुपपन्नं भवेत्तदा तत्कारणाभ्युपगमोऽपि सुतरामुपपन्नो भवेत्। यदा तु कार्यमधिष्ठानमन्तरेण न प्रतिभाति स्वतश्च स्वरूपं न किंचिद्विन्दति तस्य कार्यत्वासंभवेन कारणाभ्युपगमस्यानवकाशात्कार्यकारणबुद्ध्यनुदय एवाविद्यानाशः कार्यसहित इत्युच्यते। यथा 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य तदपागादग्नेरग्नित्वं' इत्यत्राग्निपरीक्षायामग्नेरसंभवादग्न्यापादकाविद्यानाशस्तथा कार्यमात्रे सत्ताप्रकाशयोर्ब्रह्ममात्रत्वेऽसदप्रकाशस्य शशशृङ्गतुल्यस्य कार्यस्य आपादकाऽविद्यानाशः। अविद्याऽसंभव एवाविद्यानाश उच्यते। अतएव अविद्यास्तीत्यविद्यायामेवास्तित्वप्रकल्पनमिति सुरेश्वराः। अविद्याकार्ये सत्येवाविद्याकल्पनमिति तदर्थः। एतावताऽविद्यानाशार्थं वृत्तिव्याप्त्यङ्गीकारो निष्फलः। अङ्गीकृतायामप्यसंभवस्तस्या इति फलितम्। 'अप्रमेयं परं ध्रुवमि'ति श्रुतेः। 'मानं प्रबोधयन्तं बोधं मानेन ये बुभुत्सन्ते। एधोभिरेव दहनं दग्धुं वाञ्छन्ति ते महात्मान' इत्याचार्याः। 'यतो वाचो निवर्तन्त' इति श्रुतिव्याख्यावसरे स्वस्मिन्स्वप्रवेशायोगादित्यानन्दगिरयः। किंच ब्रह्मणस्तुरीयस्य निराकारत्वाद्बुद्धिप्रत्यक्त्वाच्च बुद्धेर्ब्रह्माकारत्वं नामाकारपरित्याग एव पर्यवस्यति। सा च न वृत्तिः कुतस्तरां वृत्तिव्याप्तिः।

ननु तथात्वे ब्रह्मबोधो न स्यादिति चेन्न। स्वयं बोधरूपस्य न बोधान्तराकाङ्क्षा किंतु बोधयोगेन भासमानेषु बोधभेदनिरासे बोधः स्वमात्रोऽवतिष्ठते। अतएव वेदान्तवचनानि विषयविमुखीकरणार्थानीति भाष्यम्। सति भेदग्रहे विषयसांमुख्यस्य दुर्वारत्वान्निरस्ते च भेदे स्वमात्रत्वेन विषयसांमुख्यासंभवात्प्रत्यग्विश्रान्तिरार्थिकीति तात्पर्यम्। अत्र तु विश्वतैजसयोः प्राज्ञे स्थूलसूक्ष्मयोः

कारणे चाभेदमवगाह्य विशिष्टप्रणवार्थे तुरीयेऽवस्थात्रयभावाभावसाक्षिणि स्वयमहमात्मा निजमित्यादिशब्दितेऽभेदाकाङ्क्षावत्तामालोक्य तत्संगमसमये तेन तुरीयेण व्याप्ता तुरीयमेव भवति बुद्धिः शब्दश्च । यथा वह्नियन्त्रमपीप्रज्वलितवह्निसंगमसमये एव वह्निर्भवति न स्वरूपेण तिष्ठति नापि वह्निं व्याप्नोति नाप्युत्थास्यति । तथाच भाष्यम्—क्षीणे तु मकारे बीजभावक्षयादमात्रे ॐकारे गतिर्न विद्यते क्वचिदित्यर्थः । अमात्रो मात्रा यस्य नास्ति सोऽमात्र ॐकारश्चतुर्थस्तुरीय आत्मैव केवलोऽभिधानाभिधेयरूपयोर्वाङ्मनसयोः क्षीणत्वादव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः संवृत्तः । एवं यथोक्तविज्ञानवता प्रयुक्त ॐकारस्त्रिमात्रस्त्रिपाद आत्मैव संविशत्यात्मना स्वेनैव स्वं पारमार्थिकमात्मानं य एवं वेद । परमार्थदर्शिनां ब्रह्मविदां तृतीयं बीजभावं दग्ध्वात्मानं प्रविष्ट इति न पुनर्जायते तुरीयस्याबीजत्वात् । नहि रज्जुसर्पविवेके रज्ज्वां प्रविष्टः सर्पो बुद्धिसंस्कारात्पुनः पूर्ववत्तद्विवेकिनामुत्थास्यति । मन्दमध्यमधियां तु प्रतिपन्नसाधकभावानां सन्मार्गगामिनां संन्यासिनां मात्राणां पादानां च क्लृप्तसामान्यविदां यथावदुपास्यमान ॐकारो ब्रह्मप्रतिपत्तये आलम्बनीभवतीति । मात्रात्रयस्य सविकल्पविश्वादिबोधनेनोपक्षीणत्वान्निर्विकल्पसमस्तोङ्कारस्यामात्रस्याव्यवहार्यप्रपञ्चोपशमाद्वयार्थे तुरीये जाग्रतः स्वप्नाभेदेन मिथ्यात्वे तस्य सौषुप्ते बीजेऽज्ञानेऽभेदेनाविद्यामात्रत्वे ज्ञाते तेनैवाविद्यादाहे समावेशः । अविद्यादाहे सत्येवाधिष्ठानसाक्षात्कारात् । ये तु अधिष्ठानसाक्षात्कारोत्तरमविद्यानाशमिच्छन्ति तेषां सत्यावरणे साक्षात्कारासंभवः । आवरणसाक्षात्कारयोः समकालिकत्वासंभवात् । यत्साक्षादपरोक्षादिति श्रुतेर्नित्यापरोक्ष आत्मा न स्वसाक्षात्कारे वृत्तिमभिलषति किंतु स्वाध्यस्तनिरासमात्रं मोक्षाय । रज्जुरिव सर्पादिभिर्विकल्प्यमाना स्थानत्रय आत्मैक एवान्तःप्रज्ञा-

दित्वेन विकल्प्यते यदा तदान्तःप्रज्ञादित्वप्रतिपेधविज्ञानप्रमाणव्यापारसमकालमेवात्मन्यनर्थप्रपञ्चनिवृत्तिलक्षणं परिसमाप्तमिति तुरीयाधिगमे प्रमाणान्तरं साधनान्तरं वा न मृग्यम् । रज्जुसर्पविवेकसमकाल इव रज्ज्वां सर्पनिवृत्तिफले सति रज्ज्वधिगमस्येत्यादिना । तस्मात्प्रतिपेधविज्ञानप्रमाणव्यापारसमकालैवात्मन्यध्यारोपितान्तःप्रज्ञत्वाद्यनर्थनिवृत्तिरिति सिद्धमित्यन्तेन भाष्येण नान्तःप्रज्ञमितिश्रुतिव्याख्यानपरेण स्पष्टीकृतम् । रज्जुसर्पस्थले यो ह्यविद्यानिवृत्त्युपायः स एव साक्षात्कारोपायः । तुरीये तु अविद्यानिवृत्त्युपायस्य न साक्षात्कारोपायत्वं तस्यैव नित्यसिद्धसाक्षात्कारस्वरूपत्वात् । परंतु अविद्यानिवृत्त्युपायेतरोपायानपेक्षत्वं तुल्यमिति दृष्टान्तसंगतिः ।

ननु नित्यापरोक्षत्वे आवरणासंभवादविद्यासंभव इति चेन्न । आवरणासंभवेऽप्यहमात्मानं न जानामीति प्रतीत्यावरणाभिमानोत्पादकाऽविद्यासंभवात् । सैव च यावद्विक्षेपहेतुः शास्त्रेण निवर्तनीया । अस्तु नाम शुक्तिरजतस्थले शुक्तित्वांशमाच्छादयन्ती रजतपरीक्षया बाध्या च । अत्र तु विषयत्वासंभवान्निर्विभागे तथा विषयत्वमध्यस्यात्मानं कथं लभेयमिति यतमानं प्रति विषयत्वं नास्तीत्येव बोधनीयं नत्वङ्गीकरणीयं नापि कश्चिदंश आच्छादनीयः संभवति निर्विशेषत्वात् । नच ब्रह्मत्वमाच्छादितमिति वाच्यम् । सर्वारोपाधिष्ठानत्वमपेक्ष्य ब्रह्मशब्दप्रवृत्तेस्तस्य चाविद्यकत्वात् । सिद्धमेतावताऽवस्थात्रयबाधेन तुरीयविश्रान्तिः प्रणवार्थविचारेणेति । एकात्मप्रत्ययसारमित्यस्य तु एकः यावद्भेदशून्यः आत्मप्रत्ययः आत्माभिन्नचित्प्रकाशः सारो यस्मिन्नित्यर्थः । ननु एकजीववादे एकमुक्त्या सर्वमुक्तिप्रसङ्गाद्बन्धमोक्षव्यवस्था न सिध्येदिति चेन्न । इष्टापत्तेः । केन मुक्तेन जीवान्तरं दृष्टमिति तद्व्यवस्था गले पतिता स्यात् । 'या निशा सर्वभूतानां तस्यां जागर्ति

संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने'रिति भगवता मुक्तेषु प्रपञ्चदर्शनाभावाभिधानान्न मुक्तेषु सा प्रसरति ।

ननु जगद्व्यवस्थाऽभावे जीवन्मुक्तानां यथेष्टाचारप्रसङ्गः व्यवस्थायां च जगदुपपत्तिर्वक्तव्या उपपन्ने च जगति मोक्षानवकाशप्रसङ्ग इति चेन्न । जगद्व्यवस्थया संत्रस्तो जगदतीतपदवीमारुरुक्षुर्मुमुक्षुरध्यात्मशास्त्रे प्रवृत्तस्तत्राकर्त्रात्मानं निश्चित्य कथं जगद्व्यवस्थायां प्रवर्तेत यया यथेष्टाचारश्च परिहर्तव्यो भवेत् । 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इत्युद्धवं प्रति भगवदुक्तेर्मुमुक्षुदशायामेव यदा विध्यगोचरत्वं किमु वक्तव्यं जीवन्मुक्तानाम् । किंचाप्तकामानां नेच्छासंभवोऽस्ति येन यथेष्टाचार आपादनीयः । नापि शास्त्रस्येच्छास्ति तदुद्देशेन विधेरदर्शनात् । तवेच्छायास्त्वकिंचित्करत्वात् । नापि ज्ञानाज्ञानदशयोः प्रकृतिविकृतिभावोऽस्ति येनाज्ञानदशायां विहितानि कर्माणि ज्ञानदशायामतिदिश्येरन् । अकर्मत्वाज्ज्ञानदशायाः । नाप्यज्ञानेनाभिमतानि वर्णाश्रमादीनि ज्ञानेऽप्यभिमत्य तथैवाचरितव्यमिति नियमोऽस्ति । नापि लोकनिन्दानिवृत्त्यर्थमिति वक्तुं शक्यं । अनात्मज्ञलोकानां मूर्खेषु गणनात् । 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धा' इतिश्रुतेस्तन्निन्दाया अप्रयोजकत्वात् । आत्मज्ञेषु तु निन्दास्तुत्योरसंभवात् । किंच संसारदुःखसंत्रस्तस्याखण्डनिरतिशयसुखलाभे तत्राखण्डविश्रान्तिरेवार्थिकी न सदाचारो नाचारो वा तमाक्रमितुं शक्तः । कदाचिद्विश्रान्तिप्रतिबन्धे पुनः पुनः प्रणवार्थविचारेण विश्वमिथ्यात्वं निश्चित्यात्मविश्रान्तिः संपादनीया इत्यपि वक्तुमशक्यम् । यथाह वसिष्ठः—'चिद्व्योमैकान्तनिष्ठत्वात्प्रयत्नेन विना सुखम् । न वेत्ति शुद्धबोधात्मा यः स विश्रान्त उच्यते । सर्वे एव परिक्षीणाः संदेहा यस्य

वस्तुतः। सर्वार्थेषु विवेकेन स विश्रान्तः परे पदे। यस्य कस्मिंश्चिदप्यर्थे क्वचिद्रसिकतास्ति नो। व्यवहारवतोऽप्यन्तः स विश्रान्त उदाहृतः। यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः। यथाप्राप्तं विहरतः स विश्रान्त इति स्मृतः। अनिमीलितनेत्रस्य यस्य विश्वं प्रलीयते। स क्षीवः परमार्थेन हा शेते सुखमात्मवान्। विनिगीर्य जगत्सर्वं परमां पूर्णतां गतः। आतृप्तेरमृतं पीत्वा हा शेते सुखमात्मवान्' इत्यादि। तत्र विदितवेद्यस्यात्मैकरसिकत्वेन प्रपञ्चोपेक्षयाऽऽत्मविश्रान्तिरेव स्वभाव इति तात्पर्यं नत्वाचाराभिनिवेशः। अतएव 'नैव तस्य कृतेनार्थ' इत्यादि भगवानपि। अज्ञ आचारमेव प्रशंसति ज्ञाने संदिहान आचारं ब्रह्मज्ञानं च। परिनिष्ठितस्तु असंदिग्धं बोधमेव परीक्षते। परिनिष्ठितत्वं च अनिकेतत्वकुसङ्गशुभाशुभकर्मपरित्यागयथाप्राप्तसंतोषयथार्थगुणग्रहणपरदोषानीक्षणगुरुवचनानुसंधानप्रतिपालनाद्भवति। सनिकेते ममत्वं दोषः कुसङ्गे चित्तक्षोभः कर्मणि कर्तृत्वाभिमानः असंतोषे इच्छावृद्धिः गुणाग्रहणे मात्सर्यं दोषदर्शने नीचत्वं गुरुवचनाननुसंधाने ज्ञानविस्मृतिः अदृढप्रतिपत्तौ अनिकेतत्वादयोऽदृढप्रतिपत्तये भवन्ति। दृढप्रतिपत्तौ तु न किंचित्कर्तव्यम्। 'कृतकृत्यस्थितिरेषा प्रत्यग्विश्रान्तिमेत्य शयनं यत्। व्युत्थाने सर्वस्मिन्समता रसिता च नीरसत्वं च'। वस्तुतस्तु 'न कर्म लिप्यते नरे, न कर्मणा लिप्यते पापकेन, न कर्मणा वर्धते नो कनीया'नित्यादिश्रुतिभिरात्मनः कर्मलेपाभावेऽप्यभिनिवेशमात्रमज्ञानां कर्मणि फले च। अतएव 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु'रितिश्रुतिरभिनिवेशत्यागं मोक्षहेतुं बोधयति। स्वरूपतः सर्वथा त्यागासंभवात्। नहि केनचिज्जीवता पाषाणीभवितुं शक्यते। अतएव देहेन्द्रियादिषु सत्यसति वा कर्मणि प्रवृत्तेष्वपि विदुषि न हर्षशोकौ। 'एवं ह वाव न तपति किमहं साधु नाकरवं किमहं

पापमकरवमि'ति श्रुतेः । तथाच विश्वमिथ्यात्वज्ञानं विना कर्मफलहर्षशोकस्पर्शाभावस्य कथमप्युपपादयितुमशक्यत्वान्मिथ्यावस्तुनोऽन्यसत्तया सत्तावतः स्वतः शशशृङ्गतुल्यस्यान्यसत्तया सत्तावदित्यपि वक्तुमशक्यस्य व्यवहारविषयत्वासंभवान्निर्विषयत्वात्प्रमाणानां स्वतस्तुच्छत्वाच्च प्रमाणनिरपेक्षमद्वैतसाम्राज्यं सिद्धमिति शिवम् ।

अद्वैतसाम्राज्यमिदं तु काश्यां खव्योमनागेन्दु(१८००)मिते शके च ।
माघेऽसिते भूतदिने चकार कृष्णो मुनिस्तुष्टिकृते बुधानाम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यसच्चिदानन्दसरस्वतीचरणकमलमकरन्दास्वादसंतृप्तमनोमिलिन्द श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीविरचितमद्वैतसाम्राज्यं सपूर्णं ॥

---

# शास्त्राकूतप्रकाशः ॥ ७ ॥

जय सच्चिदानन्द ।

आदिदेव नमस्तुभ्यमन्तदेव नमोऽस्तु ते । आदिमध्यावसानाय मह्यमेव नमो नमः ॥ १ ॥ श्रीसद्गुरोः पदाम्भोजमिवकारोपरि स्थितम् । हंसारूढं गूढमन्तः श्रुतीनां शिरसा वहे ॥ २ ॥ श्रीशंकरपदाम्भोजभ्रमरीभूतचेतसा । शास्त्राकूतं प्रकटतां नीयते कृष्णभिक्षुणा ॥ ३ ॥

अथ शास्त्राकूतं व्याख्यास्यामः । यदिदं जगत्परिदृश्यमानं तद्द्रष्टृदृष्टिसिद्धं न स्वतः, नहि घटः स्वसत्तां विजानाति अत्राहमस्मीदृगिति च । तस्मात्तत्सत्तानिर्वाहिणी द्रष्टृदृष्टिरेवेति वचनमप्रतिबद्धम् । सा च दृष्टिः शिक्षिताशिक्षितभेदेन द्वैविध्यमापन्ना बाध्यबाधकभावनिपण्णा स्वातन्त्र्यशास्त्रपारतन्त्र्यभेदात् । तत्राशि-

क्षितधिषणा शिक्षितधिषणया बाध्यते शिक्षाफलस्य वक्तव्यत्वात्। नहि पूर्वबुद्धिपरावृत्तिमपहायान्यत्फलं शिक्षितबुद्धेः सदूहम्। नहि पूर्वबुद्धिबलदानदक्षा शिक्षा प्रमाणपथमधिरोहति, अज्ञातज्ञापकत्वस्य तल्लक्षणत्वात्। नहि गुरुर्घटसत्तां शिक्षयति, तस्याः शिष्यसंमतत्वात्। अत्रेदं शिक्षणीयं यदिदमयं घट इति दर्शनं तत्त्वन्निष्ठम्। नहि घटनिष्ठमहं घट इति दर्शनमयं मे प्रमातेति वा दर्शनम्। तस्माद्द्रष्टासंस्पृष्टमयं घट इति दर्शनम्। तर्हि कथं दर्शनविषयो घटः। युक्तमेतत्पृष्टं, प्रतीतिदेशेऽप्रसिद्धत्वात् मरूदकरज्जुसर्पादिवत्। यो हि स्वदेशेष्वप्रसिद्धस्तद्दर्शनमाविद्यकमिति निर्विवादम्।

सा चाविद्या शिक्षाकालान्ता। ततोऽनादित्वमविद्यायाः। सिद्धे चानादित्वे शिक्षाकालान्तत्वे च प्राप्तोऽवकाशः शास्त्रशिक्षाफलस्य। तच्च फलं शिक्षाभावसमनियताया घटोऽयमिति दृष्टेः परावर्तनं शिक्षाकालसमनियतम्। ननु घटोऽपि शिक्ष्यते इत्थं कर्तव्य इत्थंलक्षण इत्थं व्यवहर्तव्य इति, तत्कथं घटदर्शनम्। शिक्षाबाध्यमिति चेत्किमनया शिक्षया कृतिलक्षणव्यवहाराः शिक्षिता उत घटः। घटः कृतिजन्यो लक्षणसंपन्नो व्यवहारगोचरोऽतिरिच्यते प्रकृतशिक्षायाः। स च बाध्यते कार्यकारणपरीक्षया। बाध्यन्ते च तेन सह कृतिजन्यत्वलक्षणसंपन्नत्वव्यवहारगोचरत्वानि। ननु यदि घटेन सह कृतिलक्षणव्यवहारा बाध्यन्ते तर्हि वैयर्थ्यं शिक्षायास्तद्गोचराया इति चेदस्ति तावत्फलं यावद्द्रष्टाविद्या। अविद्या नाम कार्यकारणगर्भा शिक्षाभावजीवान्यथादर्शनप्रसवा प्रमाणपरिपन्थिनी। सा स्वप्रसूतैरेव प्रमाणैर्हन्यते यथाऽश्वतरीकर्कटी स्वप्नो वा स्वप्नं पश्यन् हस्तिजीवो वा गर्भेण सिंहेन च। एतावतैतत्सिद्धम्। अनाद्यविद्यया पूर्वपूर्ववासनागर्भया सान्तया गुणमय्या प्रसूतं प्रमाणप्रमेयप्रमात्रात्मकं जगत्।

तत्र प्रमाता नाम सत्त्वोपाधिचैतन्यम् । स च स्वोपाध्यनुगुणं सत्त्वसारं प्रमाणमवलम्बते । तदवलम्बेन तमोमयं नामरूपात्मकं प्रपञ्चमनुभवति, तत्सत्यमित्यपि व्यामोहमापद्यते प्रकाशाप्रकाशात्मना रजसा व्यवहरति च । यथा स्वप्नद्रष्टा स्वयं सत्यः सन् स्वप्नोऽपि सत्य इति । तस्माद्दृश्यबाधाऽविरोधीनि तमोमिश्राणि प्रमाणत्वेनाभिमतानि प्रमाणाभासानि । तात्कालिकव्यवहारसाधकत्वेऽपि निमित्तान्तरबाध्यत्वात् स्वाप्नप्रमाणवत् । तस्मात्पारमार्थिकं प्रमाणं तदेव यदापातप्रतीतिबाधकम् । अतएव शास्त्रे द्वैतमिवेति इवशब्देन प्रपञ्चो व्याख्यातः । इवशब्दार्थस्तु दृष्टिगोचरत्वेऽपि सत्ताशून्यत्वम् । अतएव निषेधवाक्यानि चरितार्थानि । तथा कर्मकाण्डोऽपि व्यावहारिकप्रमाणमनुरुन्धानोऽधिकारिविशेषे चरितार्थः । पारमार्थिकेन प्रमाणेन व्यावहारिकप्रमाणपरिष्वक्तं तमोऽपनीयते । तेन तानि प्रमाणानि न व्यवहारसत्यत्वसाक्षीणि युक्त्यसहत्वात् । यतस्तत्प्रदर्शितो घटो मृषाप्रसिद्धः स्वस्मिन्नपि च तस्मादाशास्त्रमविद्येति प्रवादो निर्विवादः ।

तामेतामविद्यां कर्मरूपामभावरूपां वा केचिन्मन्यन्ते । आद्ये सत्कर्मणाऽसत्कर्मरूपा नाश्यते । द्वितीये ज्ञानाभावरूपा ज्ञानोत्पत्त्येति । एतदुभयमसदिति मन्यन्त औपनिषदः । नहि शुक्तिसाक्षात्कारः कर्मात्मा येन रजतापादककर्मरूपाविद्यानाश उपपद्येत ।

ननु रजतस्य कर्मेतराविद्यामयत्वेऽपि कथमपि भोगहेतुत्वेन कर्मपरिणामाङ्गीकारप्रसक्तौ किमनयाऽधिकयाऽविद्ययेति चेत् तव मते हर्षोत्पादकरजतस्य पुण्यकर्मफलत्वेन शोकोत्पादकशुक्तिसाक्षात्कारस्य पापकर्मफलत्वेन च दृष्टबाध्यबाधकभाववैपरीत्यापत्तेर्यथार्थज्ञानद्वेषापत्तेरङ्गीकुर्वाणस्यापि प्रत्यक्षं रजतबाधं पुनः शोकापत्तेः । तस्मात्कर्मदृष्टश्रुतार्थवासनानामाश्रयः सर्वनामविकारास्पदीभूता यथार्थज्ञानबाध्याऽविद्या सिध्यति ।

नन्वस्तु भावविरोध्यज्ञानं नाभाभावरूपम्, तच्च ज्ञानोत्पत्त्या विनाशशीलं यथा घटोत्पत्त्या घटाभाव इति चेदस्त्वभावरूपता, परंतु प्रपञ्चहेतुता दुर्घटा स्यात्। नह्यभावस्तेजसो यक्षादिभयोत्पादनहेतुः, किंतु यक्षादिवासनाश्रयाऽविद्या। तथा यावन्न शास्त्रसंपर्कस्तावद्विचित्रप्रपञ्चहेतुवासनाश्रयोऽभ्युपगन्तव्यः सा चाविद्या।

ननु द्रव्यकालकर्तृभेदादुपपद्यते जगद्वैचित्र्यमिति चेत्तदेव तु न। द्रव्यकालकर्तृभेदानां स्वस्वदेशेष्वप्रसिद्धेः। ननु प्रसिद्धिः कर्तृणां वयं कर्तार इति स्वस्वदेश इति चेदिदं विचार्यम्। किं प्रसिद्धसामग्र्या कर्तृतोताऽप्रसिद्ध्या। द्रव्यकालयोः स्वदेशाप्रसिद्धत्वेन तन्निमित्ता कर्तृता नोपपन्ना कर्तृत्वाभिमानिनि। अतएव सृष्टिवाक्ये इव भवतीति इवशब्देन जाततुल्यत्वमुक्तम्। अतएव पश्यतीव जिघ्रतीवेत्यादि सिद्धम्। अतएव सृष्टिवाक्येषु खं जातमिव वायुर्जात इवेत्यादि योज्यम्। नहि रजतमिवावभासमानं संगृहीतुर्धनिकत्वप्रयोजकं तथा जगदिवावभासमानं ज्ञातृत्वकर्तृत्वभोक्तृत्वप्रयोजकम्। अतएव तर्केण सिद्धा इव जगत्कारणत्वेनाभिमता अपि परमाणवः। एतेनारम्भवादः प्रमाणबाह्य इति सिद्धम्। तथा परिणामवादोऽपि सृष्टिवाक्यगतेवशब्देन निरस्तः। आरम्भवादिनः परिणामवादिनो वा वैदिकत्वे सृष्टिवाक्यगतेवशब्दानुरोधेन व्यणुकादिकं महदादिकं वा जातमिवेत्येव मतमिति मन्तव्यम्, अन्यथा शिक्षितज्ञानाभावेन बालत्वापत्तेः। तस्मादाविद्यकस्य

---

१ समष्टेर्जातसदृशत्वेन व्यष्टेरपि तथाविधाया एवोचितत्वात् व्यष्टिकूटस्यैव समष्टिपदार्थत्वात्। ननु जातस्य प्रतियोगिनः कस्याप्यसत्त्वात्कुतस्तत्सादृश्यमन्यत्रेतिचेत्। न। अनुयोगिनः प्रतीयमानस्यैव मिथ्यात्वनिश्चयाय निश्चितमिथ्यात्वप्रतियोगिसादृश्यस्य शशशृङ्गवत्सुखमित्यादौ दृष्टत्वात् स्वामिभिरप्यनुपदं समाधानस्य वक्ष्यमाणत्वाच्च.

द्रष्टृदृष्टिमात्रसिद्धस्य निषेधो बलवानिति शिक्षापथमारूढो महाजनेष्वौपनिषदेषु । प्रपञ्चस्तु भोगपथमारूढो विचारविधुरेषु । अतएवैकस्मिन्नेव वस्तुनि नानाकलहा वादिनाम् । कश्चिदीदृशमनीदृशं वक्ति, कश्चिदनीदृशमीदृशं वक्ति, कश्चिदत्रत्यं तत्र वक्ति, कश्चित्तत्रत्यमत्र वक्ति, कश्चिदियत्तावदिति, कश्चित्तावदियदिति, कश्चिद्दूरं समीपं, कश्चित्समीपं दूरं, कश्चिदल्पं महत्, कश्चिन्महदल्पं, कश्चिदेकमनेकं, कश्चिदनेकमेकं, कश्चिदसत्कार्यतां यातीति, कश्चित्सत्कार्यतां यातीति, कश्चिदसत्कारणतां, कश्चित्सत्कारणतामिति एवमादिबह्वो वादाः शास्त्रेण युक्त्या बलवता युक्तिरूपेण वा द्वैतमिवेति निर्वोढा अन्योन्यमप्रसिद्धाः ।

नन्वाविद्यकमेव सर्वं तदपि को हेतुरविद्याया इति चेदुक्तमुत्तरं सर्वहेतोरविद्याया हेतुप्रश्नो न व्युत्थास्यतीति शिक्षामात्रबाध्याया अनादित्वमिति ।

नन्वस्त्वनादित्वमविद्यायाः, अस्तु च सर्वमाविद्यकं, ततो न वास्तवमिति च, तथाप्यविद्यासत्त्वसारमयेन प्रमाणेन कुतो बाधोऽप्याविद्यकत्वान्न वास्तव इति प्राप्तमिति चेद्विज्ञातं शास्त्रतत्त्वमायुष्मता जगद्भावाभावास्पृष्टमद्वितीयमात्मतत्त्वमिति । यदागतमिव तद्गतमिवेति शास्त्राभिप्रायो विद्वदनुभवश्च तस्माज्जगद्भावाभाववार्ताऽपि पूर्वोपन्यस्तवादकोटिप्रविष्टेत्युपरम्यते ॥ इति प्रथममाह्निकम् ॥

ननु नैकमात्मतत्त्वं निश्चिनुमो महर्षिभिर्गौतमकपिलप्रभृतिभिर्बहूनां गणनादिति चेत् किं महर्षिकृततत्त्वानेकत्वगणना तत्त्वैकत्वबुद्धिं प्रतिबध्नाति, कुतो न तत्त्वैकत्वबुद्धिं शिक्षयति श्रुतिः, यत्र द्वैतमिव भवतीतीवशब्देन द्वैतमपोह्य । अत्रेवशब्दो नोपमापरः किंतूत्प्रेक्षापरोऽतो न सादृश्यप्रतियोग्याकाङ्क्षा नोत्प्रेक्षा वस्तुसत्तामपेक्षते । नापि बिभेति विरोधादयमेवोत्प्रेक्षोपमयोर्भेदः ।

अतएवैकतत्त्ववचनानि चरितार्थानि । यदुक्तं तत्त्वानेकत्वगणना प्रतिबध्नाति तत्त्वैकत्वबुद्धिमिति नात्र तत्संभवः, यतो न शास्त्रमतेर्गरीयसी महर्षिमतिः, हीनबलां मतिं प्रबला मतिः प्रतिबध्नीयात्। न महर्षिमतिं श्रुतेर्बलवतीं वक्तुं शक्नुमो जीवमतेः पराधीनप्रामाण्यात्प्रमादसंभवाच्च । अतएव केनचिन्नित्योऽङ्गीकृत आकाशः श्रुत्या जन्मन्युक्तेऽपि । केनचित्कार्यकारणाभेदमङ्गीकुर्वाणेन पुंप्रकृतितत्त्वद्वये वक्तव्ये चतुर्विंशतिरुक्ता तत्त्वानाम्। तस्मादशिक्षितकल्पनातत्त्वानेकत्वगणनेति युक्ततरम्। किंच यन्नित्यत्वमङ्गीकृतमाकाशस्य तत्कथं परीक्षितमसर्वबलेन श्रुतावुत्पत्तिलयौ। तस्मादनेकतत्त्वगणना न तत्त्वैकत्वप्रतिपत्तिं शास्त्रप्रापितां प्रतिबन्धुमीष्टे। एष वैज्ञानिकः प्रलय इत्युच्यते या हीवशब्दार्थताप्रतिपत्तिः प्रपञ्चस्य । यो हीवशब्दो मायाऽविद्यापरपर्यायं जगत्कारणं सदसदादिरूपैरनिरूपणीयं प्रदर्शयत्यपोहति च स कार्यम्। तावत्तस्य जगतो जीवनं सकारणस्य यावदिवकारेणास्पृष्टता। यदा हि प्रामाणिकेनेवशब्देन परामृष्टं तदा कार्यं कार्यमिव कारणं कारणमिव भिन्नं भिन्नमिवानेकमनेकमिवैकमेकमिव शून्यं शून्यमिव बन्धो बन्ध इव मोक्षो मोक्ष इवेति प्रतिपत्ता नित्यमुक्तः सिध्यति प्रमाणसाफल्यभूमिः शुद्धोऽधिकारी।

ननु सृष्टिवाक्यस्थेवशब्देन तन्मूलकनिषेधवाक्येन च प्रपञ्चबाधे परामृष्टेऽपि नात्मैकत्वविज्ञानास्था समास्थेया प्रमाणस्याबाधादिति चेद्बाध्यतावच्छेदकचिद्गोचरत्वस्य प्रमाणप्रमेयप्रमातृत्रिपुटीव्यापकस्य प्रमाणेऽपि सत्त्वात्स्वेन प्रमात्रा च सह प्रमेयं बाधते युगपत् प्रमाणम्। यथा प्रमेयं प्रमात्रा सहेवशब्दगोचरस्तथेवशब्दोऽपि। एवं नेह नानास्ति नेतिनेतिवाक्यस्थनञो विषयः प्रमाता प्रमेयं च तथा नशब्दोऽपि। अतएव वैयाकरणाः शब्दस्य शब्दोऽप्यर्थ इति वदन्ति । द्वैतमिव भवतीतिवाक्ये यथा द्वैतश-

न्दस्य त्रिपुटी तथाऽद्वैतशब्दोऽप्यर्थः । एवमिवशब्दनानाशब्दनशब्दाः स्वस्वगोचराः ।

ननु द्वैतनानाशब्दयोर्नार्थः कुत आत्मा तत्त्वे निषेधापत्तेरिति चेदत्रेहशब्दाभ्यां पृथक्करणादात्मनो यथा दर्पणस्य यत्र द्वैतमिव भवति नेह नानास्ति किंचनेति वाक्याभ्यां परामृष्टस्याधिकरणत्वेन न निषेधः, प्रतिषिध्यन्ते प्रतिबिम्बाः तथा द्वैतं ब्रह्मणि निषिध्यते न ब्रह्म तत आत्मैकतत्त्वसिद्धिः ।

ननु निषिद्धत्वे कथं गोचरता गोचरत्वे कथं निषेध इति चेदियमेवेवशब्दचातुरी यो गोचरस्य निषेधं वक्ति निषिद्धस्य गोचरत्वम् । इदमेव श्रुतेर्वाचि सत्यत्वम् यदेतादृशस्य निषेधः । यथा दर्पणस्थप्रतिबिम्बानामिवशब्दार्थत्वेन निषेधवचनं सत्यार्थं ततो न कश्चन विरोधगन्धोऽपीति निषेधवचनैस्तिमिरमुद्घाट्यते बलवत्तनैः शिक्षायत्तदृष्टीनाम् । अयमभिप्रायः प्रायः प्रदर्शितो वैदिकपद्धत्यां स्थले स्थले येन निर्दोषमात्मैकतत्त्वं विज्ञातं स्यादधिकारिभिः ।

ननु जीव एकोऽनेके वा । एकत्वे गुरुशिष्यासंभवोऽनेकत्वे सिद्धान्तहानिप्रसङ्ग इति चेत्संख्याया आविद्यकत्वेन नैको नानेके । नहि घटाकाश एकानेकमीमांसां सहते घटसामान्यस्याप्रसिद्धेः । आविचारं घटनिष्ठत्वेन प्रतीताऽपि संख्या विचारबाधिता घटेन घटाकाशेन च सहैव बाध्यते तदा कुतः संख्याविचारः । तथा जीवो नाम कश्चन सिद्धश्चेदुपपद्येतापि तन्निष्ठसंख्याविचारः । तस्मान्निरवकाशावेकजीवानेकजीववादौ । ततः सजातीयविजातीयस्वगतभेदशून्यमात्मतत्त्वमिति विदुषां सहजविश्रामः । एतेन 'नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभि'रिति श्लोको व्याख्यातः ॥ इति द्वितीयमाह्निकम् ॥

---

१ बिम्बनिषेधेऽपि न क्षतिः अधिकरणस्यैतदुभयधर्मरहितत्वात्.

नन्वविद्याया अनादित्वेन शिक्षायाः सादित्वे च कस्मात्कालाच्छिक्षारम्भः कस्मात्कालाज्ज्ञानप्रवृत्तिरिति चेदतिगम्भीरमिमं प्रश्नमुपाकर्ण्य चकिता भवेयुर्विद्वांसस्तथाप्यत्रोत्तरमिदमेवाविद्याया इव परामृष्टत्वे तद्गतगुणविलासस्यापि तत्परामृष्टत्वमिति प्रपञ्चो भात इव बाधित इवेति पूर्वोत्तरत्वप्रयोजककालस्याप्रसिद्धेः पूर्वपक्षानवकाश इति । शास्त्रव्यामोहयोरनादित्वेऽप्यानियतकालपरतन्त्रः सत्त्वसारप्रमाणपरामर्शः प्रमातुः, ततः शिक्षायाः सादित्वव्यवहारः । शिक्षणीयशास्त्रमनाद्येव तथा प्रमातृपरम्परा च यथा तमसि तेजोबीजम् । एतेन कथमविद्या कथं तन्नाश इति पूर्वपक्षः समाहितः । बाध्यस्याधिष्ठानापेक्षत्वेऽप्यधिकरणानपेक्षणान्न संसर्गोऽविद्यया ब्रह्मणो नापि कारणत्वं कार्यस्याप्रसिद्धेर्दर्पणप्रतिबिम्बन्यायान्नानीश्वरवादप्रसङ्ग आजगत्प्रतीतिसेश्वरवादचारितार्थ्यान्न नैरात्म्यप्रसङ्गो जगद्बाधाबाधान्यथानुपपत्तेः । 'या विश्वरूपा व्यवहाररूपा, कर्तृस्वरूपा च कृतिस्वरूपा । ज्ञानस्वरूपा करणस्वरूपा, विश्वेशमाया इवशब्दवाच्या ॥ १ ॥' मृदि घट इव, तन्तौ पट इव, रज्जावहिरिव सर्वं स्वस्वकारणे जातमिव भुज्यमानमिव भोक्त्रधीनमिव कर्तृपरतन्त्रमिव कर्माधीनमिव शोचतीव हसतीव च तृप्यतीव चैषा भगवन्माया । यावत्पराङ्मुखस्तावन्नृत्यति चक्षुष्मतः पुरस्तात् स चैनां मीमांसमानः कदाचिद्दैवयोगेन इवशब्दवाच्यामिमां सिद्धान्तयति, ततः सा स्वरूपं दर्शयितुं लज्जमाना कुत्रचिद्विलीयते तदा स धन्यंमन्यमानो नृत्यति हृष्यति तृप्यति धन्यं मनुते स्ववंशं स्वगुरुं स्वदेहं स्वायुष्यं स्वजन्म स्वोत्पत्तिघटिकां तादृक्फलदातारमीश्वरं चेत्यलमतिविस्तरेणेति शिवम् ॥ जयति जयति देवः सच्चिदानन्दरूपो, जयति जयति विद्या तत्स्वरूपैकरूपा । जयति जयति बोधो विश्वबाधाविहीनो, जयति जयति मोक्षो नित्यसिद्धोऽप्यगम्यः ॥१॥

नमस्तस्यै सरस्वत्यै मोक्षं व्यवहृतिं च या । निर्वाहयत्ययत्नेन देशिकेन्द्रस्वरूपिणी ॥ २ ॥ इवशब्देन संदग्धः प्रपञ्चो भस्मतां गतः । भूतिभूषितसर्वाङ्गं ब्रह्मैवैकं विराजते ॥ ३ ॥ शास्त्रं तु भाग्यलभ्यं, लभ्यं जन्माऽपि भाग्यतोऽधिकृतम् । उभयं वैदिकगेहे, भारतखण्डे च भाग्यकृते ॥ ४ ॥ इति तृतीयमाह्निकम् ॥

इति श्रीमद्वाराणसीविराजमानब्रह्मघट्टप्रतिष्ठापितश्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीविरचितः शास्त्राकूतप्रकाशः समाप्तः ॥

---

# तिमिरोद्घाटनम् ॥ ८ ॥

जय सच्चिदानन्द ।

ॐ प्रह्लादवरदं वन्दे वन्दारुजनवत्सलम् । मन्दारमिव सच्छायं मोहध्वान्तदिवाकरम् ॥ १ ॥ अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ २ ॥ काशीं वेत्ति शिवं साक्षात्काशिका वेत्ति तं शिवम् । इत्थमन्योन्यसंसर्गादविमुक्तमिति स्मृतम् ॥ ३ ॥

तमोनामेन्द्रियधर्मः । यतस्तानि तानि तत्तद्विषये प्रवृत्तानि सन्ति सति तमसि निरुध्यन्ते तदपसार्यन्ते ज्योतिषेति सकलसंमतम्, परंतु व्यभिचरितं दिवान्धेषु सत्येव तमसि पश्यन्ति बहवः । सत्येव सवितरि पश्यन्ति बहवः । किमत्र तमः । किमत्र ज्योतिः । ज्योतिर्निरोधात्मा छायानाम तम इति यदि तदोलूकास्तव प्रतिपक्षतां भजेरन् । यदि सवितैव तमस्तदा मनुष्या नाम प्रतिपक्षाः । तदुभयसमाधाने चिन्तनीये स्वीकर्तव्यं भवति भवतायुष्मता । तमो नामेन्द्रियधर्मः सविता नामेन्द्रियदेवतेन्द्रियमनुगृह्णाति तदा पश्यन्ति सर्वे जीवा इति सकलमनीषिमतम् । यदाऽस्तमेति मानुषाणां तदोदेत्युलूकानामिति प्राप्तम् । यदाऽस्त-

मेत्युलूकानां तदा मानुषाणामुदेतीति च । रूपदर्शनस्य तेजोधीनत्वात् । तेज आवृणोति तमस्तम आवृणोति तेज इत्यन्योन्यमावृण्वतोस्तयोः समत्वं सचिवत्वं भजते रूपदर्शनाय चक्षुषोः । तेजस आधिक्येऽस्तं यान्ति तमसस्तस्मिन् निरुध्यन्ते चक्षूंषि । अतएव दर्शनभेद उपपद्यते प्रतिजीवं तेजस्तमस्तारतम्यात् । अतएव सुमेधसोक्तम्—'दिवान्धाः प्राणिनः केचिद्रात्रावन्धास्तथाऽपरे । केचिद्दिवा तथा रात्रौ प्राणिनस्तुल्यदृष्टय' इति । यथा देवतानुग्रहस्तथा तमस्तिरोधानं तथा दर्शनमिति श्लोकार्थः पर्यवस्यति । यं कालं दिवेति केचित्तमेव नक्तमिति केचित् । केचिद्दिवेत्येव पश्यन्त्येव । केचिद्रात्रिरित्येव न पश्यन्त्येव । तथापि सर्वे प्राणिनस्तुल्यदृष्टयः । न चित्रमेतत् । यथा मैत्रेयींप्रति याज्ञवल्क्य आह—'नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽयमात्मानुच्छित्तिधर्मेति । दिवापि पश्यन्तु रात्रावपि पश्यन्तु, दिवा रात्रावपि पश्यन्तु, मा वा पश्यन्तु, दृष्टिस्तुल्यैवानुच्छिन्ना प्रपञ्चदर्शनादर्शनयोर्देवतानुग्रहाधीनत्वात् । अतएव सुप्तौ न केऽपि पश्यन्ति देवतानां विलयात् । यथोक्तम्—'सूर्यो मे चक्षुषि श्रितः । चक्षुर्हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि' । यदा सूर्यश्चक्षुषि तदा जागृतिं यदा चक्षुर्हृदये तदा स्वप्नं यदा हृदयं मनो मयि प्राणोपाधौ तदा सुषुप्तिं पश्यामि तदाहमर्थो जीवः सुखरूपेऽवस्थित इति सकलजीवसाधारणोऽनुभवः । एषैवाज्ञातब्रह्मसंपत्तिः । अमृतं ब्रह्मणीति तु ज्ञातब्रह्मसंपत्तिः । समाधिर्गुरूपदेशगम्यः । तदाऽमृतं ब्रह्मणीति गम्यते । एषा मुक्तिः । अमृतत्वान्न म्रियते तत एव न जनिष्यति । यावत् प्राणबुद्धीन्द्रियावच्छिन्नोऽभिमानेन तावज्जन्ममृत्यू । तदन्तं शास्त्रं प्रवर्तते पाशच्छेदाय स च संस्कारैः । अतएवोपनीते वटौ द्विज इति व्यवहरन्ति । पूर्ववासनातिरोधानमभिमानान्तरोत्पादनं संस्कारस्तदेव जन्म । अतएव दीक्षादिनानि जन्मदिनानीति व्यव-

हरन्ति वृद्धाः । पुनः पूर्वस्थितेरनुपादानात् । एतत्तिमिरोद्घाटनम् । लौकिकाभिमानस्तिमिरम् । शास्त्रीयाभिमानोत्पादनमुद्घाटनम् । इत्थमुद्घाट्य देवशास्त्रं कैवल्यान्तं प्रापयति यत्र नाभिमानसंभवः स मोक्षः स निर्बीजः समाधिः । 'न स पुनरावर्तते न स पुनरावर्तत' इति श्रुतिरत्रोपतिष्ठते । आवृत्तिबीजस्याहमोऽनुपलम्भात् ।

नन्विदं विरुद्धं मुक्तानामपि शिवविष्ण्वादीनां जन्मदर्शनात्, तस्मान्न स पुनरावर्तत इति श्रुतिर्विषयविहीनेति चेदपर आहाऽस्मिन्कल्पे नावर्तत इति विज्ञेयम् । 'इमं मानवं नावर्तन्त' इतीदंशब्दसहकारादिति । आह पूर्वपक्षी । एकस्मिन्नेव कल्पे बहवोऽवताराः श्रूयन्ते मुक्तानां ते विरुध्येरन्, अभ्यासवैयर्थ्यदोषस्तु सम उभयोरितिचेदत्र पृच्छामः । किं नामावताराः, किं नाम जन्मानीति । पर्यायावेताविति चेत्तव जन्मन्यवतारशब्दः प्रवर्तेत तच्च न दृश्यते । त्वं मर्त्य इति गीयसे ते देवा इति । किमत्र बीजं स्यादिति । अत्रैतदेव वक्तव्यं मुक्तानामप्यधिकारिणां प्रसङ्गे स्वातन्त्र्यप्रदर्शनं यन्मर्त्यत्वानुकरणम् । अतएव नृसिंहः स्तम्भात्, देवकीनन्दनः पीताम्बरादिभूषित आविर्बभूव । एतच्च स्वातन्त्र्यं देवत्वं च । अतएव भगवानाह—'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह'मिति स्वातन्त्र्यं सृजामीति व्याचष्टे । तस्मात्तानि जन्मानीत्युच्यन्ते यानि कर्मपरवशानि । कर्मफलानि यच्छन्त्यवताराः, मर्त्या भुञ्जत इति विभागः । विदेहकैवल्यान्तमेतत् । विष्ण्वादीनामधिकारिणां विदेहकैवल्ये पुनः कल्पादावन्ये जीवा उपासितेशाः पदमारोहन्त्यधिकारिणां ते प्रसङ्गादवतरन्ति । ईशोपासनया मर्त्यत्वमपगच्छति देवत्वमुपयाति देवलोकञ्च । कर्मणाप्युभयमेति मर्त्यत्वं नापगच्छति । अतएव—'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन । मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' इति । मामुः

पेत्य मामभिमुखीभूय यथाशास्त्रमाश्रित्य । यद्यपि ब्रह्मादिलोकाः कर्मिभिरुपासकैर्वा लभ्यन्ते पुण्यातिशयात्तथापि कर्मजं पुण्यं क्षीयते नोपासनोत्थं । तत्राप्युपासनासंभवात् । तस्मात्तल्लोकाभिमानिना सह मुच्यन्ते संप्राप्ते प्रतिसंचरे। कर्मिणस्तु क्षीणे पुण्ये मर्त्यलोकं विशन्तीत्यर्थः । ते चोपासकफलदर्शनवासनयोपासका भवन्ति ते च क्रमेण मुच्यन्ते। यदा कर्म पक्कं भवति तदोपासनाफलदातुरुत्थास्यति, यदोपासना पक्का तदा जिज्ञासोत्थास्यति, तस्यां पक्वायां श्रीगुरुरुपतिष्ठते, स चापसारयति सर्वं तमस्तदा तमसः परस्तात्पुरुषः श्रीकैवल्यनाथः परिदृश्यते कैवल्यमेव शिष्यते सविषयो न स पुनरावर्तत इति श्रुतेः। तदेव भगवद्वाक्यम्—'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्। असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृचे'ति विज्ञायते । तस्मात्सर्वोऽयं संसारस्तमस्येव। अतएव तम आसीत्तमसा गूढमग्र इत्याह। किंचात्मानमुपक्रम्याह 'आदित्यवर्णं तमसः परस्तादिति, आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यप्याह। तस्मादस्ति तमःशब्दस्यापसरणीयं भानोरिव । यदपसारयन्ति सूर्याचन्द्रमसाग्नयो वा शब्दो वा तत्तमसः परस्तात्पुरुषबलेन। अतएवोक्तं—'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक'मिति । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'ेति च।

अथ यदि न निवर्तते तर्हि त्वं कथमत्र परिदृश्यसे। दत्तमुत्तरं सृजामीति स्वातन्त्र्यम्। किं बहुना। 'सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाह'मिति सदाभातोऽहम् । तर्हि न विज्ञायसे कस्मात्। तमोबलात्। किं तत्तमः। मोह इति। यत्र न दृश्यतेऽन्यथा च दृश्यते तत्तमः संमतं स एव मोहः । तं नाशयन्ति

सूर्यचन्द्राग्निगुरवो यथाबलं यथाप्रसङ्गम् । तत्र सूर्यचन्द्राग्नयो नाशयन्ति तम इति यत्तिरोदधाति तमः । पुनरुज्जीवनदर्शनात् । नित्यमुक्तत्वानुभवप्रतिष्ठानात् । गुरुरुन्मूलयति पुनस्तददर्शनात् । नन्वस्ति पुनर्दर्शनम् ।—'एतस्मादात्मन आकाशः संभूत' इत्यात्ममूलत्वात्संसारस्य सत्यात्मनि पुनरुदयप्रसङ्गात् । सत्यं पुनरुदयप्रसङ्गो यदि सामग्री । संसारोदयसामग्री तु मोहः स्वप्न इव । यथा स्वप्नः सत्यप्यात्मनि प्रबुद्धसंस्कारे मोहे सत्येवोदेति न सुषुप्तौ सत्यपि मोहे संस्कारप्रबोधाभावात् । किमु वक्तव्यं मोहाभावे तदनुदय इति । तस्मादेतस्मादात्मन आकाशः संभूत इत्यत्र मुग्धादिति विज्ञेयम् । ननु यदि मुग्धात्संसारोदयस्तदा धाता यथापूर्वमकल्पयदिति सर्वज्ञत्वं निर्दिशति, सोऽकामयतेति श्रुत्यन्तरानुसरणात्, तस्मात्सर्वज्ञादिति विशेषणं संगच्छते न मुग्धादिति । युक्तं सुबहुपृष्टम् । यो हि मुग्धस्य मोहः सैव सर्वज्ञता स्रष्टुः । यथा मुग्धस्य मोहे एव रजतसर्जनशक्तिः शुक्तौ । यथावा मोहे एव स्वप्नदर्शनशक्तिः सर्जनशक्तिश्च मुग्ध एव । यथावा नटो मोहयित्वाभीष्टं सृजति नाऽमुग्धेषु तस्य चातुरी । तस्मान्मोहान्नातिरिच्यते सर्वज्ञताल्पज्ञता वा । तस्मात्सर्वज्ञान्मुग्धादात्मन आकाशादिः पर्यवस्यति । चित्रमेतत् सर्वज्ञो मुग्धश्चैक इति । न चित्रं मोहे । तस्मिन् गते न सर्वज्ञो नाल्पज्ञः श्रीसच्चिदानन्दः पर्यवस्यति श्रीकैवल्यनाथः । अतएव श्रुतिराह—'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल' इति—'निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परꣳसेतुं दग्धेन्धनमिवानलमिति च ।—यो वै भूमा तत्सुखं, यो वै भूमा तदमृतमिति निरूप्य स्वरूपमाह—यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति । तत्रोपपत्तिमाह—यत्र द्वैतमिव भवति तदितर इतरं पश्यती'त्यादि । इवशब्देन मोहो निरूपितः । अतएव

गौडपादानामनुभवः—न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः। न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति। न यत्र मोहलेशः। अतएव भगवानाह—'या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेरि'ति। मुग्धानां सर्वभूतानां सकलविधदृष्टिमतां या निशा तमसः परस्तात्पुरुषे मोहनिशा तस्यां वर्तमानायामपि संयमी गुरुमुखागमलब्धबोध-तिरस्कृतमोहो जागर्ति न पुनर्मोहं याति तस्माद्यस्यां संसारदृष्टौ जाग्रति भूतानि मोहरात्रिंचराणि गुरुपादाश्रयरहितानि सा निशा पुनर्दर्शनसाधनरहिता पश्यतोऽपाकृतमोहस्य मुनेरित्यर्थः। पुनर्मोहानुदयात् सति तमसि संसारं पश्यति तदपगमे कैवल्यम्। अतएव 'काकोलूकनिशेवायं संसारोऽज्ञात्मवेदिनो'रिति वसिष्ठः। अन्योन्यमप्रसिद्धत्वात्। मुक्तस्य मुक्तिमविद्वान्न विजानाति बद्धस्य बन्धं न मुक्तो विजानातीत्यर्थः। तर्हि बन्धमोचनानुपपत्तिः। नानुपपत्तिः। बद्धो बन्धं वदति मुक्तो मुक्तिम्। शृण्वन्नेव मुक्तवार्तां मुक्तो भवति यथा बद्धवार्तां शृण्वन्नेव बद्धः। अतएवानया वाचातन्त्या दामभिर्नोमभिः सित इति श्रुतिः विमुक्तश्च विमुच्यत इति च। यथा स्वप्ने बन्धं मन्वानो विमुक्त एव विमुच्यते स्वप्नमपश्यता जागृतिं नीयते यथा रजतमपश्यता शुक्त्यन्धो जागृतिं नीयते नेदं रजतमिति। संसारमपश्यन्त्यैव श्रुत्योक्तम् नेह नानास्ति किंचनेति। तर्हि कर्मकाण्डासंगतिः। नासंगतिः। मुग्धो हि तस्याधिकारी तं प्रति यजेत्युपदिशति यागेन स्वर्गं भावयेति। लिङर्थो भावना। भावितं वस्तु नास्तीति वक्तुं शक्यते। तस्मान्नेह नानास्तीति सफला यजेति च। न भिन्नवाक्यत्वं शास्त्रे पश्यामः। यद्धि भिन्नवाक्यत्वं भजते स प्रक्षेपः। शासनाभावप्रसङ्गात्। विकल्पशास्त्राणां न भिन्नवाक्यत्वमनुज्ञापर्यवसानात्। मुग्धानां भावनैव संसार इति पूर्वका-

ण्डार्थः । भावितस्य सत्ता नास्तीत्युत्तरकाण्डार्थः । अतएव— 'ध्यायतीव लेलायतीवे'ति श्रुतिः । इवशब्दार्थस्तु निरूपितो मोह इति । तस्मिन्मोहे एव सर्वा नियतिरनेन कर्मणेदं भवितव्यमित्यादिः । तस्मिन्मोहे मोह इति विज्ञाते मोह एवापगच्छति । तदा श्रुतिः श्रावयति सिद्धान्तं 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवल' इति तत्कैवल्यम् ।

ननु 'सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्वप्रकृतिर्गुण' इति गुणलक्षणसंक्रान्तिश्चेदस्तु धर्मत्वं न विरुध्यते तमसः । कथमिन्द्रियधर्मत्वं प्रागेव स्वतःसिद्धस्य तमस इति चेत् । प्राक्सिद्धत्वं न धर्मत्वप्रतिबन्धकं प्राक्सिद्धस्यापि शब्दादेर्वाग्वादिधर्मत्वदर्शनात् । किंचेन्द्रियाण्यासन्नेव तमो जठरे तमोऽप्यासीदिन्द्रियजठरेऽतएव उत्तम उच्यते सुषुप्तिवत् । सति पुनर्गुणक्षोभे भवति रूपादिदर्शनम् । सत्वाद्रूपादिदर्शनं रजसो जिघृक्षा तित्यक्षा च तमसो लयः । एता एवावस्था उच्यन्ते सृष्ट्यादयश्च । कथमेतत् । इत्थमेतत् । या हि जागृतिः सत्वोदयः सः । यश्च स्वप्नो नाम स रजस उदयः । या च सुषुप्तिर्नाम स तमसः । या च जागृतिः सा सृष्टिः स्रष्टुः । यश्च स्वप्नः सा स्थितिः पालनं स्रष्टुः । या च सुषुप्तिः स प्रलयः स्रष्टुः । इति त्रयो भोगास्त्रीणि कर्माणि । यदाऽसौ मुग्धः स्थूलमात्मानं मनुते तदा फलं दित्सन् स्थूलो भूत्वोपतिष्ठते । यदा सूक्ष्ममुपादत्ते तदा सूक्ष्मप्रपञ्चात्मनावतिष्ठते । यदि सुप्तस्तदोपसंहृत्य रूपाणि दर्शनीयानि तमसि तेन सहैकीभवति सर्वथा न विसृजति परमात्मा जीवम् । यदा भोक्ता विश्वस्तदा विराडीशो, यदा भोक्ता तैजसस्तदा स हिरण्यगर्भो, यदासौ प्राज्ञो भवति तदा स ईशतामेति । एतेन द्वासुपर्णेति श्रुतिर्व्याख्याता । मोहाद्द्वौ तस्मिन्नपगते चैकस्तुरीयः । घनमोहे प्रज्ञानघने चैकः । मोहाश्रयत्वेऽपि मोहविषयत्वा-

भावात्। यदा क्षुभ्यति मोहस्तदा विषयतामादधाति तदावस्थाद्वयं जाग्रत् स्वप्न इति। आश्रयत्वं विषयत्वं चैकस्यैव। अतएव नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञातेत्यादि संगच्छते। तत्त्वमसीति च। अथ केचिदाचार्या आहुः—महावाक्यैर्वृत्तिव्याप्तिरूपे ज्ञाते समुदितेऽपि मूलाविद्यामात्रनाशस्तूलाविद्यानुवर्तत एव तत एव जीवन्मुक्तिः। तत एव—'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इति श्रुतिचारितार्थ्यम्। तत एवाद्यापि ब्रह्मविद्योपदेशक्रमोऽनुवृत्तः परिदृश्यत इति। अत्रेदं बीजम्—मूलाविद्यानामवभासनशीले वस्तुनि अनवभासतापादकं तमः। तच्च जीवमात्रसाधारणमत एवान्विष्यन्तीतस्ततो यच्च किंचित्। तूलाविद्यानामान्वेषणसामग्री स्थूलसूक्ष्मरूपा तयान्विष्टे वस्तुनि व्युत्पत्तिमासादितः क्रमेण स्थूलां सूक्ष्मां च त्यजति विस्मरति च। एष विदेहमोक्षः। अतएव 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येती'ति श्रुतिसमन्वयः। परोक्षत्वापरोक्षत्वयोर्मोहमूलत्वाद्वास्तवभेदस्यासंभवाद् ब्रह्मैव सन् अहं ब्रह्मेत्यप्येति प्रबोधमापद्यते। यदहमिति प्राक् प्रतीतं तदिदानीं ब्रह्म परोक्षत्वापरोक्षत्वरहितं निर्मोहमभूदिति। अत्र बहु वक्तव्यं तन्मोहेनाद्वैतबोधेन च निर्वाह्यत इति विश्रामः॥

इति श्रीतिमिरोद्घाटनमनुत्तराम्नायः श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीसमधिगतः॥

---

# अनुत्तरसिद्धान्तपरामर्शः॥ ९॥

जय सच्चिदानन्द।

ॐ यस्य वेदमयी वाणी यस्य देवमयी तनुः। यस्य ब्रह्ममयी दृष्टिः स गुरुः पातु मां सदा॥ १॥ नमः श्रीशङ्कराचार्यपारंपर्य-

क्रमाय ते । अद्ययावच्छास्त्रमार्गः पालितो येन भूतले ॥ २ ॥ पुरुषैः पालितो वंशः स्त्रीभिः संपालितं कुलम् । गुरुभिः पालितं शास्त्रं शिष्यैः संपालिता मतिः ॥ ३ ॥ सर्वविद्यामयं तन्त्रं सर्वविद्यामयी श्रुतिः । अन्योन्यहृदये मन्ये यथा हरिहरौ तथा ॥ ४ ॥ परामृशामः सिद्धान्तं शुद्धान्तं वेदतन्त्रयोः । यस्मिन् श्रुते संशयानां गणः क्वापि पलायते ॥ ५ ॥

अथ ज्ञात्वा यागो न बन्धहेतुरिति तन्त्रसिद्धान्तः । यस्मात्कुलार्णवे—यावदासवगन्धः स्यात्पशुः पशुपतिः स्वयम् । आसवेन विहीनस्तु पशुः पशुपतिः स्वयम् । मृत्युर्वैद्यायते देवि स्वर्गः साक्षाद्गृहायते । पुण्यायतेऽङ्गनासङ्गः कौलिकानां कुलेश्वरि । पिबन्मद्यं फलं खादन्स्वेच्छाचारपरायणः । अहन्तेदन्तयोरैक्यं भावयन्निवसेत्सुखम् । इत्याह । कौलिका दीक्षिताः । अतएव तत्तत्कल्पे पञ्चविषयाः प्रदर्शिताश्चरितार्थाः । अथ ज्ञात्वापि भोगो बन्धहेतुरिति श्रुतिसिद्धान्तः । अतएव न सुरां पिबेन्न मांसमश्नीयान्न परां स्त्रियमुपेयादित्यादि । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्याह । ज्ञानमत्र शास्त्रीयम् । कथं भुञ्जीत कथं कुर्वीतेत्यादि । किमत्र न्याय्यम् । द्विविधोदाहरणदर्शनात् शिवादयस्तान्त्रिकाः नारायणादयो वैदिकाः । तर्हि द्विविधं न्याय्यम् । सर्वज्ञोदाहरणात् । न न्याय्यम् । सर्वज्ञोदाहरणात् । भिन्नवाक्यत्वं सर्वज्ञानां विरुद्धं सर्वज्ञत्वव्याघातात् । तर्हि कथमेकवाक्यत्वम् । चेद्भगवानाह सर्वज्ञः—यज्ञशिष्टाशिनः सन्तो मुच्यन्ते तेऽपि कर्मभिरिति । सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते इति च । अखिलं साङ्गमित्यर्थः । ज्ञाने शास्त्रीये परिसमाप्यते तस्मिन्सर्वेषां कर्मणां मदर्पणपर्यवसानात्कर्तुरभोक्तृत्वपर्यवसानादित्यर्थः । अतएव—यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेत्युपपन्नम् । यथा वेदे तथा तन्त्रे यज्ञा विहिताः ।

यथा तन्त्रे तथा विषया वेदेऽपि विहिताः सत्रादौ यज्ञपङ्क्तौ। यज्ञो हि परमेश्वरार्पणरूपक्रिया। तच्छिष्टं तदङ्गं वा द्रव्यं प्रतिपत्तव्यं विधिपरतन्त्रैः। सा च प्रतिपत्तिर्भोगरूपापि न भोगरूपाऽतः कर्मभ्यो मुच्यन्ते। नहि राजाज्ञया किंचित्कुर्वाणाः पापं पुण्यं वाश्नुवते। अतएवाह शिवः—यत्रास्ति भोगो नहि तत्र मोक्षो यत्रास्ति मोक्षो नहि तत्र भोगः। सत्यं परन्तु—श्रीसुन्दरीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एवेति। श्रीः सर्वत्र परिदृश्यमान आनन्दः सुन्दरी त्रिकालमबाध्या। सच्चिद्रूपः शिवः साक्षात्तस्यानन्दमयी शिवेति। तत्तर्पणपराणां यज्ञशिष्टाशनं भोगोऽपि मोक्ष एवेति तात्पर्यम्।

यस्माद्भोगो हि सुखावसानः सुखं तु ब्रह्म स मोक्षः। अथ सत्यं सुखं ब्रह्म स मोक्ष इति च परन्तु परमो विरोधः। भोगस्याज्ञानपर्यवसानात्—न तत्सुखं ब्रह्म न वा स मोक्षः पशुसाधारण्यात्। इति चेत्सत्यम्। त्वमधीतशास्त्रः परमनधिगतविद्यः। विद्या हि सुखमेव ब्रह्मेति बोधयति तं च मोक्षं स्वीकारयति। मोक्षो नामात्मसाक्षात्कारः। आत्मा हि सुखं प्रियतमत्वात्। तदवसानो भोगो मोक्षान्नातिरिच्यते। ननु पशुसाधारणमेतत्। सत्यम् पशुसाधारणं परंतु विद्धकर्णत्वाविद्धकर्णत्वे अतिरिच्यते। शास्त्रं हि विद्धकर्णमेव बोधयति मानुषं नाविद्धकर्णं पशुम्। यथा आनन्दो ब्रह्मेति व्यजानात् इति श्रुतिः। श्रुत्यन्तरं च को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यादिति। तन्त्रं च—आनन्दो ब्रह्मणो रूपं तच्च देहे व्यवस्थितम्। तस्याभिव्यञ्जकं द्रव्यं योगिभिस्तेन पीयत इति विधौ लेट्। अतएवात्मन आगोपालं प्रसिद्धत्वेऽपि शास्त्रसंस्कृत एव सफलः। यो हि गुरुशिष्यसंवादेन विमुच्यतेऽतएव कर्णवेधो दृश्यते मानुषेषु। अतएव मातृमान्पितृमानाचार्यवान्पुरुषो वेदेति श्रुतिः सफला। पूर्वं मात्रा

ततः पित्रा ततो गुरुणा विद्वत्स्वेव दृश्यते ब्रह्मविद्याया कर्णएव शिक्ष्यते प्रणवान्ता महावाक्यान्ता वेदे, चरणान्ता वासनान्ता च तन्त्रे । एतासां विद्यानामेक एवार्थो जीवत्वमीशत्वं चासमानाधिकरणमपि समानाधिकरणं मिथ्येति च । तत्त्वमसीति श्रुतिः । —जीवः शिवः शिवो जीवः स जीवः केवलः शिवः । तुषेण बद्धो व्रीहिः स्यात्तुषाभावे तु तण्डुलः । यथा हि सूत्रा ग्रथिता जालमूलस्य गोलके । एवं कुलार्णवज्ञानं पादुकायां प्रतिष्ठितम् । इति तन्त्रम् । उभयोः स्वतःप्रामाण्यमकृतकत्वात् । कौतुके प्रामाण्यमसंमतम् । अकृतकमकौतुकम् । याश्च तन्त्रेषु महाविद्याः प्रसिद्धास्तासामपि जीवब्रह्मैक्यमेवार्थो गूढतरो गायत्र्या इव चतुर्दशसूत्र्या इव च । अतएव गायत्र्यपि महाविद्या वेदे सा यथा दीक्ष्यते ऋणधनादिशोध(न)मपहायाधिकारमात्रमपेक्ष्य तथा ता अपि । अधिकारमासादितो गुरुणा प्रणवमहावाक्याभ्यां दीक्ष्यते तथा चरणादिविद्ययेति । एताः सिद्धविद्या उच्यन्ते । तथा गायत्र्यपि । सिद्ध आत्मा तस्य वेदनं विद्या । अतएवानुत्तरविद्यायामेकवाक्यत्वं वेदतन्त्रयोः । यत्र गायत्र्या सह श्रीविद्यामेकीकृत्य तुरीयपादे प्रदर्शित उपसंहारः । हुंफडादीनामनर्थकत्वकथनमगुरुकथा, तथा गायत्र्यादौ मुद्राणामप्रदर्शनकथा च । —एता मुद्रा न जानाति गायत्री निष्फला भवेदिति प्रत्यवायश्रवणात् । अन्यथा गायत्रीकल्पस्य वैयर्थ्यापत्तिः । गुणोपसंहारन्याये जागरूके शाखान्तरवत् स्मृतिवदेकवाक्यत्वपाशः कस्माच्छिद्येत । अतएव पुराणैः सहाप्येकवाक्यत्वम् । विद्यामयं विद्यामयेनैकवाक्यतामापद्यते । एतदेवाभिप्रेत्य भगवानुद्धवं प्रति—वैदिकस्तान्त्रिको मिश्र इति मे त्रिविधो मखः । त्रयाणामीप्सितेनैव विधिना मां समर्चयेदित्युपन्यस्योपसंहृतम्—उभाभ्यां वेदतन्त्राभ्यां मह्यं तूभयसिद्धय इति । रोचत इति शेषः । त्रैविध्यमधिकारिभेदादीप्सितत्वं कालभेदात् ।

उभयसिद्धिर्मुख्याधिकारिणि। सर्वविद्यामयो वेदस्तथा तन्त्रं च। यथावाङ्गानि। त्याग उभयत्र समानः प्राप्तभोगोऽपि तथा। त्यागस्वरूपमाह—मा गृधः कस्यस्विद्धनमिति श्रुतिर्गर्धानिषेधम्। प्राप्तकारित्वं तु समानमपरिहार्यम्। संन्यासमुपदिश्य युद्धे योजयामास पार्थसारथिर्भगवान् शिष्यम्। तथैव शास्त्रतात्पर्यात्। निर्ममत्वं प्राप्तकारित्वं च मुख्यं विधेयं शास्त्रस्य। येन ज्ञानं पाल्यते लभ्यते च। अतएव संन्यासिभिरपि श्रीशङ्कराचार्यैर्दिग्विजयः कृतः श्रीविद्यारण्यस्वामिभिश्च। पतञ्जलिरपि सूत्रयामास—कर्माशुक्लकृष्णं योगिनस्त्रिविधमितरेषामिति। निर्ममत्वमसङ्गत्वात्। प्राप्तकारित्वं देहाभिमानात्। ज्ञानं महावाक्यार्थः। एष परमो योगः। सन्तु वैदिकास्तान्त्रिका वा छिन्नपाशा एव चेद्दीक्षिताः। पाशच्छेदो दीक्षा। संस्काराभावः पाशः। यथा सङ्गः सन्नेव हन्यते व्रीहौ तण्डुलः स तस्य पाशच्छेदः प्राक् ततोऽङ्कुरायोर्ध्वं तु तृप्तिमात्राय तुपहस्तेन किंचिद्य(द)धिकारिणः पशवः स पाश उच्यते। दीयते सशास्त्रदशा, क्षीयते पाशवी दशा यस्यां क्रियायां सा दीक्षा। अथ ज्ञात्वा भोगो न बन्धहेतुरिति तन्त्रसिद्धान्तो जयति स शास्त्रभागेऽस्यापरिहारात्। यथेष्टाचारानुमतेश्च इति चेत्सत्यम्। यदि ज्ञानोत्तरं रागासंभवः यथा तन्त्राचार्यः—जिह्वा दग्धा परान्नेन हस्तौ दग्धौ प्रतिग्रहात्। मनो दग्धं परस्त्रीभिः कथं सिद्धिर्वरानने इति। तर्हि तन्त्रसिद्धान्तव्याकोपो दूतीयागादीनामचारितार्थ्यात्। न व्याकोपः। वामदेवीयवत्। यस्मात्—आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यत इति व्यवस्था गीतायाम्। अतएव वामदेव्यसामोपासकेन कां च न परिहरेदिति श्रुतिः। कर्मकालो भोगकालः। तस्मात्तत्त्वानुसंधातैव हि वैदिकस्तान्त्रिको वा कर्मठः। तन्निष्ठौ तावुभावप्यमृतभाजौ। एतेन पूर्वोत्तरकाण्डौ

व्याख्यातौ सर्वापेक्षाधिकरणन्यायेनैकवाक्यतया सफलौ । अतएव—यजमानोऽष्टमी मूर्तिः शिवस्येति वैदिकाः । शिवो भूत्वा शिवं यजेदिति तान्त्रिकाः । यो यच्छ्रद्धः स एव स इति गीता । अतएव नमस्क्रियन्ते यजमाना यतयो वा यथाधिकारम् । यस्माद्यजमानोऽष्टमी मूर्तिः शिवस्य । यतिर्नारायणस्य शमारूढः । नमस्कारबीजं दीक्षा । सा च शिवत्वाय । अनुसंधानकालो हि यज्ञियः कालस्तत्समाप्तिकालः समाधिकालः । अनुसंधानं कर्म । तत्समाप्तिः समाधिः । अतएव—यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतमित्याहुर्वृद्धाः । स्मृतिः प्रत्यभिज्ञा । नाम शब्दः । उक्तिर्गुरोः । अच्युतः स्वयं पूर्णस्वभावत्वात्समाधिर्नित्यलब्धः तस्य स्मृत्या न्यूनं परिच्छिन्नं विकलं वा संपूर्णतां परिच्छेदत्यागं सद्यो याति यथा समुद्रमाविश्य नद्यः । बुद्धेरेष स्वभावो यत्स्मृतिः तदाकारत्वं स्मृतिश्च नामोक्त्या तदा बुद्धिस्थानां कर्मणां तदाकारत्वमार्थिकमित्यर्थः । —शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति वचनान्तरात् । समाधिरच्युतपूर्णस्वभावो व्युत्थानं च्युतिशीलमिति तात्पर्यम् ।

अथ कथं समाधिरच्युतः पूर्णो वा ब्रह्मनिष्ठमुपक्रम्य श्रुतिर्जक्षन् क्रीडन् रममाण इत्यादिः । तत्र च कौलिकमुपक्रम्य—क्वचिच्छिष्टाः क्वचिद्भ्रष्टाः क्वचिद्भूतपिशाचवत् । नानारूपधराः कौला विचरन्ति महीतल इत्यादि । इति चेत् सिद्धान्तारोहरूपः समाधिरव्युत्थानो—यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यत इति वचनान्तरात् । किमधिकं वदामस्तस्यैवैतत्सर्वं भोग्यं तस्यैवैषा सर्वा क्रिया सर्वात्मनः ।—तनुं त्यजतु वा काश्यां श्वपचस्य गृहेऽथवा । ज्ञानसंप्राप्तिसमये मुक्तोऽसौ विगताशय इति ज्ञानमाहात्म्यं वचनान्तरे । तस्माद्गीतायां शमशब्दार्थः सिद्धान्तारोहो निःशङ्कं न ततो व्युत्थानशङ्का । यथा काश्मीराचार्या ईश्वरप्रत्य-

भिज्ञायामाहुः-एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः। ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना। करणेन नास्ति कृत्यं क्वापि भावनयापि वा। सकृज्ज्ञाते सुवर्णे किं भावनाकरणादिना। सर्वथा पितृमात्रादितुल्यदार्ढ्येन सत्यतेति। यथा-त्यागेनैके अमृतत्वमानशुरिति श्रुतिस्तथा तन्त्रं च।-यस्य वा पश्चिमं जन्म यदि वा शङ्करः स्वयम्। तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरीति पुराणे स्तुतां वेदे च कामो योनिरित्यादिनोद्धृतां श्रीविद्यां प्रवर्तयामास साटोपम्। त्यागस्य चरमजन्मलभ्यत्वे तदविरुद्धां श्रीविद्यां ब्रह्मविद्यां विदुः। अर्वाचीनांश्चतुर आम्नायान्कर्मविद्यां विदुः। अनुत्तरं षष्ठम्। एतेन यतिरेवाधिकारी श्रीविद्यायामिति गम्यते।

अथ कथं यतेः श्रीविद्याधिकारः। अयज्ञो वा एषः योऽपत्नीक इति श्रुतेरिति चेत्सत्यम्। यदि श्रद्धापत्नी न स्यात्। अतएव तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नीत्याद्योऽनुवाकः सार्थः संपन्नः। यथा त्यागेन जन्मनश्चरमत्वमनुमीयते तथा श्रीविद्ययेति केचित्। इत्थमेकवाक्यत्वं सिद्धान्तयोः। अतः सिद्धान्तत्वमाचार्याणां सर्वज्ञत्वं चाविरुद्धम्। अनुसंधाननिष्ठयोर्मिथो बलत्वमतएवाह भगवान्-कर्मणैव हि संसिद्धिमास्थिता जनकादय इति। अनुसंधानरूपेणैव कर्मणा सिद्धान्तपदारोहं प्राप्ता इत्यर्थः। तस्मिन्नेव जन्मनि जन्मान्तरे वा।-तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतेः। अथ-न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतिरचरितार्था। नाऽचरितार्था। कर्मप्रजाधनमात्रेणामृतत्वस्याशा नास्ति किंतु कर्मणामीशतुष्टौ प्रजायाः शास्त्रे धनस्याश्रमधर्मपालने विनियोगात्मकेन त्यागेनामृतत्वमिति गोत्रप्रवृत्तिबीजं विजानता भगवतोक्तं-न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। न च संन्यसनादेव सिद्धिं समधिगच्छतीति। अतएवोपनीतस्याधीतविद्यस्यैव संन्यासो विवाहो वा सति रागे।

नन्वस्त्वेकवाक्यत्वं कोऽत्राधिकारीति चेदेकवाक्यतां शृणोष्यधिकारिणं च पृच्छसि । चित्रमेतत् । एकविधे सिद्धान्त एकविध एवाधिकारी न नानाविधो भवितुमर्हति । यदि वैदिकसिद्धान्ते वैदिकोऽधिकारी तर्हि स एवाधिकारी तन्त्रसिद्धान्तेऽपि द्वयोरेकरूपत्वात् । अतएव वैदिकसंस्कारोत्तरमेव तन्त्रसंस्कारमाचरन्ति । अवैदिकानां तु तन्त्रसंस्कारमात्रं कर्णवेधादिवत् । न सिद्धान्तारोह उपनयनादिवत् । अथ यदि वैदिकस्तन्त्रसिद्धान्ताधिकारी तर्हि प्रतिनिधिप्रत्याख्यानं समापन्नम् । न समापन्नं सौत्रामणीवदुपपत्तेः । सौत्रामणीदीक्षितस्य कलावनधिकारात्पयोग्रहवदुपपत्तेः । तस्यैव वाजपेयदीक्षितस्य सुराग्रहोऽपि । वाजमन्नं तत्पेयं भवति यत्र सुरारूपेणेति वाजपेयः । अत्र पयोग्रहे स्वरूपहानिप्रसङ्गः न सौत्रामण्याम् । निषेधोत्सर्गस्य दीक्षया बाध इति शास्त्रे संप्रदायः । तस्मात्कालभेदाद्दीक्षाभेदादधिकारभेदादुपपद्यते मुख्यस्य प्रतिनिधेर्वा समाम्नायः । अतएवाभिषेके राजानं पाययति पुरोहितः सुराम् । सा हि दीक्षा । दीक्षित एव दीक्षयेदिति नियमः सकलसंमतः । यथैतरेया आमनन्ति—अथास्मै सुराकंसं हस्त आदधाति स्वादिष्ठयेत्यादित्रिभिर्मन्त्रैः पिबेदिति यो ह वै सोमपीथः सुरायां प्रविष्टः स हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति न सुरेति च । एवमभिषेके ब्राह्मणायापरिमितं दद्यात्तेनाभिषिक्तः क्षत्रियोऽपरिमितो भवति । व्यङ्गा दीक्षा बलं व्यङ्ग्यति । तत्रोदाहरणान्याम्नातानि बहूनि । तर्हि प्राप्तो ब्राह्मणानां सुरापानप्रसङ्गः । तर्हि कदा नासीत् । ब्रूहि कथमाचार्यत्वं ब्राह्मणानां सर्वविद्यासु । इत्थं ब्रुवतैवाचार्यत्वमपहारितम् । एतद्रहस्यं तैत्तिरीयके निरूपितम्—ब्रह्मणो वा एतत्तेजः । यत्सोमः । इति सोमं निरूप्य सुरां निरूपयति । अन्नस्य वा एतच्छमलं । यत्सुरा । अन्नस्यैव शमलेन शमलं यजमानादपहन्ति । सोमग्र-

हाꣳश्च सुराग्रहाश्चꣳश्च गृह्णाति । पुमान्वै सोमः । स्त्री सुरा । तन्मिथुनं । मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय । आत्मानमेव सोमग्रहैः स्पृणोति । जायाꣳ सुराग्रहैः इति । यदस्य यजमानस्य मिथुनात्मकं कर्म तद्यज्ञे एव करोति । कस्मात् । प्रजननाय प्रजाशिक्षार्थं यथेष्टचारिणी मा भूदिति । इदमेवाचार्यत्वं यत्प्रजाशिक्षणम् । अत्रान्नस्यैव शमलेनेत्येवकारेणोपायान्तरं दुर्बलमिति व्यज्यते । अतएव दृश्यन्ते यज्ञा वैदिकास्तान्त्रिका वा । तत्रैव-पूर्वे सोमग्रहा गृह्यन्ते । अपरे सुराग्रहाः । परोक्षꣳ सोमग्रहान्त्सादयति । पश्चादक्षꣳ सुराग्रहान् । इति प्रकाशगोपनव्यवस्था । अर्धो वा एष आत्मनो यत्पत्नीति श्रुतेः सोमग्रहे सुराग्रहे वा मिथोऽङ्गाङ्गीभावः स्त्रीपुंसयोरतोऽपि मिथुनत्वं कर्मणः । तस्मात्क्वचित्पुंस आचार्यत्वं क्वचित्स्त्रियः । अतएव गार्गीवाचक्नवीवडवाप्रातीथेयीसुलभामैत्रेयीति गृह्ये आचार्येषु पठिताः । तदेव वंशत्वं यद्वैदिकसंस्कारवत्त्वं, तदेव कुलत्वं यत्तन्त्रसंस्कारवत्त्वं । तन्त्रेषु कुलद्वयं श्रीकुलं कालीकुलं चेति । तन्त्रदीक्षा स्त्रीप्रधाना । वेददीक्षा पुंप्रधाना । एतेन वामाचारो वामा स्त्री तत्प्रधानो दक्षिणाचारो दक्षिणः पुमांस्तत्प्रधान इति सिद्धम् । अतएव कुलवधूः कुलीन इति व्यवहार उपपद्यते । कुलं नाम संस्कृता स्त्री तस्यां भवः कुलीन इति संपन्नम् । अतएव सर्वेऽपि कुलधर्मा मेर्वादित्त-प्रसिद्धाश्चरितार्था दृश्यन्ते कुले कुले । न कोऽपि परिदृश्यते भरतखण्डे नास्त्यस्मद्गेहे कुलधर्म इति ब्रुवन् । कुलधर्ममङ्गीकुर्वता तन्त्रमङ्गीकृतं प्राक् । धर्मस्य चोदनारूपत्वाच्चोदनालक्षणोऽर्थो धर्म इति शास्त्रात् । तन्त्रश्रुतिस्मृतिपुराणानां चोदनापर्यवसानात् । तस्या अनुपलम्भे शिष्टाचारादनुमानम् । अन्यथा धर्मत्वाभावप्रसङ्गः । प्रष्टव्यो वंशः किं कोऽपि सर्वैर्वैदिकसंस्कारैः संस्कृतोऽभूदिति । यद्यभूत्तर्हि स एव वंशः कुलमुच्यते । तन्त्रसंस्कारविरोधा-

भावात् । यथा महर्षीणाम् । चित्रमेतत् । यत्र सुराग्रहस्तस्य वंशत्वं कुलत्वं च । नैतावदेव किंच गोत्रं च संपद्यते संस्काराभ्यामाभ्यामेव । एतत्त्रयमव्युच्छिन्नं भवति संस्कर्तुरभावेऽपि । अतएव पुत्रपरम्परा शिष्यपरम्परा च । पुत्रपरम्परागोत्राणि प्रसिद्धानि । शिष्यपरम्परागोत्राणि ब्रह्मादीनि । अतएव न पुनर्विवाहप्रसङ्गो गुर्वन्तरप्रसङ्गश्च । यतः कन्यया वटुना वा संपाद्यते गोत्रं विवाहेनोपनयनेन च । यन्मृतमपि न मुञ्चति जीवन्तं वा । अतएव पितैवोपनयेत्पुत्रमिति नियम उपपन्नः । रिक्थे वैपम्यापत्तेः । तच्च गोत्रनिमित्तम् । तस्माच्छास्त्रसंस्कार एव बीजं वंशकुलगोत्राणामिति निष्कर्षः ।

अस्तु तर्हि न सुरां पिबेन्न मांसमश्नीयादित्यादीनां प्रस्थानं कुत्रेति चेत्त्वयीति वदामः । अपूर्णवैदिकत्वादित्यवैदिकत्वादिति वा । यस्यास्ति यज्ञाधिकारस्तत्र न प्रवेशः । यज्ञो हि स्थानं क्रियाया भोगस्य वा शास्त्रवासनावतां । सर्वो हि यज्ञः क्रियाकलापः । अतएव पञ्चमहायज्ञा गेहे गेहे यत्रैवान्तर्भवन्ति क्रिया भोगा वा । अत्रैव चरितार्था वेदास्तन्त्राणि च । तथात्वे यद्यत्र विहितं यस्मै तेन तत्तत्र ग्राह्यम् । न तावता विधिनिषेधपरित्यागः । वंशकुलगोत्राणि संपन्नानि । वंशः पितृमूलः कुलं स्त्रीमूलं गोत्रं संस्कारमूलम् । अतएव हठात्समाचरन्ति पुरुषा उपनयनं योषितः कुलधर्मस्यापि । कुलधर्मस्यापरिहार्यत्वं गीतायाम्—उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन । नरके नियतं वासो भवतीत्यनुशुश्रुमेति । अतएव सर्ववैदिकसंस्कारैः संस्कृतं कुलीनं वदति जनः । किञ्च यथा संन्यासः सर्वान् संस्कारान्पूरयति ज्ञानं च तथोर्ध्वाम्नायश्च पूर्णाहुतिन्यायात् । अतएव ब्रह्माण्डपुराणे—चरमे जन्मनि यथा श्रीविद्योपासको भवेत् । यदि वा पश्चिमं जन्म यदि वा शङ्करः स्वयम् । तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरीति ।

एतेन ब्राह्मणानामेव श्रीविद्याधिकार इति द्योतितं तेषामेव चरमजन्मत्वात्। अग्रजन्मत्वं तु प्राक्संस्कारादन्यसंस्काराधिकाराच्च। अतो गुरुत्वम्। अथ यदि वैदिकानामधिकारस्तर्हि स शुक्रादिशापैर्निरुद्ध इति चेत्तत्तच्छापोद्धारैरुद्धृतस्तर्हि क चारितार्थ्यं शापस्य तावच्चारितार्थ्यं तस्य यावन्नोद्धारोऽन्यथाशापोद्धारस्याचारितार्थ्यापत्तेः। शास्त्रसिद्धे वस्तुनि शापो दुर्बल इति शापोद्धारार्थः कथमुज्जीवितः। कचः स्वशापेनैवाब्रह्मण्यमापन्नेन शुक्रेण शापोद्धारात्प्राक्। अदूषितदीक्षाफलमेतत्। दीक्षाया अदूषितत्वमाह भगवान्पतञ्जलिः—हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि। परमार्थविन्न पुण्यैर्नच पापैः स्पृश्यते जात्विति। भगवान्बादरायणोऽपि समुवाच—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति। शापो मदफलम्। समानदीक्षाणां सहपङ्क्तिर्वेदे तन्त्रे वा। तस्मान्न सुरां पिबेन्न मांसमश्नीयादित्यादीनां विषया अदीक्षिता इति तत्त्वम्। अतएव—यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गतिमिति गीतोपपन्ना। तस्य भिन्नसिद्धान्तरचनपरत्वादिति भावः। एष दण्ड्यः। अतएव—परिस्रुतं झषमाद्यं पलं च भक्तानि योनिः सुपरिष्कृतानि। निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेतीति श्रुतौ निवेदयन्नात्मीकृत्य सिद्धिमेत्येष सुकृतीत्युक्तम्। शास्त्रसंपर्कः परिष्कारः। एष वन्द्यः। कल्पेभ्योऽवगन्तव्यं निवेदनमात्मीकरणं च।

अथ—पिबन्मद्यं पलं खादन्स्वेच्छाचारपरायणः। अहंतेदंतयोरैक्यं भावयन्निवसेत्सुखमिति तन्त्रं विरुद्धम्। न विरुद्धम्। भावनारूढस्य विधिनिषेधपाशच्छेदात्। अहमन्नमहमन्नाद इति श्रुतेश्च। यथोद्धवंप्रति भगवान्—ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर इति। संभावनायां लिङ् विधौ वा। एष संन्यासः। पिबन्खादन्भावयन्निति

शक्तिभिर्भोगसमयेऽपि भावनैव विधीयते तस्मान्न यथेष्टाचारो विद्वद्विषयत्वात् ।

मद्यत्या देवताया याग उक्तो यजुषि प्रजापतेरासयागप्रकरणे—यन्मधुना जुहोति । महत्यै वा एतद्देवतायै रूपं यन्मधु । यन्मधुना जुहोति महतीमेव तद्देवतां प्रीणातीति । नात्र मधुनि माक्षिकशङ्का श्रुत्यन्तरसंवादात् । किंवहुना ।—यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीति श्रुतिर्यावद्देवतासानं ब्राह्मणमुक्त्वा तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदिति विधत्ते । यदि वैदिकी तान्त्रिकी वा देवता न्यूना स्यात्तदाऽनमस्कारादिप्रसङ्गः । गायत्र्या वैदिक्यः श्रीविद्यया तान्त्रिक्यः । अतएव यावत्सर्वशब्दावुपपन्नौ । यथा मनुराह —न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफलेति । निवृत्तिर्दीक्षापरतन्त्रत्वम् । किमु वक्तव्यं कर्ममात्रं दीक्षामपेक्षत इति । यथा पुराणसंहितायाम्–लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना । व्यवस्थितिस्तत्र विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टेति । व्यवस्थितिर्दीक्षा । कलिनिषेधमूलं न पश्यामः । विद्योच्छेदप्रसङ्गात्–सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् । प्रियं च नानृतं ब्रूयादेष धर्मः सनातन इति वेत्ति नारायणोऽथ शिवः । अनुदरंभरित्वात् । द्वावप्याचार्यौ सर्वज्ञत्वात् । अतएव वेदादौ स्मर्यते हरिःॐइति तन्त्रादौ शिव उवाचेति । इदं बीजं वेदतन्त्रप्रवृत्तौ । इदमनादित्वं च तदनादित्वात् । द्वावप्यवधूतौ सिद्धान्तारोहात् । द्वावप्यपरिहार्यगुप्तप्रकटशक्तिसंपन्नौ कृतोपासनत्वादधिकारपदारूढौ । मिथो बलं वेदस्तन्त्रं च गुणोपसंहारात् । द्वयमपि सफलं सर्वापेक्षान्यायात् । अतएव पदवाक्यप्रमाणपारावारपारीणो जैमिनिराचार्य आह आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति ।

आम्नायो वेदस्तन्त्रं च। वेदे चत्वारस्तन्त्रे षट् । अनन्ता अप्यत्रैवान्तर्भूताः। अथोपनिषदां ज्ञानार्थानां क्रियार्थत्वापातः। युक्तं तत्। ज्ञानं नाम क्रिया। अतएव धातुसंज्ञा ततो ज्ञानशब्दसिद्धिः। अथ यदि ज्ञानं क्रिया तदा ब्रह्मलक्षणं न स्यादिति चेदलक्षणे लक्षणं लक्षणयेत्याचार्याः । अतएव सत्यं ज्ञानमनन्तं ब्रह्मेति वाक्यमसदज्ञानपरिच्छिन्नेभ्यो भिन्नमिति लक्षितम् । अतएव गीतायां—ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितमिति। यज्ज्ञानमित्युच्यते तज्ज्ञेयं कस्मात् यस्माज्ज्ञानगम्यमिति तदर्थः। एतेन शाब्दवृत्तिपरिणामज्ञानैः स्फुटो भूत्वा यः स्फोटयति शब्दानर्थांश्च स सर्वसाक्षी परमात्मा ब्रह्मेति स्फोट इति चोच्यते । तमेव भान्तमनु भाति सर्वमिति श्रुतेः। स्फोट उक्तः कठे—अग्निर्यथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बभूव । आत्मा तथैको भुवनं प्रविष्टो रूपंरूपं प्रतिरूपो बहिश्चेति । यथा सुवर्णमलङ्काराणां स्फोट आत्मत्वात् नालंकाराः स्फोटा आत्मानो वा। सर्वोऽयं वाग्गणो मलिनीमन्त्रराजात्मा वृत्तिपरिणामज्ञानहेतुः। स्फोटेन परमात्मना स्वप्रकाशेन बलेन स्वप्रकाशं परप्रकाशं च बोधयति। तदोपनिषदपि वृत्तिक्रियाहेतुत्वात्क्रियार्थत्वात्सार्थका। वृत्तिव्याप्तिरेव ज्ञानमिति वेदान्ताः। अतएव ज्ञानमपि योग इत्युच्यते। यैः प्रमाता बोधं न विन्देत तेषां वाक्यानामनर्थकत्वमिति पर्यवसितम् । अतदर्थानामुपनिषदां तथात्वमित्यापातः क्रियान्वित एव शक्तिरित्यपि तथा अव्यभिचारात् भवन्मतेऽपि नातदर्थतात्मा द्रष्टव्य इति विध्यङ्गत्वात्तासां आम्नायत्वं सममुभयोः कर्णोपकर्णतया समधिगतत्वात् । गोपनं तु समानं अदीक्षितागोचरत्वं तत् । द्वयोरप्येकैवोपनिषत् । तदन्तमूर्ध्वाम्नायान्तमनुसंधानं । महावाक्यादनुत्तरविद्यायाश्च समाधिः। प्रायो वेदे वाक्यभाषा। प्रायस्तन्त्रे वर्णभाषेति विशेषः । अतएव वर्णभाषां चतुर्दशसूत्रीं

शिवाचार्यामुपक्रम्य महाभाष्ये वेदानां वेदो ब्रह्मराशिरिति प्रायो वर्णस्फोटस्तन्त्रे वाक्यस्फोटो वेदे पदस्फोटः समानः । तेन तन्त्रे मूलत्वं वेदानामिति गम्यते । किमु वक्तव्यं चतुर्दशसूत्र्यास्तन्त्रत्वे व्याकरणस्य तन्मयत्वे वाग्जालस्य तदवधृतत्वे सर्वं तन्त्रमयमिति । एतेनेशानः सर्वविद्यानामिति श्रुतिर्व्याख्याता । तस्मान्मन्त्रव्यवहारो बीजव्यवहारश्चोपपन्नः । असंस्कृतानामपि जातिनिमित्तोऽधिकारो न प्रशस्ततमः । तस्मादुपपन्नं—श्रीसुन्दरीतर्पणतत्पराणां भोगश्च मोक्षश्च करस्थ एवेति । तर्पणमन्तर्बहिर्यागौ । योगः कर्मसु कौशलमित्याह भगवान् । समाधिर्ज्ञानकौशलमिति गुरुः । तत्र कौशलद्वयं गीतायाम्—कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः । स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृदिति । कर्मणि विधिलब्धेऽकर्म विधिपरतन्त्रस्य कर्मलेपाभावं योऽधिकारी पश्येत्स बुद्धिमानित्येकं कौशलम् । योऽधिकार्यकर्मणि नित्यसिद्धे ब्रह्मणि कर्म नरशृङ्गवन्मृगजलवद्वा पश्येत्स युक्तो न युञ्जानोऽव्युत्थानसमाधिरूढः । कृत्स्नकर्मकृदपि सर्वथैव लेपासंभवादित्यपरम् । अतएव शास्त्रयोनित्वादित्यत्र द्वितीयं वर्णकं शास्त्रं योनिरस्येत्याचार्याणाम् ब्रह्मीभावः शास्त्रमूल इत्यर्थः । अतएव भगवान्—ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिनेति कर्मणः शास्त्रमयत्वाच्छास्त्रस्य ब्रह्ममयत्वादित्यर्थः । ब्रह्मविद् ब्रह्म पश्यति कर्मवित्कर्मेति तात्पर्यम् । नैष समुच्चयवादः । अधिकारिणश्चत्वारः । मलिनो मिश्रः शुद्धः केवल इति । आद्यौ कर्मदर्शिनौ परौ ब्रह्मदर्शिनाविति गूढम् । एषूत्तरोत्तर उत्तमः । कर्मठब्रह्मनिष्ठयोः पाण्डित्यमाह—यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः । ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधा इति पूर्वकोटौ मिश्रस्य पाण्डित्यं—विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डिताः

समदर्शिन इति द्वितीयकोटौ शुद्धस्य पाण्डित्यं। सर्वेषां विधिवचनानां पर्यवसानफलं मोक्षो नाम ब्रह्मीभाव इति विजानतो मिश्रस्य कर्मदाहः स्वतः सेत्स्यति। अतएव—कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नर इति श्रुतिश्चरितार्था।—यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। यज्ञायाचरतः कर्म समग्रं प्रविलीयत इति गीता च विधिप्राप्तं कुर्वित्युपदेशार्हो मलिनः समाधौ द्वैतादर्शनाद्व्युत्थानेऽपि ब्रह्ममयं मायामयं च पश्यन् शुद्धो ब्रह्मनिष्टः समदर्शी। इदमेव समदर्शित्वं यत्समत्वं व्युत्थाने समाधौ च। एष पञ्चमीं षष्ठीं वा भूमिकामारूढः चतुर्थीं वा। केवलस्तु सप्तमीं भूमिमधिगतो विगलितद्वैतवासनो वैज्ञानिकप्रलयरसिको भूमात्मा श्रीकैवल्यनाथ एव भगवान् सर्वोत्तीर्णो न तत्र कापि वार्ता विश्वस्य। स ब्रह्म स शिवः स हरिः स इन्द्रः सोऽक्षरः परमः स्वराट्। यत्र शास्त्रपर्यवसानं तस्यैषा स्थितिरुक्ता तन्त्रे—अक्रियैव परा पूजा मौनमेव परो जपः। अचिन्तैव परं ध्यानमनिच्छैव परं फलमिति महासाम्राज्यम्। तस्मादेतत्सिद्धम्। सुखलाभोपायः पूर्वकाण्डः सुखरूपतोपाय उत्तरकाण्ड इत्यविरोधज्ञानं मोक्षमार्ग इति। यदाह भगवान्—अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचिदिति। कर्मेश्वरार्पणं कुर्वन्तो ब्रह्ममयं वा पश्यन्तो न कर्मफलभाजः किंतु ज्ञानैकफलभाजो जन्मफलभाजश्च। किंबहुना—यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति। तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च। श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला। समाधावचला बुद्धिस्तदा योगमवाप्स्यसीति शास्त्रमुपसंहृतं भगवता। मोहकलिलं शास्त्राणामनेकवाक्यत्वग्रहम्। तदेव व्याख्यातं श्रुतिविप्रतिपन्नेति। योगमास्तारासताम्। कर्माकर्मविकर्मेति वेदवादो न लौकिकः। वेदस्ये-

श्वररूपत्वात्तत्र मुह्यन्ति सूरय इत्याविर्होत्रः । तस्मादेष क्रमः—

पितरावुद्यतौ यस्य श्रीनाथोऽपि सदोद्यतः । तत्र श्रुतिश्च तन्त्रं च कृतार्थमपरं किमु । पूर्णः पूर्णे धीयते वेदतन्त्रैर्मोहध्वान्तध्वंसनैः सिद्धशब्दैः । श्रीमन्नाथश्रीकटाक्षैकमिश्रैर्धन्यः पुण्यैः कोऽपि जीवः शिवत्वे । सिद्धान्तैक्यज्ञानसंपत्समृद्धः संस्काराभ्यां संस्कृतो देशिकेन्द्रैः । मुक्तः स्वास्थ्यं भूमरूपे भजेत मोक्षश्रीस्तं किं न सेवेत शिष्यम् । प्रोक्तः शिष्टैरेष पूर्णाभिषिक्तः । इति पाठः ।—मलिना बहवो लोके मिश्रा न्यूनास्ततोऽपि च । ततो न्यूनतराः शुद्धास्ततो न्यूनास्तु केवलाः । यथा—गोष्पदीकृतसंसारो मोहध्वान्तदिवाकरः । आचार्यः शङ्करः शास्त्रवार्धिमन्थो जगद्गुरुः । आत्मपाशः कर्मपाशोऽविद्यापाशस्तृतीयकः । मायापाशश्चतुर्थस्तु छिद्यते गुरुणामुना । नाथैकसिद्धिचन्द्राब्दे शालिवाहमहीपतेः । श्रीकाशिकायामुद्भूतपरामर्शः शिवंकरः । यथेष्टाचारविच्छित्त्यै विधृत्यै शास्त्रवर्त्मनः । विशुद्ध्यै च मनीषायाः परामर्शः कृतो लघुः । यत्प्रेरितं भगवता हृदयस्थितेन यद्बोधितं च गुरुणा करुणार्णवेन । तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्मसद्मोत्थमोदमकरन्दरसाभिलाषी ।

गुरोरधीतं गुरवे निवेदितं गुरुर्भवत्येव गुरोः सदाशिषा । हरौ गुरावर्पयतिस्म सोऽर्जुनस्तदाशिषासौ विजयीति गीयते । शैवाः शाक्ता गाणपत्या वैष्णवाः सूर्यपूजकाः । भवन्ति यमविज्ञाय सोऽहमस्मि परः शिवः ।

इति श्रीमत्कैवल्यसिंहासनाधीश्वरश्रीमद्भगवत्सच्चिदानन्दसरस्वतीपूज्यपादकरकमलसंजातकृष्णानन्दसरस्वतीसमधिगतोऽनुत्तरसिद्धान्तपरामर्शः ॥

---

# मोक्षमीमांसा ॥१०॥

जय सच्चिदानन्द।

क्रीडास्पदं बालकानां यूनां भोगास्पदं जगत्।
चिन्तास्पदं च वृद्धानां ज्ञानी तत्रातिरिच्यते ॥

अथ ज्ञानहेतून् परामृशामः। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनायेति ज्ञानेतरहेतुनिषेधपूर्वकं ज्ञानस्यैवाऽवस्थात्रयाऽतिरेकित्वं कथयति येन जगत्संबन्धो विनिवर्तते स मोक्षः। तस्य मोक्षस्य ज्ञानैकहेतुत्वे जगतोऽज्ञानसंभवत्वमर्थसिद्धम्। अतएव द्वैतमिव भवतीतीवकारेण निरूपितमेतज्जगत् ज्ञानं चात्मदर्शनम्। अतएव श्रुत्यन्तरेऽपि—आत्मा वाअरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति हेतव उक्ताः तत्सिद्ध्यर्थं —तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति प्रत्यक्षसिद्ध उपायः। यथा—'गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा। पापं तापं च दैन्यं च सद्यः साधुसमागमः' इति। तत्रैव श्रवणादिसंभवेनाज्ञाननिवृत्त्या पापतापदैन्यनिवृत्तिः स्वस्य तथाधिकारे तथा गुरुलाभे सद्यो मोक्षः। सद्य इतीहैव जन्मनीत्यर्थः। 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः।' पापतापदैन्यरहिता इत्यर्थः। तदसंभवे काशीमरणान्मोक्षः काशीवासो हि गुरूपसदनम्। यत्र सर्वे जन्तवः मोक्षाधिकारिणः मरणमात्रस्य हेतुत्वात्। यत्र महागुरुर्विश्वेश्वरः। अतएवेदं महाश्मशानम् यत्र दग्धानां न पुनर्दाहप्रसङ्गः। अतएवेदमानन्दकाननम् सर्वानर्थनिवृत्त्या परमानन्दावाप्तेः पापतापदैन्यरहितत्वादित्यर्थः। अतएवेदमविमुक्तम् यन्मुक्तैरपि न विमुच्यते ब्रह्मरूपत्वात्। अथ तृतीयो हेतुः 'सिताऽसिते सरिते यत्र संगथे तत्राप्लुतासो दिवमुत्पतन्ति।

ये वै तन्वं विसृजन्ति धीरास्ते जनासो अमृतत्वं भजन्त इति । यत्र क्षेत्रे सितासिते गङ्गायमुने नद्यौ यत्र संगथे मिलिते तत्र संगमे संगमावच्छिन्ने क्षेत्रे आप्लुतासः स्नाताः सन्तः दिवं स्वर्गं उत्पतन्ति वेगेन गच्छन्ति न यमादिलोकान्तरं पश्यन्तीत्यर्थः । ये तु तन्वं तनुं शरीरं तत्र संगमे विसृजन्ति त्यजन्ति ते धीरासः धीराः अमृतत्वं पापतापदैन्यरहिताख्यं मोक्षं भजन्ते अश्नुवन्ति । अत्राचार्यस्तीर्थदेवता कल्प्या श्रुता वा स्याच्छास्त्रे । वयं तु वदामः श्रीप्रयागक्षेत्रस्य विराट्पुरुषस्य ललाटस्थानत्वात्, व्यष्टिसमष्ट्योरैक्याच्च—भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यमिति भ्रूमध्यावसाने ज्ञानध्यानपूर्णरूपं शिक्षयति तत्क्षणे तत्रत्या देवता आचार्यरूपेण मोक्षस्य ज्ञानैकहेतुत्वात् ज्ञानस्योपसदनैकहेतुत्वात् । प्रयागक्षेत्रे तनुत्याग उपसदनम्—इडा भागीरथी गङ्गा पिङ्गला यमुना नदी । तयोर्मध्यगता नाडी सुषुम्नाख्या सरस्वती'ति व्यष्टिसमष्ट्यैक्यं शास्त्रसिद्धम् । सर्वश्रुतिसमन्वयात् तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशाविति व्यासस्मृतेः संचितागामिकर्मक्षये तनुत्यागेन प्रारब्धक्षयात् कुतो न स्यान्मोक्षः। यत्तु—नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति वचनं तदज्ञानिविषयम् । तन्नाशकसामग्र्या ज्ञानस्य प्रायश्चित्तानां च प्रसिद्धत्वात् । तस्मादत्र श्लोके अकृतनिष्कृतिकमिति शेषो वेदितव्यः । प्रयागक्षेत्रं तु प्रायश्चित्तस्थानम् । तस्मात्तत्र मुण्डनपूर्वकस्नानमात्रेण दग्धपापा दिवमुत्पतन्ति । ये तनुं विसृजन्ति तेषां पुण्यमपि क्षीयते सत्यरागे सति रागे वा तेन पुण्येनेह परत्र वा फलं वेदितव्यम् । विसृजन्तीति कर्तृतन्त्रत्वस्य विवक्षितत्वाद्धीरा इति कर्तृविशेषणान्नात्रात्महत्यादोषोऽस्तीति विसर्गाभिप्रायः । सद्योज्ञानमोक्षे ब्राह्मणोऽधिकारी तादृशज्ञानस्य श्रवणाद्यधीनत्वात् श्रवणस्य संन्यस्य श्रवणं कुर्यादिति विधानात् संन्यासे ब्राह्मणाना-

मेवाधिकार इति सुबहुनिरूपितं ब्राह्मणसर्वस्वे रामभिश्रकृततुरीयमीमांसाखण्डनावसरेऽस्माभिः । 'काशीमरणमोक्षे तु नरादिकीटान्ता अधिकारिणः । उखरं पुण्यपापानां धन्या वाराणसी पुरी'ति क्षेत्रस्वभावोक्तेः प्रयागमरणे विधिज्ञोऽधिकारीति तुष्यन्तु श्रीमद्विश्वेश्वरदीक्षिताः श्रीमद्दतियाराजधानीं भूषयन्त इति शम् ।

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीविरचिता मोक्षमीमांसा ।

---

# कैवल्यगाथा ॥११॥

जय सच्चिदानन्द ।

ॐ श्रीमद्देशिकभूपाल तथा तत्त्वं तु मे वद । श्रमो न यत्र नो पापं न मोहो नापि चिन्तनम् ॥ १ ॥ एतत्तत्त्वं महाबुद्धे बुध्यते चरमे भवे । एतद्विज्ञापयामि त्वां तवायं चरमो भवः॥२॥ शृणुष्वैकमना भूत्वा शृण्वन् कैवल्यमश्नुषे । इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ॥ ३ ॥ किं वा पश्यसि विश्वमेतदखिलं स्वप्नेन्द्रजालोपमं मायामात्रमचेतनं चितिभिदाशून्यं शिवेनोशिवम् । कालेनानिशमेव याति चलतां कालश्च चिन्तोत्थितश्चिन्ताप्रावरणं विहाय झटिति स्वस्थः प्रबुद्धो भव ॥ ४ ॥ ॐकारो निगमान्तशेखरगुरुः किं त्वां न संबोधयत्याहोस्विच्छ्रुतिरम्बिका करुणया

---

१ ग्रन्थप्रणेत्रा श्रीकृष्णानन्दयतिवरेणास्यां कैवल्यगाथायां गीतावदष्टादशप्रकरणानि सन्ति कृतानि, १ सर्वशास्त्रार्थसंग्रहः, २ सर्वशास्त्रार्थानुभवारोहः, ३ स्वरूपस्थितिदृढीकरणं, ४ गुरुरूपवाग्देवतोक्तिः, ५ रहस्योपदेशः, ६ विशोककथनम्, ७ सर्वमताविरोधिगुरुमार्गफलकथनम्, ८ सहजनिर्बीजसमाधिः, ९ तत्त्वनिरूपणम्, १० तत्त्वनिष्ठादृढीकरणम्, ११ विस्मृत्यपोहः, १२ उपदिष्टदृढीकरणम्, १३ ज्योतिस्तत्त्वनिरूपणम्, १४ तमोपसरणम्, १५ ज्ञानैकनिष्ठाफलनिरूपणम्, १६ सर्वाश्रमैक्यनिरूपणम्, १७ पुराणपुरुषनिरूपणम्, १८ निर्वाणपदवीवर्णनम् इति.

चिन्तातुरं कातरम् । यद्यच्चिन्तयसि प्रवृद्धविषयव्यासङ्गतस्तत्पुर-श्चिन्ताप्रावरणं० ॥ ५ ॥ किं नास्तीति विमर्शनीयमथ किंचाऽस्तीति किंचोभयं किंवेशादगुणतः प्रधानगुणतः किं शून्यतः किं स्वतः । नैवेदं सुविचारणार्हमथ किं चिन्तैव ते तादृशी चिन्ताप्रावरणं०॥६॥ सामान्यात्मकता विशेषवपुषां यद्वौतमीये मते मृत्सा भिन्नतया विभान्ति कलशास्तद्रूपतो नो भिदा । सत्सामान्यमिदं तथैव जग-दप्येकात्मकं निर्द्वयं चिन्ताप्रावरणं० ॥ ७ ॥ आनन्दा अपि ते विशेषवपुषः पात्राणि रागद्विषामानन्दान्न विभेदभाज इति ते प्राङ्न्यायतः शुद्धतः । रागद्वेषकलास्त्वयैव कलिताश्चिन्तातुरेणैव तच्चिन्ताप्रावरणं० ॥ ८ ॥ नीरूपानपि कालमारुतवियज्ज्वाल्यादि-कांस्त्वं यथा जानीषे परिचायकैर्निजगुणैर्भिन्ना न ते लब्धये । ज्ञानेनाचलभास्वता परिचिनु ब्रह्मापि सूर्यं यथा चिन्ताप्राव-रणं० ॥ ९ ॥ गन्धाद्या अपि लब्धये ननु महीवार्यादयस्तत्र ते चिन्ताक्लृप्तिरियं गुणी गुण इति प्रागल्भ्यमेवात्र ते । नो लभ्या गुणिनो गुणात्परतया ज्ञानात्परं नोऽपरं चिन्ताप्रावरणं० ॥ १० ॥ गन्धाद्याः खलु लक्षणान्यपि महीवार्यादिरूपाणि च ज्ञानं लक्षण-मप्रमेयवपुषो रूपं च तत्संश्रय । तत्रैतज्जगदप्रमेयरचनं गन्धे घटाद्या यथा चिन्ताप्रावरणं० ॥ ११ ॥ आदर्शे प्रतिबिम्बिता ननु पुनस्तद्भेदभाजो मृषा तद्रूपेण वसन्ति तस्य जठरेऽखण्डा-कृतौ तेन हि । चैतन्ये स्फुरदेकरूपजठरे विश्वं तथा भासते चिन्ताप्रावरणं० ॥ १२ ॥ नाशं नैति शतैरपि प्रतिफलैरादर्शकैव-ल्यकं तद्वत्तेऽपि जगद्गणैश्चितिमहादर्शस्य कैवल्यकम् । किंवा शब्दशतैः प्रयाति विलयं चाकाशकैवल्यकं चिन्ताप्रावरणं० ॥१३॥ भो सिन्ध्वादिजलस्थिता उत वने नानाफलेषु श्रिताः किं नानैव रसाः परंतु कचते सर्वत्र चैको रसः । तद्वच्चैकरसे परात्परतरे

१ एकशेषः.

सर्वे रसाः कल्पिताश्चिन्ताप्रावरणं० ॥ १४ ॥ अर्थाः शब्दगणाश्च तेऽपि विविधा वर्णा न ते नादतो भिन्नाः स प्रणवात्मकः स च परब्रह्मात्मकः शाश्वतः । तद्ब्रह्म त्वमसि प्रकाशपरमस्त्वद्भान-भास्यो रविश्चिन्ताप्रावरणं० ॥ १५ ॥ त्वत्तः शब्दसमुद्भवस्त्वदुदिता चिन्ता च ताभ्यामिदं विश्वं भाति चराचरं तव ममाहंत्वं-प्रकारोल्बणम् । तज्जस्यास्य कथं भवेद्विपयता नेतीति वेदस्य नो चिन्ताप्रावरणं० ॥ १६ ॥ तूष्णेर्नादसमुद्भवः स च महानन्दैकबो-धद्युतिस्तारात्मा तत एव वेदनिवहस्तस्यावसानेऽपि सः । आनन्दे लयमेति चित्तसहितो गानं यथा शिक्षितं चिन्ताप्रावरणं० ॥१७॥ आनन्दान्न विभेदमञ्चति महानन्दैककन्दाङ्कुरस्तारस्तारयति स्वकै-रवयवैर्विश्वस्य सत्ताविषम् । पायंपायमहो महासुखघने त्वय्येकतां संभजंश्चिन्ताप्रावरणं० ॥ १८ ॥ सूर्याचन्द्रमसोस्तथा हुतवहे तेजोऽस्ति तन्मामकं विद्धीत्याह जनार्दनो न च तमो नीलं न पीतं सितम् । किंतु स्वच्छसमं विभासयति यद्रूपाणि तद्ब्रह्मचिच्चिन्ता-प्रावरणं० ॥ १९ ॥ निर्दोषं सममेव तत्त्वमिति स प्राह प्रसन्ना-ननः श्रीकृष्णः करुणारसार्द्रहृदयस्तद्वेदिनः पण्डिताः । वैषम्यं बत चिन्तया गुरुकृपालेशेन शून्यस्य ते चिन्ताप्रावरणं० ॥ २० ॥ अस्तीत्याह जगज्जनुःसहनकृद्बीजं तु सर्वो जनस्तत्सामान्यमवेहि तत्र निखिलाः कॢप्ता विशेषास्त्वया । अव्यक्तात्प्रभवन्ति चाहनि घने चित्ते निशायां न ते चिन्ताप्रावरणं० ॥ २१ ॥ पृथ्वी गन्ध-घना रसेन स घनो गाढो रसो रूपतो रूपं स्पर्शघनं घनः स वचनैर्वाङ्नादगाढा मता । नादो[1] नन्दघनस्तदेव परमं ब्रह्मेति चैकं घनं चिन्ताप्रावरणं० ॥ २२ ॥ वाचैवास्त्वथ माययाऽणुभिरथ प्राधानिकं ब्रह्म वा किंवा तेन भवेच्छृणुष्व वचनं चिन्तां त्यजालं द्रुहम् । तत्कैवल्यपदं रमस्व सहसा तत्रैव विश्वं क वा चिन्ताप्राव-

१ आङ्ध्याहार्यः.

रणं० ॥ २३ ॥ मूर्खः प्रावृतिमार्जनेन विगलन्मालिन्यचिन्तां भजेद्विज्ञः प्रावृतिमार्जनेन च पुनस्तत्त्यागतो वा सुखी । चिन्ताजर्जरकन्थिका तव बहुव्यासक्तमालिन्यधृक् चिन्ताप्रावरणं० ॥२४॥ आकाशोऽनुसृतः परैरपि महाभूतैर्विभुत्वाद्यदा गाढत्वं कथमस्यसैव घटते विश्वस्य तथ्यं वद । सत्यं वच्म्यविचारतस्तव घना चिन्तैव तन्नो घनं चिन्ताप्रावरणं० ॥ २५ ॥ देवं तं भज चिन्तया विरहितस्याविस्तरां यो भवेच्चिन्तां संहरते कथं वद सखे चिन्तामपेक्षेत यः । तस्मात्त्वं विदितादथो अविदितादन्योऽसि देवो महांश्चिन्ताप्रावरणं० ॥ २६ ॥ चिन्ताया दृढतैव जागृतिरथो शैथिल्यमेव स्वपिः सौपुप्तं घनतैव विश्वमखिलं चैतत्त्रयान्नो परम् । तत्त्यागः परमः पुमर्थ इह ते कैवल्यसंदायकश्चिन्ताप्रावरणं० ॥२७॥ कैवल्यं सहजं तवास्ति महिपश्चिन्तोत्थितस्तत्तनोर्मज्जां भुङ्क्ष्व महाचितिं सुमधुरां दत्तादिभिः सेविताम् । मद्वाणीं महिपासुरप्रमथनीं संस्थाप्य हृन्मन्दिरे चिन्ताप्रावरणं० ॥ २८ ॥ हत्वैतौ मधुकैटभौ विधिनिषेधाख्यौ मलौ कर्णयोरेकान्धौ निगमान्तनेतिवचनागस्ये महाहौ वस । कर्तृत्वं तव नेति मे शुभवचःपङ्क्तिं भजन्कालिकां चिन्ताप्रावरणं० ॥ २९ ॥ वाणी त्वं तदसि प्रकाशपरमं दृश्ये प्रमाणं यथाऽदर्शः स्वप्रतिबिम्बितेष्वितिं महापूर्वां सरस्वत्युमा । विक्षेपावरणौ निहन्ति कलिता शुम्भं निशुम्भं क्षणाच्चिन्ताप्रावरणं० ॥ ३० ॥ विश्वं वाग्जनितं च कामविधृतं ब्रह्मात्मकं निर्भयं नोत्पन्नं न च नाशमेति सहसा चिन्तेति बोधप्रदाम् । बालां ते प्रदिशामि पालय सदा त्वं सावधानो यते चिन्ताप्रावरणं० ॥ ३१ ॥ गन्धादीनि घटादिकं प्रतिवसन्त्यात्माश्रयं स्फोरयन्त्यद्धा तं न विकुर्वते त्वयि तथा मायेति विद्मो वयम् । चिन्ताजीवनिका न ते जवनिका त्रस्तोऽसि चेच्छ्रूयतां चिन्ताप्रावरणं० ॥ ३२ ॥ तत्त्वं त्वद्वयमेव विस्मर सखे द्वैतं यथा हेमकं

बुध्वा विसरसि प्रियं दृढतरं प्राग्बुद्धधातुं यथा। चिन्तां मा कुरु शास्त्रजन्यसुमतिध्वंसैकदीक्षाधरां चिन्ताप्रावरणं विदार्य झटिति स्वस्थः सुखी त्वं भव ॥ ३३ ॥ अस्त्येवानुभवोऽनुभूतिविषयोऽप्यस्तीति चेदुच्यतां वैलक्षण्यमपीन्द्रजालजगतोर्विस्मृत्य जालेक्षणम्। शास्त्रं विस्मृतमेव बोधयति चेद्विस्मृत्य विश्वेक्षणं सिद्धं स्वं स्मर विस्मृतिस्मृतिपदं किं वा तया चिन्तया ॥ ३४ ॥ एकं संसरतोऽपरत्र न मनो गच्छेन्मृषात्वे कुतः सत्यत्वं वद विस्मृतेर्जनिजुषो विश्वस्य कस्माद्भवेत्। एतद्बोधघनत्वमुक्तपदवीं तत्राभिषेकं स्वयं स्वीकृत्येतरचिन्तनं जहि शिशो स्वाराज्यमङ्गीकुरु ॥ ३५ ॥ यज्जातं तदभून्न भावि तु पुनर्विज्ञायते कैरपि प्रारब्धं त्विह भुज्यते न करगं तच्चेश्वरायत्तकम्। योगक्षेमवहो हरिर्विजयते कर्मापि तच्चापि नो चिन्ताप्रावरणं प्रदह्य सहसा भस्माङ्गरागो भव ॥ ३६ ॥ पारोक्ष्यं कल्पयित्वा प्रथमपुरुषकः कल्पयित्वा परोक्षाध्यक्षत्वे मध्यमस्त्वं भवसि तदुभयं दूरयित्वोत्तमोऽभूः। त्वामेव स्तौति कृष्णः सकलनरसखः सर्ववेदार्थवेत्ताऽवस्थासाक्षी परात्मेत्यत इदमुदितं सत्यमेवेति विद्धि ॥ ३७ ॥ दृश्यं नास्ति त्वमेवासि तस्मात्त्वं ब्रह्म निर्भयम्। इति बोधयते तारः सर्ववेदार्थसंग्रहः ॥ ३८ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां सर्वशास्त्रार्थसंग्रहो नाम प्रथमोऽध्यायः ॥ १ ॥

---

उत्तरात्पूर्वपूर्वं तु क्रमान्न्यूनगुणं मतम्। क्षित्यादिवियदन्तं तत्कारणं निर्गुणं क्रमात् ॥ १ ॥ गन्धाकाशो रसाकाशे रूपाकाशे च स स्मृतः। स्पर्शाकाशे रूपवियच्छब्दाकाशे च स स्मृतः ॥ २ ॥ शब्दाकाशश्चिदाकाशे चिदाकाशात्मकं जगत्। अखण्डैकघनं वत्स चिदाकाशं त्वमेव हि ॥ ३ ॥ गन्धे पृथ्वी रसे नीरं रूपे तेजो

मरुत्स्पृशि । शब्दे नभः स्वयं ज्ञाने कल्पितोऽन्ये न किंचन ॥ ४ ॥ द्रव्यसत्ता यथा जातिसत्तां निर्वाहयेत्तथा । तथा विश्वगतां सत्तां ब्रह्म निर्वाहयेन्न किम् ॥ ५ ॥ वत्स किं बहुनोक्तेन चिन्तापाशो हि दुर्जरः । कैवल्यबोधखड्गेन तं निकृत्य सुखी भव ॥ ६ ॥ चिन्ता विगलिता नूनं विश्वं कापि पलायितम् । ॐनमःसिद्धमित्येव मन्त्रः सिद्धो मयेक्षितः ॥ ७ ॥ शेषसुन्दरशय्यायां जनार्दन इवापरः । मोक्षलक्ष्मीं समालिङ्ग्याऽखण्डं भुङ्क्ष्व सुखं शिशो ॥ ८ ॥ गुरोः पादौ कल्पवृक्षौ तद्वागस्तीह कामधुक् । तत्करश्चातपत्रं मे दुःखवार्ता कुतो मम ॥ ९ ॥ पितृवंशसमुद्भूतः संसारं प्रतिपद्यते । गुरुवंशसमुद्भूतो मोक्षमेवाश्नुवान्यहम् ॥ १० ॥ प्रतिबिम्बाः प्रमाणानि मुकुरे तद्वदेव हि । शास्त्रं गुरुर्जगन्मायापीश्वरस्त्वयि निर्मले ॥ ११ ॥ त्वमर्थाद्विदितादन्यस्तदर्थादप्यगोचरात् । अन्योऽस्म्यहं स्वयंज्योतिरखण्डो ब्रह्म निर्भयम् ॥ १२ ॥ वैराग्यं श्रूयतां चित्ते विषयाणामनागतिः । स एव परमो मोक्षः सर्वतीर्थिकसंमतः ॥ १३ ॥ तन्नास्तित्वं श्रुतिर्वक्ति मोक्षदुर्लभता कुतः ॥ १४ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां सर्वशास्त्रार्थानुभवारोहो नाम द्वितीयोऽध्यायः ॥ २ ॥

---

विचारस्त्वन्यविषयव्यावृत्तौ दीक्षितः स्मृतः । अतो लेभेऽक्षपादत्वं गौतमेन महर्षिणा ॥ १ ॥ देहं विस्मर कल्याणस्वरूपं स्मर चिद्घनम् । एतद्व्रतं समालम्ब्य मोक्षमेव समश्नुहि ॥ २ ॥ पुनः देहं खलाः स्मारयन्ति स्वरूपं साधवो जनाः । खलसङ्गं परित्यज्य साधुसङ्गं समाश्रय ॥ ३ ॥ नमस्कुरु खलेभ्यस्त्वं साधुभ्योऽपि नमस्कुरु । पापक्षयः स्वात्मबोधो याभ्यां निर्वाह्यते तव ॥ ४ ॥ गुरुप्रसादो बलवान्न तस्माद्बलवत्तरः । यदस्माल्लभ्यते मोक्ष इतर-

स्मात्तु संसृतिः ॥ ५ ॥ यथा कामः सुन्दरीषु रमस्व त्वं तथात्मनि । यथा क्रोधः शत्रुनाशे रमस्व त्वं तथात्मनि ॥ ६ ॥ यथा लोभो धने पित्र्ये रमस्व त्वं तथात्मनि । यथा मोहो वेद्यवर्गे रमस्व त्वं तथात्मनि ॥ ७ ॥ यथा मदः सुन्दरत्वे रमस्व त्वं तथात्मनि । मत्सरोऽन्योन्नतिध्वंसे रमस्व त्वं तथात्मनि ॥ ८ ॥ अहङ्कारः स्वीयगुणे रमस्व त्वं तथात्मनि । भूते भव्ये यथा चित्तं रमस्व त्वं तथात्मनि ॥ ९ ॥ यथा बुद्धिर्वस्तुतत्त्वे रमस्व त्वं तथात्मनि । यथा मनो गुणे दोषे रमस्व त्वं तथात्मनि ॥ १० ॥ यथा पृथ्वी क्षमावत्त्वे रमस्व त्वं तथात्मनि । यथा जलं शीतलत्वे रमस्व त्वं० ॥ ११ ॥ यथा तेजस्तमोनाशे रमस्व त्वं० । यथा वायुः स्पन्दविधौ रमस्व त्वं० ॥ १२ ॥ यथा शब्दोऽर्थविज्ञाने रमस्व त्वं० । यथा ब्रह्म निजानन्दे रमस्व त्वं० ॥ १३ ॥ यथैवेन्द्रो निजैश्वर्ये र० । यथा कालो भारवाहे रमस्व त्वं० ॥ १४ ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते यथा स्वकृत्येषु रमस्व त्वं तथात्मनि ॥ १५ ॥ पितृरूपेण सृजसि मातृरूपेण रक्षसि । गुरुरूपेणोद्धरसि तस्मै श्रीगुरवे नमः ॥ १६ ॥ ॐनमः सिद्धरूपाय सिद्धज्योतिःप्रकाशिने । सिद्धज्योतिःस्वरूपाय तस्मै श्रीगुरवे नमः ॥ १७ ॥ पितृरूपेण जागर्षि पितृशब्दप्रबोधितः । जागृहि ब्रह्मरूपेण ब्रह्मशब्दप्रबोधितः ॥ १८ ॥ पितृरूपेण यद्वत्त्वं पुत्रेण सह वर्तसे । ब्रह्मरूपेण तद्वत्त्वं वर्तस्व जगता सह ॥ १९ ॥ देवरूपेण पाषाणस्तथा जागर्त्युपासितः । तथा त्वं ब्रह्मरूपेण जागृहि ब्रह्मशब्दितः ॥ २० ॥ देवरूपोऽस्ति पाषाणस्तथा जागर्त्युपासितः । ब्रह्मरूपोऽसि भो जीव तथा जागर्ष्युपासितः ॥ २१ ॥ महावाक्यप्रतोदेन जागृतिं नीयसे मया । त्वं ब्रह्मासि प्रकाशोऽसि वत्स जागृहि जागृहि ॥ २२ ॥ वेदाः स्तोतुं समायाता द्वारि तिष्ठन्ति वन्दिनः । शीघ्रं जागृहि विश्वात्मन् यो जागार ऋचं शृणु ॥२३॥

अधीत्य गौतमीं विद्यां परमाणावतीन्द्रिये । अधीत्य कापिलीं विद्यां तत्प्रधानेऽप्यतीन्द्रिये ॥ २४ ॥ अधीत्य नास्तिकग्रन्थाञ्शून्ये जागर्ति चेज्जनः । नित्योपलब्धे चिद्रूपे जागृतिर्दुर्घटा कथम् ॥२५॥ उपलब्धेऽपि या निद्रा विस्मृतिः सा प्रकीर्तिता । माया साऽनुपलब्धेऽपि जागृतिः सर्वसंमता ॥ २६ ॥ उपलब्धे जागृतिश्चेदलब्धं विद्धि रत्नसौ । तत्कारणकमप्यस्मि जागृतिर्द्वैतनाशिनी ॥ २७ ॥ तूष्णींभावान्निजानन्दान्नादसंभव इष्यते । विश्रान्तिमेति तत्रैव सदसद्वाप्यबोधयन् ॥ २८ ॥ तदभिन्नः शब्दगणः सच्चाऽसच्चापि बोधयेत् । न तत्र तस्य तात्पर्यं वर्णनीयं विचारिभिः ॥ २९ ॥ उपक्रमानुसारित्वं युक्तं चाप्युपसंहृतेः । यत्र मृत्स्नोपसंहारस्तद्विकारस्य तत्र हि ॥ ३० ॥ अतो नेतीति वचनं नेह नानास्ति किंचन । इति नादावसानं हि निषेधत्यखिलं जगत् ॥ ३१ ॥ इत्यभिप्रेत्य नादान्ते ओमिति श्रुतिराह सा । प्रणवे प्रकृतौ लीने शिष्टः शिव इति श्रुतिः ॥ ३२ ॥ प्रणवो नादरूपत्वादासन्येवावसीयते । ज्ञात्वा वदसि यस्मात्त्वं तस्मात्त्वं शब्दकारणम् ॥३३॥ अनन्तरं च तद्वेत्सि त्वमेव परमोऽवधिः । संकेतशक्त्या वर्णास्तु विश्राम्यन्ति स्वगोचरे ॥ ३४ ॥ संकेतत्यागतो वर्णा नादशक्त्या सशक्तिकाः । घटशक्तौ विलीनायां मृत्स्नाशक्तिर्न हीयते ॥ ३५ ॥ अतएव महावाक्यं सङ्केतत्यागमात्रतः । नादशक्त्या ब्रह्म शुद्धं बोधयेद्वागगोचरम् ॥ ३६ ॥ नादः सहजशक्त्यैव बोधयेद्वागगोचरम् । गन्धः सहजशक्त्यैव पृथिवीं बोधयेद्यथा ॥ ३७ ॥ आदर्शं प्रतिबिम्बस्तु सहजं बोधयेद्यथा । मात्रात्रयपरित्यागे यच्छिष्टं तत्परीक्ष्य ॥ ३८ ॥ सार्धमात्रा स प्रणवः स नादः परिकीर्तितः । स बोधयेत्परं ब्रह्म मनोवाचामगोचरम् । अवस्थात्रयसंत्यागे यः शिष्येत्तं परीक्षय ॥३९॥ परीक्षिते स एव त्वं भूत्वा जानासि तत्परम् । ब्राह्मण्यज्ञानलिप्सा चेद्ब्राह्मणेनैव भूयते ॥ ४० ॥ ब्रह्मत्वज्ञा-

न्तलिप्सा चेद्ब्रह्मणैव हि भूयताम् । चिदाकाशे वाङ्मयीयं विद्यु-
त्कचकचायते ॥ ४१ ॥ आकाशमविकुर्वाणा दर्शयन्ती नभःश्रि-
यम् । सत्त्वचित्त्वसुखत्वानि पर्वतान्भेत्तुकामुकी ॥ ४२ ॥ भित्त्वा
कुत्रापि लीयेत तद्वक्तुं केन शक्यते । तत्कैवल्यपदं विद्धि लभ्यते
चरमे भवे । स एव सर्वशब्दानामर्थोऽतोऽहमिति स्मरेत् ॥ ४३ ॥
परा वागियमेवास्ति प्रकाशात्मप्रकाशिनी । प्रकाशैक्यं समापन्ना
परा प्रासाद उच्यते ॥ ४४ ॥ शिवशक्त्यैक्यतापीयं मोक्षोऽयं सुख-
शेवधिः । दृश्यं नास्तित्वमायातं निशीथो घनतां गतः ॥ ४५ ॥
आत्मापि चण्डमार्तण्डो मध्यदेशस्थितिं गतः । किं निशीथमहं
वच्मि किमहर्वा ब्रवीम्यहम् ॥ ४६ ॥ श्रीगुरोर्वाक्चमत्कारमहिमा
केन वर्ण्यते । मा निशीथं ब्रूहि वत्स माहर्वा ब्रूहि सन्मते ॥४७॥
कृतकृत्यत्वमापन्नस्तूष्णीं तिष्ठ हसाथवा । सर्वं जगत्कवलितं माता
त्वमसि हे गुरो ॥ ४८ ॥ विज्ञापितं वागतीतं पिता त्वमसि हे
गुरो । अभीष्टं फलमापन्नं कल्पस्त्वमसि हे गुरो ॥ ४९ ॥
चिन्तितं स्वस्थले प्राप्तं गुरो चिन्तामणिर्मम । तवान्तं नैव जानामि
वाधिस्त्वमसि हे गुरो ॥ ५० ॥ उपास्यदेवतैव त्वमतस्ते करुणे-
दृशी । कां कुर्यां तव हे नाथ सेवां तृप्तस्य सर्वदा ॥ ५१ ॥
पादुकां देहि मे शीघ्रं धारये शिरसा सदा । यथादिष्टं शिरःस्थेन
गुरुणा ज्ञानमूर्तिना ॥ ५२ ॥ तथा हृदिस्थदेवेन लिखितं स्वात्म-
तृप्तये । यो यथा वेत्ति यत्तत्त्वं सर्वो लिखति तत्तथा ॥ ५३ ॥
रसोपलब्धिश्चेत्तत्र न त्रस्यति बुधो जनः । दिदृक्षा चेदस्ति तव
प्रतिश्लोकं परीक्षय ॥ ५४ ॥ सहसैव गुणो दोषो न प्रकाशेत
कर्हिचित् । पदार्थो द्विविधो लोके शब्दोऽर्थश्चेति संमतः ॥ ५५ ॥
अर्थमात्रं शब्दभास्यं शब्दभास्ये क सत्यता । प्रमाणं च प्रमेयं च
प्रमाशब्देन भासते । क प्रमाणं क प्रमेयं क प्रमा क प्रमा-
तृता ॥ ५६ ॥ शब्दमात्रैकभासानां क सत्ता क च भास्वता ।

तस्माद्वाङ्मात्रमित्येव मन्तव्यं सर्वतैर्थिकैः ॥ ५७ ॥ वाचारम्भणमित्येवमतो वक्ति श्रुतिर्जनान् । संकेतशक्तिसंसक्तं शक्यते लक्षणास्विव ॥ ५८ ॥ सर्वसंकेतसंत्यागे तूष्णीं शब्दगणः स्थितः । तदा नादस्वरूपेण सर्वः शब्दगणः स्थितः ॥ ५९ ॥ नादः स्वघनतां यातस्तद्विष्णोः परमं पदम् । संकेतस्मरणं साधो व्युत्थानस्यैव कारणम् ॥ ६० ॥ तद्विस्मरणमेवात्र ते समाधानकारणम् । न त्वं नाहं नैव लोकास्त्वमेकोऽसि निरञ्जनः ॥ ६१ ॥ यो नादस्तन्मनो विद्धि ऋगाद्यङ्गमिति श्रुतेः । स्थूलं वर्णात्मकं नादरूपं सूक्ष्मं भवेन्मनः । नादस्य लय एवातो मनोलय इति स्मर ॥ ६२ ॥ सुस्नाता नादगङ्गेयं वर्णैः पर्वणिपर्वणि । स्वगेहं प्रापयत्येव तद्विष्णोः परमं पदम् ॥ ६३ ॥ श्रावंश्रावं मधुरमधुरं श्रीगुरो त्वद्वचांसि पाय्यंपाय्यं परमममृतं पूर्णपूर्णं मनो नः । गाढंगाढं तव पदयुगं श्लेपयन्तो वसामः स्मारंस्मारं तव हि चरितं शेपमायुः क्षिपामः ॥ ६४ ॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वाऽनुसृतः स्वभावात् । करोमि यद्यत्सकलं परस्मै श्रीदेशिकेन्द्राय समर्पये तत् ॥ ६५ ॥ गुरो कैवल्यगाथेयं न श्रुता कापि जन्मनि । अतो जन्म समापन्नास्तदद्य सफलीकृतम् ॥ ६६ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां स्वरूपस्थितिदृढीकरणं नाम तृतीयोऽध्यायः ॥ ३ ॥

---

नादाद्वर्णास्ततो धातुस्ततः प्रत्ययसंभवः । ततस्तु पुरुषा जाताः प्रथमोत्तममध्यमाः ॥ १ ॥ ततोऽसौ व्यवहारोऽभूत्कर्तृभोक्तृविदन्वितः । वर्णेभ्यो नातिरिच्यन्ते धातवः प्रत्यया अपि ॥ २ ॥ पुरुषा अपि ते वर्णा नादो नादश्चिदात्मकः । चिदात्मा त्वं नित्यशुद्धबुद्धः केवलसंस्थितिः ॥ ३ ॥ कार्याणां नाशभीरूणामाधारो भैरवोऽस्म्यहम् । अद्वितीयचिदानन्दस्व-

रूपोऽतः शिवोस्म्यहम् ॥ ४ ॥ कुपूरुषः किंपुरुषो महापुरुष इत्यपि । अस्त्यन्यो वेदपुरुषो विराट्पुरुष इत्यपि ॥ ५ ॥ अतोऽन्यः कालपुरुषः प्रथमाद्याश्च पूरुषाः । सर्वे ते पुरुषा वत्स पुरुषोत्तमरूपिणः ॥ ६ ॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । इत्याह भगवान्साक्षादर्जुनाय कृपाकरः ॥ ७ ॥ शृण्ववस्थात्रयं वर्णत्रयेण कवलीकृतम् । उत्तमः पुरुषस्त्वं तु क्षराक्षरविभागकृत् ॥ ८ ॥ परमात्मासि सर्वात्मा यतोऽहमिति भाषसे । अबाधितत्वात्परमः सर्वात्मा सर्वशब्दभुक् ॥ ९ ॥ आदिहान्तो वर्णसङ्घो यतोऽहमिति भण्यते । ततः सर्वाणि नामानि तत्ते स्वरसतोऽभिधा ॥ १० ॥ पित्रोपस्थितसर्वेषु नामस्वेकं हि गृह्यते । यथा भक्तो हरेर्नाम गृह्णात्येकमभीप्सितम् ॥ ११ ॥ तत्राभिमानी तेनैव बुध्यसे श्रीहरिर्यथा । अतः सर्वात्मपरमात्मत्वैश्वर्यं सुखं भज ॥ १२ ॥ कृतकृत्योसि मुक्तोसि बुद्धोसि स्वस्थतां भज । यथा हृदिस्थया देव्या वाङ्मय्या प्रेरितोस्म्यहम् । तथैव प्रोक्तवांस्तेन सैवाम्बा परितुष्यतु ॥ १३ ॥ शिक्षयित्वा यथा बालं भाषयित्वा परां मुदम् । उपैति जननी तद्वदत्राम्बापि हि तुष्यति ॥ १४ ॥ यत्पश्यसि यदादत्से यच्छृणोषि वदस्यपि । सर्वं तद्वाङ्मयं ज्योतिरहमेवेति भावय ॥ १५ ॥ अहं गर्भे बिभर्म्येतन्मात्रात्रयकलेवरा । सृजामि विविधान्वर्णान्वाक्यानि विविधानि च ॥ १६ ॥ तैस्तैर्मुहुर्हासयामि रोदयामि पदेपदे । मोदयामि चमत्कारैः क्रीडयामि निजं पतिम् ॥ १७ ॥ क्रीडायां तनुजो जज्ञे षण्मुखस्तु षडिन्द्रियः । तदुपासनया जन्तुर्ब्रह्मचर्यं समश्नुते ॥१८॥ द्वितीयो गणपः पुत्रो वर्णत्रयकलेवरः । अष्टमूर्तिर्वागधीशस्तत्प्रसादाद्यशोऽश्नुते ॥ १९ ॥ लक्ष्मीं पुत्रं कलत्रं च सर्वत्र रसिको भवेत् । ताभ्यामिमाभ्यां पुत्राभ्यां क्रीडयामि निजं पतिम् ॥ २० ॥ यत्राहं सोपि तत्रैव यत्र सोस्त्यस्मि तत्र च । स दर्शयति

मां तं च दर्शयाम्यहमादरात् ॥२१॥ बीजं तस्यास्ति मे गर्भे ततो जायेति तान्त्रिकाः । ब्रह्मविष्णिवन्द्ररुद्रादीन्सृजेऽहं पालयेपि च ॥ २२ ॥ संहरामि च कालेन न त्रस्यामि कदाचन । यदा त्रस्यति मे भर्ता तदा त्यजति किंचन ॥ २३ ॥ किंचिद्ब्रह्माति विकलः क्रीडावासनयान्वितः । कंचिच्च शरणं याति कंचिन्मन्त्रं जपत्यसौ ॥ २४ ॥ यदाहं गुरुरूपेण तारं यच्छामि मद्वपुः । तदुपास्ते यावदेव तावद्ब्रह्मपदं व्रजेत् ॥ २५ ॥ तद्विचारयितुं यावत्प्रवृत्तस्तावदेव हि । तिस्रूर्मात्रास्त्यजाम्येव त्याजयामि वपुस्त्रयम् ॥ २६ ॥ तदावयोः संगमेन सामरस्यं प्रवर्तते । तमानन्दमहं वक्तुमशक्ता सोपि न प्रभुः ॥ २७ ॥ तस्यानन्दस्य नान्तोस्ति देशतः कालतोऽपि वा । मम नाम तदा मोक्षलक्ष्मीस्तस्य शिवः परम् ॥ २८ ॥ ताराहं तारये यस्मात्तारदानेन मामकान् । काल्यहं द्वैतसंहाराल्ललिता सामरस्यतः ॥ २९ ॥ पराहं शब्दविस्तारपराकाष्ठास्मि वै यतः । विचारस्य पराकाष्ठा मय्येवातः पराम्बिका ॥३०॥ वाचारम्भणवाक्यं चेद्विचारयसि वेत्स्यसि । इमां गाथां प्रतिपदं यो विचारयते नरः ॥ ३१ ॥ लभते मोक्षपदवीमत्र मानमहंश्रुतिः । एतदाम्भृणिसूक्तेन ऋग्वेदे गदितं मया ॥३२॥ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद मम प्रसादात् ॥ ३३ ॥ मत्प्रसादोऽयमेवात्र जगन्मिथ्यात्वबोधनम् । मत्प्रसादात्परां शान्तिमचिरेणाधिगच्छति ॥ ३४ ॥ पश्य कृष्णो भवद्बाल्ये गोपस्तस्मात्प्रभावतः । रेमे रासे गोपिकाभिर्नानावर्णाभिरच्युतः ॥ ३५ ॥ अङ्गनामङ्गनामन्तरे सोऽभवत्ताश्च वाचो मंमानेकवर्णागमाः । नादलुब्धा घने सन्निशीथे हरिर्द्वैतबाधादतश्चिद्विधौ काशिते ॥३६॥ नानावर्णाकर्पणेन नादे द्वैतनिषेधनात् । वागभिन्ना ततः प्रोक्तः कृष्णानन्दसरस्वती ॥ ३७ ॥ इन्द्रियाणां हि विषया यथैवामि-

षतां गताः। तथास्माभिर्षतां यातु वचसो मनसस्तव ॥ ३८ ॥ यदा शब्दस्तदा विश्वमास्त्येवात्रभासते। यदा न शब्दो न तदा भासते त्वं हि शिष्यसे ॥ ३९ ॥ तस्माद्दर्पणदृश्यमाननगरीतुल्यं जगद्भासते स्वादर्शे सकलातिगे सकलगे सर्वप्रिये शाश्वते। सच्चिच्छब्दविमर्शनेन मलिने नेतीति संमार्जिते चिन्ताप्रावरणं विहाय सहसाऽऽनन्दाम्बुधौ मज्ज भोः ॥ ४० ॥ उपास्महे वयं तत्तु ज्योतिर्वाग्ज्योतिरिन्धनम्। निरिन्धनं धनं तेषां येषां वाग्देवताशिषः ॥ ४१ ॥ तत्स्तुवीमो वयं ज्योतिर्वाङ्मयं केन वा कथम्। मया प्रकाश्यते तत्तु येनाहं च प्रकाशितः ॥ ४२ ॥ तां वाचममृतासारवर्षिणीं मृतिहारिणीम्। तारिणीं सच्चिदानन्दरूपिणीं सततं श्रये ॥ ४३ ॥ गुरुर्वागेव नान्योऽस्ति देवः स्वात्मैव नापरः। अतः श्रीसच्चिदानन्दसरस्वत्याः परो न मे ॥ ४४ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां श्रीगुरुरूपवाग्देवतोक्तिर्नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

अन्यच्च शृणु हे वत्स रहस्यं संशयापहम्। शब्दात्सृष्टिः कथमभूदिति मा संशयं वह ॥ १ ॥ मन्त्राच्छब्दमयादिन्द्रजालं सृजति मानवः। स्तम्भनादीनि कर्माणि जायन्ते शब्दतः खलु ॥ २ ॥ रागद्वेषादयो दोषाः शब्दादेव हि लौकिकाः। स्वर्गादयो मन्त्रसाध्या राजादेः सुप्रसन्नता ॥ ३ ॥ धनलाभादयस्तेषां रक्षणादीनि शब्दतः। तस्मात्सृष्टिः शब्दमयी चिन्मयी तत्र भासनात् ॥ ४ ॥ यथा परिणमेच्छब्दस्तथा विश्वस्य भासनम्। शब्दो ज्योतिर्मयस्तस्मात्तमोऽपि च विभासते ॥ ५ ॥ अन्धकारेऽपि शब्देन भासते सकलं जगत्। देहप्राणमनोबुद्धिसुखाख्यं कोशपञ्चकम् ॥ ६ ॥ अवस्थास्तत्र भोगाश्च शब्दमात्रान्न चेतरत्। शब्दमेव तमो विद्धि सूर्यादिज्योतिषां गणम् ॥ ७ ॥ उच्चारितोऽपि

शब्दस्तु परिणामं न याति चेत् । न तदास्त्यर्थविज्ञानं परिणामे तु तद्भवेत् ॥ ८ ॥ अतः सर्वपदार्थेषु लभ्यते शब्द एव हि । अतोऽग्निबीजं जपतामूष्मा देहेषु दृश्यते ॥ ९ ॥ चन्द्रबीजं प्रजपतां शीतलत्वं प्रदृश्यते । शान्तिबीजं प्रजपतां शान्तिस्तेषां गृहे स्थिता ॥ १० ॥ तस्माच्छब्दमर्थीं सृष्टिं विश्वस्य त्वं सुखी भव । शब्द एव घनीभूय विषयेन्द्रियसंज्ञकः ॥ ११ ॥ इन्द्रियाणामिन्द्रियं त्वमिन्द्रियं विषयं तथा । जानीषे चित्प्रदीपत्वाच्छब्दास्ते रश्मयः स्मृताः ॥ १२ ॥ वर्णान्पश्यसि तत्रैव संकीर्णास्तेन ते भ्रमः । वर्णसंकरयोगेन विश्वजालं ततं दृढम् ॥ १३ ॥ तान्वर्णान्नादसंरूढान्विद्धि नादात्मकान्स्वतः । यथासंकेतमेवैते वेदयन्त्यर्थजालकम् ॥ १४ ॥ असंभवे सन्निहितं गङ्गाशब्दो यथा तटम् । गङ्गात्वरहितं तद्वद्दृश्यं दृश्यबाधने ॥ १५ ॥ जातौ संबाधितायां तु जात्यतीतं प्रचक्षते । गुणे संबाधिते तत्त्वमगुणं बोधयन्ति ते ॥ १६ ॥ क्रियायां बाधितायां तु वेदयन्ति क्रियातिगम् । विचाराच्छब्दमात्रत्वे सर्वेऽर्था बाधिताः स्वतः ॥ १७ ॥ तदतीतं च किंचित्तु वेदनीयं यथा तटम् । नादशक्त्योपस्थितं तद्वागतीतं परं पदम् ॥ १८ ॥ बोधयित्वा शमं यान्ति सर्वे वर्णा न चान्यथा । अज्ञाततत्त्वाद्वाग्भूतिस्तत्त्वबोधाय चेष्यते ॥ १९ ॥ यथा किमिदमित्येवमुत्थिता वाङ् शाम्यति । इदमित्येव निर्णीय बोधे शाम्यति केवलम् ॥ २० ॥ वाग्जोतिर्बोधसंभूतमज्ञानतिमिरापहम् । पदशक्त्या लक्षणया नादशक्त्याथवार्थकम् ॥ २१ ॥ यथायोगं बोधयित्वा व्युत्पन्नं प्रतिशाम्यति । यथा सूर्यादिज्योतींषि काङ्क्षन्ते चक्षुषो बलम् ॥ २२ ॥ व्युत्पत्तिमपि वाग्जोतिस्तथैवाकाङ्क्षते बलम् । अव्युत्पन्नेषु चाज्ञानं बोधयित्वैव शाम्यति ॥ २३ ॥ न जाने किं वदत्येष इति लोकस्य चानुभूः । अथवा बोधयत्येष वक्तुर्वा निर्विचारणम् । अविवेको विवेको वा निमित्तं

न तु जन्मभूः ॥ २४ ॥ जन्मभूर्वागतीतं तत्परमं ज्योतिरेव हि । घटस्य हि घटातीता मृदिवेहेष्यते बुधैः ॥ २५ ॥ तस्य तस्य लयस्तत्र यस्माद्यस्य समुद्भवः । अतो लयस्तु तारस्य ब्रह्मण्येवो-पपद्यते ॥ २६ ॥ नाकाशे नापि शबले मात्राभिश्च निषेधनात् । तदतीते परे शुद्धे बुबोधयिषया गतः ॥ २७ ॥ तदतीतस्तु तत्रैव जानन्नेव हि तत्रयम् । स्थितस्तं बोधयित्वा तु तत्रैव लयमेति सः ॥ २८ ॥ तदेव हि परं ज्योतिः स एव परमः शिवः । सैव शक्तिः परा तारा स महाकाल उच्यते ॥ २९ ॥ नारायणः स एवेति सैव श्रीजगदम्बिका । स एव बिन्दुः सर्वात्मा ततो नादो व्यजायत ॥ ३० ॥ तारात्मा तत एवेमे वर्णा अकथसंज्ञकाः । प्रत्याहारेणाथ इति प्रोच्यते लोकवेदयोः ॥ ३१ ॥ एतदादि त्रिकोणं स्याद्धळक्षमणिमण्डितम् । हकारो युज्यतेऽज्भिस्तु यो विसर्गस्वरूपकः ॥ ३२ ॥ ळकारो युज्यते हल्भिर्दुःस्पृष्टत्वं प्रबोध-यन् । क्षकारो भेदमेवाह शिवशक्त्योरचां हलाम् ॥ ३३ ॥ अत-स्तदुल्लङ्घनं तु नेष्टं वर्णविचारिणाम् । मध्ये सोऽहं मनुं केचिच्छि-वशक्त्यात्मकं विदुः ॥ ३४ ॥ केचिन्नादावसानस्याभेदबोधकमू-चिरे । द्रष्टासौ वर्णसङ्घेन वेष्टितः परमेश्वरः ॥ ३५ ॥ स यथा वर्णविन्यासं कुर्यात्पदगतिस्तथा । आदिळान्तो वर्णसङ्घो वेदराशिः स्मृतो बुधैः ॥ ३६ ॥ तद्रसः सोऽहमित्येव सर्ववेदार्थनिर्णयः । तस्य ज्ञानाधिकारार्थं धर्ममार्गः प्रवर्तितः ॥ ३७ ॥ कर्म चोपा-सना चेति द्विविधो धर्म इष्यते । स धर्मो योग इत्याहुरन्यव्या-वृत्तिलक्षणात् ॥ ३८ ॥ एषैव चापरा विद्या परा वस्तुपरीक्षणम् । मन्वाद्या अपराचार्याः पराचार्याः शिवादयः ॥ ३९ ॥ अपरायां शिक्षितस्य परायामधिकारिता । तत्र त्रयं परीक्ष्यं स्यात्स कः कोऽहमिदं च किम् । अथवा द्वयमेव स्यादस्ति किं नास्ति किं भवेत् ॥ ४० ॥ उभयत्रापि दृश्यस्य शब्दमात्रस्वरूपिणः ।

मिथ्यात्वं नहि तद्द्रष्टुर्भाने शब्दानपेक्षणात् । यथा सर्पः शब्दकामस्तथा रज्जुरपीति चेत् ॥ ४१ ॥ मिथ्यात्वं तुल्यमेवेह नाला शब्दानपेक्षणात् । अहमस्म्येव सद्रूपो दृश्यादृश्यातिगः परः । दृश्यादृश्ये शब्दकामे न सती इति सा परा ॥ ४२ ॥ शिवाद्याः सनकाद्याश्च दत्ताद्याश्च महर्षयः । अन्ये च सिद्धगुरवो विक्रीणन्ति निजापणे ॥ ४३॥ परीक्षयन्त्यागतं च पृच्छन्ति क कुतोऽसि कः । प्रतिवक्त्यनुभूतं च देशं हेतुं निजान्वयम् ॥ ४४ ॥ स्वं च नाम्ना सहैवैतद्धसन्ति कथयन्ति च । किं त्वं बाल्येऽप्येवमेवावादीः किं त्वं न शिक्षितः ॥ ४५ ॥ पितृभ्यां गुरुणा वापि न किंचित्प्रतिबोधितः । बोधितोऽहं ब्राह्मणोऽसि कर्तास्यस्य सुतोऽपि च ॥ ४६ ॥ तद्विश्वस्य ब्रवीम्येवं ब्रूत यूयं स्ववृत्तकम् । अस्मद्देशे कोऽपि नास्ति नास्माकं जातिरिष्यते ॥ ४७ ॥ न माता न पिता बन्धुर्न कालो नापि सत्क्रिया । सर्वभक्षा धर्महीना मौनिनोऽपि च वाग्मिनः ॥४८॥ किं भ्रष्टाः सत्यमुक्तं ते भ्रंशयामोऽपि कर्मणः । अत्रापणे तु बहवो भ्रष्टा दत्तशुकादयः ॥ ४९ ॥ भ्रंशयन्त्येव ते लोकान्पण्डितान्वाक्यकोविदान् । यशः श्रुत्वैवागतेन ज्ञातं वो रूपमक्षतम् ॥ ५० ॥ स्वं रूपं त्वं न जानीषेऽस्माकं वेत्तुं कथं क्षमः । स्वरूपं न कुतो जाने युष्मदग्रे स्थितो न किम् ॥ ५१ ॥ अस्माकमग्रे स्तम्भोऽपि स किं भवितुमर्हसि । स मे दृष्टिपथारूढो नाहं चेत्ते वपुस्तथा ॥५२॥ आस्तामत्रापणे कस्मादागतस्त्वं वदाशु नः । कोऽहमस्मीतीक्षयितुं नास्ति किंचास्ति किं स कः ॥ ५३ ॥ इति चेद्वद हे वत्स सावधानेन चेतसा । कस्मादयं संशयस्ते देहादौ ममता मम ॥ ५४ ॥ अहन्तापि च तत्रैका निर्धार्य वद देशिक । अहं चेन्मृत एवास्मि मम चेत्प्रायशो मृतः ॥ ५५ ॥ त्वदन्यः संशयस्यास्य छेत्ता नह्युपपद्यते । दृश्यं नानुसरत्येवानुसराम्येव तत्सदा ॥ ५६ ॥ आवामत्र गतिः का स्यान्नियन्ताऽस्य क कीदृशः ।

धन्योऽसि वत्स सुमते किं त्वयाचरितं पुरा ॥ ५७ ॥ येन त्वया कृतः प्रश्नो न भूतो न भविष्यति । न जाने किं कृतं पुण्यं येन त्वादृशसंगतिः ॥ ५८ ॥ अम्बायाः करुणामूर्तेः कृपेत्येव मतिर्मम । मम देह इति ब्रूषे त्वं वा ब्रूते वपुस्तव ॥ ५९ ॥ अहं वच्मि न मे देहो वक्ति वेद्मि न वेत्ति सः । तर्हि यो वेत्ति स ब्रूते यो न वेत्ति न वक्ति सः ॥ ६० ॥ तर्हि न त्वं देह इति सिद्धं त्वद्वचनादिह । घटाद्देहे को विशेषो न विशेषमतिर्मम ॥ ६१ ॥ भोगमात्रे विशेषश्चेद्युक्तं तत्सर्ववस्तुषु । केन दृष्टा सर्वतस्तु सुखदुःखसमानता ॥ ६२ ॥ तस्मादहन्ता विश्रान्ता त्वय्येव नहि देहके । सामानाधिकरण्यस्य देहोऽहमिति का गतिः ॥ ६३ ॥ शीतलो वह्निरित्यस्य या गतिः सा गतिर्भवेत् । अपरीक्षिततत्त्वेषु चरितार्थं यथा तथा ॥ ६४ ॥ किं तत्र ममता युक्ता युक्ता सर्वेषु वस्तुषु । सर्वे कथं मे देहोऽपि कथं ते वद बालक ॥ ६५ ॥ को देहनामा नामैव तर्ह्यसौ दृश्यते कथम् । न द्रष्टव्योऽहमित्येवं शब्दस्य शपथः किमु ॥ ६६ ॥ श्रोत्रस्य विषयः शब्दश्चक्षुषो विषयः कथम् । श्रोत्रस्य विषयः शब्दो वचसो विषयः कथम् ॥ ६७ ॥ श्रूयते देहशब्दस्तु न देह इति चेद्वद । यो न श्रुतः क्वापि लोके स कथं दृश्यते त्वया ॥ ६८ ॥ दृष्टं स्यान्नरशृङ्गं ते न श्रुतं क्वापि केनचित् । किं देहशब्दश्रवणाद्देहोऽपि श्रुत इष्यते ॥ ६९ ॥ वत्स दर्शय मे शीघ्रं को देहः शब्दसन्तरा । यः स्पृश्यते पीयते वाघ्रियते ध्रियतेऽथवा ॥ ७० ॥ श्रूयतेऽपि स सर्वोऽपि शब्द एव न चेतरः । अलङ्कारो यथा पञ्चविषयः स्वर्णमेव हि ॥ ७१ ॥ ननु हेमापि पञ्चानां विषयस्तादृगेव सः । इति चेद्धेम केनैव दृष्टं किंलक्षणं वद ॥ ७२ ॥ यद्यद्वदसि तत्सर्वमलंकारेति गच्छति । सर्वेन्द्रियागोचरस्तद्धेम सर्वेषु गोचरः ॥ ७३ ॥ एवं प्रब्रुवता शब्दः कुतो नाङ्गीकृतस्तथा । यः प्रसिद्धः क्वचित्स्थाने न प्रसिद्धं सुव-

णैकम् ॥ ७४ ॥ कारणं कार्यरूपेण मूर्च्छितं मूर्तिरुच्यते । तदा गोचरतां याति वियद्वायुक्रमाद्यथा ॥ ७५ ॥ सुवर्णं तर्कविषयः स्पृश्यते दृश्यते तथा । विलीयते घट्यते च क्रमान्मूर्च्छान्वितं भवेत् ॥ ७६ ॥ मूर्च्छान्वितं कारणं तु कार्यमित्यभिधीयते । न कारणातिरेकित्वं तद्भिनानुपलब्धितः ॥ ७७ ॥ यद्वन्मूर्च्छान्वितं वारि पाषाणश्चाभिधीयते । तद्वन्मूर्च्छान्वितः शब्दो जगदित्यभिधीयते ॥ ७८ ॥ क्वचित्कदाचित्कैश्चिच्च निमित्तैर्मूर्च्छिता च वाक् । क्वचित्कदाचित्कैश्चिच्च निमित्तैर्दृश्यते जगत् ॥ ७९ ॥ विश्वं पश्यन्न विश्वं स्याद्घटं पश्यन्घटो यथा । देहं पश्यन्नदेहः स्यात्तस्मात्त्वमहमः पदम् ॥ ८० ॥ कस्त्वं योऽहमहं कस्त्वमिति चेदेकताऽवयोः । सिद्धेति चेदिष्टमेव कथं नानास्थलस्थितिः । यथा वियद्वायुकालदिशां नानास्थलस्थितिः ॥ ८१ ॥ सुखदुःखोपलम्भास्तु नानैवोपाधिभेदतः । युगपत्सुखदुःखादिसंबद्धः काल इष्यते ॥ ८२ ॥ एको वसन्तः सर्वत्र नैकं फलमुपाश्नुते । क्वचिदुष्णः क्वचिच्छीतः क्वचिच्च समतां भजेत् ॥ ८३ ॥ क्वचित्सुखी क्वचिद्दुःखी त्वमस्येकः समः क्वचित् । सुखदुःखे न ते सत्ये समस्तदुभयातिगः ॥ ८४ ॥ एवं प्राणादयः कोशा विवेच्यास्तु मनीषिभिः । चलत्वादपि दृश्यत्वान्न पदान्यहमः खलु ॥ ८५ ॥ तत्कोऽहं यः पृच्छसि स्वं कः स्वो यं त्यक्तुमक्षमः । गृहीतुमपि सोऽसि त्वं विदिताविदितात्परः ॥ ८६ ॥ न त्यजामि न गृह्णामि स्वप्रकाशे स्थितोऽपि च । दृश्यद्वैतं तु पश्यामि ममता युज्यतेऽपि च ॥ ८७ ॥ दृश्यतां तेन का हानिर्ममता ते कथं वद । भोगदत्वाद्युज्यते चेदिन्द्रजालेऽपि युज्यते ॥ ८८ ॥ मिथ्येन्द्रजालमिति चेत्सत्यतास्य कुतो वद । दृश्यत्वं तुल्यमेवेह स्थिरतापि न काचन ॥ ८९ ॥ न कालनियमस्तत्र कर्तुं युज्येत कैश्चन । प्रमाणगोचरत्वं च तुल्यं व्यवहृतिः समा ॥ ९० ॥ अन्यायत्तेनान्य-

पुंसा व्यवहर्तुं न शक्यते। शक्यते क्वापि दृष्ट्यादौ क्रियायां नैव शक्यते॥ ९१ ॥ अन्यायत्तघटेनेव त्विन्द्रजालघटेन च। एते असृग्रमन्त्रेण सृष्टिं त्वद्दृष्टिगोचराम्। श्रुतिराहेन्द्रजालस्य मन्त्रा अपि च भूरिशः ॥ ९२ ॥ विश्वामित्रजसृष्टिं तु गायत्री-प्रभवां जगुः। यथाशक्ति सृजस्येव शब्दात्सृष्टिं प्रतिक्षणे॥ ९३॥ अहं सृजामि चेत्सृष्टिं प्रतिकूलमिदं कुतः। उपायप्रातिकूल्येन प्रातिकूल्यमुपेयके॥ ९४ ॥ तस्मादुपायविज्ञानं गुरुभ्यो लभ्य-मेव ते। यतन्त आनुकूल्येषु नोपायेषु जना इमे॥ ९५॥ उपा-यानामानुकूल्यं गुरुकारुण्यमूलकम्। तत्संपाद्यं यत्नशतैर्दुःखि-नस्तत्प्रमादिनः ॥ ९६ ॥ क उपायोऽस्ति विश्वस्यानुकूल्ये वद देशिक। तदुपायं वच्मि वत्स शृणुष्वावहितो भव॥ ९७॥ शब्दब्रह्ममयं विश्वं परब्रह्ममयं तथा। प्रतिबिम्बमिवादर्शे पश्यं-स्तिष्ठ सुखी भव॥ ९८ ॥ असङ्गः परमोपायः सत्सङ्गसहका-रितः। अखण्डसुखलाभाय येन स्यात्कृतकृत्यता। दुःसङ्गः परमो-पायो दुर्बोधसहकारितः। अखण्डदुःखलाभाय कर्तृत्वाय पदे-पदे॥ ९९॥ नमः सङ्गाय महतां मानभङ्गाय योगिनाम्। भूमि-कारोहविघ्नैककर्मठाय दुरात्मने॥ १०० ॥ सत्यमुक्तं त्वया नाथ सम्यगेव प्रबोधितः। तथापि विश्वसंहारं कामये नाथ पूरय॥१॥ शृणु वत्स रहस्यं मे मन्त्रोद्भूतमिदं जगत्। ततो मन्त्रविभेदं त्वं कुरु यत्नेन शुद्धधीः॥ २॥ के ते मन्त्रा विभेदः कः कथं भवति तद्वद। वाक्यमन्त्रमयीं मायां जगज्जालप्रदर्शिनीम्॥ ३ ॥ वर्ण-शस्त्रैर्भेदयित्वा नादकोशे निधापय। भिनद्मि तां कथं वर्णैर्व-र्णान्वा नादकोशके॥ ४ ॥ स्थापयामि कथं चैतद्वद मे करुणा-निधे। वाक्यानि वर्णरूपाणि वर्णा नादस्वरूपकाः॥ ५ ॥ स च नादस्ताररूपोऽवयवानभिसंधिकृत्। स्वजागृतिं बोधयति विषयग्र-हणक्षमाम्॥ ६ ॥ न तदासीत्किंचनापि ततः कैवल्यबोधकः।

ततो वर्णसमुद्भूतिस्तदा अ उ म इत्यपि ॥ ७ ॥ संकेतितस्ततो धातुसंभवे चावतीत्यपि । ब्रह्म चोपासकं विश्वं रक्षत्येप विचारितः ॥ ८ ॥ ब्रह्मस्वाभेदतो रक्षेदवस्थात्रयबाधनात् । अद्वितीयत्वबोधेन ब्रह्मत्वं स्थापयन्नसौ ॥ ९ ॥ जीवं रक्षति विश्वं च स्वोदरे स्थापनेन च । भूयः कथय तारस्य रहस्यं परमामृतम् ११० दुर्बोधं मन्दमनसां सुगूढं करुणाकर । नादसामान्यरूपोऽयं तारो वाग्ज्योतिरिष्यते ॥ ११ ॥ चित्सामान्येन्धनं तत्तु बोधयेदिन्धनाकृतिम् । यथैव विशिखो वह्निर्भासयेदिन्धनाकृतिम् ॥ १२ ॥ विवक्षिताक्षरालात्रं प्रतिवर्णाकृतिं ब्रुवन् । अवस्थां जाग्रदादिं च शब्दमात्रत्वबोधनात् ॥ १३ ॥ मिथ्यात्वमाह्यावस्थानां शब्दमात्रे क सत्यता । मिथ्यात्वं न च वाक्यार्थः किंत्वार्थिकमिति स्मर १४ अवस्थात्रयमिथ्यात्वे केवलीभाव आर्थिकः । ब्रह्मत्वमपि तद्वत्स्याद्द्वयत्वं तथार्थिकम् ॥ १५ ॥ अवस्थात्रयबाधेऽपि ब्रह्मत्वं कथमस्य तु । किं तद्ब्रह्म त्वमेवात्थ यदभेदाद्बिभेपि भोः ॥ १६ ॥ सत्यज्ञानानन्तरूपं ब्रह्मेति श्रुतिराह चेत् । अस्त्वेतल्लक्षणं वत्स त्वामाक्रमति वा नवा ॥ १७ ॥ त्रिकालाबाधितत्वेन प्रमावृत्त्यादिबाधनात् । सत्यज्ञानस्वरूपोऽहमानन्त्यं नानुभूयते ॥ १८ ॥ यद्वस्तु यत्र भासेत तत्तत्रास्तीति निश्चयः । देहान्तर्भामि नो बाह्ये तदानन्त्यं न युज्यते ॥ १९ ॥ सम्यगुक्तं त्वया वत्स देहोऽयं भाति कुत्र वा । पृथिव्यां भासते सा क ब्रह्माण्डे तत्क तन्मयि ॥ १२० ॥ यस्मिन्ब्रह्माण्डभानं स्यात्तदनन्तं कुतो नहि । यदि ते लक्षणाक्रान्तिर्ब्रह्मता नेष्यते कुतः ॥ २१ ॥ सर्वज्ञत्वं नेति चेत्ते केवलेऽपि विकल्पितम् । ज्ञत्वमात्रं वास्तविकं तत्त्वं चेत्ते कुतो भयम् ॥ २२ ॥ तस्मादहं ब्रह्म शुद्धमिति गर्जय गर्जय । अतान्त्रिकस्य विश्वस्य नियन्ता कुत्र मृग्यते ॥ २३ ॥ को नियन्ता वद सखे दृष्टस्य मृगवारिणः । मृगाणां भ्रम एवास्य नियन्तेति मति-

मम ॥ २४ ॥ तर्हि त्वद्दृश्यविश्वस्य नियन्ता त्वद्भ्रमो भवेत्।
अधुना दृश्यते विश्वं न वा भापस्व तत्त्वतः ॥ २५ ॥ न चेन्नि-
यन्तृजिज्ञासा शान्तैव तव बुद्धिमन्। दृश्यते चेद्ब्रूहि शीघ्रं भवा-
ञ्जागर्ति वा न वा ॥ २६ ॥ जागर्मि किंतु स्वपिमि सुष्वपिम्यपि
कालतः। जागर्त्याद्यास्ते स्वभावा न वा ब्रूहि विचारयन् ॥ २७ ॥
एते कथं स्वभावाः स्युरागमापायशालिनः। कस्ते स्वभावः परम
एतत्रितयसाक्षिता ॥ २८ ॥ कदा पश्यस्यवस्थां त्वं किं कृत्वा
कुत्र पश्यसि। यदा बहिर्मुखो भूत्वेन्द्रियाभिमुखतां भजे ॥ २९ ॥
जागृतिं तत्र पश्यामि किंचिदन्तर्मुखो यदा। तदा स्वप्नं हि
पश्यामि यदा त्रस्तो बहिर्मुखे ॥ १३० ॥ तदा विहाय तां दृष्टिं
स्वस्थतां यासि कालतः। तदा सुषुप्त आनन्दपारावारे ब्रुडाम्य-
हम् ॥ ३१ ॥ तदा न किंचित्पश्यामि कंचिन्नाभिमिनोमि च।
अनुभूतप्रायमेव जाड्यं तत्र स्मराम्यहम् ॥ ३२ ॥ किमन्तर्मुखता
सत्या किं बहिर्मुखता तव। एते न मे स्वभावौ स्तो यत्स्वभा-
वोऽसि सुव्रत ॥ ३३ ॥ तत्स्वभावः स्थिरस्तिष्ठ पश्यन्विश्वं हि
कुत्र वा। इमां विद्यां गुप्ततरां मा प्रकाशय कुत्रचित् ॥ ३४ ॥
तारं चिन्तामणिं दद्मस्तं परीक्ष्य सर्वदा। सर्वे रिष्टाः शमं यान्ति
चिरं त्वं सुखमेधसे ॥ ३५ ॥ श्रीगुरो करुणासिन्धो न दाता
त्वत्समो भुवि। येन चिन्तामणिश्चायं सर्वारिष्टनिवारणः ॥ ३६ ॥
सर्वसंपत्प्रदाता च दत्तो मे सहसैव यः। एतन्मूल्यं किंनु दास्ये
दास्येऽस्तु मम देहकः ॥ ३७ ॥ नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते। नमः पुरस्तादथ पृष्ठतस्ते नमोस्तु
ते सर्वत एव सर्व ॥ ३८ ॥ अनन्तवीर्यामितविक्रमस्त्वं यतो
विभिन्नो मम मोहपर्वतः। सखेति मत्वा प्रसभं यदुक्तं तत्क्षामये
त्वामहमप्रमेयम् ॥ ३९ ॥ किं वा दास्यामि तृप्ताय लोकतृप्तिक-
राय च। दास्ये दास्यामि देहं मे पादयोरर्पयामि ते ॥ १४० ॥

उत्तिष्ठोत्तिष्ठ भद्रं ते सकृद्गर्जय सिंहवत् । अहं ब्रह्मास्म्यद्वितीयं शिवोऽहममृतोऽभयः ॥ ४१ ॥ इति संगर्जयन्नत्र सुखं तिष्ठापणे निजे । देहं दास्यामि दास्यायेत्युक्तं तद्धटते कथम् ॥ ४२ ॥ अस्मद्दास्यं कष्टतरं स्वतन्त्राः कस्य वा वशे । उद्धुष्यस्व पशो त्वं हि न पशुस्त्वं शिवो ह्यसि ॥ ४३ ॥ शिवोत्कृत्तमिदं पिण्डमतस्त्वं शिवतां व्रज । इति कृन्तन्ति गुरवो दत्त्वा ब्रह्मत्वमाशु ते ॥ ४४ ॥ विचार्य वद दास्यं नः कष्टं लोकाः सुखेप्सवः । तस्मात्त्वं यत्र कुत्रापि तिष्ठात्रैवापणे निजे ॥ ४५ ॥ परीक्षयंस्तारत्नं मूर्खापरिचिते स्थले । सत्यमेतद्देशिकेन्द्र परमेकं वदाम्यहम् ॥ ४६ ॥ यदाहुर्वेदविद्वांसस्तत्त्वज्ञा अपि भूरिशः । ध्यानमूलं गुरोर्मूर्तिः पूजामूलं गुरोः पदम् ॥ ४७ ॥ मन्त्रमूलं गुरोर्वाक्यं मोक्षमूलं गुरोः कृपा । सत्यमेतद्वत्स शुद्धबुद्धे वदसि यद्वचः ॥ ४८ ॥ परं कृपा कथं वा स्यात्तत्र विद्मो वयं शिशो । स्वभावतो वयं ब्रूमस्तद्वज्ज्ञानं समागते ॥ ४९ ॥ परंतु लौकिकः पन्था यस्य संजनयेन्मुदम् । स कृपामातनोत्येव सर्वशास्त्रार्थसंग्रहः ॥ १५० ॥ सत्यं गृहीत्वा मिथ्या मेऽर्पयंस्त्वं कुशलो महान् । यत्र त्वं नापि ते सत्यं तदर्पयसि मे कथम् ॥ ५१ ॥ तर्ह्येतत्कस्य मायाया अस्माकं वास्ति तद्धनम् । यथेष्टविनियोगार्हं तवापि च सुखप्रदम् ॥ ५२ ॥ अस्त्वेतदधुना ब्रूहि किंकिमस्ति तवापणे । महान्तोऽपि च विद्वांसो यत्र मिथ्याभिभाषिणः ॥ ५३ ॥ असत्यं सत्यमित्येव स्थापयन्ति जनेजने । रसषट्के निमग्नास्ते कामक्रोधादिनामनि ॥ ५४ ॥ एकैकस्मिन्ह्रदे मग्ना बहवोऽन्योन्यवैरिणः । नक्रा इव महाभीमा योद्धुकामा महाशनाः ॥ ५५ ॥ हितं संबोधयंस्तत्र प्राप्यतेऽधस्तलं जनैः । को महांस्तत्र धनवान्प्रमाणं किं स्त्रियो वचः ॥ ५६ ॥ कस्तत्रास्ति चमत्कारः स्वहितायत्पलायनम् । स्वमार्गेष्वेव मद्देशे निक्षिपन्ति जना बलात् ॥ ५७ ॥ कण्टकान्वार्यमाणास्ते निक्षिप-

न्त्यन्यवर्त्मसु। चकोरांश्चन्द्रपियूषपायिनः काकशावकाः ॥ ५८ ॥
उलूकवृद्धाः संभूयानुसस्रुस्तत्पिपासया । शिक्षितास्तैश्च चञ्चुपुटं
सरलीकृत्य जिह्वया ॥ ५९ ॥ रसं रसत चान्द्रं तं येन तृप्ता वयं
सदा । श्रुत्वा ते सरलीकर्तुं स्वस्वचञ्चुं यदोद्यताः ॥ १६० ॥
तदा ते व्यग्रचित्तत्वात्पेतुरुर्व्यां मुखेऽणवः । तदा धूलिमुखाः
सर्वे परस्परजयैषिणः ॥ ६१ ॥ मया लब्धो मया लब्धो रसश्चा-
न्द्र इति प्रथाम्। व्यक्तीकर्तुं स्थगयितुं मिथ आरेभिरे मुहुः ॥६२॥
पुनः केनापि कालेन संभूयालोचितं च तैः । शिक्षयामो वयं
यैस्तु वञ्चिता रसछद्मना ॥६३॥ तत्पीडितचकोराणां गतो हस्ता-
च्च चन्द्रमाः। इति ते मेनिरे भूयश्चकोराणां च चन्द्रमाः ॥ ६४ ॥
मुखधूलिरसास्वादवासनाभिश्च ते खगाः। चन्द्रं च निन्दयामासुः
कलङ्कीति क्षयीति च ॥ ६५ ॥ अयमेकश्चमत्कारो दृश्यते विषये
मम। अन्योऽप्येकश्चमत्कार उपकारपरायणाः ॥ ६६ ॥ गुप्ताप-
कारैर्हन्यन्ते शिष्टैरपि दुरासदैः। तत्र किं गन्तुकामोऽसि स दग्ध-
स्त्वद्वचोग्निना ॥ ६७ ॥ अत्रैव कुत्रचिद्गेहे सर्वेषामप्यगोचरे।
त्वद्दर्शितेऽहं तिष्ठामि ताररत्नं परीक्षयन् ॥ ६८ ॥ कश्चित्तत्रागतः
पूर्वं महारत्नपरीक्षकः । शाकापणे स्थितिस्तेन कृता तत्र च
शाकिनी ॥ ६९ ॥ स्वशाकं स्थापयामास विक्रीणीहीति सा तदा।
विकृतापणिकाः सर्वे शाकविक्रयजीविनः ॥ १७० ॥ मिलित्वा
पीडयामासुर्गतः स क्वापि चोरवत् । अनर्थास्तत्र बहवो न गन्तुं
तत्र चोत्सहे ॥ ७१ ॥ अत्रैव तिष्ठ सुमते त्वमेवासि निरञ्जनः।
अतस्ते सर्वजिज्ञासा शान्तिमेति शनैःशनैः ॥ ७२ ॥ पित्रेव
शिक्षितो नूनं मात्रेव परिरक्षितः । परमेकं प्रार्थयेऽहं संचरामि
निजापणे ॥ ७३ ॥ उपकारं स्मरन्नेव गृणन्नामानि ते मुहुः। भोज्य-
काले यथा माता बालकं संस्मरत्यसौ ॥ ७४ ॥ तथैव करुणा-
मूर्ते स्मर मां दीनकिंकरम्। इत्थं व्यवहरन्त्येते दत्ताद्याः सनका-

द्यः ॥ ७५ ॥ वसन्त्येते नादमठे सर्ववर्णवहिष्कृते । कैवल्यसिंहासनगाः परविद्याप्रसादतः ॥७६॥ तां भजस्व महाबुद्धे परविद्यां सुखप्रदाम् । यया परीक्ष्यते तत्त्वं येन भूयो न शोचसि ॥ ७७ ॥ तदभ्यासबलेनैव स्थितप्रज्ञो भविष्यसि । सर्वे वर्णा वाक्यरूपा मज्जयन्त्यर्थसंभ्रमे ॥ ७८ ॥ उन्मज्जयति तारोऽयं तेन तारः स उच्यते । उत्तराण्यत्र चक्राणि प्रपञ्चान्तर्गतानि च ॥ ७९ ॥ नोच्यन्ते शब्दरूपाणि भेदनं तूक्तमेव ते । तद्भेदनेन वर्णौघवेष्टितो वेद्यते शिवः ॥ १८० ॥ यः पदानि विनिर्माय वाक्यानि विविधानि च । सर्वा विद्याः सर्वलोके दर्शयामास शङ्करः ॥ ८१ ॥ भूरादिसप्तभिः शब्दैर्लोकान्सर्वानजीजनत् । एते असृग्मन्त्रेण प्रजाः स ससृजे प्रभुः ॥ ८२ ॥ अन्यैरपि महामन्त्रैः सर्वं ब्रह्माण्डगोलकम् । विचित्रमप्यनिर्वाच्यं शेषगौतमसूरिणाम् ॥ ८३ ॥ तत्र वाक्यार्थसत्यत्वं जानञ्जीवोऽभवच्छिवः । वाक्यार्थं शब्दमात्रं तु ज्ञात्वा स शिवतां व्रजेत् ॥ ८४ ॥ नादमात्रं तु तज्ज्ञात्वा पुनः कैवल्यमश्नुते । कैवल्यान्नादसंभूतिस्ततो वर्णक्रमस्त्वया ॥ ८५ ॥ श्रावितो निर्विकारात्तदुपपद्येत वा कथम् । स नादः सहजानन्दः शक्तिरूपः सनातनः ॥ ८६ ॥ तत्सामरस्यपरमो न तं वर्णयितुं क्षमाः । यावन्नादो न लब्धः स्यात्तावदानन्दिता कुतः ॥ ८७ ॥ एतद्रहस्यं स शिवो वेत्ति तत्सदृशाः परे । तदनुग्रहपात्राणि जानते देशिकेश्वराः ॥ ८८ ॥ स नादो वर्णरूपेण परिणामं समृच्छति । ततः सृष्टिक्रमः सर्वो दर्पणे प्रतिविम्बवत् ॥ ८९ ॥ सृष्टौ सत्यामसत्यां वा कैवल्यं तु यथास्थितम् । प्रतिविम्बे सत्यसति दर्पणोऽस्ति यथास्थितः ॥ १९० ॥ यथा सर्पे सत्यसति रज्जुरस्ति यथास्थिता । मृगवारि न भेदाय किरणानां यथा रवेः ॥ ९१ ॥ यत्र पापं श्रमो मोहश्चिन्तनं नैव विद्यते । तदेतत्परमं गुह्यमुक्तं कैवल्यसत्पदम् ॥ ९२ ॥ तत्र स्थितौ नियुज्यन्ते साधनानि च सर्वशः ।

कालात्सिद्धत्वमाप्नोति स्थितप्रज्ञेषु गण्यते ॥ ९३ ॥ का स्थितप्रज्ञता नाम यत्प्राप्तौ कालयापनम् । श्रूयते बोधसमये मुक्तो भवति मानवः ॥ ९४ ॥ सत्यं तु बोधसमये मुक्तो भवति मानवः । गुरु-भक्तिविहीनानां स बोधः शिथिलो भवेत् ॥ ९५ ॥ तेन मुक्तिपदं ब्रह्मन्दुर्लभं दुर्लभं नृणाम् । शृण्वन्नेव गुरोर्वाक्यं लभते परमं पदम् ॥ ९६ ॥ यदि तीक्ष्णीकृतमतिः साधनानि स्थितौ श्रुतौ । हेतवस्तारतम्येन प्रदिशन्ति स्थितिं श्रुतिम् ॥ ९७ ॥ श्रद्धा प्रामाण्यहेतुः स्याद्भक्तिस्तद्दार्ढ्यकारणम् । मुमुक्षुत्वं शुभेच्छायां विरागो विषयान्तरात् ॥ ९८ ॥ व्यावृत्तिहेतुश्च शमो ज्ञेयग्रहणकारणम् । दमः कर्मान्तरासङ्गाद्व्यावृत्तौ कारणं मतम् ॥ ९९ ॥ तितिक्षोपरती हेतू स्थितौ संपादिते पदे । समाधानं तु तोषेण परमानन्दकारणम् ॥ २०० ॥ गुरोस्तु करुणा हेतुर्याथातथ्यप्रबोधने । एतैश्च साधनैर्युक्तः शृण्वन्नेव पदं व्रजेत् ॥ १ ॥ सैषा चतुर्थी भूमिः स्यात्ततो वैराग्यवर्धनम् । तत्रानन्दस्य लाभस्तु पञ्चमी भूमिका मता ॥ २ ॥ तदानन्दस्य दार्ढ्येन भावनात्यागवान्भवेत् । दिने-दिने वर्धमानः स्थितप्रज्ञः स उच्यते ॥ ३ ॥ दुर्लभो भावनात्यागो भवेच्चरमजन्मनि । बहूनां जन्मनामन्ते ज्ञानवांस्तत्प्रपद्यते ॥ ४ ॥ उपदेशाधिकारस्तु तस्य नान्यस्य कस्यचित् । समाध्यन्तानुभावित्वाद्दृश्यापोहेषु कौशलात् ॥ ५ ॥ इतरेषां गुरुत्वं तु गुरुत्वायैव केवलम् । षड्धा एव हि पाकस्तु तुर्येति ब्रह्मवादिनः ॥ ६ ॥ यत्र प्रपञ्चवार्तैव नास्तीति ब्रह्मवादिनः । वाक्यमित्यपि वागेव वर्णा इत्यपि वाक्कथा ॥ ७ ॥ नाद इत्यपि वाङ्मात्रं विस्मृतं स्वस्थितेर्बलात् । तदा किं केन वक्तव्यं श्रोतव्यं केन कुत्र वा ॥ ८ ॥ द्रष्टव्यं केन वा कुत्र ज्ञातव्यं केन किं तदा । विदेहत्वं सदेहत्वं यत्र नास्ति वचःस्थितिः ॥ ९ ॥ वाग्गता कापि कुत्रापि त्रिपुटी कापि कुत्रचित् । ब्रह्मत्वं कापि कुत्रापि त्वन्ताऽहन्ता क तत्र हि ॥२१०॥

प्रबुद्धोस्मि प्रबुद्धोस्मि ज्ञातं तत्त्वमलौकिकम् । यत्र लोककथा नैव कैवल्यमवशिष्यते ॥ ११ ॥ श्रीगुरो करुणासिन्धो पात्रं पूर्णतरं कृतम् । त्वद्वाणीकामधेनोस्तु रसः पीतः सुधाधिकः ॥ १२ ॥ यथायथा पिबाम्येव रसाधिक्यं तथातथा । यथायथा रसं जाने बलाधिक्यं तथातथा ॥ १३ ॥ किं वर्णयामि तव वाचमचिन्त्यसारां किं वर्णयामि तव रूपमचिन्त्यमेव । किं वर्णयामि करुणां तव तारगर्भां मोक्षप्रसूं नतशिरःकरपल्लवां ताम् ॥ १४ ॥ पुरः स्थापय पादाब्जमर्पयामि शिरोऽधुना । पुनः श्लिष्यामि हृष्यामि जिघ्रामि च लुठामि च ॥ १५ ॥ त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव । त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥ १६ ॥ यन्न मृग्यं नापहृतं न दूरे न समीपतः । न निदानं नापि कार्यं तद्दत्तं तत्त्वमक्षतम् ॥ १७ ॥ अनेन सह मे देहि याचकाय कृपाकर । यदुक्तं तत्स्थिरं तेऽस्तु सफलं चेति मे वरम् ॥ १८ ॥ यादृशी विषये प्रीतिस्तादृशी तव पादयोः । अस्तु मे तत्सुधास्वादं जाने किंच न किंच न ॥ १९ ॥ कांचिच्छिक्षां च मे देहि देहयात्रा यथा सुखम् । भवेन्मत्तोऽपि लोकानां दुःखिनां च सुखं भवेत् ॥ २२० ॥ प्रसारय ब्रह्मविद्यां शिष्यं मा कुरु कंचन । ततो घातो भवत्येव घोरः कलिरुपस्थितः ॥ २१ ॥ शृणु त्वं शिष्य दुष्टाश्वान् रथे मा योजयस्व ते । म्रियन्ते मारयन्त्येते खातपातादिभिर्बहु ॥ २२ ॥ न त्यजन्ति निजं दोषं नाचरन्ति हितं स्वकम् । शिष्यत्वं दर्शयन्त्येव न शिष्याश्च भवन्ति ते ॥ २३ ॥ अमायया तु कथनं सा गुरोर्गुरुता भवेत् । अमाययाऽनुसरणं सैव शिष्यस्य शिष्यता ॥ २४ ॥ कथमेतद्द्वयाभावे गुरुता शिष्यता तथा । यत्र चैतद्द्वयं तत्र शोभते गुरुशिष्यता ॥ २५ ॥ एतद्द्वयं सत्यसाध्यं कलिना तद्धृतं बलात् । उपहासास्पदं लोके गुरुता शिष्यता तथा ॥ २६ ॥ मायाभेदप्रवृत्तौ

तौ तामेव परिरक्षतः । सत्यमेतत्कलियुगे किमाश्चर्यमतःपरम् ॥२७॥ एको मोचयते पाशादेकः पाशान्समिच्छति । मोचयन्तं धिक्क-रोति किमाश्चर्यमतः परम् ॥ २८ ॥ एकश्चोपनिषद्गाथां वक्तुमार-भते परः । मन्त्रेण स्तम्भयेजिह्वां किमाश्चर्यमतः परम् ॥ २९ ॥ एकस्तु लोकसङ्गेन मैत्रीमाचरते परः । विद्वेषयति यन्त्रेन किमा-श्चर्यमतः परम् ॥ २३० ॥ एकः कीर्तिं च लक्ष्मीं च लभते दैव-योगतः । तां घातयत्यन्यजनः किमाश्चर्यमतः परम् ॥ ३१ ॥ एता-दृशे कलियुगे शिष्याशां संपरित्यज । यदि तच्छिष्यता सह्या कुरु शिष्यांस्तदा बहून् ॥ ३२ ॥ क्वचित्क्वचित्तु गुरवः शिष्याः सन्ति क्वचित्क्वचित् । उच्छेदो ब्रह्मविद्याया न भवत्येव कुत्रचित् ॥ ३३ ॥ किं साधवो न सन्त्येव कलावपि खलास्पदे । यत्तदाऽधिकतां यातं तदद्य विरलीकृतम् ॥ ३४ ॥ छद्मसद्म विहायैता विचरन्त्यन्य-सद्मनि । गुरोर्वाचो हरेर्भक्तिर्नीतिर्निपुणता तथा ॥ ३५ ॥ तस्मा-द्विचार्य सच्छिष्यं कुलीनं पितृशिक्षितम् । ब्रूहि कैवल्यगाथां त्वं यतः पश्चान्न तप्यसे ॥ ३६ ॥ वित्तं दास्यामि ते वत्स भिक्षा-पात्रं प्रसारय । येन वित्तेन लोकेषु चिरं सुखमवाप्स्यसि ॥ ३७ ॥ नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः ॥ ३८ ॥ निःसंशयं स्मर ब्रह्मदेहं विस्मर मायिकम् । इति त्वं बोधवित्ताढ्यो यत्र कुत्रापि वा वस ॥ २३९ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां रहस्योपदेशोनाम पञ्चमोऽध्यायः ॥ ५ ॥

---

सर्वे शब्दा रसच्छिन्नास्तारतम्येन सर्वतः । यच्छब्दारूढतां याति तद्रसे स निमज्जति ॥ १ ॥ तिरोहितः प्रमातॄणामव्युत्पत्त्या क्वचित्क्वचित् । वक्रीकृतो निरुद्धश्च वक्तृव्युत्पत्तितो रसः ॥ २ ॥

व्युत्पन्नत्वे द्वयोः सम्यग्रस आविस्तरांभवेत् । अव्युत्पत्तौ निरुद्धः स्याद्द्वयोरन्यतरस्य च ॥ ३ ॥ अव्युत्पत्तौ द्वयोरेव रौद्र आविस्तरांभवेत् । अत्रोदाहृतयो लोके सिद्धा एवेह सर्वतः ॥ ४ ॥ अत एव सतां नाम कीर्त्यते संमतं सताम् । न कीर्त्यतेऽसतां नाम धिक्कुर्वन्ति च कीर्तितम् ॥ ५ ॥ येन यस्योत्तमत्वं तु गृहीतं तस्य नामनि । तद्रसप्लुतगात्रः सन्विश्राम्यति जनः खलु ॥ ६ ॥ कस्यचिन्नोत्तमा नारी कस्यचिच्चोत्तमं धनम् । कस्यचिच्चोत्तमं तीर्थं क्षेत्रं कस्यचिदुत्तमम् ॥ ७ ॥ कस्यस्विदुत्तमा विद्या कस्यचिच्चोत्तमो जयः । कस्यस्विदुत्तमं ध्यानं कस्यचिच्चोत्तमो जपः ॥ ८ ॥ कस्यस्विदुत्तमा निद्रा कस्यचिच्चोत्तमा क्रिया । कस्यचिच्चोत्तमो विष्णुः कस्यचिच्चोत्तमः शिवः ॥ ९ ॥ कस्यचिच्चोत्तमा शक्तिः कस्यचिच्च गणेश्वरः । विष्णोः शिवस्य शक्तेश्च गणेशस्य रवेरपि ॥ १० ॥ स्यादेव चोत्तमः कोऽपि प्रमातृत्वस्वभावतः । ते द्वित्रा अपि कंचित्तु मन्येरन्नुक्तवर्त्मना ॥११॥ यथायथा विशोकत्वमुत्तमत्वं तथातथा । नाम्नां स्वस्वरसे नूनमग्रीकर्तुं बलीयसी ॥ १२ ॥ शक्तिरव्याहता तेन सर्वेष्वपि युगेषु च । हरेर्नामैव नामैव नामैव मम जीवनम् । कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥ १३ ॥ इति व्यासादिकाः प्राहुः शब्दशक्तिमखण्डिताम् । पवित्रोत्तमनामानि गृणन्त्येव महर्षयः ॥ १४ ॥ नाममात्रं हि सर्वत्र जात्यैश्वर्यगुणादिकम् । संबोध्य फलदत्वेऽपि न शोकच्छेदनक्षमम् ॥ १५ ॥ शोकच्छेदनकर्त्तारः शुद्धब्रह्मरसास्पदम् । विशोकं तत्त्वमेवाह तद्रसे मज्ज्यतां त्वया ॥ १६ ॥ यथायथोपासनया तीक्ष्णीकृतमतिर्भवेत् । तथातथा विशोकत्वं व्यक्तीभवति मानवे ॥ १७ ॥ अहन्ताममतामूलाः शोकाः सर्वेऽपि लौकिकाः । तत्पाशद्वयमेवासौ छिनत्ति सुविचारितः ॥ १८ ॥ कुतः शोकः कुतो मोहः कुतस्तो वा गमागमौ । विशोकत्वं च मोक्षश्च पर्यायाववधारय ॥ १९ ॥

परिच्छिन्नपदारूढो विशोकत्वं कथं व्रजेत्। शिवविष्ण्वादिनामानि योगरूढानि लौकिके ॥ २० ॥ स्वरसं न जहत्येव नीतान्येतान्यलौकिके। तारस्य स्वरसः शुद्धो गुणातीतोऽक्रियः समः ॥ २१ ॥ त्वन्ताऽहन्तातिगः सर्वकल्पनापरमावधिः। स्वप्रकाशो निराभासोऽमृग्योऽचिन्त्योऽप्यनावृतः ॥ २२ ॥ पुरः पश्चादधश्चोर्ध्वमिति वाचोऽतिदूरगः। न सुप्तो न सुषुप्तो वा न जाग्रन्न तुरीयकः ॥२३॥ न कर्ता नापि भोक्ता वा न वक्ता नापि चेक्षिता। सर्वरूपो न सर्वो य उररीकुरुते स्वयम् ॥ २४ ॥ आत्मत्वं न त्यजन् गृह्णन्स लब्धव्यो मनीषिणा। अस्मिन्नर्थे गुरुमुखाल्लब्धे किं फलमश्नुते २५ ग्राह्यं त्याज्यं यत्र नित्यं निषिध्येते फलं तदा। कथं कल्प्यं येन भोगत्रासस्य स्यात्परम्परा ॥ २६ ॥ किंतु भोगसमाप्त्यर्थी निक्षिप्तस्तत्र वै पुनः। अतो भोगत्रासमात्रक्षणे मुक्तिपदे स्थितः ॥२७॥ स धन्यः स महावन्द्यः स पित्रोस्तनयोऽग्रजः। कुललक्ष्मीललामोऽयं शास्त्रसाफल्यभूरयम् ॥२८॥ कैवल्यलक्ष्म्याः पीठोऽयं गुरुकारुण्यभाजनम्। येन कैवल्यमालम्ब्य सकलत्रासहेतवे ॥२९॥ आब्रह्मकीटपाशाय दत्तस्तिलजलाञ्जलिः। अतः कैवल्यमोक्षेऽस्मिन्न फलं कल्पितुं क्षमम् ॥ ३० ॥ साध्यसाधनसंबन्धरहिते प्रत्यगात्मनि। उपासकेनैव सार्धं विशोके लीयते मनुः ॥३१॥ विशोकपदसंप्राप्तौ तार एको महामनुः। साध्यसाधनसंबद्धा मनवोऽन्येन तादृशाः ॥ ३२ ॥ लभ्यते चरमे देहे ब्रह्मीभावप्रदो मनुः। शिवविष्ण्वादिकाः शब्दा उपास्यैश्वर्यदर्शकाः। क्रमेण मुक्तिफलदास्तारः

१ नन्वेतद्विलक्षणलक्षणतल्लक्षिततत्त्वस्याप्रसिद्धेस्तवाभिमतत्वाप्रसिद्धिरिति चेन्न। सर्वैतद्धर्मधर्मियुगपदधिष्ठानत्वेन सर्वविलक्षणस्य सदितिप्रतीतिविषयस्य तत्त्वस्योद्दिष्टुं शक्यत्वात्. सौमादिभेदभिन्नस्यापि तदधिष्ठानस्यैव सामान्यस्य तेजसः.

सद्योमुक्तिप्रदः[1] ॥ ३३ ॥ विष्णुशब्दो यथा व्याप्तिबोधकोऽपि चतुर्भुजे । रूढो न्यक्कृतयोगार्थो नाशरीरार्थबोधकः ॥ ३४ ॥ बोधकत्वेऽपि योगार्थबलान्न्यक्कृतवासनः । रममाणश्चक्रधरे तत्सामीप्यमुपाश्नुते ॥ ३५ ॥ तत्र तत्सहवासेन पुनर्ज्ञानविचारणा । ज्ञातृता यावदेवास्य विचारस्तावदायतः ॥ ३६ ॥ प्रमातृत्वं यदा क्षीणं तदा शाम्येद्विचारणा । प्रमेयबोधकाः सर्वे प्रमातृत्वबलप्रदाः ॥ ३७ ॥ अप्रमेयपरब्रह्मबोधकः प्रणवः खलु । त्रिपुटीं मर्दयित्वैव बोधयेदर्धमात्रिकाम् ॥ ३८ ॥ अन्तःप्रज्ञत्वादिदोषान्साधनानि च सर्वशः । तिरस्कृत्य तमो हार्दं भेदयन्वस्तु किंचन ॥३९॥ बोधयेद्यत्र नो शोकः शोकबीजमथापि वा । न हर्षो हर्षबीजं वा न साध्यं साधनं तथा ॥ ४० ॥ न भोग्यं नापि भोक्ता वा न निद्रा नैव जागृतिः । न स्वप्नो नापि विज्ञानमज्ञानं वास्ति तत्र हि ॥४१॥ तस्मिन्पदे निषण्णानां प्रणवालम्बिनां नृणाम् । विलीयन्ते ज्ञानबलाद्धृदिस्थाः शोकशर्कराः ॥ ४२ ॥ तद्विशोकपदं प्राहुर्मोक्षं कैवल्यमित्यपि । नैतत्पदं मन्दभाग्यलभ्यं लभ्यैकभूषणम् ॥ ४३ ॥ दूषणं द्वैतदृष्टीनां शोषणं सर्वकर्मणाम् । रोहणं गुरुपादाब्जभक्तिबीजकणस्य च ॥ ४४ ॥ मुद्रणं दृश्यसंघातवासनानां च सर्वशः । उद्घाटनमनायाससुखानां सर्वसंपदाम् ॥ ४५ ॥ सर्वापच्छमनीं विद्यां लब्ध्वा कुत्रापि केनचित् । सेव्यमानोऽसेव्यमानो यापयेच्छेषवासरान् ॥ ४६ ॥ अन्ये दृश्यावेशकारिशब्दास्त्याज्या मनीषिणा । यैश्च संसृतिचक्रेषु भ्राम्यते पारतन्त्र्यतः ॥ ४७ ॥ यत्रयत्रोत्तमत्वं तु गृहीतं तत्तदेव ते । शोकवंशं सौति तस्माद्दृश्येषूत्तमता कुतः ॥ ४८ ॥ उत्तमं तु तदेवाहं मन्ये यच्छोकनाशनम् । अनात्मवस्तुनः शोकनाशिता कथमिष्यते ॥ ४९ ॥ यद्दिष्यते कालयोगान्मुष्यतेऽपि च कालतः । श्लिष्यते दुःखसङ्घेन तदुत्त-

---

१ मुक्तिप्रदः । इप्रत्ययोऽत्र धात्वर्थपरः.

मकथा कथम् ॥ ५० ॥ न द्विष्यते मुच्यते नो क्लिश्यते नो मुखेतरैः। तद्विशोकपदं प्राहुः कैवल्यं तद्गुरोः पदम् ॥ ५१ ॥ तदद्वितीयं तद्ब्रह्म स आत्मा तत्सुखं दृढम्। तत्प्रापकेण तारेण सह स्वपिहि तत्र वै ॥ ५२ ॥ तत्र सुप्ताः सर्वजना यत्र जागर्षि रे शिशो। तत्र स्वपिहि यत्रैते जागृता जागता जनाः ॥ ५३ ॥ विवेकिनां विवेकोऽयं विविक्ते जागृतिर्हि या। अविविक्ते जागृतिस्तु बालानां भूषणं बलम् ॥ ५४ ॥ अतएव हि शास्त्राणि विवेचनपराणि च। विवेचयित्वा यत्किंचित्तत्र जागृतिहेतवः ॥ ५५ ॥ एतदेव हि साफल्यं शास्त्राणां च नृणामपि। सुविचारिततत्त्वेषु जागृतिर्या च भूषणम् ॥ ५६ ॥ तस्माद्विवेकसंसिद्धे विशोके परमे पदे। जागृतिस्तव युक्तैव दृश्ये स्वापोऽपि सांप्रतः ॥ ५७ ॥ यत्र स्वापस्ततो दुःखं केन दृष्टं महीतले। तस्मादपि च दुःखं चेत्तस्याप्यविषयो भव ॥ ५८ ॥ अद्वितीयं पदं तस्य विषयो न कदाचन। तत्र तिष्ठ सुखं भुङ्क्ष्व तवैकस्य कुतः किमु ॥ ५९ ॥ दृश्येन पीडितस्त्वं तु भ्रमन्सत्यधिया मुहुः। अद्य दृश्यान्तसंप्राप्तिः सुखं स्वपिहि मीलयन् ॥ ६० ॥ बोधय त्वं चेन्द्रियाणि न सन्ति विषया इति। इन्द्रियाणि न सन्तीति मनो बोधय बोधय ॥ ६१ ॥ मनो नास्तीति बुध्यस्व सुखं स्वपिहि बालक। यच्चिन्तयसि तन्नास्ति त्वमस्येको न चिन्त्यसे ॥ ६२ ॥ इदं तु हृदये कृत्वा सुखं स्वपिहि बालक। जगदस्तीति विश्वासपुरन्ध्री चपलाङ्गिका। चिन्तानाम्नी तेन साकं दग्धा जग्ध्वा जगत्त्रयम् ॥ ६३ ॥ स्वपिसि श्रीगुरो नूनं त्वत्पादकशिपौ शिरः। कृत्वा त्वदुक्तं संध्यायन् रक्षायै त्वं च जागृहि ॥ ६४ ॥ जयजयामलगात्र शुचिस्मित जयजयामलवाक्चतुराग्रणीः। जयजयामरवृक्ष मुमुक्षवे जय गुरो करुणारसवारिधे ॥ ६५ ॥ जय भवाब्धिविपन्नजनोडुप जय भवाग्निशमाम्बुवचःक्रम। जय भवग्रहमान्त्रिकशेखर जय मुमुक्षुविमोचन-

तत्पर ॥ ६६ ॥ श्रावयन्ती वहु कथाः स्वापयामास मां मुहुः । मातापि मत्कुणद्वैतव्रातशान्तिः कृता त्वया ॥ ६७ ॥ अद्वैतवोधदुर्गेऽस्मिन्द्वैतस्य परमाणवः । अपि प्रवेष्टुं नो शक्ताः किमु व्यवहृतिक्षमाः ॥ ६८ ॥ गुरुप्रसादो वलवान्न तस्माद्बलवत्तरः । इदं दृष्टमिदं दृष्टमिदं दृष्टं मयाधुना ॥ ६९ ॥ अन्यस्य तु प्रसादेन नरो दृश्येषु मुह्यति । देशिकेन्द्रप्रसादेन नरो वोधे निमज्जति॥७०॥ न गुरोः कर्मसद्बोधादृते किंचन विद्यते । गृह्णाति कोऽपि लक्षेषु ततो वोधः सुदुर्लभः ॥ ७१ ॥ वोधस्थैर्यं तत्कटाक्षमन्तराभ्यन्तरं भजेत् । तत्कटाक्षमहास्रोतःपुरः कोऽपि च मानवः ॥ ७२ ॥ स्यादेव सोऽपि मुक्तोऽपि स एव स्याज्जगत्त्रये । गुरोः प्रसादमाहात्म्यं जानीयादपि चित्ततः ॥ ७३ ॥ ब्रूयादपि गुरो ब्रूहि मद्दणे त्वं कदा कुतः । पतितोऽसि च येनाहमुद्धृतः सर्वसंकटात् ॥७४॥ धन्योऽसि करुणासिन्धो धन्यो विश्वोपकारक । धन्योऽसि नित्यसंतृप्तस्वानन्दभरनिर्भर ॥ ७५ ॥ गुरो गुरो गुरो शब्दं व्याहरन्वर्तमानके । काले स्थितोऽस्मि मुक्तोऽस्मि निःशल्योऽस्मि निजास्पदे ॥ ७६ ॥ विश्रान्तोऽस्मि विशोकोऽस्मि विस्मयातीतमानसः । शाम्यामि परिनिर्वामि तूष्णीमस्मि न किंचन ॥ ७७ ॥ अस्तिनास्तीत्यादिदूरे पदे ताररसे प्रिये । तारवाणाधिरूढोऽहं क्षिप्तः श्रीगुरुणा मुदा ॥ ७८ ॥ फलितं पुण्यसंघेन गलितं पापसंचयैः । मिलितं ब्रह्मरत्नेन वलितं सुखसंपदा ॥ ७९ ॥ अजिह्मलभ्यां पदवीं जिह्मो यद्यारुरुक्षति । पक्षिगम्यान्यपि पदान्यपक्षोऽप्यारुरुक्षतु ॥ ८० ॥ नमः श्रीगुरुनाथाय मुमुक्षुजनवन्धवे । लोकोत्तरफलं ब्रह्म यस्य वाचि प्रनृत्यति ॥ ८१ ॥ नमो ऋगक्षरव्योम्नि निषेदुर्यत्र देवताः । यज्ज्ञानात्सफला मन्त्रा यद्विज्ञानात्समासते ॥८२॥ जगतः शव्दरूपस्य गुरुस्तारः प्रवोधकः । तदुपासामार्गरूढो मूढोऽपि च जगद्गुरुः ॥ ८३ ॥ यस्य देवे परा भक्तिर्यथा देवे

तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ८४ ॥ कैवल्यगाथावाग्धेनुरर्पिता गुरुपादयोः। गुरुभक्तैर्दोहनीया पिपासात्मरसस्य चेत् ॥ ८५ ॥ ये हि विश्वासपात्राणि गुरूणां गुणदर्शिनाम्। इमां गाथां त एवेह शृण्वन्तु च लिखन्तु च ॥ ८६ ॥ कैवल्यगाथे वाग्धेनो तत्र दोग्धि निजं रसम्। गुरोर्विश्वासपात्रं यो न धर्मिणि न पण्डिते ॥८७॥ कृष्णकैवल्ययोगीन्द्रः सच्चिदानन्दपाणिभूः। कैवल्यगाथामकरोत्कैवल्यं यद्विचारतः ॥ ८८ ॥ वत्से कैवल्यगाथे त्वं संचर स्वेच्छयाऽमितः। कोऽपि कश्चिद्गुणैराढ्यो रसं ते पातुमर्हति ॥ ८९ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां
विशोको नाम षष्ठोऽध्यायः ॥ ६ ॥

---

ॐ मोक्षश्चास्तिक्यसीमा सकलमुनिमतश्चास्ति रूपाविरोधात्तावन्मात्रः परेशो हरिहरविधिरित्यादिरूपाणि तत्र। आस्तिक्योद्बोधनाय प्रथमतनुभृता कल्पितान्यग्रिमाणां मार्गाः कर्माणि नानाविधफलसहितान्यत्र तत्रापि तुष्ट्यै ॥ १ ॥ तत्राचार्याश्च नानाविधमतकथनाः कल्पिता उत्तराणामास्तिक्यादिष्टये तत्सकलमतगतं तत्त्वमद्धाऽविरोधि। तज्ज्ञानार्थं मतानि क्रमत इति महादेशिकेन्द्रेण दत्तो न त्याज्यो नो विनिन्द्यः सकलमुनिमतो धर्ममार्गः पुराणः ॥ २ ॥ तन्तुर्धर्मस्य चायं मनुमुनिमहिपैर्लक्षितो रक्षितश्च प्रज्ञावद्भिर्निषेव्यो दृढतरमनसा नास्तिकत्वातिभीतैः। छिन्नश्चेत्तन्तुरेष प्रदिशति च फलं नास्तिकत्वादतस्य प्रागल्भ्याद्गाढमन्धं तम इति विबुधा आस्तिकाश्चक्षते स्म ॥ ३ ॥ युक्तं तद्यत्र धीरप्रतिहतगतिभाक्तत्र विश्रान्तिमृच्छेद्दृष्टा कीटेषु योगिष्वविहतमतिषु ध्येयमात्राऽऽत्मतैव। आस्तिक्याद्देवतानामपि सदृशवपुर्ध्यान-

भाजां तु युक्तं लोकाः कर्माशयानामपि सुदृढतमप्रत्ययाच्छास्त्रजन्यात् ॥ ४ ॥ नान्तं मार्गस्य चास्य क्वचिदपि लभते कामपाशेन बद्धः कुर्वन्कर्माणि योनिष्वथ भुवनपदेष्वश्नुते स्थानजन्म। कामात्रस्तोऽपि कश्चित्प्रकुरुत इह यः शास्त्रपाशेन बद्धो नित्यं नैमित्तिकं वा स खलु मम मतश्चास्तिकेष्वग्रगण्यः ॥ ५ ॥ यद्विश्वासाद्वयं तु प्रतिपदगहनं कर्म भूयाचरन्तस्तिष्ठामस्तत्किमस्तीत्यहह भवति च प्रोक्तजन्तोर्विचारः। नायं स्याद्भोगकाले कृतिहृतमनसः सर्वथा त्यक्तभोगस्यैवं जिज्ञासनं स्यात्तदनु गुरुवरान्वेषणायां प्रवृत्तिः ॥ ६ ॥ ईशानुग्रहकाल एव हि यदा विश्वेश मामुद्धर त्रस्तोऽहं जरठे जगत्यतितरां जन्माख्यखाते पतन् । यातान्यब्दशतानि देशिकपदं तत्त्वावबोधक्षमं सम्यग्दर्शय मोचयाखिलकृतेरेवं मुहुः प्रार्थयेत् ॥ ७ ॥ तस्मै स प्रदिशत्यमोघवचनं श्रीसद्गुरुं मोचकं तत्त्वारामसलौकिकं तदपि च श्रद्धा दृढा चेद्भवेत्। तस्मै पृच्छति कर्मपाशमखिलं छित्त्वा कथं स्थास्यते स्वास्तिक्यं बुध वर्धयाखिलसुखावास्यै च कर्मच्छिदे ॥ ८ ॥ आस्तिक्यादहमादरेण पतितः कर्मण्यतन्द्रो मुहुस्तस्मात्कर्मविमूलनं कथमिति श्रीदेशिकेन्द्रोच्यताम् । आस्तिक्यं तव किंविधं वद सखे विश्वस्य बीजं तथा विश्वस्याखिलकार्यनिर्वहणकृज्जानाति विश्वं त्विति ॥ ९ ॥ अस्तीत्येव हि वेदनीयमितरद्रूपं गुरोः कल्पनोपासार्थं जडमानसस्य सहसा चित्तेन तन्निष्कलम्। आरूढं भवतीत्युपासनविधेराचार्यपाल्यः क्रमस्तस्मात्सर्वमतानि मूलपदवीसोपानभूतानि च ॥ १० ॥ युक्तोऽप्याग्रह एव तत्र नहि चेद्विस्रंसमानात्क्रमादारोढुं नहि मूलभूतपदवी शक्येत कैश्चित्क्वचित्। यो यो यस्य गुरुः स तं क्रमगतं सिद्धान्तकं श्रावयेत्तन्निश्चित्य तथैव कर्मसहितस्तत्रैव विश्राम्यति

---

१ शास्त्रपरवशस्यैवास्तिकत्वं तदुक्तकर्माचरत एव कर्मित्वमिति श्लोकद्वयार्थेन पितामहपाठप्रमाणा निरस्ताः॥

॥११॥ एवं कल्पितविग्रहानुसरणात्तल्लोकरूपादिकं प्राप्नोत्यच्युतनिश्रयादथ पुनर्मन्दस्तु विस्त्रस्यति। शास्त्राश्रक्रमतो न कुत्रचिदपि स्थैर्यं गुरौ वर्तते तस्मान्नास्तिकबन्धुरेष गदितो निश्चित्यभावात्कचित् ॥ १२ ॥ सर्वस्यापि गुरुर्विवेकजनकस्तद्दत्तमत्यादरात्तत्त्वे तत्कथिते सहैव गुरुणा विश्रान्तिमृच्छेज्जनः। भूयस्तत्र च योऽधिकस्तदुदिते तत्त्वे विवेकं भजेत्तल्लोकाधिपसंमते सह पुनस्तेनैव विश्राम्यति ॥ १३ ॥ यावत्तत्त्वमबाधितं न लभते तावद्विवेकक्रमादूर्ध्वं गच्छति हीयते नहि पुनः शास्त्रीयमार्गाश्रयात्। ये केचित्कचिदप्यनाश्रितपदास्ते जन्ममृत्यूल्बणात्संसारात्सुविमोकमार्गविधुरा विध्वस्त एवासते ॥ १४ ॥ ये नास्तीति विमर्शनाधिमतयो नास्तीत्युपासारतास्ते नास्तित्वपराभिधेऽन्धतमसि प्रेङ्खन्त्यनावृत्तिकाः। एवं कापिलगौतमप्रभृतयस्तत्त्वे स्वयं निश्चिते विश्राम्यन्ति न यावदेव गुरुणा संदर्शितोऽध्वा भवेत् ॥ १५ ॥ सोऽपि स्वीयगुरूपदिष्टसरणिं यच्छेत्क्रमाप्तां चिरादित्थं मूलगुरुप्रदिष्टसरणौ सर्वे स्थिताः शाश्वतम्। ब्रह्मैवाहमिति स्थितः परगुरुः स स्वीयशिष्येषु च स्वीयं ज्ञानमुदाहरेन्नतु परं दातुं स शक्तो यतः ॥ १६ ॥ कर्तृत्वादिकमादिशन् गुरुपदं नो विन्दते कश्चन ज्ञातं तत्त्वमुपादिशेत्कथमसावज्ञातजिज्ञासुषु। द्वैतं स्वे परतन्त्रतामथ पुनर्भोगे क्रियालभ्यतां कर्तृत्वं च स वेत्ति पामरजनस्तत्रोपदेश्यं भवेत् ॥ १७ ॥ शास्त्रीयाः सगुणाः क्रिया यदि दिशेत्तत्त्वं तु तन्नो भवेदास्ते किं किमु नास्ति कोऽहमिति तज्जिज्ञासने शिष्यके। यत्प्राङ् नास्ति न चास्ति चान्तत इतो मध्येऽपि तन्नास्ति तद्भानं नास्ति तदेव भाति परतः पूर्वं च यत्संस्थितम् ॥ १८ ॥ शुक्तिं पश्यति वक्ति रूपकमिति स्वाज्ञानतो मानवः शुक्तिस्त्वेकघनैव भाति वितथा रौप्यं तु रौप्यप्रभम्। यत्र द्वैतमिवाद्वये भवति तज्ज्ञानादिकं ज्ञानवद्भोगो भोग इव प्रमाणसरणिं प्रोह्यैव भानं यतः ॥ १९ ॥ यत्काल-

न्वयमस्ति तस्य सहसैवाच्छादकं किं भवेद्यन्नास्त्येव तदीयभानजनकं किंवा भवेत्तद्वद । स्वाविद्यैव हि तद्द्वयस्य जननी सत्ता न चेण्याऽसतो नाभावः सत इष्यते मुनिवरै रूपापहानिर्यतः ॥ २० ॥ अस्तित्वं परमार्थरूपमसता प्राप्येत कस्माच्च सत् नास्तीति प्रथते ऋतेऽज्ञजनतां सद्देशिकानाश्रिताम् । नाभावः सत इष्यते नच पुनर्भावो सतोऽपीष्यते तस्माद्द्वयसत्स्वरूपममलं त्वं स्वस्थतामामुहि ॥ २१ ॥ भोगः कुत्र च कुत्र कर्म गहनं द्वैतं क्व वा संस्थितं यावन्नैव विचारणेन्द्रियगतं सत्यं तु तावद्भवेत् । यस्मादिन्द्रियवर्ग एष सुमते नाकाङ्क्षते भासने दृश्यानां परमार्थतां मतिमतां जिज्ञासनं काङ्क्षते ॥ २२ ॥ अस्तित्वं त्वपहाय किं वद सखे दृष्टं त्वया कुत्र वा स्वर्णत्वं तु विहाय कुत्रचिदहोऽलङ्कारमीक्षेत कः । तस्मादस्ति विभाति यत्तदहमित्यन्तर्दृढं निश्चयं संस्थाप्य स्वसुखेन कर्मगहनात्तीर्णोऽसि पूर्णोऽसि च ॥ २३ ॥ एवं दत्तविवेकपूर्णहृदयोऽस्तित्वाख्यतत्वे परे विश्राम्येद्गुरुणा सहैव विबुधोऽनावृत्तिमत्यद्वये । यस्मान्मूलगुरुक्रमादयमिह प्राप्तोऽस्ति मार्गो महान्यद्रूपे स्वगुरुः प्रयाति सहसा शिष्योऽपि तत्र क्रमात् ॥ २४ ॥ आस्तिक्यस्य फलं गुरुक्रमगतं चास्तित्वमात्रस्थितिर्यस्मिन् भाति चराचरं च विविधं यद्भाति सर्वत्र हि । मृत्सत्तामतिलङ्घ्य कास्ति कलशे सत्ता सतः कल्पिते सर्वासत्वमतः सतस्तदुररीकुर्वंश्च सार्वात्म्यभाक् ॥ २५ ॥ तन्तुर्ज्ञानाख्य एवं निगदित इह ते यं समालम्ब्य यज्ञाद्गच्छेत्तत्परमं पदं सकलदृङ् नारायणो यत्र हि । अर्वाचीनमतावलम्बिमनुजोऽप्यर्वाक्पदे संविशेदास्तिक्यं दृढमस्ति चेत्परपदं गच्छेच्च सोऽपि क्रमात् ॥ २६ ॥ एवं निरूपितौ तन्तू ज्ञानधर्माभिधौ मया । आस्तिक्यमूलावालम्ब्य फलमस्तित्वमश्नुते ॥ २७ ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो

१ विषमः.

समाऽव्ययमनुत्तमम् ॥ २८ ॥ नाहं प्रकाशः सर्वस्य योगमायासमावृतः। एवं प्राहार्जुनायेदं तत्त्वं कृष्णः कृपाकरः ॥ २९ ॥ तस्मात्कल्पितरूपाणि भजन्कल्पितरूपधृक्। उत्तरोत्तरमुत्कृष्टं पदं गच्छेच्च कल्पितम् ॥ ३० ॥ धर्म एव स चोद्दिष्टः कर्मसाध्यत्वचोदनात्। न ज्ञानं तत्त्वविश्रान्तेरभावात्कर्मयोगिनि ॥ ३१ ॥ तत्त्वज्ञानेऽपि चेत्कर्म पाशच्छेदः कदा भवेत्। कर्तृत्वमेव पाशः स्याद्भोगगर्तनिपातनः ॥ ३२ ॥ तच्छेदार्थं ज्ञानमिष्टमतः प्राहार्जुनं हरिः। सर्वपाशच्छेदकारिकर्मत्यागं कृपाकरः ॥ ३३ ॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ३४ ॥ आस्तिक्यमूला ये धर्मा नास्तिकानां च ये मताः। सर्वांस्तान्संपरित्यज्य तत्त्वनिष्ठो भवानघ ॥ ३५ ॥ तन्निष्ठायां च यत्किंचित्पापं कर्तृत्वनामकम्। तच्छिद्यतेऽकर्तृता ते तादात्म्यादस्तिरूपतः ॥ ३६ ॥ श्रुतिरप्याह तत्त्यागं त्यागेनैकेऽमृतं ययुः। ज्ञानात्प्राक् साधनं त्यागो ज्ञानादूर्ध्वं तु लक्षणम् ॥ ३७ ॥ ज्ञानमप्याह भगवान्न सत्तन्नाऽसदुच्यते। एकत्वान्नोच्यते सत्तदद्वितीयं कथं वदेत् ॥ ३८ ॥ असंभवात्प्रपञ्चस्य नासदित्यपि चोच्यते। सदसद्वागतीतं तत्सत्तामात्रं परं पदम् ॥ ३९ ॥ न शून्यसमता तस्य तद्भावी जडतामियात्। इदमन्धंतमः प्रोक्तं यज्जडत्वं प्रमातरि ॥ ४० ॥ सद्भावी सुखचिद्रूपसत्तामात्रस्वरूपधृक्। मुक्त इत्युच्यते योगी वेदान्तैर्बुधसंमतैः ॥ ४१ ॥ यो यद्भावयते नित्यं स तदेव भविष्यति। योगमार्गे प्रसिद्धं तद्योगः स्याद्भावनैव हि ॥ ४२ ॥ एतन्निदिध्यासनं स्यात्कीटदृष्टान्तसंभवः। कस्यचिद्बलवच्छ्रद्धायुक्तस्यैव भविष्यति ॥ ४३ ॥ कस्यचिद्बुद्धियुक्तस्य गुरुवाक्यसमं भवेत्। उपदेश्यैकरूपत्वं चरमं जन्म यस्य हि ॥ ४४ ॥ इदं ते नाऽतपस्काय नाऽभक्ताय कदाचन। नचाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति ॥ ४५ ॥ इति गोप्यतमं तत्त्व-

ज्ञानमास्तिक्यहेतुकम् । अर्जुने हरिणा प्रोक्तमुक्तं तत्कृष्णभिक्षुणा ॥ ४६ ॥ धर्मपक्वो ज्ञानमार्गे पदमाधातुमर्हति । महापुरुषतो लब्ध्वा ज्ञानं मुच्येत पाशतः ॥ ४७ ॥ ज्ञेयासतां निश्चयानुरूपां को वारयेदिह । तथा गुर्वनुरूपत्वं शिष्यस्य दृढचेतसः ॥ ४८ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां सर्वमताविरोधिगुरुमार्गफलकथनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

ॐ अस्तीति निश्चित्य करोषि कर्म नास्तीति निश्चित्य जहासि तत्तु । कर्माग्रहश्चेत्तव नास्तितायां निश्चित्य भावोऽनुमितो मतो नः ॥ १ ॥ नास्तीति बुद्धस्य च दृश्यवर्गे तृप्तिर्विरागोपशमादि चिह्नम् । अस्तीति बुद्धस्य पदेपदे स्यात्कामादिदोषप्रभवा क्रियापि ॥ २ ॥ मृत्सत्यताबोधदृढस्य दृष्टौ निमज्जति स्वे कलशो निदाने । कथं हि तत्सुन्दरतानिमित्तो रागोऽथवा द्वेष उदारबुद्धेः ॥ ३ ॥ मृत्सत्यतातुल्यतयैव दृष्टा घटेऽपि सत्ता यदि तर्हि रागः । कामोऽथ लोभः प्रशमं न याति सत्यासिपे किं शममेति चेतः ॥ ४ ॥ विश्वस्य विम्बस्य च सत्त्वमद्धा निदानसत्त्वं स्थगयत्यतज्ज्ञः । निदानसत्तामतिलङ्घ्य का वा कार्येषु निर्लक्षणकेषु सत्ता ॥ ५ ॥ बुध्नोदरादीन्यपहाय को वा घटोऽस्ति तल्लक्षणसङ्गरङ्गः । बुध्नोदरादीनि मृदाश्रितानि मृदेव तल्लक्षणसंप्रवृत्तिः ॥ ६ ॥ बुध्नोदरादीनि च लक्षणानि मृदो घटस्यापि न योगभाञ्जि । अव्याप्तितोऽसंभवतः क्रमेण तस्माद्घटो दुर्घट एव लोके ॥ ७ ॥ घटत्वजातिर्ननु यत्र दृष्टा स एव वाच्यस्तु तदानुपूर्व्याः । चेदित्थमात्थाऽथ स एव पृष्टः किंलक्षणः कुत्र च वा विभाति ॥ ८ ॥ बुध्नोदरं लक्षण-

---

१ नाशास्त्रपक्वो धर्मपक्वो ज्ञानपक्वो नाज्ञानपक्वो गुरुरिति सिद्धान्तस्सर्वशास्त्रसंमत एव श्रीस्वाम्यनुभवसिद्धोऽपीति कल्पितानुभवपण्यैः पाखण्डिभिर्भेतव्यम्.

मस्य रूपं चेत्कम्बुकण्ठोऽपि तथा न किं स्यात्। घटत्वजातिः क्व संभृता स्याद्व्यासज्यवृत्तिर्न हि जातिरिष्टा ॥९॥ जात्येकता वा कलशैकता वा स्वरूपपक्षे तव बाधनीया। द्वित्वादिवन्नित्यतया विमुक्ता जातिः प्रतीयेत मते तवैव ॥ १० ॥ तस्माद्घटो नाम न विश्रुतोऽपि पृथङ्मृदो दर्शनमज्ञतैव। अलंकृतिर्हेममिदां भजेश्चेन्मूल्यद्वयं त्वं लभसे कुतोऽपि ॥११॥ अतो भिदादर्शनमेव तृष्णा विवृद्धिहेतुं प्रवदन्ति सन्तः। भेदापनोदान्न ऋते विचारफलं प्रकल्प्यं प्रशमाभिघातात् ॥ १२ ॥ अलङ्कृतौ भेदमपोह्य हेम्नस्तन्मूल्यतृष्णामतिवर्तते ज्ञः। अविद्यमानं बत विद्यमाने प्रकल्प्यते यत्नशतेन धीरैः ॥ १३ ॥ अविद्यमानं त्यजति स्वकीयमविद्यमानत्वमनन्तरं च। सुविद्यमानत्वमपीह तद्भजेच्चित्रं किमस्मादपरं मते ते ॥ १४ ॥ अयःशलाका त्यजतु स्वकीयमयस्त्वमारोहतु हेमताऽत्र। धर्मी यतो विद्यत एव तत्र कार्यद्वयं यत्र विमृश्यते ज्ञैः ॥ १५ ॥ अविद्यमानं यदि कार्यकारि वेदान्तिभिः कस्तु कृतोऽपराधः। मृन्नो जलादानकृतौ समर्था घटो न सन्मायिकमेव सर्वम् ॥ १६ ॥ अङ्गीकृतेनापि सुतेन वन्ध्या चेदाप्तकामा कलशेन तद्वत्। भवान्कृतार्थो भवतु प्रभूतं नाङ्गीकृतिर्वस्तुविचारसह्या ॥ १७ ॥ वस्तुस्थितिः कामयते कदाचिदङ्गीकृतिं चान्यकराश्रयां चेत्। अङ्गीकृतेः पूरुषतन्त्रतैव ततोऽन्यथा किं न भवेत्पदार्थः ॥ १८ ॥ विचित्रतां वारयितुं क ईष्टे धियां ततोऽनन्तमतानि लोके। तत्त्वं ततः किं विविधस्वरूपं ततो मतानां भ्रमतैव युक्ता ॥ १९ ॥ परस्परव्याहतिचिन्तनेन प्रमाणता कस्य मतस्य मान्या। स्वाङ्गीकृतं स्वेतरवेद्यताया दूरे ततः स्वाग्रहजीवितं तत् ॥ २० ॥ यदाग्रहायत्तविभासनं तत्सत्यं कथं कुत्र च केन दृष्टम्। तदेकवेद्यो बत रज्जुसर्पः सत्यत्वमृच्छेच्छतधापि दृष्टः ॥ २१ ॥ यथान्धकारस्य सुतो भुजङ्गो रज्जौ निवासं तनुते यथेच्छम्। तथा घटः संतनुते मृदादौ भेदेन वाऽभेदत एव

सोऽस्तु ॥ २२ ॥ गते तमस्यामहबीजभूते भुजङ्गवत्क्षीयत एव ते घटः । निजैकवेद्या प्रकृतिः शिवोऽणवस्तमःसुतास्तेन सहाप- यन्ति ॥ २३ ॥ दृष्टौ निरूढं तु तमो रविर्हरेद्बुद्धौ च रूढं तु तमो विचारः । येनाग्रहस्त्याज्यत एव सर्वैः संत्यज्य तं मार्गयतां क्व विभ्रम् ॥ २४ ॥ अस्तिनास्तीत्याग्रहं चेत्त्यजेत्पुरुषपुङ्गवः । मोक्षलक्ष्मीसुखं तेन लब्धं चरमजन्मना ॥ २५ ॥ अयं समाधिः कैवल्यं शुद्धा ब्राह्मी स्थितिः स्मृता । वागतीता पराकाष्ठा ज्ञानस्य परमोऽवधिः ॥ २६ ॥ विधिर्वापि निषेधोऽस्य किंकरः शंकरस्य हि । आत्मानात्मविभागस्य वार्ता यस्माद्बिभेति हि ॥ २७ ॥ समाधिरेष निर्बीजः प्रोक्तः कृष्णेन भिक्षुणा । सर्वाविरोधिसंस्थेयं व्युत्थानं नास्य विद्यते ॥ २८ ॥ भेदाभेदावजानन्तो बाला लीलां वितन्वते । अजानन्सदसद्भावौ तथा क्रीडति पण्डितः ॥ २९ ॥ सदसद्वाद- माश्रित्य परिश्रान्ताः सुपण्डिताः । स्वस्वाग्रहं परित्यज्य कुतो न स्थीयते सुखम् ॥ ३० ॥ कारणे सदसद्भावमाश्रित्यैके विवादिनः । कार्ये केचन तस्मात्तु स्वाग्रहः कलहप्रियः ॥ ३१ ॥ अन्याग्रहगृहीतं तु न स्वगोचरतां भजेत् । परिशिष्टः स्वाग्रहस्तु त्याज्यः सर्वैर्मनी- षिभिः ॥ ३२ ॥ यस्यामतं मतं तस्य मतं यस्य न वेद सः । इति श्रुतिः सर्वमतत्यागात्तत्वाप्तिवादिनी ॥ ३३ ॥ वृद्धा अपि वदन्त्येवं बुद्धेः फलमनाग्रहः । यदाग्रहगृहीतं स्यात्तत्कथं तत्त्वमिष्यते ॥ ३४ ॥ इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः । निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ ३५ ॥ यदाग्रहमृते सिद्धं तत्समं सर्ववादिनाम् । आग्रहोत्था विशेषास्तु निर्विशेषं मतं सताम् ॥ ३६ ॥ तस्मादाग्रहसंत्यागात्सत्तामात्रावलम्बनम् । समाधिरुक्तः सर्वेषां मतो निर्बीजनामकः ॥ ३७ ॥ सङ्कल्पमात्रमेवैतज्जगन्मिः- थ्यात्वमुत्थितम् । तदसङ्कल्पमात्रेण लीयते क्वापि वस्तुनि ॥ ३८ ॥ अविचारेण तत्त्यागो योग इत्यभिधीयते । सद्विचारेण तत्त्यागो

मोक्ष इत्यभिधीयते ॥ ३९ ॥ स्वस्वाग्रहगृहीतेषु निरोधो हठनामकः। विचारसिद्धे विश्रान्ती राजयोग उदाहृतः ॥ ४० ॥ यत्र तत्त्वमृते किंचिन्न भाति नच पश्यति। एष सर्वश्रुतिमतो राजयोग उदाहृतः ॥ ४१ ॥ सङ्गस्तु विषयाणां मे माभूदिति वने कचित्। स्वला-भतुष्ट्या संसुप्ती राजयोग उदाहृतः ॥ ४२ ॥ स्वातिरिक्तं न किंचित्तु निःसङ्गत्वं सदा मम। एवं सभासु विश्रान्ती राजयोग उदाहृतः ॥ ४३ ॥ मायामयं मयि नहि नाहं मायामयेऽपि च। इति कूटस्थविश्रान्ती राजयोग उदाहृतः ॥ ४४ ॥ अस्तीति प्रति-पन्नस्य विशेषे वाद इष्यते। तथा भाति प्रियमिति प्रतिपन्नस्य चेष्यते ॥ ४५ ॥ सर्ववादान्परित्यज्य तत्तदाग्रहसंभवान्। सच्चि-त्सुखे समे संस्था राजयोग उदाहृतः ॥ ४६ ॥ अन्वयाद्भाति सर्वत्र व्यतिरेके च शिष्यते। तत्तत्त्वे ज्ञानिनः संस्था राजयोग उदाहृतः ॥ ४७ ॥ यथा पुत्रे कलत्रे वा निश्चयाद्रमते जनः। तथा विचारिते संस्था राजयोग उदाहृतः ॥ ४८ ॥ यत्र व्युत्था-नशङ्कैव नोदेति सुविचारिते। तत्र संस्थैव सहजा राजयोग उदाहृतः ॥ ४९ ॥ अवस्थात्रयमात्रं हि विश्वं त्वयि विभासते। पश्य त्वं मृगवारीव राजयोग उदाहृतः ॥ ५० ॥ मायामात्रं ब्रह्ममात्रं विश्वं पश्य सकौतुकम्। मा वा पश्य सुखं तिष्ठ राज-योग उदाहृतः ॥ ५१ ॥ शङ्काया मूलविच्छेदः समाधिरभिधीयते। एष एवाज्ञतानाशे मोक्षोऽयं सुखशेवधिः ॥ ५२ ॥ येन यस्य प्रसङ्गः स्यात्स तत्त्वविनिर्णयात्। सुखमाप्नोति विश्वस्य तत्त्वं ज्ञात्वा सुखी भव ॥ ५३ ॥ विश्वस्य तत्त्वमस्तित्वं तवेशस्यापि तन्मतम्। कथं विभेदमालिङ्ग्य दुःखी भवसि सन्मते ॥ ५४ ॥ अस्तित्वे निर्विशेषेऽपि भेदश्चेद्द्वैतमः कथम्। विशेषान्भेदविज्ञा-नहेतूनङ्गीकरोति हि ॥ ५५ ॥ अस्तित्वेऽपि विशेषश्चेत्तत्सामान्यं च किं भवेत्। यदभेदव्याप्यताऽस्य विशेषस्य मतं तव ॥ ५६ ॥

सामान्यानतिरेकित्वं विशेषस्य मतं यदि । सामान्यं सर्वरूपेण भातीति तव संमतम् ॥ ५७ ॥ सर्वरूपेण यद्भाति तदेकं तत्त्वमुच्यते । अतात्त्विकत्वं रूपाणामङ्गीकृतमहो त्वया ॥ ५८ ॥ यदि तान्यपि तत्त्वानि सामान्याभेदसंभवः । विशेष इति कस्मात्ते मते समुपपद्यते ॥ ५९ ॥ तस्मादस्तित्वमेवैकं जीवविश्वेशनामकम् । विशेषास्तेऽत्र सर्वाल्पज्ञते विश्वं च तद्वपुः ॥ ६० ॥ क्वास्ति विश्वं क सर्वज्ञः क जीवः कच बन्धनम् । निरिन्धने सचिदग्नौ विचारेण हुतं तव ॥ ६१ ॥ एषा निर्बीजता प्रोक्ता समाधेर्वेदवित्तमैः । अन्तःप्रज्ञत्वादिदोषमुक्ततत्त्वसमाश्रितैः ॥ ६२ ॥ अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ ६३ ॥ इति काठकमन्त्रोऽपि सन्मात्रमविशेषकम् । तत्त्वं प्राह ततः सौम्य तत्र विश्रान्तिमाप्नुहि ॥ ६४ ॥ अप्रमेयं परं ब्रह्म यतो वाङ्मनसातिगम् । जगदप्यप्रमेयं तु तदन्तर्वाङ्मनो यतः ॥ ६५ ॥ अचिन्त्यरचनारूपं जगत्को वर्णयेज्जनः । अचिन्त्यमद्वयं तत्त्वमपि वर्णयते कथम् ॥ ६६ ॥ तस्मान्मौनं समालम्ब्य चिन्तां संत्यज्य दूरतः । यत्र कुत्र वस त्वं तु तत्र काशी स्वयं भवेत् ॥ ६७ ॥ भ्रमं प्रमां च संत्यज्य सामग्रीविरहात्स्वयम् । प्रमातृतां च संत्यज्य तिष्ठ त्वं मुग्धबालवत् ॥ ६८ ॥ पश्य पश्य शिशुं दुग्धस्निग्धमुग्धास्यमन्तिकात् । अपश्यन्सदसद्वापि पश्यन्स्वपिति मातरम् ॥ ६९ ॥ त्वदादिष्टपदे नूनं विश्रान्तिमगमं गुरो । अगृह्णन्नत्यजन्चापि विश्रान्ति सहजां गतः ॥ ७० ॥ असंभवाद्वैतशान्तिरबाधादद्वयस्थितिः । अवबुद्धानुभूता च किमतः परिशिष्यते ॥ ७१ ॥ अद्वितीयावबोधेन द्वैतं तु सह कर्मभिः । दग्धं दावाग्निना यद्वद्विपिनं सह जन्तुभिः ॥ ७२ ॥ अस्तीति निश्चितं तत्त्वमसीति यदि बुध्यते । सर्वाऽसंता तस्य सिद्धा मुक्तस्यान्तिमजन्मनः ॥ ७३ ॥ यस्मिन्सुखो शिवः साक्षाद्यत्र श्रीरमणो

हरिः । यत्र शक्तिः सर्वविद्या विग्रहा पद्मजस्तथा ॥ ७४ ॥ सनकाद्या वसिष्ठाद्या दत्तशेषशुकादयः । तत्र तिष्ठ निराबाधे पदे नैश्चिन्त्यनामनि ॥ ७५ ॥ श्रीदेशिकेन्द्रपादाब्जमकरन्दमधुव्रतः । कृष्णानन्दोऽपि तत्रैव क्रीडति श्रीगुरोर्मुदे ॥ ७६ ॥

इति कृष्णानन्दसरस्वतीविरचितायां श्रीकैवल्यगाथायां सहजनिर्बीजसमाधिनामाष्टमोऽध्यायः ॥ ८ ॥

---

ॐ अङ्गानामिन्द्रियाणां वा मनसोऽथ तवापि च । अन्तरस्पन्दमालब्धं तत्तत्त्वं परमं पदम् ॥ १ ॥ न जाग्रता न स्वपता न सुषुप्तेन वा पुमः । न लब्धं नापि संत्यक्तं तत्तत्त्वं परमं पदम् ॥२॥ न ध्यायता न ब्रुवता नापि कर्मपरेण च । अपह्नोतुं शक्यते यत्तत्त्वं परमं पदम् ॥ ३ ॥ जाग्रत्स्वप्नः सुषुप्तिर्वा येनास्तीति निगद्यते । नोच्यते यन्न केनापि तत्तत्त्वं परमं पदम् ॥ ४ ॥ अस्त्यस्म्यस्मीति सहसा व्यवहारं तनोति यत् । विचारे मूकतां याति तत्त्वं० ॥ ५ ॥ भाति भासि च भामीति व्यवहारं तनोति यत् । विचारे भानमात्रं यत्तत्त्वं० ॥ ६ ॥ यः स्वतन्त्रः प्रियो भूत्वा परतन्त्रं प्रियं भजन् । लब्धं सुखमिति स्वस्थस्तत्तत्त्वं० ॥ ७ ॥ यस्मिन्स्वप्नो विलीयेत सुषुप्तिर्जागृतिस्तथा । यस्मिन्नेव विभासेत तत्तत्त्वं० ॥ ८ ॥ येनैव दृश्यते विश्वं विश्वं यन्न न पश्यति । सदा स्वस्थं समाभासं तत्तत्त्वं० ॥ ९ ॥ यद्गोचराः प्रमाणानि प्रमाणाऽगोचरं च यत् । सर्वसिद्धं स्वयंज्योतिस्तत्तत्त्वं० ॥ १० ॥ यदानन्देनेन्द्रियाणि कायो वाङ्मनसे अपि । स्पन्दन्ते स्वस्वविषये तत्तत्त्वं० ॥ ११ ॥ यल्लब्ध्वा शान्तिमाप्नोति हर्षं शोकं जहाति च । सदेहं विस्मरेद्विश्वं तत्तत्त्वं० ॥ १२ ॥ यस्मिन्नात्मतया लब्धे तृणवन्मन्यते जगत् । स्वानन्दे तृप्तिमाप्नोति तद्विष्णोः परमं पदम् ॥ १३ ॥ यन्न भूतं भविष्यद्वा वर्तमानं सदैव यत् । न

गोचरो न स्थगितं तद्विष्णोः० ॥ १४ ॥ न परोक्षं नापरोक्षं नित्य-भातमशब्दकम् । ऋते गुरुं न यद्भाति तच्छैवं परमं महः ॥ १५॥ यदन्तर्यद्बहिश्चापि यन्नान्तर्न बहिः स्मृतम् । अगम्यं च निरालम्बं तच्छैवं परमं महः ॥ १६ ॥ यद्भाति सर्वरूपेण न सर्वं यत्परावरम् । न परं नावरं चापि तच्छाक्तं परमं महः ॥ १७ ॥ यदेव शब्दमहसा भाति विश्वात्मकं पुनः । शब्देनैवाद्वयं सिद्धं तच्छाक्तं परमं महः ॥ १८ ॥ यदिन्द्रियगणाध्यक्षमिन्द्रियागोचरं पुनः । इन्द्रियाणामिन्द्रियं च तदेतद्गाणपं महः ॥ १९ ॥ न यद्भासयते विश्वं विश्वं येन च भास्यते । प्रकाशनिरपेक्षं च तत्सौरं परमं महः ॥ २० ॥ निष्कलं निरपेक्षं च कर्णवेधैकसाधनम् । अलक्ष्यं योगगम्यं च तदेतद्भैरवं महः ॥ २१ ॥ संसारभीरुलोकानामभयं यद्भयातिगम् । नादैकवोध्यममलं तदेतद्भैरवं महः ॥२२॥ षडध्वसु विभात्येव षडध्वास्पृष्टरूपकम् । षडध्वशोधसंवेद्यं तदेतच्छाम्भवं महः ॥ २३ ॥ जगता शोभते यत्तु जगद्येन च शोभते । अज्ञानमात्रस्थगितं श्रीकृष्णाख्यं परं महः ॥ २४ ॥ यच्छब्दमूलं शब्दानां विचारेण विभासते । शब्दान्वेत्ति असत्यद्वा तदेतद्व्याकृतेर्महः ॥ २५ ॥ तारमात्रैकसंवेद्यं तारकं यत्नमन्तरा । सर्वशास्त्राप्रतीतं च तदेतद्वैदिकं महः ॥ २६ ॥ अहमित्येव यद्भाति त्वमित्यप्युच्यते जनैः । त्वन्ताहन्तैक्यरूपं यत्तत्त्वं परमं पदम् ॥ २७॥ अहन्तेदन्तयोर्भाति तद्वयत्यागमात्रतः । सामरस्यं भजत्यद्वा तत्तत्त्वं परमं पदम् ॥ २८ ॥ चिन्तया जायते दूरे नैश्चिन्त्यात्प्रथते स्वयम् । निष्कलं निर्विकल्पं च तत्तत्त्वं० ॥ २९ ॥ सुप्तेष्वपि च भूतेषु तूष्णीं जागर्ति यत्सदा । स्वपन्ति जागृता यत्र तत्तत्त्वं० ॥ ३० ॥ तत्त्वत्रिंशच्छ्लोकमाला कण्ठे येन कृता सता । कैवल्यसिंहासनगस्तृप्तो भवति मानवः ॥३१॥ एतत्तत्त्वपदंप्राप्ताः केचिन्मूकाः पिशाचकाः । भवन्ति विस्मृतप्राणा मत्ता बाला जडा अपि ॥ ३२ ॥

श्रीगुरो करुणासिन्धो सम्यक्तत्त्वं निरूपितम् । परंतु मम तु ब्रह्म त्वत्कृपैवेति मे मतिः ॥ ३३ ॥ कल्पवृक्षो यदा दातुं फलानीष्टानि याचके । प्रवृत्तः स्यात्तदा हस्तैः कियद्भिः कुरुतेऽन्तिके ॥ ३४ ॥ न दाता तृप्तिमायाति पात्रे दानेन कुत्रचित् । कुपात्रमपि नो तृप्तिमायाति सकलैः फलैः ॥ ३५ ॥ सद्गुरुर्दुर्लभो लोके सच्छिष्योऽपि ततोऽधिकः । उभयोः संगमो मोक्षवार्तालक्ष्मीललामकः ३६

इति श्रीकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां तत्त्वनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

---

ॐ त्वदूक्ततत्त्वनिष्ठा मे यथा दृढतरा भवेत् । तथोपदिश हे नाथ भगवन्भक्तवत्सल ॥ १ ॥ यथा मे सफलं जन्म यथैव शरणागतिः । यथा त्वदुपदेशश्च सफलः स्यात्तथा वद ॥ २ ॥ जाले निपात्य नामानि रूपाणि विविधानि च । उपहासे प्रवृत्तानि न किं त्वं परिपश्यसि ॥ ३ ॥ क्रियाजालं भोगजालं गले ते पतितं सखे । पश्चात्तापैकफलदं तस्मान्मुक्तस्तु पूरुषः ॥ ४ ॥ भोगजालच्छेदनेन क्रियाजालं विनश्यति । भोगजालं दृढतरं तच्छेत्ता नरपुङ्गवः ॥ ५ ॥ भोगजाले दृढे छिन्ने दृढवैराग्यधारया । निर्मूलं कर्मजालं तु स्वयं कालेन शुष्यति ॥ ६ ॥ भोगजालस्य कामाद्या ग्रन्थयः षड्दाहृताः । नित्यपुष्टा रसक्लिन्नास्ता विवेकेन शोषयेत् ॥ ७ ॥ शुष्कासु तासु भविता वैराग्यं विषयाननु । धर्मनिष्ठस्य वैराग्यं मुमुक्षुत्वाय कल्पते ॥ ८ ॥ तेन सन्मार्गनिष्ठा स्याच्चित्तैकाग्र्यमुपासने । उपासनापक्वमतौ तनोति करुणां हरिः ॥ ९ ॥ तेन प्रेमोद्गमश्चित्ते समुद्भवति सुन्दरः । कथं कदा लभेयं तदीश्वरस्य पदाम्बुजम् ॥ १० ॥ येन संतारिताः पूर्वे ब्रह्माद्याः सनकादयः । प्रह्लादाद्या गजेन्द्राद्या द्रौपद्याद्याश्च काश्चन ॥ ११ ॥ भगवन्करुणासिन्धो मामुद्धर भवाम्बुधेः ।

त्रस्तोऽहं जन्ममृत्युभ्यो भोगेभ्यः कर्मतोऽपि च ॥ १२ ॥ इत्थं रोदिति कुत्रापि दृष्ट्वा हसति पामरान् । स्मृत्वापि स्वचरित्राणि कश्चिद्धसति रोदिति ॥ १३ ॥ स्मृत्वा तदैश्वरं रूपं कश्चिन्नृत्यति गायति । बिभेति सङ्गान्मूर्खाणां सत्सङ्गं स समिच्छति ॥ १४ ॥ देहे गेहे कलत्रे वा पुत्रे सुत्रामपत्तने । रमते क्वापि नो रागात्स्वोपास्यविरहातुरः ॥ १५ ॥ कदा मिलसि हे कृष्ण कदा मिलसि शङ्कर । कदा मिलसि हे तार कदा मिलसि हे गुरो ॥ १६ ॥ एवं ब्रुवाणोऽरण्येषु खेटके पत्तनेऽथवा । संचरन्खेदमाप्नोति स्वप्रयोजनतत्परः ॥ १७ ॥ विधिं वापि निषेधं वा शत्रुवन्मन्यते तदा । यथा कामी काम्यमानसुन्दरीरतिलालसः ॥ १८ ॥ नरकोऽप्यस्तु मे शश्वदभीष्टं फलमश्नुयाम् । किं मे लाभेन हान्या वा यत्र नो कामितं फलम् ॥ १९ ॥ कदाचिद्वार्तया तस्य स्वाभीष्टस्य फलस्य च । हृष्यत्यथो खिद्यति च रोदित्यपि हसत्यपि ॥२०॥ कः स्यादभीष्टसंसिद्धिमार्गदो मम मोचकः । इति संप्रार्थयन्नन्तर्नामान्येव वदत्यसौ ॥ २१ ॥ कृष्णस्य विरहे राधा राधाया विरहे हरिः । कृष्णकृष्णेति राधेति गृणीते रमते नहि ॥ २२ ॥ यो यत्कामः सतल्लाभमन्तरा रमते कथम् । रमेत चेत्तदा कामी मोक्षे वा विषये नहि ॥ २३ ॥ इत्थं श्रान्तस्य दैवेन कश्चित्सत्सङ्गमो भवेत् । तत्र शृण्वन्ब्रह्मवार्तामजानन्नपि हृष्यति ॥ २४ ॥ जानन्तमनुकुर्वाणं धिक्करोति परीक्षितम् । जानात्येवेति विश्वासः कुत्रापि च भविष्यति ॥ २५ ॥ तदा पृच्छति हे नाथ यः सतां हृदयंगमः । सर्वोत्तमः सर्वनाथः सर्वाधारः क तं वद ॥ २६ ॥ सर्वोत्तमस्तु सर्वत्र नोचेत्सर्वोत्तमः कथम् । सर्वोत्तमः परिच्छिन्न इति वागेव दुष्यति ॥ २७ ॥ परिच्छिन्नस्वरूपेण सर्वसाम्यं महेशितुः । न निवारयितुं शक्यं देशान्तरनिवासिनः ॥ २८ ॥ सर्वत्र चेत्कामयेत स्वाश्रयं सर्वशब्दितम् । सर्वं यदाश्रितं भाति तत्कथं

कामयेद्धरिः ॥ २९ ॥ पूर्णत्वमीश्वरस्येष्टं सर्वैरपि च तैर्थिकैः । तत्राऽन्यस्य प्रवेशस्तु न कथंचिद्भविष्यति ॥ ३० ॥ पूर्णत्वं तु तदेव स्याद्यत्राऽन्यस्य प्रवेशनम् । दुर्घटं तत्र विश्वस्य कथा नैवोपपद्यते ॥ ३१ ॥ यथा स्वर्णेऽलङ्कृतिभिः स्वपूर्णे च स्वयं घने । प्रवेष्टुं नैव शक्येत तथैव जगतेश्वरे ॥ ३२ ॥ यद्यलङ्कारसंस्था ते स्वघनेऽपि च हेमनि । इष्टा स्यात्तदभेदेन प्रतिबिम्बवदिष्यताम् ॥ ३३ ॥

ननु वायुर्यथा व्योम्नि पूर्णेऽप्यस्ति चरत्यपि । तथा विश्वस्य सत्ता चेत्का हानिर्भेददर्शिनः ॥ ३४ ॥ यथा वियत्परे तत्त्वे तथा वायुर्वियत्यपि । पूर्णत्वस्याविरोधेन स्थितिः कल्प्या मनीषिणा ॥ ३५ ॥ नाभेदमन्तरा पूर्णे स्वघने वस्तुनि क्वचित् । वस्त्वन्तरं दृष्टचरं हेम्न्यलङ्कारवत्सताम् ॥ ३६ ॥ विरलावयवे द्रव्ये द्रव्यान्तरसमागमः । प्रकाशानां जलानां वा यथैवास्ति समागमः ॥ ३७ ॥

घनेऽनवयवे वस्तुन्यहो वस्त्वन्तरं कथम् । वर्तेतावयवान्भिन्द्याज्जह्याद्वा संस्थितिः कथम् ॥ ३८ ॥ आद्येऽनवयवं वस्तु भङ्गात्सावयवं भवेत् । द्वितीयेऽवयवाभावः प्राप्नोत्यवयविन्यपि ॥ ३९ ॥ गुणजात्यादिवत्सत्ता चेत्तदाप्ययमेव हि । न्यायः संचारणीयः स्यादुभयोर्घनता यतः ॥ ४० ॥ एतेन विभुवस्तूनां भेदः सर्वो निराकृतः । घनत्वव्याहतिभिया सदेकं तु बहूकृतम् ॥ ४१ ॥ यथा शुक्तिगतं रौप्यं शुक्त्यैव घनतां गतम् । मिथ्येति गीयते तद्वद्विश्वं ब्रह्मघनं स्मर ॥ ४२ ॥ एष सर्वोत्तमो देवो यद्घनं भाति वै जगत् । स एव त्वं त्वमेवैष जगच्छब्देन भण्यसे ॥ ४३ ॥ त्वमेव ज्ञायसे वेदैरध्यारोपापवादिभिः । त्वमेव ध्यायसे योगैर्विषयो नहि कस्यचित् ॥ ४४ ॥ त्वमपि स्वं न जानीषे कुतोऽन्यः कल्पितस्त्वयि । विश्वं जानामीति वदस्यात्मानं नेति वक्षि च ॥४५॥ जानासि चेज्ज्ञानरूपः स्वप्रकाशो निराकृतिः । त्वयि भाति जगत्सर्वं भासि त्वं कुत्र कस्य वा ॥ ४६ ॥ गुरो विश्वं न पश्यामि

न वेद्मि स्वमपि स्वयम् । न जागर्मि न सुप्तोऽस्मि न जडोऽस्मि किमद्भुतम् ॥ ४७ ॥ वत्स ब्राह्मी स्थितिरियं त्वादृशेनैव लभ्यते । ईशानुग्रहपात्रेण मुमुक्षुशिखरेण हि ॥ ४८ ॥ अहन्तां ममतां हित्वा ज्ञप्तिरूपेण संस्थितिम् । पार्थाय प्राह भगवान्स्वपार्थक्यनिवृत्तये ॥ ४९ ॥ विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः । निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ५० ॥ एषा ब्राह्मीस्थितिः पार्थ नैनां प्राप्य विमुह्यति । स्थित्वाऽस्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ५१ ॥ त्वन्ताऽहन्ता यावदस्ति तावदीश्वरसंगमः । कथं सेतौ दृढे वारि सामरस्याय कल्पते ॥ ५२ ॥ सेतौ भग्ने स्वयं वारि सामरस्यपरायणम् । तथा त्वमहमि च्छिन्ने आत्मा समरसो भवेत् ॥ ५३ ॥ परोक्षीकृत्य यस्त्वं तु दुःखवार्धौ निपातितः । मोहेन स तु नष्टस्ते विरहः शान्तिमागतः ॥ ५४ ॥ अत एवाह भगवानर्जुनाय सतां पतिः । शिष्याय स्वरहस्यं तु ज्ञानी त्वात्मैव मे मतम् ॥ ५५ ॥ आत्मीभूते भगवति किमन्यत्परिशिष्यते । रहस्यसुखमास्वाद्य तूर्ष्णीं तिष्ठ सुखाम्बुधौ ॥ ५६ ॥ गुरो दयालो त्वद्वाणीं शृण्वन्नेव हरेः पदम् । लब्धवांस्ते किंनु दास्ये याचे याचकपुङ्गवः ॥ ५७ ॥ त्वत्पादपद्ममकरन्दमधुव्रतोऽहं त्वत्पादसेवनविधौ तु धृतव्रतोऽहम् । भूयासमेव बहुजन्मसु मोक्षकाङ्क्षावृक्षाद्विहङ्गम इव स्वहृदो जगाम ॥ ५८ ॥ कच्चित्ते चित्तमाधत्ते स्वास्थ्यं यद्विरहातुरम् । कच्चिल्लब्धं पदं तत्तु कच्चित्त्वं कृतकृत्यकः ॥ ५९ ॥ कृतं कर्तव्यमखिलं प्राप्तं प्राप्तव्यमेव मे । भवत्समागमादीशः सर्वतो दृश्यते मया ॥ ६० ॥ अहं कृष्णस्त्वं च कृष्णः सर्वं कृष्णमयं जगत् । यद्दुःखदं ममाभूत्तत्सुखदं सुखरूपधृक् ॥ ६१ ॥ सर्वं ब्रह्ममयं विश्वं मन्मयं त्वन्मयं तथा । पश्यामि कृपया तेऽद्य गतो मे विरहज्वरः ॥ ६२ ॥ सर्वं प्रियतमं मेऽद्य भाति त्वत्कृपया गुरो । इतस्ततो मे श्रीकृष्णः सच्चिदान-

न्दविग्रहः ॥ ६३ ॥ यस्तारबोध्यः सर्वात्माप्येकात्मा द्वैतवर्जितः । मिलितो मे प्रियतमः कुतः शोकः कुतो भयम् ॥ ६४ ॥ दर्शंदर्शं त्वदुदितमहो सर्वतो रूपमेकं गाढंगाढं मम हि मनसा श्लिष्यते रज्यते च । आनन्दाश्रूण्यहह नयने मुञ्चतः सिञ्चतो मां स्मारं-स्मारं तव हि वचनं नृत्यमाविष्करोमि ॥ ६५ ॥ गाढस्नेहस्तव पदयुगे नित्यमास्तां दयाब्धे वाणी नामान्यहह मधुराण्याचिनोतु प्रकामम् । कामः क्वापि त्वदुदितमहाचित्प्रकाशाग्निदग्धश्चिन्ता-रत्नं सकलमभवच्छ्रीगुरोः संगमेन ॥ ६६ ॥ किं वा पश्यसि हे वत्स विश्वं वा ब्रह्म वा निजम् । पूर्वानुभूतविश्वेऽस्मिन्को विशेषः प्रदृश्यते ॥६७॥ विश्वं नाहं वेद्मि गुरो स्वप्नवत्स्मर्यतेऽधुना । अस्तिनास्तीत्यादिदूरं वस्तु किंचन विद्यते ॥ ६८ ॥ यदा पश्या-म्यहं विश्वं तदा पश्येयमीदृशम् । तन्मात्रं ब्रह्ममात्रं वा मन्मात्रं वेति मे मतिः ॥ ६९ ॥ हेमज्योतिष्यलङ्कारज्योतिरस्तं गतं यथा । ब्रह्मज्योतिषि विश्वाख्यज्योतिरस्तं गतं द्रुतम् ॥ ७० ॥ सर्वज्योतिः परंब्रह्म तज्ज्योतिः श्रीगुरुर्मतः । त्वज्ज्योतिरपि परब्रह्मज्योतिरस्तं-गतं गुरो ॥ ७१ ॥ मज्ज्योतिरपि तत्रैव समीभूतमहोऽधुना । किं वच्मि पृच्छ्यते किंवा तुभ्यमस्तु नमोनमः ॥ ७२ ॥ किं कालं वर्णयाम्यद्य किं तमीशं कृपाकरम् । किं त्वां दीनोद्धारदक्षं किं मां वा भाग्यशालिनम् ॥ ७३ ॥ अभूद्यस्तु मदुद्धारहेतुः कालोऽ-खिलार्थदृक् । फलदानैकदक्षाय नमः कालाय बन्धवे ॥ ७४ ॥ येन संदर्शितः साक्षाच्छ्रीगुरुः करुणाकरः । मदुद्धारसमर्थाय नमः स्तादुरये मुहुः ॥ ७५ ॥ येन ब्रह्मीकृतं सर्वं मया सह तया सह । वाचापि तस्मै गुरवे नमस्तुभ्यं महात्मने ॥ ७६ ॥ येना-नन्दोदधिर्लब्धः शोकसागरयादसा । तस्मै मह्यं भाग्यवते नमश्च-रमजन्मने ॥ ७७ ॥ सफलीकृतमद्वाचे विफलीकृतकर्मणे । निखि-लीकृतविश्वाय शिष्यायाशीः सदा मम ॥ ७८ ॥ संदिग्धं नैव

मन्तव्यमसंदिग्धं न संत्यजेत् । शिरसा धारयाज्ञां मे येन भूयो न शोचसि ॥ ७९ ॥ संदिग्धं दृश्यमात्रं स्याद्बहवो यत्र वादिनः । असंदिग्धं स्वप्रकाशं तच त्यक्तुं न शक्यते ॥ ८० ॥ दृश्यमात्रं न जानेऽहं यत्र ते बहुवादिनः । असंदिग्धं स्वप्रकाशमेकमेवावशिष्यते ॥ ८१ ॥ अद्वितीयब्रह्मबोधो दृढस्ते जात एव हि । अतः परं त्वं मुक्तोऽसि यथेच्छसि तथा वस ॥ ८२ ॥ तव पाशद्वयं नष्टमद्वितीयात्मबोधतः । विद्वच्छ्लाघ्योऽसि मान्योऽसि यथेच्छसि तथा वस ॥ ८३ ॥ विश्वं न पश्यतोन्धस्य यथा पादक्रमो भवेत् । वर्तितव्यं च गन्तव्यं वक्तव्यं तेन तत्तथा ॥ ८४ ॥ नान्धस्य कूपपातेन दोषः कश्चन सज्जते । आरोहेण गिरेः श्लाघा नो भयं तस्य वै गुणः ॥ ८४ ॥ अतएव हि दत्ताद्याः शास्त्रातीताश्च पूरुषाः । वसिष्ठाद्याः शास्त्रबद्धा उभये ज्ञानिनः समाः ॥ ८५ ॥ अतः केचिज्जडा मूका बाला मत्ताः पिशाचकाः । शिष्टा भ्रष्टाश्च केचित्तु वर्तनं न समं सताम् ॥ ८६ ॥ न जानन्ति यतो देहं सप्रपञ्चं सहेतुकम् । जानन्तीव विभान्त्येव यतः सुप्ता जगत्स्थितौ ॥ ८७ ॥ सुप्ता एव हि ते शिष्यं शिक्षयन्ति जगन्नहि । एकं ब्रह्माद्वयमिति तन्न चित्रमिदं शृणु ॥ ८८ ॥ यतो गुरुक्रमः सर्वोऽप्येवमेव महीतले । विस्मारयन्ति स्वादृष्टं स्वदृष्टं शिक्षयन्ति च ॥ ८९ ॥ यद्युभावपि विश्वज्ञौ तुल्यौ तौ गुरुशिष्यकौ । विशेषे गुरुता तस्य तज्ज्ञातस्यैव वृद्धये ॥ ९० ॥ अविचारदशायां यद्दृष्टं तत्तु यथा स्थितम् । तस्याऽविरोधि किंचित्तु शिक्षयन्न गुरुर्भवेत् ॥ ९१ ॥ अविचारदशा दृष्टबाधायैव महाजनाः । वेदाः शास्त्राणि सर्वाणि वाचोयुक्तिश्च लौकिकी ॥ ९२ ॥ आबाल्याद्य-

---

१ ननु स्वप्रकाशतदीयकत्वादिष्वपि सन्ति वादिन इति कुतो न तदपि सन्दिग्धमिति चेन्न सन्देहकर्मतया तस्यापि तथात्वेऽपि तत्कर्तृत्वे तस्य स्वतन्त्रत्वेन स्वप्रकाशत्वात् ।

ज्जगद्दृष्टं विचारनिरपेक्षकम्। विचारज्ञा न पश्यन्ति बोधयन्त्यपि नेति च॥ ९३॥ स्वयं पश्यति यद्वस्तु तन्नास्तीति कथं वदेत्। यन्न दृष्टं स्वयं वस्तु तत्कथं प्रतिपादयेत्॥ ९४॥ तस्माद्विश्वान्ध एवात्र विश्वं नास्तीति बोधयेत्। अद्वितीये जागृतस्तु बोधयेदद्वयं शिवम्॥ ९५॥ शिष्यप्रारब्धवेगेन शिष्यमात्रे तु जागृतिः। इयमीशकृपा शिष्ये विश्वान्धः शिष्यदर्शनः॥ ९६॥ न तारसदृशो मन्त्रो विश्वग्रासैकतत्परः। न वेदान्तसमं शास्त्रमुपपत्तिनिरूपकम्॥ ९७॥ न मुमुक्षुसमः शिष्यो यत्र वाक् सफला गुरोः। न विश्वसुप्तसदृशो गुरुर्गम्यैकवेदनः॥ ९८॥ लब्धं किं परमं धाम पूर्णं सर्वोत्तमं च यत्। बाधिता किं जगद्बाधा यया दीनोऽभवज्जनः॥ ९९॥ त्वद्वाक्श्रवणमात्रेण लब्धं धामानिवर्तनम्। जगद्वार्तापि नो यत्र बाधा तत्र च कीदृशी॥ १००॥ यथा ब्रह्माम्बुधौ मग्नः शृण्वन्वाचः सुनिर्मलाः। तवोपकारक्षीराब्धौ तद्वदेव हि हे गुरो॥ १॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥ २॥ आबाल्यलब्धं विश्वं यद्वचसैव हृतं पुनः। अदृष्टं यत्कृपादत्तं तस्मै० ३ आत्मसत्तां पश्यतैव विश्वसत्ता न दृश्यते। इति बोधो येन दत्तस्तस्मै०॥ ४॥ ईशभीतं जगत्सर्वं नियतिं नैव मुञ्चति। यद्भीतं लीयते क्वापि तस्मै०॥ ५॥ विश्वहस्तिसमूहस्य भेत्ता श्रवणगोचरः। हृद्गुहावासिसिंहाय प्रणवाय नमोनमः॥ ६॥ यस्मिन्कर्णे विशत्यद्धा पीयूषमयतां जगत्। आपेदे चित्रचारित्रप्रणवाय नमोनमः॥ ७॥ ब्रह्मणो यः समुद्भूतो ब्रह्मीभूतं करोति यः। उपासकं च विश्वं च प्रणवाय नमोनमः॥ १०८॥

इति श्रीमत्परमहंसकृष्णानन्दविरचितकैवल्यगाथायां श्रीतत्त्वनिष्ठादृढीकरणं नाम दशमोऽध्यायः॥ १०॥

---

यावन्न जागृतो बोधः स्वस्मिंस्तावज्जगत्स्थितिः । शुक्तावजागृतः पुंसो रजतस्य स्थितिर्यथा ॥ १ ॥ शुक्तौ सुषुप्तपुरुषस्य यथैव रौप्यं सुप्तस्य तद्वदपि चात्मनि विश्वसंस्था । शुक्तौ तु जागृतिरपोहति रौप्यमद्धा बोधेऽपि जागृतिरपोहति विश्वसंस्था ॥ २ ॥ रौप्यं तु शुक्तिघनमेव विभाति यद्वद्विश्वं च बोधघनमेव विभाति तद्वत् । विस्मृत्य शुक्तिघनतां घनमाह रौप्यं तद्वच्च बोधघनतामपहाय विश्वम् ॥ ३ ॥ उत्पत्स्यमानमिह सर्वमहो निदानगाढं निगूढमिव भाति निदानमेव । एतद्विचित्ररचना निजविस्मृतिस्था तस्या अपोहकुशला ननु देशिकोक्तिः ॥ ४ ॥ विस्मृत्य जागृति गतं ननु देहगेहं स्वप्ने प्रपश्यति वपुर्गृहमन्यदेव । तच्चापि विस्मृतिपथं नयता सुषुप्तिर्दृष्टा स्वविस्मृतिघना स्वघनाप्यवस्था ॥ ५ ॥ पूर्वानुभूतसदृशाः पुनरेव पश्यत्यद्धेति ताश्च मनुते तनुते प्रकामम् । कर्माणि गच्छति पुनःपुनरेव लोकानूर्ध्वाधरानतिवुभुक्षुतयाऽन्यतन्त्रः ॥ ६ ॥ वाचोऽशृणोद्यदभिधानपराश्च तत्र जागर्ति विस्मृतिपदं नयते च पूर्वम् । इत्थं च शब्दरशनासित एव जन्तुर्वाक्तन्तिवद्धनरसंगमतोऽतिदुःखी ॥ ७ ॥ स्वस्वाधिकारमनुरुध्य वदत्स्यतन्त्रः कर्माणि लोकनिवहानपि काम्यमानान् । श्रोतापि संमनुत एव हि कामतन्त्रो जागर्ति कर्मणि फलेऽपि च सत्यबुद्धिः ॥८॥ यावत्फलेषु वत कर्मभवेषु जन्तुर्जागर्त्यनात्मसु तमस्यपि रक्षसीव । तावद्भयं स मनुते परिहारमिच्छन्मार्गाश्रितं मृदुमतिं शरणं करोति ॥ ९ ॥ वक्त्येव तत्त्वमतिहीनतयान्यदेवानाराध्य थासि न भयं क्वचिदेव काले । भूयो घना भवति बोधसुषुप्तिरद्धा देवानवैति परतत्त्वमिति प्रकामम् ॥ १० ॥ नो वेत्ति विस्मृतिदशासु समुत्थितांस्तान्स्वं वा समां स मनुते वत वस्तुसत्ताम् । दंष्ट्रादिकां त्रिपुटिकामपि वेत्ति सत्यां तावन्निशीथ इव संतमसं प्रवृद्धम् ॥११॥ बोधाम्बरेऽस्मृतिघने तडितो हि वाचो धर्मार्थकामनिवहं पुरुषा-

र्थरूपम् । संदर्शयन्ति निजभासनमस्ति यावत्तावद्विभासमहह क्षणिकार्थजातम् ॥ १२ ॥ यो यद्विलोकयति तत्र च स प्रवृत्तो विद्युत्प्रकाशमवलम्ब्य कदाचिदेव । प्राप्नोति कश्चिदपि मध्यत एव विद्युत्पातेन नाशमुपयाति तमोन्धतां वा ॥ १३ ॥ लब्ध्वापि कश्चिदिह खिद्यति वज्रपातादन्धोऽथवा भवति तत्र तडिल्लयेन । एवं च विस्मृतिघनोत्थतडित्प्रकाशमालम्ब्य खिद्यति न जागृतिमेति कोऽपि ॥ १४ ॥ दैवाच्छरद्घनघटागुरुराजनाम्नी संयाति सान्द्रकरुणारसपूर्णगर्भा । यत्रैव निक्षिपति बिन्दुकणान्स्वकीयान्मुक्तास्त एव तत एव लवेति चित्रम् ॥ १५ ॥ आविष्करोति *निजगर्जनशब्दपूगं सोऽसीति बोधतनुरोमिति सा प्रगल्भम्* । नेहास्ति किंचन निजस्मृतिहीनचित्खे त्वं जागृहि श्रमसृते सुखमेषि विद्वन् ॥ १६ ॥ एवं निशम्य गुरुमेघसमुद्भवं तं जागर्ति कश्चिदिह सर्वनिवृत्तकामः । यावद्घनस्वनमहो स्मरति स्वचित्ते तावन्न किंचिदपि दृष्टिपथेऽस्ति विश्वम् ॥ १७ ॥ अहो क्कुत्र गतो मेघो यत्स्वनं शृण्वतो मम । क्षणादनर्थनिवहः कुत्रापि विलयं गतः ॥ १८ ॥ तदुत्थाः शब्दनिवहा एव मे हृदयं गताः । त एव मे गुरुः साक्षादन्वहं बोधकारिणः ॥ १९ ॥ तैः सहैव विनोदेन यदा क्रीडामि चेतसा । तदैवाद्वयरूपं मे स्मृतिमेति पदे पदे॥२०॥ यदा स्मरामि मद्रूपं विस्मरामि जगत्तदा । तस्माद्विस्मृतिरेवात्र कारणं विश्वदर्शने ॥ २१ ॥ विस्मरामि यदात्मानं न स्मरामि जगत्तदा । सुषुप्तिर्नाम सावस्था यदा नाहं न वै जगत् ॥ २२ ॥ आत्मानमपि विश्वं च संस्मरामि समं यदा । तदा तरङ्गवद्भाति मयि विश्वं कदाचन ॥ २३ ॥ संस्मरामि निजं रूपं किंचिद्विश्वं स्मराम्यहम् । तदेदं मृगवारीव भाति विश्वं कदाचन ॥ २४ ॥ आत्मानं संस्मराम्येव विस्मरामि जगत्तदा । शुक्तिसंस्मृतिवेलायां रौप्यवत्क गतं जगत् ॥ २५ ॥ यदा दृढतरा रूढा संस्मृतिः

स्वात्मवस्तुनि । तदेतच्छशशृङ्गाभं मुक्तिसीमेयमिष्यते ॥ २६ ॥
एतावद्बोधसंदात्रे नमो गुरुघनाय ते । यस्य विद्युत्त्वप्रकाशः
सकृज्जाताऽतिनिर्मला ॥ २७ ॥ भवितव्यमनेनेत्थमित्याग्रहमहा-
गिरिः । यद्वाग्वज्रेण निर्भिन्नो नमो गुरुघनाय ते ॥ २८ ॥
नमोस्तु ते महावाक्यगर्जनाय घनस्थितिम् । विलाप्य बोधलीनाय
सद्यो जागृतिहेतवे ॥ २९ ॥ नमस्ताराय शब्दाय गुरुमेघोद्गताय
ते । स्वपदे एव येनाहं जागृतः स्थिरतां गतः ॥ ३० ॥ मां
विस्मृत्य मयैवैतन्निद्रायां कल्पितं जगत् । मयैव बुद्धं भूयोऽपि
मयि लीनं सवेदकम् ॥ ३१ ॥ सर्वस्य चाहं हृदिसन्निविष्टो मत्तः
स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव
चाहम् ॥ ३२ ॥ एवं यां प्राह भगवानर्जुनाय निजां स्थितिम् ।
तामद्य दृष्टवानद्धा मदन्यः कोऽस्ति सर्वकृत् ॥ ३३ ॥ मत्सुप्तौ
सर्वमेवैतन्मया दृष्टमहोऽधुना । मयैव जागृतिं नीतो जागरन्नह-
मद्भुतम् ॥ ३४ ॥ मयैव रचिता वेदा मयैव गुरुमूर्तिना । बोधितः
शिष्यरूपोऽहममुञ्चन्निजजागृतिम् ॥ ३५ ॥ जागरन्निदमर्थेऽहं
जागृतिं नीतवान्पुनः । अहमर्थे स्वप्रकाशे मामहं महदद्भुतम् ३६
जागरन्निद्रितः प्रोक्तो निद्रितोऽपि च जागरन् । नोभयं मयि
संभाव्यं दृष्टा काचिच्चमत्कृतिः ॥ ३७ ॥ या निशा सर्वभूतानां
तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो
मुनेः ॥ ३८ ॥ यदुक्तं यदुनाथेन स्वानुभूतिरहस्यकम् । ज्ञातं
तदधुना नूनं पूर्वदृष्टं गतं क्व वा ॥ ३९ ॥ अवबुद्धोऽसि मुक्तोऽसि
वत्स जागर्षि जागृतौ । पुनः स्वपिहि विस्मृत्य त्वां मामीशं श्रुतिं
जगत् ॥४०॥ यथा यथा विस्मरसि सुखाधिक्यं तथा तथा । त्वदी-
यसुखलेशेन सर्वे जीवन्ति जन्तवः ॥४१॥ शृणुयाद्य इमां गाथामा-
त्मजागृतिकारिणीम् । सुविचार्य स जागर्ति शिवो भवति चाद्वयः ४२

इति श्रीकैवल्यगाथायां विस्मृत्यपोहो नामैकादशोऽध्यायः ॥ ११ ॥

ॐ यथा पश्येत्तथा विश्वं भाति बुद्धेर्गुणस्तु सः। बुद्धिश्च गुरुणा दत्ता संप्रदाय इतीर्यते ॥ १ ॥ कश्चित्पश्यत्यणूनेव तदारब्धं च कश्चन। कश्चिद्गुणमयं वेत्ति कश्चित्कर्ममयं तथा ॥ २ ॥ कश्चिन्मनोमयं वेत्ति कश्चित्स्मृतिमयं तथा। कश्चिद्भूतमयं वेत्ति कश्चिन्नित्यं पमपश्यति ॥ ३ ॥ अनित्यं वेत्ति कश्चित्तु सत्यमित्यपि कश्चन। कश्चिन्मायामयं वेत्ति कश्चिच्छन्दमयं तथा ॥ ४ ॥ कश्चिदीशमयं वेत्ति कश्चित्कालमयं तथा। कश्चित्सुखमयं वेत्ति कश्चिद्दुःखमयं बहु ॥ ५ ॥ कश्चिद्ब्रह्ममयं वेत्ति कश्चिदात्ममयं तथा। नैव पश्यति कश्चित्तु यथा दृष्टिस्तथा जगत् ॥ ६ ॥ यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति। तं चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥ ७ ॥ इति प्राहुर्गौडपादाः शुकशिक्षितबुद्धयः। गुरुहस्तगतं सर्वं बन्धो मोक्षो जगत्तमः ॥ ८ ॥ अनात्मदृष्टिविज्ञेयमात्मदृष्टौ विलीयते। पराक्प्रत्यग्दृशोर्नूनं विरुद्धत्वात्परस्परम् ॥ ९ ॥ श्रुतिः प्रत्यग्दृशं प्राह नेह नानास्ति किंचन। सर्वमात्मैवेदमिति प्रतीचिद्वैतबाधनम् ॥ १० ॥ यथैव शिक्षितो जन्तुःस्तथा स परिपश्यति। अद्वैतशिक्षितैर्विश्वं न दृष्टमिति किं ब्रुवे ॥ ११ ॥ नानाविधाद्वैतशिक्षा अतो नानाविधा दृशः। मिथ आश्चर्यकारिण्यस्ततः प्राह हरिः स्वयम् ॥१२॥ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ १३ ॥ मिथः संमत्यभावेन कोऽपि नो वेद मानवः। अन्योन्यमप्रसिद्धत्वादाश्चर्यं च परस्परम् ॥ १४ ॥ किं सर्वा दृष्टयो युक्ताः किमयुक्ताश्च दृष्टयः। इति चेद्यत्र यच्छिक्षा तां युक्तां मन्यते जनः १५ ब्रह्मैकशिक्षितस्त्वं तु न विश्वं परिपश्यसि। यदि पश्यसि तद्विश्वं ब्रह्ममात्रं हि पश्यसि ॥ १६ ॥ यथा मृगजलं दृष्टमपि नो तृप्तिकारणम्। श्रमतापैकफलदं तन्निवृत्तिः सुखावहा ॥ १७ ॥ अतः

सर्वाणि शास्त्राणि तन्निवृत्तिपराणि च । यतो नानाविधं दृष्टमपि नो तृप्तिकारणम् ॥ १८ ॥ यदि तृप्तिर्भवेत्तस्मान्न निवर्तेत को जनः । दुःखबुद्ध्या निवर्तेत मृगा इव मरूदकात् ॥ १९ ॥ मिथ्या यत्तद्दुःखरूपं यत्सत्यं तत्सुखं स्मृतम् । सत्यमिच्छति नासत्यं न सत्याद्विनिवर्तते ॥ २० ॥ सत्यमस्ति मृषाऽयाति मृगवारीव चातपे । सत्यं पश्यति यन्मिथ्या पण्डितोऽपीन्द्रजालवत् ॥ २१ ॥ तस्मात्सच्चित्सुखे तत्त्वे मृषा दुःखात्मकं जगत् । यथा पश्येत्तथा भाति शिक्षाधीनो हि मानवः ॥ २२ ॥ मया त्वं शिक्षितो वत्स बोधादर्शेऽमले जले । प्रतिबिम्बमिवेक्षस्व तद्रूपेणैव संस्थितम् ॥२३॥ अथवा नेति पश्य त्वं दृष्टेर्दूरं पलायते । बोधोऽस्ति बोध्यं नास्त्येव स्वप्नवच्चेन्द्रजालवत् ॥ २४ ॥ श्रद्धामये जगत्यस्मिन्न चित्रा भिन्न-दृष्टयः । श्रद्धामुत्पादयन्त्येते गुरवः स्वस्वदर्शने ॥ २५ ॥ श्रद्धाम-योऽयं पुरुषो यो यच्छ्रद्धः सएव सः । इत्युक्तरीत्या विन्दन्ते स्वगु-रूक्तेन वर्त्मना ॥ २६ ॥ अणून्वा प्रकृतिं चापि ब्रह्म वा देवता अथो । यतः फलं गुर्वधीनं तस्माज्ज्ञात्वा गुरुं श्रयेत् ॥ २७ ॥ अनात्मज्ञो गुरुर्यस्मादनात्मगतिमादिशेत् । आत्मघातोऽयमेवोक्तो यदनात्माभिमानिता ॥ २८ ॥ अभिमानो द्विधा प्रोक्तो ममाहमिति रूपतः । तद्द्वयं यस्य संनष्टं तथात्मज्ञं प्रचक्षते ॥ २९ ॥ एतद्द्वयं तदा नश्येद्यदैवाद्वयबोधतः । द्वैतनास्तित्वबोधः स्यादन्यथा दृढ-तामियात् ॥ ३० ॥ दुर्घटं कृतकृत्यत्वं द्वैतशिक्षितचेतसः । अद्वै-तशिक्षितस्यैतत्सुघटं तृप्तिहेतुकम् ॥ ३१ ॥ द्वैतसत्यत्वबुद्धिस्तु भवार्णव इतीर्यते । तस्य संतरणोपायो ब्रह्मैकत्वविनिश्चयः ॥३२॥ ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ ३३ ॥ मत्त एवेत्यन्यहेतून्निषिध्य प्राह केशवः । मिथ्यात्वमपि विश्वस्य मिथः संबन्धवर्जनात् ॥३४॥ यदि सत्यं भवेद्विश्वं कुतो न भविताऽनयोः । संबन्धोऽतो मृषा

विश्वमिति चेश्वरदर्शनम् ॥ ३५ ॥ इदं परम्परालब्धं कल्पितानीतराणि तु । दर्शनानि विचित्राणि कपिलादिमुनीश्वरैः ॥ ३६ ॥ क्रमेण तान्यपि परश्रेयोहेतव एव हि । यावत्तद्दर्शनश्रद्धा तावद्दासापि वञ्चितः ॥ ३७ ॥ अतएव हरिः प्राह यो यच्छ्रद्धः स एव सः । यत्फलं गुरुणा लभ्यं तदाप्नोति परम्परा ॥ ३८ ॥ अतश्चाद्वयनिष्ठायां तिष्ठ मच्छिक्षणात्स्थिरम् । अनुभूतिविवादस्तु न कार्यो दृष्टितत्रितैः ॥ ३९ ॥ तस्माद्विलोकय सदा ब्रह्ममात्रं जगच्छिशो । ब्रह्मीभवसि विश्वं च ब्रह्मीभवति संप्रति ॥ ४० ॥ सत्यमुक्तं त्वया नाथ यथाऽपश्यं तथा जगत् । अभादिदानीं ब्रह्मैव जगदित्यभिधीयते ॥ ४१ ॥ व्युत्थानं वा समाधिं वा न जाने क गतौ हि तौ । अद्वितीयं ब्रह्मतत्त्वं कचत्यात्मनि केवलम् ४२

इति श्रीकैवल्यगाथायां उपदिष्टदृष्टिस्थिरीकरणं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

ॐ पुनर्विश्वचमत्कारं शृणु श्रवणभूषणम् । यच्छ्रुत्वानन्दसिन्धौ त्वं निमज्जसि पदेपदे ॥ १ ॥ पृथ्वीज्योतिः स्थूलतरं वारिज्योतिस्ततः परम् । तेजोज्योतिस्ततः सूक्ष्मं वायुज्योतिस्ततोऽप्यणु ॥ २ ॥ व्योमज्योतिस्ततः सूक्ष्मं शब्दज्योतिस्ततः परम् । ततः सूक्ष्मतमं ब्रह्मज्योतिरग्रे न किंचन ॥ ३ ॥ यत्र किंचन तद्ब्रह्म ज्योतिरुक्तं मनीषिभिः । तदेव शब्दज्योतिश्च मायाज्योतिरितीरितम् ॥ ४ ॥ व्योमज्योतिस्तदेवोक्तं वायुज्योतिस्तदेव हि । तदेव तेजोज्योतिश्च जलज्योतिस्तदेव हि ॥ ५ ॥ पृथ्वीज्योतिस्तदेवोक्तं पूर्वमुत्तरशब्दभाक् । अकिंचनज्योतिषीदं ज्योतिः किंचन कल्पितम् ॥ ६ ॥ अकिंचनत्वमत्यक्त्वाभाति पश्य सकौतुकम् । क किंचनज्योतिरास्ते घटज्योतिः क वा मृदि ॥ ७ ॥ मृज्ज्योतिरेकं भासेत यथासंकल्पमीक्षते । तत्संकल्पपरित्यागे मृज्ज्योतिः शिष्यते परम् ॥ ८ ॥ तथा संकल्पितं ज्योतिर्निःसंकल्पे विलीयते । निःसंकल्पदशायां

यच्छिद्रं तद्युज्यते कथम् ॥ ९ ॥ वक्तुं श्रोतुं च मन्तुं च ध्यातुं वा बुद्धिपारगैः । सदा पश्यन्ति कवयस्तद्विष्णोः परमं पदम् १० अकिंचनपरं ज्योतिर्भाति विश्वासना स्वयम् । स्वातिरिक्तमदृष्ट्वैवं स्वयमात्मनि शाम्यति ॥ ११ ॥ रसज्योतिर्गुहायां तु पृथ्वीज्योतिः प्रदीपितम् । तेजोज्योतिर्गुहायां तु जलज्योतिः प्रदीपितम् ॥ १२ ॥ वायुज्योतिर्गुहायां तु तेजोज्योतिः प्रदीपितम् । व्योमज्योतिर्गुहायां तु वायुज्योतिः प्रदीपितम् ॥ १३ ॥ शब्दज्योतिर्गुहायां तु व्योमज्योतिः प्रदीपितम् । ब्रह्मज्योतिर्गुहायां तु शब्दज्योतिः प्रदीपितम् ॥ १४ ॥ अकिंचनगुहायां तु ब्रह्मज्योतिः प्रदीपितम् । अकिंचनगुहा शून्या स्वप्रकाशैकपूरिता । यद्गुहासंप्रविष्टेन न किंचिद्दृश्यते जगत् ॥ १५ ॥ सर्वास्वपि गुहास्वेषा स्थिताऽकिंचन सद्गुहा । केनापि दैवयोगेन दृश्यते यत्र सा गुहा ॥ १६ ॥ यस्यां सुप्ता महासिद्धा दत्ताद्याः सनकादयः । तत्र स्वपिहि गाढं त्वां सेवन्ते सर्वसिद्धयः ॥ १७ ॥ अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः । आस्तिकः कपिलश्चैते यत्र सुप्ताः सुखेन हि ॥ १८ ॥ न यत्रास्ति दिवारात्रिर्यत्र सूर्योऽस्तमेति च । विभान्ति शतशः सूर्या नैको यत्र विभासते ॥ १९ ॥ अप्येषा शीतलतमा सर्वजाड्यं विनाशयेत् । अपि सूर्यशतक्रान्ता सर्वतापं निवारयेत् ॥ २० ॥ नैकोऽपि यत्र तत्रैव भासते सकलं जगत् । यत्र नावां तत्र चावां वदावोपि परस्परम् ॥ २१ ॥ दिवान्धा योगिनो यत्र निमील्याक्षीणि शेरते । उन्मील्याक्षीणि पश्यन्तो दृश्यादेव हि बिभ्यति २२ चक्षुष्मन्तो न पश्यन्ति पश्यत्यन्धा जगत्प्रथाम् । गुहायां संप्रविष्टा ये नावर्तन्ते पुनर्जनाः ॥ २३ ॥ अतिदूरे गुहा सा तु यावन्नो मार्गदर्शकः । मार्गदर्शकलाभे तु सूपविष्टेन लभ्यते ॥२४॥ ज्योतिर्मयी गुहा सा तु न दृष्टा कैरपि क्वचित् । गुरुदत्ताञ्जनालिप्तचक्षुषा दृश्यते सकृत् ॥ २५ ॥ दृष्टं ज्योतिर्मयं विश्वं दृष्टं

ज्योतिर्न किंचन । दृष्टा ज्योतिर्मयी कापि गुहा त्वद्वचसा गुरो ॥ २६ ॥ नमस्ते चिन्नवचसे नमः कारुण्यमूर्तये । यद्वाङ्-दीवहृद्विश्वं सुखरूपेण तिष्ठति ॥ २७ ॥ यद्वाग्धुनीजलं पीत्वा पामरोऽप्यमरो भवेत् । अकिञ्चनगुहाशोभिबोधकुध्र नमोऽस्तु ते ॥ २७ ॥ सर्वज्योतिषि यत्रैकीभवन्ति गुरुनामनि । न किंचि-ज्ज्योतिषे तस्मै वागतीताय ते नमः ॥ २८ ॥ वाचस्त्वदुक्ताः संश्रुत्य चमत्कारार्थगर्भिताः । अपारानन्दसिन्धौ तु मग्नोऽनुद्वि-ग्नमानसः ॥ २९ ॥

इति श्रीकैवल्यगाथायां ज्योतिस्तत्त्वनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

ॐ शृणु वत्स तमोगाथां हृत्तमोनाशिनीं पराम् । यां श्रुत्वा लभते तेजस्तेजः शब्दासहं परम् ॥ १ ॥ पृथ्वीतमो जलतमस्य-स्तमेति निरीक्ष्य । जलतेजोऽप्यस्तमेति तेजस्तमसि नित्यशः ॥ २ ॥ तेजस्तमोऽप्यस्तमेति वायुनामतमस्यपि । वायुनामतमोऽप्येति वियत्तमसि चास्तताम् ॥ ३ ॥ वियत्तमोऽप्यस्तमेति शब्दसंतम-सेऽपि च । शब्दसंतमसं याति स्वप्रकाशतमस्यपि ॥ ४ ॥ यद्य-स्याच्छादनं तत्तु तम इत्यभिधीयते । कार्याच्छादनकारीणि कार-णानि तमो न किम् ॥ ५ ॥ कारणाच्छादनं कार्यमपि तत्तम इष्यते । सर्वाण्यपि च वस्तूनि तम एव न संशयः ॥ ६ ॥ पश्य सूर्यादिज्योतींषि तम आच्छादकानि हि । अतस्तद्दृष्ट्यन्तराये तम एव हि दृश्यते ॥ ७ ॥ न सूर्यज्योतिषा नष्टं पुनर्दर्शनमस्ति यत् । बहिर्देशान्नोपयाति मध्ये नाशप्रसङ्गतः ॥ ८ ॥ न तत्रोत्पादिका काचित्सामग्री दृश्यते क्वचित् । नाभावो भावरूपस्य नीलस्य तमसो भवेत् ॥ ९ ॥ तस्मात्सूर्यादितेजांसि तमःकार्याणि मन्महे । अतः स्वकारणतमोवृतान्येव भ्रमन्ति हि ॥ १० ॥ यथा पृथ्व्या-दिभूतानि स्वकारणवृतानि च । लीयन्तेऽपि च तत्रैव स्वोपादाने

दिने दिने ॥ ११ ॥ यथा निर्वाणमायातो दीपस्तमसि लीयते। तथा निर्वाणमायाताः सूर्याद्या अपि कालतः ॥ १२ ॥ यद्यत्र लीयते वस्तु तत्तत्कार्यं विनिश्चितम् । कार्यदृष्टौ निरुद्धायां कारणस्यैव दर्शनम् ॥ १३ ॥ वायोस्तेजःसमुद्भूतिः श्रुत्या यद्यपि दर्शितम् । तथापि तस्य तात्पर्यमानन्तर्यं सुनिश्चितम् ॥ १४ ॥ तमःसर्वाणि कार्याणि स्वेतरावृतिदर्शनात् । अतएव विचार्यांह तम आसीदिति श्रुतिः ॥ १५ ॥ युक्तं तज्ज्योतिषां नाशे तमोऽन्यत्प्रलये किमु । अतस्तत्कार्यवर्गोऽयमाच्छादयति किंचन ॥ १६ ॥ दिवान्धानां तमोज्योती रात्र्यन्धानां तमस्तमः । दृष्टिरूढमिदं मन्ये यत्तमोनाम लौकिकम् ॥ १७ ॥ अन्यस्य स्थगितं दृष्टौ पश्यत्यन्योऽपि तत्क्षणे । तस्मात्तमो नैकमस्ति दृष्टिभेदे व्यवस्थिते १८ यद्दृष्टावञ्जनं श्रीमद्देशिकेन समर्पितम् । तत्तमो लीयते क्वापि पश्येत्त्वं तमसः परम् ॥ १९ ॥ अतोन्धकारे सुघने सर्वाच्छादनतत्परे । अपि वेत्ति निजं वस्तु नावृतस्तमसा क्वचित् ॥ २० ॥ तदेवैकं परं ज्योतिरनुच्छिन्नमनन्तकम् । तद्भासैव तमोमूलं भासते सकलं जगत् ॥ २१ ॥ तदाश्रयं तमो नूनं तदनाच्छादनं तथा । अपि देशिकशब्देन ज्योतिषैवापसार्यते ॥ २२ ॥ किमस्ति तमसा ग्रस्तं किं त्वयाऽत्रानुभूयते । तद्विचार्य वदाशु त्वं प्रमादो न यथा भवेत् ॥ २३ ॥ अस्त्यन्धकारस्तस्यैव जठरे सर्वमस्ति हि । अप्रवृत्तेन्द्रियव्रातोऽनुभवाम्येकमेव हि ॥ २४ ॥ अस्त्यन्धकारो ज्ञानं वा तमसो ज्ञानमस्ति हि । तर्ह्यस्तित्वं ज्ञानगतं न तमःस्थं प्रभापसे ॥ २५ ॥ ज्ञानमस्ति तमो नास्ति सिद्धं त्वद्वचसैव हि । तर्हि यत्तमसा ग्रस्तं तन्नास्तित्वं च सांप्रतम् ॥ २६ ॥ जलपूर्णघटाभावे जलाभावोऽपि सुस्थिरः । तद्वत्संतमसाभावे विश्वं नास्तीति सांप्रतम् ॥ २७ ॥ अस्ति विश्वं तमोग्रस्तमिति चेदुच्यते त्वया । अनुभूयाथ संस्मृत्य वदस्येतद्वदाशु नः ॥ २८ ॥ सामग्र्यभावाद-

नुभूर्नैव युज्येत सा तदा। तदाप्यनुभवश्चेत्स्यात्को विशेषोऽस्ति तेजसि ॥ २९ ॥ स्मृत्वा चेत्स्मृतिरास्ते वा स्मृतेरनुभवोऽस्ति हि। अनुभूय स्मृतिं वच्मि तर्ह्यास्तेऽनुभवः स्मृतेः ॥ ३० ॥ स्मृतिर्नास्तीति सिद्धं ते तर्ह्यास्ते किंच तच्छृणु। येन त्वं जगतः सत्तां हित्वा स्वस्थो भविष्यसि ॥ ३१ ॥ यत्र यश्च गुणो नास्ति स तमिच्छेत्परस्य हि। यथा जलमुशीरस्य गन्धं कामयतेऽनिशम् ॥ ३२ ॥ तथा दृश्यं वोधसत्तां काङ्क्षमाणं कथं नु सत्। यथा वोधप्रकाशं च प्रकाशः स्यात्कथं जगत् ॥ ३३ ॥ असतश्चाप्रकाशस्य निरस्ता सुखरूपता। तस्माद्विश्वग्रासकारि स्वात्मरूपं महातमः ॥ ३४ ॥ तमोऽपि लीयते यत्र विश्वेन सह सर्वतः। तमोऽपि भासते येन विश्वेन सह सर्वतः ॥ ३५ ॥ तदेकं परमं तत्त्वं श्रुतिगम्यमलौकिकम्। आदित्यवर्णं तमसः परस्तादिति च श्रुतिः ॥ ३६ ॥ यस्मिन्दृष्टे जगद्वार्ता शशशृङ्गायते अहो। अदृष्टे तु वलाढ्या सा तस्मै चित्तमसे नमः ॥ ३७ ॥ अस्मिंस्तमसि खेलन्ति लीलयैव महाजनाः। जगद्वार्ता यत्र क्वापि न दृष्टा न श्रुतिं गता ॥ ३८ ॥ तस्मिंस्तमसि खेलन्ति वोध्यवार्तैव यत्र हि। पामरा वोधवार्तायां दूरदूरचरा नराः ॥ ३९ ॥ काकोलूकनिशा यद्वन्मिथो न श्रुतिगोचरा। अनात्मज्ञात्मज्ञनिशा मिथो न श्रुतिगोचरा ॥ ४० ॥ या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ४१ ॥ सत्यं तमोमयं सर्वमनुभूतमिदं जगत्। तस्य ग्रासकरं वोधतमोप्यद्वयनामकम् ॥ ४२ ॥ यथा वदसि हे नाथ तथा भाति जगन्मम। तस्मै विचित्रवचसे नमस्कुर्मो यथावलम् ॥ ४३ ॥

इति श्रीकैवल्यगाथायां तमोपसरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

ॐ नीतिज्ञोऽपि च धर्मज्ञस्तत्त्वज्ञ इति पूरुषाः । त्रय एव हि विख्याता जगज्जीवनहेतवः ॥ १ ॥ नीतिज्ञः संश्च धर्मज्ञस्तत्त्वज्ञ इति पूरुषौ । द्वावेवेति परे प्राहुर्याभ्यां विश्वं च जीवति ॥ २ ॥ तत्त्वज्ञोऽपि च धर्मज्ञो नीतिज्ञ इति पूरुषौ । द्वावेव० ॥ ३ ॥ तत्त्वज्ञोऽपि च नीतिज्ञो धर्मज्ञ इति पूरुषौ । द्वावेव० ॥ ४ ॥ तत्त्वज्ञोऽपि च धर्मज्ञो नीतिज्ञ इति पूरुषः । एक एवेति च परे येन विश्वं च जीवति ॥ ५ ॥ ईदृशः पुरुषो लोके को भवेदीशसन्तरा । यदि दृष्टः कोऽपि लोके तमीशं मन्यते जनः ॥ ६ ॥ किमु वक्तव्यमहह यत्रैकोऽपि गुणोऽवरः । ईशत्वाय भवेल्लोके यत्रास्ते तत्रयं क्वचित् ॥ ७ ॥ यथा श्रीशंकराचार्या गुणत्रयविभूषिताः । आचार्यपदवीं रूढा जगतो गुरुतां ययुः ॥ ८ ॥ तथैव रामकृष्णाद्या वसिष्ठाद्याश्च पूरुषाः । ईशकोटिषु गण्यन्ते ज्ञानेनैव बलेन ते ॥ ९ ॥ पृथकपृथक्प्रदृश्यन्ते गुणा एते क्वचित्क्वचित् । तेऽपि पूज्यतमा लोके युधिष्ठिरनलादयः ॥ १० ॥ जनकाद्याश्च दत्ताद्याः पृथ्वाद्या अपि केचन । द्वाभ्यामेकेन वा लोके लोकोत्तरतया मताः ॥ ११ ॥ गुणप्रधानभावेन वर्तन्ते सर्व एव हि । उदाहृतेषु चान्येषु न चेत्पूजा कथं भवेत् ॥ १२ ॥ लोकार्थी नीतिमादत्ते सुखार्थी धर्ममञ्जसा । मोक्षार्थी ज्ञानमेवैकं छिद्यते येन वासना ॥ १३ ॥ नीतिधर्मं च जानाति तत्त्वं संमनुतेऽपि च । परंतु बन्धरूपत्वान्नाचरत्येव वक्त्यपि ॥ १४ ॥ अतएव हि वृद्धानां वचनं श्रूयते बहु । उत्तमानां वचः सत्यं चरित्रं तु क्वचित्क्वचित् ॥ १५ ॥ नीत्या धर्मेण वर्धन्ते ता नूनं लोकवासनाः । तत्त्वज्ञानेन छिद्यन्ते इत्येकेऽपि जना मताः ॥ १६ ॥ आचार्यकोटावेते तु गण्यन्ते बहुदर्शिभिः । पालिता लोकमर्यादा जनैरेतादृशैरिह ॥ १७ ॥ कैश्चित्किमस्ति लोकेन तया मर्यादया किमु । इति संरक्षिता ब्रह्मनिष्ठैव यथारुचि ॥ १८ ॥ अवधूतेषु गण्यन्ते

ईदृशास्तत्त्वदर्शिभिः । एतेभ्यः शिक्षितं ज्ञानं बलवद्भवनाशने १९ शिवो दत्तश्च ऋषभो भरतोऽथ शुको मुनिः । इत्याद्याः सिद्धगुरवः सद्योमोक्षैकहेतवः ॥ २० ॥ अवधूतो गुरुः क्वापि केनचिल्लभ्यते भुवि । लब्धेऽपि तत्र श्रद्धा तु सहसा नैव जायते ॥ २१ ॥ यतो मूर्खजनो ज्ञानिन्यपि धर्मं समीक्षते । सर्वोत्तीर्णे स्वेष्टधर्मलाभो दुःशक एव हि ॥ २२ ॥ अतस्तस्मान्निवर्तन्ते सिंहात्त्रस्ता गजा यथा । त आचार्येषु संतुष्टा धर्ममिश्रोपदेशिषु ॥ २३ ॥ जगद्य-द्यपि मिथ्यैव तथापि तव सुव्रत । धर्मोल्लङ्घो नच श्लाघ्यो येन निन्दा भवेत्तव ॥ २४ ॥ ज्ञानी भूत्वापि निन्दायाः पात्रं कस्मा-द्भविष्यसि । अतएव हरिः प्राह पृच्छते पाण्डुसूनवे ॥ २५ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः । लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २६ ॥ एवं मिश्रोपदेशेन मुच्यन्ते दीर्घका-लतः । सगुणे निर्गुणे चापि येषां निष्ठा समा मता ॥ २७ ॥ शुद्धनैर्गुण्यनिष्ठैव कैवल्यपदभाजनम् । इत्याहुरवधूतास्ते धर्मनी-त्युभयातिगाः ॥ २८ ॥ मृद्दम्भः कलशो यद्वद्ब्रह्मदम्भो जगत्तथा । दम्भेऽपि चेत्तव श्रद्धा कदा मुक्तो भवष्यसि ॥ २९ ॥ नेति ज्ञातेऽपि चेच्छ्रद्धा श्रद्धा दम्भोऽयमिष्यते । तत्त्वज्ञान्यपि दम्भीति निन्देयं तावकी न किम् ॥ ३० ॥ अदम्भात्मानमाश्रित्य लभस्वा-दम्भमेव हि । आनन्दं तेन ते हानिः कदापि न भविष्यति ॥३१॥ लोकशास्त्रैकतन्त्रस्य ज्ञानं तु शिथिलं भवेत् । ज्ञानैकनिष्ठा तन्त्रस्य लोकः शास्त्रं च तत्तथा ॥ ३२ ॥ यथायथा ज्ञाननिष्ठा विवृद्धा ते भविष्यति । तथातथा लोकशास्त्रवासना शिथिला भवेत् ॥ ३३ ॥ असौ विशुद्ध इत्युक्तः पक्वो विज्ञानकेवलः । यत्र नैव जगद्वार्ता ब्रह्मवार्तापि काचन ॥ ३४ ॥ उभाभ्यामपि वार्ताभ्यां मुक्तस्य दृढचेतसः । निर्बीजैकसमाधेस्तु स्थितिर्वक्तुं न शक्यते ॥ ३५ ॥ विस्मृताखिलविश्वस्य संस्मृतामलसंविदः । विज्ञानकेवलस्यास्य

दासा हरिहरादयः ॥ ३६ ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ ३७ ॥ इत्याह भगवान्साक्षादुद्धवं प्रति केशवः । तस्माद्विज्ञाननिष्ठस्य योगक्षेमवहो हरिः ॥ ३८ ॥ विज्ञाननिष्ठारूपं तु हंसरूपेण पूर्वजान् । सनकादीन्मुनीन्प्राह सभायां पद्मजन्मनः ॥ ३९ ॥ यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान् । स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेशः ४० एता विमृश्य गुणतो मनसस्त्र्यवस्था मन्मायया मयि कृता इति निश्चितार्थाः । संछिद्य हार्दमनुमानसदुक्तितीक्ष्णज्ञानासिना भज तमाखिलसंशयाधिम् ॥ ४१ ॥ एवं तारविचारेण तीर्णस्याखिलसंसृतेः । आत्मारामस्य तृप्तस्य स्थितिमाह जनार्दनः ॥ ४२ ॥ देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ ४३ ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ॥ ४४ ॥ एवं विस्मृतविश्वस्य विदुषः किमपेक्षितम् । निरपेक्षस्य शान्तस्य दासीभूतं जगत्त्रयम् ॥४५॥ अवधूतक्रमो ह्येष तत्त्वज्ञानैकसंश्रयः । निरूपितो वत्स तुभ्यं तन्निष्ठस्त्वं सुखी भव ॥ ४६ ॥ ज्ञातो मया जगद्दम्भो मयि विस्मरणोत्थितः । सत्यसंस्मरणाच्चित्रं सुषुप्ताविव लीयते ॥ ४७ ॥ घटदम्भो यथा मृत्स्नाविज्ञानेन विलीयते । तथात्मज्ञानयोगेन जगद्दम्भो लयं गतः ॥ ४८ ॥ स्वं विसरन्ती मृत्स्नैव घट इत्यभिधीयते । तथा स्वं विसरन्नात्मा जगदित्यभिधीयते ॥ ४९ ॥ स्वं विसरज्जलं लोके हिम इत्यभिधीयते । तथा स्वं विसरन्नात्मा जगदित्यभिधीयते ॥ ५० ॥ स्वं संसरज्जलं लोके जलमित्यभिधीयते । तथा स्वं संसरन्नात्मा ब्रह्मैवेत्युच्यते बुधैः ॥ ५१ ॥ एता-

दन्तरं मन्ये जगतो ब्रह्मणोऽपि च। यावद्दम्भस्य धर्मस्य मन्यन्ते लौकिका जनाः॥ ५२॥ न दम्भो निष्फलो लोके जगद्दम्भो न निष्फलः। अतएव जनाः केचिद्धसन्त्यपि रुदन्त्यपि॥ ५३॥ फलेषु दम्भजन्येषु मूर्खा एवाधिकारिणः। अदम्भेषु फलेष्वद्धा विवेचनपरा नराः॥ ५४॥ तस्माद्विवेकिजनता न दम्भं नात्ति तत्फलम्। गजभुक्तकपित्थाभं न जानाति न मन्यते॥ ५५॥ जागर्तुं यदि जानीषे सखे जागृहि नानृते। स्वप्नं चेद्द्रष्टुकामोऽसि पश्यावस्थात्रयं सदा॥ ५६॥ यदि त्वं स्वापकामोऽसि विस्मरन्नेव तत्त्रयम्। स्थितो भवसि चेन्नूनं कैवल्यमवशिष्यते॥ ५७॥ नैतज्जाग्रन्न च स्वप्नः संकल्पानामभावनात्। सुषुप्तभावो नाप्येतदभावाज्जडतास्थितेः॥ ५८॥ नान्तर्बहिर्नाधरमूर्ध्वकं वा नान्तं न मध्यं न पुनस्तथादिः। नैतादृशैतादृशशब्दवाच्यं किंचिन्महः केवलमद्वितीयम्॥ ५९॥ पीतं न रक्तं नच नीलशुभ्रं यदा तदा नात्र च तत्र वापि। भोग्यं न भोक्ता नच वेद्यमेतत्किंचिन्महः केवलमद्वितीयम्॥ ६०॥ न द्वैतमद्वैतमथापि नैव न त्वं नचाहं नच तत्तथैव। यन्नो विभास्यं नच भासकं वा किंचि०॥ ६१॥ न ब्रह्ममाया नच कारणं वा न जागृतिः स्वप्नसुषुप्तिभावौ। न जीवितं नो मरणं न चित्तं किंचि०॥ ६२॥ सदादिशब्दासहमेकशब्दासहं तदोङ्कारतडित्प्रकाशम्। समं कथं वच्मि गिरां विदूरं किंचि०॥ ६३॥ इयं कैवल्यपदवी विश्वं विस्मरता सदा। जाग्रता स्वपता वापि लभ्या तारावलं विना॥ ६४॥ कैवल्यपदवी नाथ त्वद्वाग्दीपप्रकाशिता। तदेकनिष्ठापन्नस्य क नीतिः कच धर्मकः॥ ६५ विश्वदम्भे सोऽपि दम्भो विशेषः कोऽस्ति तत्र हि। दम्भमात्रे परिज्ञाते कैवल्यमवशिष्यते॥ ६६॥ यदोंनमःसिद्धमिति मनुबोध्यं महाफलम्। कथं विहाय जनता ग्रन्थचंक्रमणे रता॥ ६७॥

१ तादृशवासनाविरहविरहाः। २ इडभाव ऐच्छिकः।

भिन्ना मे हृदयग्रन्थिश्छिन्ना मे सर्वसंशयाः । क्षपितान्यपि कर्माणि गुरो कैवल्यगाथया ॥ ६८ ॥

इति श्रीकैवल्यगाथायां ज्ञानैकनिष्ठाफलनिरूपणं नाम
पञ्चदशोऽध्यायः ॥ १५ ॥

---

ॐ जातकर्म कृतं तेऽद्य यज्जातस्य नरस्य च । अवश्यमासश्रवणं येन ब्राह्मण्यमाप्यते ॥ १ ॥ जातकर्मविहीनस्य कुलं शीलं वपुस्तथा । व्यर्थमेवेति विद्वांस आहुस्ते तत्त्वदर्शिनः ॥ २ ॥ अबाधितत्वात्सन्नाम बाधितं त्वयि वर्तते । प्रकाशकत्वाच्चिन्नाम बाधितं त्वयि भासते ॥ ३ ॥ सर्वस्मात्त्वं प्रियो यस्मादानन्दो नाम ते गतम् । तस्मात्त्वं सच्चिदानन्दनाम्ना श्रुतिषु गीयसे ॥ ४ ॥ त्वत्सत्तया समुद्भूतं त्वयि विश्वं विलीयते । एतदन्नप्राशनं ते सदा तृप्तिकरं मतम् ॥ ५ ॥ इदयं सर्वरसोपेतमहं ब्रह्मेति मन्त्रतः । भुङ्क्ष्व तेन बलाढ्यस्त्वं तेजस्वी च भविष्यसि ॥ ६ ॥ तीक्ष्णाग्रया तारसूच्या कर्णौ विध्यामि ते शिशो । तेनास्तिक्यफलं पूर्णं लभसे पूज्यसेऽपि च ॥ ७ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थं ते वपुर्जगुः । तस्य मूलं शिरः प्रोक्तं केशास्तस्य जटाः स्मृताः ॥ ८ ॥ प्रपञ्चवासनास्तास्तु मूर्ध्नि नृत्यन्ति ते शिशो । छिनद्मि नेति वाक्येन येनोपनयनार्हता ॥ ९ ॥ स्थापयामि शुभाः काश्चित्ताः शिखा ब्रह्मकर्मणि । अर्हतामावहन्त्येव ब्रह्मयज्ञो यतो भवेत् ॥ १० ॥ द्वाभ्यां तु नयनाभ्यां त्वं यत्पश्यसि जगन्मुहुः । विचारनयनेनैव त्वं पश्य ब्रह्ममयं जगत् ॥ ११ ॥ कामजन्यं जगत्सर्वं काम इत्यभिधीयते । शीघ्रं जुहुधि मद्दत्ते तृतीयनयने शिव ॥ १२ ॥ शिवत्वं ज्ञायसे नूनं यत्स्तौति सकला श्रुतिः । येन त्वामभिकाङ्क्षेत नित्यं रन्तुमुमा सती ॥ १३ ॥ अनादिबोधगिरिजा ब्रह्मविद्येति यां विदुः । तया

---

१ तृतीयनेति शेषः.

सह विवाहं ते करोम्यवहितो भव ॥ १४ ॥ भव त्वं सावधानेन मनसा नान्यगामिना। अन्तःपटापसारस्य समयोऽयं समागतः ॥ १५ ॥ परोक्षं यद्विजानीषे जगन्मूलं सदद्वयम्। तत्त्वमेव व्यवस्थानामाधारः परमं पदम् ॥ १६ ॥ व्यवस्थामात्रकं विश्वं तव विस्मृतिसंभवम्। स्वालानं शिवोऽस्मीति सद्यो विस्मरसि त्रयम् ॥ १७ ॥ वाङ्मात्रं सत्यरूपस्त्वं त्वदालकमिदं जगत्। नेक्षणं नापि भूतानि न जन्म न मृतिस्तथा ॥ १८ ॥ कान्तः-पटोऽखण्डरसे तव विस्मृतिसन्तरा। अपसारित एवासौ संस्मृत्या ब्रह्मविद्यया ॥ १९ ॥ तया सह सुखं भुङ्क्ष्व जीवन्मुक्तिं सुशोभ-नाम्। शिवभोग्यां शिवस्त्वं तु गार्हस्थ्यं तव शोभते ॥ २० ॥ वस ब्रह्मवने नित्यं भीतिं मुक्त्वा द्वयोत्थिताम्। अद्वैतबोधखड्ग-गेन कामादिव्यापदाञ्जहि ॥ २१ ॥ अमुञ्चतो ब्रह्मविद्यां भार्यां सुरतरङ्गिणीम्। वनवासोऽपि सुखदो मुक्तयेऽपि च मुक्तये ॥ २२ ॥ तत्र ब्रह्मवने केचिदागच्छन्ति मुमुक्षवः। श्रद्धया देहि तेभ्योऽपि ज्ञानं ज्ञेयैकभोजनम् ॥ २३ ॥ अतिथीनां च सत्कारे यशो धर्मश्च ते भवेत्। गायन्ति सत्कृता नूनं तव स्वाश्रमसंस्थितिम् ॥ २४ ॥ अस्मिन्ब्रह्मवने नित्यं नरसिंहाश्चरन्ति हि। येभ्यो बिभेति सकलं विश्वं दृष्टिपथं गतम् ॥ २५ ॥ यत्सत्तामपहृत्यैते स्वसत्ताख्यापने रताः। सहस्रं मिलिता एते एकमेव भवन्ति हि ॥ २६ ॥ यन्मा-त्रा मायया यत्तु कृतमेकं सहस्रधा। तेन क्रुद्धा इमे मायां[1] निर्मू-लीकरणोद्यताः ॥ २७ ॥ तेभ्यो भीतमिदं विश्वं मात्रा सह पला-यते। तेषां पादयुगानि त्वं कायाघव इवाश्रय ॥ २८ ॥ बहवो दारिता यैस्तु कामाद्या दानवाः शठाः। तत्सङ्गमेन ते गेहे न तिष्ठन्त्येव दानवाः। अस्मिन्ब्रह्मवने सर्वे तरवो ब्रह्मनामकाः ॥ २९ ॥ स्वप्रकाशा एकरसा अपि नानेव भान्ति हि।

---

१ मायानिर्मूलीत्यादिपाठो युक्तः.

अतिवृक्षं सृष्टिचित्रं विचित्रं दृश्यते स्वयम् । अन्धा एव हि पश्यन्ति नोन्मीलितविलोचनाः ॥ ३० ॥ बहवोऽत्र ब्रह्मवने नीरोगा अपि रोगिणः । भिषजोऽपि च केचित्तु भाषयित्वा गदानुदः ॥ ३१ ॥ स्वफलं स्वयमेवात्र भुञ्जते तरवो मुदा । स्वफलं स्वयमेवेति न जानात्येव कश्चन ॥ ३२ ॥ विज्ञायेत यदैकत्वं भोक्तुर्भोग्यफलस्य च । तदा भोगाः क्षयं याता भोगे पापा अपि क्षताः ॥ ३३ ॥ अत्र ब्रह्मवने कृष्णनामा वृक्षः कदाचन । संप्ररोहति तं दृष्ट्वा नृत्यन्त्येते मयूरवत् ॥ ३४ ॥ दुर्वासा नारदो व्यासशुकगर्गपराशराः । इत्याद्या बर्हिणोऽप्यत्र केकां कुर्वन्ति सादरम् ॥ ३५ ॥ गायन्तः कृष्णसत्कीर्तिं शृण्वन्तो वा सुधाधिकाम् । केकां गेहकलत्रादितुच्छबुद्ध्या त्यजन्ति न ॥ ३६ ॥ काश्चिल्लताः कृष्णवृक्षं श्लिष्यन्ति स्वरसादिह । काश्चित्तन्मयतां याताः काश्चिद्यास्यन्ति चापराः ॥ ३७ ॥ स्वगोरसं चार्पयन्त्यो गायन्त्यो नाम सुन्दरम् । समाधिस्था इवाभान्ति कृष्णे त्रैलोक्यसुन्दरे ॥ ३८ ॥ गुरुप्रसादसंलब्धमोक्षद्राक्षां स्वचञ्चुतः । मुमुक्षन्ति शुकाः केचिद्धंसा अपि च मुक्तिकाम् ॥ ३९ ॥ स्वतो ब्रह्मवनं रम्यं कृष्णवृक्षोऽस्य भूषणम् । वसात्रैव निजं धर्मं पालयन्निरपेक्षकः ॥ ४० ॥ निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शिनम् । अनुव्रजत्ययं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥ ४१ ॥ यद्याश्रमेऽस्मिन्संन्यस्तो न्यस्यावस्थात्रयं स्वयम् । नित्यजाग्रन्निजानन्दे निःसंदेहं च जागृहि ॥ ४२ ॥ बोधाग्निना वनं सर्वं मायामयमसुन्दरम् । भस्मीकृत्याङ्गरागं त्वं कृत्वा स्वपिहि कुत्रचित् ॥ ४३ ॥ न संन्याससमो धर्मो न तारसदृशो मनुः । न नैश्चिन्त्यसमं सौख्यं न त्यागसदृशं यशः ॥ ४४ ॥ ब्राह्मसंस्कारयुक्तस्य सुखं सर्वाश्रमेष्वपि । अतः कुत्राप्याश्रमे त्वं सुखमाप्स्यसि पुत्रक ॥ ४५ ॥ कृतास्ते ब्रह्मसंस्कारा दुर्लभा ये नृणामिह । अत्यजन्ब्रह्मविद्यां

तां यत्र कुत्रापि संचर ॥ ४६ ॥ किं मातेति ब्रवाणि त्वां किं पितेति ब्रवाणि हि । किमीशं देशिकेन्द्र त्वां दर्शिता करुणा त्वया ॥ ४७ ॥ किं स्तवीमि गुरो त्वां तु सर्वज्ञं करुणाकरम् । सत्यं सत्यं वदाम्येतत्साधवो दीनवत्सलाः ॥ ४८ ॥ भक्तवत्सल ईशस्तु पितरौ पुत्रवत्सलौ । स्वानुभूत्या वदाम्येतत्साधवो दीनवत्सलाः ॥ ४९ ॥ सर्वेऽपि बन्धवो येषां सर्वेऽपि पितरौ तथा । सर्वेऽपि पुत्रवद्येषां साधवो दीनवत्सलाः ॥ ५० ॥ सर्वेऽपि स्वात्मवद्येषां सर्वेऽपि तृणवज्जनाः । सत्पात्राणि च सर्वेऽपि साधवो दीनवत्सलाः ॥ ५१ ॥ जननी शिक्षयेच्छीलं पिता विद्यां च शिक्षयेत् । ब्रह्मशिक्षणकर्तारः साधवो दीनवत्सलाः ॥ ५२ ॥ काहं मन्दः क संस्काराः सद्यो ब्रह्मैकसूचकाः । शठो ब्रह्मकृतस्तस्मात्साधवो दीनवत्सलाः ॥ ५३ ॥ श्रीमन्तस्तु त एवेह यद्गेहगमनक्षणे । भवन्ति तृप्ताः सर्वेऽपि साधवो दीनवत्सलाः ॥ ५४ ॥ यत्कटाक्षे मोक्षलक्ष्मीः सदा नृत्यति हृष्यति । य एतस्य कटाक्षस्य विषयः स ममेति च ॥ ५५ ॥ स्वभावोदारता येषां तृप्तिर्येषां स्वभावतः । स्वभावतो विवेकाढ्यास्तेभ्यः सद्भ्यो नमोनमः ॥ ५६ ॥ अमृतस्वादधिकारकारिण्यः शीतलाः शुभाः । वाचः साधुषु संदृष्टा यासु ब्रह्मरसः शुभः ॥ ५७ ॥ धन्योऽसि भगवन्नाथ त्वत्कृतब्रह्मसंस्क्रिया । एकैकापि ब्रह्मभावसमर्था सकलाः किमु ॥ ५८ ॥ तृप्तोऽस्मि तव ता वाचः संस्मरन्ब्रह्मसद्मने । संचरामि ब्रह्मविद्यानुकूलास्तु सदा मम ॥ ५९ ॥ तारं संस्मरतो नित्यं ब्रह्मविद्या सदानुगा । अतस्तारं समाश्रित्य तर संसारवारिधिम् ॥ ६० ॥ सदैवाहं ब्रह्मचारी सदैवाहं गृहाश्रमी । वनवासी सदैवास्मि संन्यासी च त्वदाश्रयात् ॥ ६१ ॥ सदास्म्यहं ब्रह्म शुद्धं निर्विकल्पं निरञ्जनम् । यत्कल्पयसि तच्चाहं भामि स्वं रूपमत्यजन् ॥ ६२ ॥ प्रणवाराधनासक्तो ब्रह्मचार्यसि सुव्रतः ।

ब्रह्मविद्यालिङ्गितत्वाद्ब्रह्मारामोऽस्मि निर्भयः ॥ ६३ ॥ सर्वं ब्रह्म-मयं पश्यन्ब्रह्मारण्यसुखाश्रमः । किंचिन्मदन्यन्नास्तीति संन्यस्ता-खिलकर्मकः ॥ ६४ ॥ संन्यस्ताखिलसंभोगः संन्यस्ताखिलसंगमः । संन्यस्ताखिलदृश्यश्रीः संछिन्नाखिलबन्धनः ॥ ६५ ॥ संप्राप्ताखि-लसौभाग्यो ज्येष्ठालक्ष्मीसमुज्झितः । कनिष्ठया ब्रह्मविद्याभार्यया संवृतो यदा । तदा दारिद्र्यमखिलं क्षीणं तत्पादसद्गुणात् ॥ ६६ ॥ सर्वं मम तु सौभाग्यं श्रीगुरो त्वत्पदाम्बुजम् । येन दारिद्र्यम-खिलं दौर्गन्ध्यमिव दारितम् ॥ ६७ ॥ आत्मसौख्यं जगन्मन्ये कैवल्यं मम जागृतिः । सा येन दत्ता गुरुणा करुणाब्धिः स मे गुरुः ॥ ६८ ॥ आत्मक्रीडां जगन्मन्ये तत्त्यागो मम जागृतिः । तत्कैवल्यमहारत्नं करुणाब्धौ तु मे गुरौ ॥ ६९ ॥ मज्जञ्श्रीगुरु-पादाब्जमकरन्दमहोदधौ । तत्कैवल्यकलाचन्द्रचूडामण्डितमः-स्तकः ॥ ७० ॥ जिघ्रञ्श्रीगुरुपादाब्जसमर्पितसुमोद्भवम् । साक्षा-त्करोमि कैवल्यं कल्पनातीतसत्पदम् ॥ ७१ ॥ वाचि नेत्रे पदे हस्ते चित्ते चित्रविचेष्टिते । कैवल्यं करुणा चेति रत्नयुग्मं प्रनृ-त्यति ॥ ७२ ॥ कैवल्यमेव यद्ध्यानं स्वैक्यमेव हि पूजनम् । फलं मनोन्मनावस्था तं त्वां देशिक संश्रये ॥ ७३ ॥ अहो किमि-दमाश्चर्यं शब्दमात्रमिदं जगत् । हर्षशोकौ जनयति महतामपि सद्गुरो ॥ ७४ ॥ हर्षशोकौ शब्दमात्रं न किं वद विचारय । कुतो मोहः समायातो हर्षः शोको निरीक्ष्यते ॥ ७५ ॥ सत्वधर्मो हर्ष-नामा शोकोऽपि च रजःसखा । तमोधर्म इमौ सत्याविति बुद्धिः स्वविस्मृतिः ॥ ७६ ॥ तारं स्मर सखे शीघ्रं पलायन्ते गुणास्त्रयः । उन्मीलय नयने पश्य क जगत्क च मुक्त सः ॥ ७७ ॥ मात्रा-त्रयेण गिलितास्त्रयोऽपि च गुणार्णवः । अमात्रं शिष्यते किंचि-त्क० ॥ ७८ ॥ त्रीणि रूपाणि ते वत्स जाग्रत्स्वप्नसुषुप्तिषु । मात्रा-मुखैरत्ति तारः क जगत्क० ॥ ७९ ॥ यावत्ते त्रीणि रूपाणि न

तारो ग्रसति स्वयम् । तावन्मोक्षकथां वत्स माकार्षीर्यत्र कुत्रचित् ॥ ८० ॥ यदा त्वमशरीरत्वं स्वस्मिन्ननुभविष्यसि । तदा तारप्रसादस्ते जातः कैवल्यरूपधृक् ॥ ८१ ॥ इदं तारोपासनाया-स्तद्विचारस्य वा फलम् । शमादिसंपद्विभ्राजदन्तरेण हि लभ्यते ॥ ८२ ॥ शमादिसाधनैर्हीनो यदि कैवल्यभाजनम् । कैवल्यस्य च शोकस्य ब्रूहि रे कियदन्तरम् ॥ ८३ ॥ ये शमादिगजारूढा वैराग्यव्याघ्रपालकाः । ते कैवल्यमहालक्ष्मीक्रोडे क्रीडन्ति पण्डिताः ॥ ८४ ॥ शमादिसाधनैर्हीने देशिकेन्द्रः पराङ्मुखः । तस्मिन्पराङ्मुखे मोक्षलक्ष्मीरपि पराङ्मुखी ॥ ८५ ॥ शास्त्राणि स्वहितायैव साधनानि प्रशासति । तेषु सत्सु फलं कस्य न स्यादमितसन्मतेः ॥ ८६ ॥ अहो न साधनैर्हीना लभन्ते काचखण्डकम् । अतः साधनयुक्तेन भवितव्यं मुमुक्षुणा ॥ ८७ ॥ न साधनविहीनेषु भोगो मोक्षोऽपि दृश्यते । ते दरिद्रेषु गण्यन्ते नोभौ यत्र स्थितिं गतौ ॥ ८८ ॥ भाव्यमेकेनापि तत्र येन मानुषविग्रहः । सफलः स्यान्न चेत्तात नृशुनोः कियदन्तरम् ॥ ८९ ॥ यथा श्वा कूपगर्भस्थजलमालोक्य तुष्यति । भोगमोक्षौ तथा मर्त्यो दूरान्निश्चित्य तुष्यति ॥ ९० ॥ तस्मात्साधनसंपन्ने पुंसि तारपरायणे । मोक्षलक्ष्मीः संतनुते निवासं श्रीहराविव ॥ ९१ ॥ सत्यं साधनसंपन्नः पात्रं स्याद्भोगमोक्षयोः । मादृशां मन्दमनसां साधनं करुणैव ते ॥ ९२ ॥ यः सूचयत्यपूर्वाणि दृश्यानि वचनानि च । तस्य प्रसादो मोक्षाय भोगायापि प्रभुर्मतः ॥ ९३ ॥ त्वां भाग्यशालिनं मन्ये यतो गुरुसदुक्तिषु । विश्वासस्तव निष्कम्पो दुर्लभो यो जगत्त्रये ॥ ९४ ॥ जीवितं कुरुते भद्रं मृतं कैवल्यमश्नुते । साधुच्चित्तस्थितिरियं त्वया सेव्या मनीषिणा ॥ ९५ ॥ तत्पाण्डित्यं सैव विद्या नैपुण्यं तच्च विद्महे । यत्कैवल्यपदारोहविघ्नमूलनिकृन्तनम् ॥ ९६ ॥ अज्ञातवेदको वेदो गुरुरज्ञातवेदकः । अज्ञातवेत्ता

शिष्यश्च त्रितये मिलिते किमु ॥ ९७ ॥ लोकदृष्ट्या सिद्धवस्तु यद्येषां विषयो भवेत् । लोकदृष्टेः श्रुतेर्वापि प्रामाण्यं नैव सिध्यति ॥ ९८ ॥ तस्मादलौकिकं तत्त्वं त्वया ज्ञातं मनीषिणा । तत्र विश्रम्य तिष्ठ त्वं तारगर्भे सुखी भव ॥ ९९ ॥ नमस्ताराय संसारसाराय सरसाय च । सर्वानर्थनिवर्हाय महार्हाय महीयसे ॥ १०० ॥ प्राचीनबर्हिराजं च प्रोक्तवान्नारदो यथा । तद्वचः शृणु पथ्यं च स्निग्धं प्रियतमं च यत् ॥ १ ॥ तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया । हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः ॥ २ ॥ तत्पादमूलं शरणं यतः क्षेमो नृणामिह । स वै प्रियतमश्चात्मा यतो न भयमण्वपि ॥ ३ ॥ इति वेद स वै विद्वान्यो विद्वान्स गुरुर्हरिः । एतद्वचोनिरूढस्य कैवल्यं चत्वरद्रुमः ॥ १०४ ॥

इति कृष्णानन्दसरस्वतीविरचितायां श्रीकैवल्यगाथायां सर्वाश्रमैक्यनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥

---

ॐ अस्ति षण्ढः पुमान् कश्चिद्धस्तपादादिवर्जितः । स्थातुं न गेहं यस्यास्ति न माता न पिताऽस्य हि ॥ १ ॥ न धर्मं वेत्ति नाधर्मं सर्वधर्मबहिष्कृतः । कर्मठा यं न पश्यन्ति स च पश्यति कर्मठान् ॥ २ ॥ मूढवत्स्थितिमापन्नः सन्नसौ सर्वतोमुखः । एकेनाक्ष्णा सर्वजगत्पश्यत्यवचनः सदा ॥ ३ ॥ तस्य पत्नी नैकरूपा तं वञ्चयति नित्यशः । तस्याः स्वभावः केनापि शक्यो वर्णयितुं किल ॥ ४ ॥ प्रतिक्षणं स्वरूपं सा बिभर्त्येव नवं नवम् । प्रतिरूपं सर्वरसास्पदं नीरसमप्यहो ॥ ५ ॥ मूढा यस्यां रमन्ते स्म त्यजन्ति विबुधा जनाः । भर्तृसान्निध्यमात्रेण सुषुवे पञ्च वै सुतान् ॥ ६ ॥ ज्येष्ठस्तस्या वावदूको द्वितीयश्चपलः सुतः । तृतीयः क्रोधवशगः सर्वदाहैकतत्परः ॥ ७ ॥ चतुर्थस्त्वतिगम्भीरो रसवान्सर्वजीवनः । पञ्चमः सर्वसहनश्छेदं भेदं न वेत्ति सः ॥८॥

तैरेव रममाणा सा बहून्पुत्रानजीजनत्। तत्र तस्यास्त्रयः पुत्राः स्थूलः सूक्ष्मोऽप्यनाकृतिः ॥ ९ ॥ प्रथमः फलदाता च द्वितीयः कर्मकारकः। तृतीयः सर्वसंहर्ता पुनरुद्भववीजभृत् ॥ १० ॥ विराड्ढिरण्यजठर ईश इत्यभिधा क्रमात्। तत्र प्रथमपुत्रस्य जठरे बहवोऽद्भुताः ॥ ११ ॥ स्वबन्धनं स्वयं कृत्वा चीचीकुर्वंति जन्तवः। बन्धनारम्भकालेषु हाहा कृत्वापि सर्वतः ॥ १२ ॥ स्वकल्पितप्रमाणेभ्यो धर्ममीशं च केचन। जिज्ञासन्त्यस्तिनास्तीति निश्चिन्वन्ति स्वसंमतम् ॥ १३ ॥ प्राचीनवुद्ध्यो मानं पराचीनासु धीषु हि। अविच्छिन्ना प्रवृत्तैषा यतः शिक्षापरम्परा ॥ १४ ॥ अशिक्षितमतिर्मानं यदि स्याच्छिक्षया किमु। नवीनापि मतिर्मानं यदि शिक्षानुसारिणी ॥ १५ ॥ एतावता मूलसिद्धगुरुशिक्षैव तत्त्वतः। प्रमाणं तत्त्वनिश्चित्यै नार्वाचीनमतिः स्वतः ॥ १६ ॥ अत्र प्रमादिनः केचिच्छास्त्राणि च पृथक्पृथक्। अकुर्वंस्तत्र विश्वस्ता अपि सन्ति जना इमे ॥ १७ ॥ विचारयन्ति नो किंचिदाचार्यः केन शिक्षितः। यद्यसौ शिक्षितः पूर्वशिक्षैवानूदिताऽमुना ॥ १८ ॥ अशिक्षितश्चेत्तच्छास्त्रं कथं वा मानतामियात्। अशिक्षितवचो मानं चेत्तदा शिक्षणं वृथा ॥ १९ ॥ सैव शिक्षेति मन्येऽहं विरोधो यत्र कोऽपि न। विरोधपरिहाराय शिक्षा लोकेषु संतता ॥ २० ॥ तस्माद्विरुद्धशास्त्राणि शिक्षाशून्यानि मन्महे। तत्रापि दृश्यते श्रद्धा इदमेकं महाद्भुतम् ॥ २१ ॥ यथा मृद्घटरूपेण शरावेण विरुध्यते। अविरुद्धा स्वरूपेण सा स्थितिः शिक्षिता मता ॥ २२ ॥ एतादृशस्थितौ केचिच्छिक्षिता अविरोधिनः। निर्मानमोहाः संन्यस्ताखिलकर्माण आसते ॥ २३ ॥ सर्ववादास्पदं विश्वं मिथो विप्रतिपत्तिभृत्। तथापि सत्यं मन्यन्ते इदमेकं महाद्भुतम् ॥ २४ ॥ अन्योन्यमप्रसिद्धानि रूपाणि दधदद्भुतम्। सुन्दोपसुन्दन्यायेन म्रियन्ते यत्र वादिनः ॥ २५ ॥ तत्र विश्वस्तमतयो नृमृगा वादिभिर्हताः।

हन्यन्तेपि मिथो यत्र महाद्भुतमिदं परम् ॥ २६ ॥ स्वमतं स्वयमेवेह सत्यं संमनुते जनः । असाक्षिकं सत्यमिति शुक्ती रूप्यायते न किम् ॥ २७ ॥ समानमतयः केचिन्मिथः साक्षिपदे स्थिताः । दूष्यन्ते भिन्नमतिभिरिदमत्र महाद्भुतम् ॥ २८ ॥ आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः । आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥ २९ ॥ इत्यर्जुनाय भगवान्वादिनां दुर्दशामिमाम् । श्रावयामास तत्त्वज्ञो निर्विवाददशां विशन् ॥ ३० ॥ द्वितीयस्तनुजस्तस्या एकः सप्तदशात्मकः । नानाविधानि कर्माणि कुर्वन्प्रतिगृहं स्थितः ॥ ३१ ॥ स्थूलस्य सर्वमैश्वर्यं दित्सुः कृपणतां गतः । यद्यत्संपादयेत्तत्तृतीयो ग्रसति स्वयम् ॥ ३२ ॥ तद्भोगात्पुष्टिमापन्नो यातायातैकतत्परः । न यावन्म्रियते भोक्ता ज्येष्ठो मूढतमः प्रभुः ॥ ३३ ॥ कथं स म्रियते भोक्ता योवस्थात्रयसौख्यभुक् । तस्मिन्मृते शून्यमेव शिष्यते नास्तिकाश्रितम् ॥ ३४ ॥ त्वं शृणुष्व महाबुद्धे स भोक्ता म्रियते कथम् । यथा न शून्यं शिष्येत नास्तिका येन वञ्चिताः ॥ ३५ ॥ कदाचिद्दैवयोगेन तारोपास्तिपरायणः । निमग्नः सच्चिदानन्दसिन्धौ सिद्धदशां गतः ॥ ३६ ॥ सच्चिदानन्दयतिराडात्मारामः कृपाकरः । दृश्यतेऽनन्तपुण्यौघफलभोगदशां दिशन् ॥ ३७ ॥ तदा तत्पादपाथोजमकरन्दमधुव्रतः । भूत्वा गुञ्जति तत्कर्णोपान्ते स्वान्तस्थदुर्दशाम् ॥ ३८ ॥ यद्यद्भुनज्मि तत्रैव सुखं दुःखायते क्षणात् । यन्न दुःखेन संमिश्रं तत्सुखं कास्ति तद्वद ॥ ३९ ॥ सत्यं मुमुक्षुवर्यैस्त्वं प्रश्नोऽयं कठिनः कृतः । कामारिः शंकरो लोके सुखसंपत्परावधिः ॥ ४० ॥ कामे मृते दुःखजालं किमाश्रित्य जिजीविषेत् । कामजन्यः प्रपञ्चोऽयं कामेनैव हि भुज्यते ॥ ४१ ॥ शोच्यतेऽपि च तेनैव मृते तस्मिन्क वा जगत् । क दुःखं क च वा शोकः क भोगः क दरिद्रता ॥ ४२ ॥ शिष्यसे षण्ढ एकस्त्वं सर्वानन्दपरि-

ष्कृतः । शब्दरूपा महामाया तया सृष्टमिदं जगत् ॥ ४३ ॥ शब्दं विहाय पश्य त्वं क वा ब्रह्माण्डमण्डलम् । यत्र सन्ति महाविद्या अनन्ता असितार्थदाः ॥४४॥ कयाचिद्विद्यया सृष्टं कयाचित्पालितं हि तत् । कयाचित्संहृतं भूयस्तिसृः काचिन्न बाधते ॥ ४५ ॥ सर्वा अपि च ता विद्या गुरुमार्गमुपाश्रिताः । सूक्ष्मादिविद्यास्तिस्रस्तु गुह्याद्गुह्यतराः स्मृताः ॥ ४६ ॥ प्रतिकल्पं च सा विद्या लभ्यते केनचित्सता । अवान्तरास्तु बहुभिर्लभ्यन्ते संप्रदायतः ॥ ४७ ॥ तया तया विद्यया च नन्दन्ति बहवो जनाः । प्रपञ्चबाधनी विद्या लभ्या चरमजन्मना ॥ ४८ ॥ शमादिसंपद्युक्तेन त्रस्तेन जगतोऽपि च । सद्वृत्तेन विशुद्धेन जन्मना कर्मणापि च ॥ ४९ ॥ त्यक्तान्यसङ्गोत्कण्ठेन यो भाग्यपरमावधिः । यदग्रे इतरा विद्या अविद्या एव केवलम् ॥ ५० ॥ यत्र कर्मसमाप्तिर्नो कथं विद्या भवेच्च सा । विश्वे समाप्ते कर्मापि कामोऽपि च समाप्यते ॥ ५१ ॥ तस्मिन्समाप्त आनन्दखनिरेव भविष्यति । का सा विद्या परानन्दखनिरेव भवाम्यहम् ॥ ५२ ॥ यामाश्रित्य जगत्सर्वं तृणं पश्येयमञ्जसा । तृणवत्पश्यसि त्वं किं जगदेव न पश्यसि ॥ ५३ ॥ एतादृशी परा विद्या महाभाग्येन लभ्यते । तर्हि तां दिश मे नाथ यया मुक्तो भवाम्यहम् ॥ ५४ ॥ महोपकारं मन्येहं दासोऽपि च भवाम्यहम् । भविष्यसि कथं दासो जगदेव न पश्यसि ॥ ५५ ॥ किमन्धोऽहं भविष्यामि नान्धो भवसि सन्मते । विश्वं नैव तु पश्यामि किमन्धादवशिष्यते ॥ ५६ ॥ यथा वक्ष्यसि विश्वं नेत्येवं विश्वं प्रपश्यसि । महाचमत्कारकरीं विद्यां तां देहि मे गुरो ॥ ५७ ॥ किमाश्चर्यं प्रदास्यामि मा भिन्नहृदयो भव । दातुः प्रतिगृहीतुश्च सौहार्दं फलसाधनम् ॥ ५८ ॥ उभावपि च मोदेते विद्यापि च फलिष्यति । त्वमुत्पन्नः कुत्र वंशे कुत्राहं जन्मवान्पुनः ॥ ५९ ॥ सौहार्दमावयोः कस्मा-

नङ्क्ष्यति सखे वद । तर्हि त्वद्वंश एवाहं भविष्यामि पुनर्जनुः ॥ ६० ॥ तत्राऽऽवयोस्तु सौहार्दं निष्प्रकम्पं भविष्यति । तर्हि विस्मर कल्याण प्राक्तनं सर्वमेव हि ॥ ६१ ॥ देशं जातिं कुलं देहं पितरौ भ्रातृबान्धवान् । स्वप्नोत्थान् गिरिनद्यादि प्रपश्यानिव सर्वतः ॥ ६२ ॥ शिष्यसे त्वं तदा वत्स शीघ्रं जागृहि जागृहि । गुरो जागर्मि विश्वं तु स्वप्नवद्दृश्यते मया ॥ ६३ ॥ एकोऽहमेव तिष्ठामि विश्वं पश्यन्निरास्पदः । आस्पदं त्वं विश्वदृशां चिन्मात्रोऽसि निरञ्जनः ॥ ६४ ॥ भासते त्वयि विश्वं तु मृगवारीव चातपे । सत्यमुक्तं त्वया नाथ मयि विश्वं विभासते ॥ ६५ ॥ अहमेव विभामीव भासते सकलात्मना । बुद्धिमानसि हे वत्स जागर्षि च मदुक्तितः ॥ ६६ ॥ धन्योऽसि कृतकृत्योऽसि चरमं जन्म शोभते । वत्स जातोसि मद्वंशे विस्मृताः पूर्ववासनाः ॥ ६७ ॥ मद्वंशवासनास्तुभ्यं प्रदिशामि सुखी भव । जगन्नास्त्यहमेवास्मि प्रकाशभरपूरितः ॥ ६८ ॥ जगन्ति भान्ति मय्येव मदीयकिरणा इव । विलीनमिव भातीदं मय्येव सकलं जगत् ॥ ६९ ॥ अहं भासि जगन्नैव इति मद्वंशवासनाः । सत्यार्था वासना एता भवबन्धनिकृन्तनाः ॥ ७० ॥ निधाय हृदि हे वत्स भव मद्वंशभूषणः । भगवन्मधुरा एता वासना दर्शितास्त्वया ॥ ७१ ॥ अधुनैव विमुक्तोऽस्मि निर्वृतोऽस्मि चिराय च । त्वया संभाषणेनैव विमुक्तोऽस्मि क्षणादहम् ॥ ७२ ॥ अतः परं शिष्यते का तां विद्यां संप्रदर्शय । न काचिच्छिष्यते विद्या वासनान्ता हि सा मता ॥ ७३ ॥ संप्रदायैकलभ्यैषा गुरुकारुण्यहेतुका । यत्र जाने स एवाहं यो ज्ञाता ज्ञानविग्रहः ॥ ७४ ॥ प्रत्यग्रूपो योऽहमस्मि स एव परमः शिवः । इत्यभेदनिरूढश्चेद्रते प्रत्यक्परत्वके ॥ ७५ ॥ प्रज्ञानरूपं संसिद्धं त्वां ब्रूते ऋक्श्रुतिः परा ॥ ७६ ॥ अन्नप्राणमनोबुद्धिसुखाख्यं कोशपञ्चकम् । भासते त्वयि तत्र त्वं भाससे रौप्यशुक्तिवत् ॥ ७७ ॥

यथा रौप्यं शुक्तिघनं तथैव त्वद्धनं जगत् । सत्यज्ञानानन्तरूपं त्वां ब्रूते याजुषी श्रुतिः ॥ ७८ ॥ अतोऽहं ब्रह्मचिद्रूपोऽवस्थात्रयविवर्जितः । इत्येषा वासना नूनं भवबन्धनशातनी ॥ ७९ ॥ यन्न वेत्सि जगन्मूलं तत्त्वमित्याह सामगः । वाङ्मात्रं जगदित्याह यतो नोत्पन्नमेव हि ॥ ८० ॥ अयमात्मा परब्रह्मावस्थात्रयविवर्जितः । अवस्थात्रयसंसिद्ध इति ब्रूते परा श्रुतिः ॥ ८१ ॥ एतत्सर्वं सत्यमिति तारेणाङ्गीकृतं यतः । अतो वदन्ति सर्वेऽपि वेदा ॐमिति चान्ततः ॥ ८२ ॥ एकीभवन्ति सर्वेऽपि वेदा अत्रैव मन्त्रके । अतोऽसौ सर्ववेदात्मा अत्र वेदाः शमं गताः ॥ ८३ ॥ अत्र विद्याः शमं याता अत्र वाचो लयं गताः । अत्र कर्माणि नष्टानि अत्र सर्वं प्रतिष्ठितम् ॥ ८४ ॥ या दुःखमूलं पण्ढस्य पुंसः संमोहकारिणी । महामायेति यां प्राहुरनेनैव पलायिता ॥ ८५ ॥ अनेनैव महामाया स्थापिता सुखरूपतः । यामेव वक्ति ब्रह्मेति वेत्ति कोऽपि महाजनः ॥ ८६ ॥ यस्मिँल्लब्धे मोक्षलक्ष्मीस्तं पुमांसं समीहते । अभोक्ता एक एवात्र शिष्यते सुखविग्रहः ॥ ८७ ॥ रेरे काम सुखं म्रियस्व रुडरे तेनैव साकं व्रज रेरे लोभ किमस्ति ते विवसता तन्नास्ति यच्चिन्त्यते । मोहस्यापि करद्वयाद्विगलितं जालं जगन्नर्तकं वाग्देव्या मदमत्सरौ विनिहतौ श्रीदेशिकेन्द्राश्रयात् ॥ ८८ ॥ कुत्रास्ते जगदण्डमण्डलमहो निःखण्ड एवास्म्यहं तत्पिण्डं गुरुपादयोर्विनिहितं वाण्या हृतं तस्य च । धन्यः श्रीगुरुराज एव जयति क्ष्मामण्डलानां गणं फूत्कारेण करोति दूरत इमं नेत्रे तुदन्तं बहु ॥ ८९ ॥ यच्चिन्त्यते तदेवेह दीयते बहुभिर्जनैः । अचिन्त्यं दीयते किञ्चिद्गुरुणैव दयालुना ॥ ९० ॥ चिन्तां हरति निर्मूलं कर्माणि दहति क्षणात् । सुखं ददाति सद्विद्यां तस्मै श्रीगुरवे नमः ॥ ९१ ॥ ब्रुवन्नेव द्वयं सर्वमपसारयति प्रभुः । स्थापयत्यद्वयानन्दे तस्मै० ॥ ९२ ॥ वत्स जातोसि मद्वंशे विस्मृता

द्वैतवासना । अद्वैतवासना रूढा तस्माद्रोमिति संस्मर ॥ ९३ ॥ न त्वं नाहं नैव जगन्न भोग्यं नापि भोक्तृता । षण्ढः पुमांस्त्वमेवासि कैवल्यं नाम ते शिवम् ॥ ९४ ॥ चिन्तां त्यज महाबुद्धे सैव मायेति कीर्तिता । तस्यां चण्डालकन्यायां त्यक्तायां सर्वतः सुखम् ॥ ९५ ॥ प्राप्तं प्राप्तव्यमखिलं दृष्टं द्रष्टव्यमद्भुतम् । यत्र श्रीपादपाथोजमन्तरा नैव किंचन ॥ ९६ ॥ पुनरेकं महाबुद्धे शृणुष्व वचनं मम । येनात्मारामता नित्यमभिवर्धेत चन्द्रवत् ॥ ९७ ॥ प्राणमूर्ध्वं नयत्येषोऽपानं यच्छत्यधोऽपि यः । मध्ये वामन आसीनस्तमुपास्स्व महामते ॥ ९८ ॥ प्राणस्य प्राण एवैष वाचो वाङ्मनसो मनः । चक्षुषश्चक्षुरेवैष एष आत्मा स्वयंप्रभः ॥ ९९ ॥ विदिताविदितादन्यः सर्वज्ञः सुखचिद्घनः । अतिप्रियतमो ह्येष एतदर्थमिदं जगत् ॥ १०० ॥ स एव स्वात्मभोगाय संकल्पयति हृद्गतम् । हृद्येव पश्यन्संतुष्टो हृद्येव नयते लयम् ॥ १ ॥ हृद्येव तनुते कर्म हृद्येव फलमृच्छति । हृद्येव शोचत्यानन्दं हृद्येव परिपश्यति ॥ २ ॥ हृद्येव स्वर्गनरकगमनागमने रतः । हृद्येव देवं भजते तत्प्रसादं हृदि व्रजेत् ॥ ३ ॥ हृद्येव मुक्तिमायाति हृदि बन्धं छिनत्त्यपि । एतत्सर्वं महादर्शप्रतिबिम्बवदेव हि ॥ ४ ॥ यतोऽन्यस्य प्रवेशाय न मनागपि छिद्रता । न सामग्री काचिदन्या स्वमृते तत्र विद्यते ॥ ५ ॥ का सामग्री महादर्शे प्रतिबिम्बे शिलां विना । शिलापि नो परिणता न प्रविष्टं च बाह्यकम् ॥ ६ ॥ निमित्तमस्तु चादर्शे बाह्यं त्वयि न युज्यते । यतो भोक्तैव सर्वं तु सृष्टं भोग्यं यदुच्यते ॥ ७ ॥ सामग्र्यपि च सृष्टैव भोक्त्रा भोगार्थमेव हि । स्वान्या सामग्रिका कुत्र स्रष्टव्या केन हेतुना । अतः स्वयं स्वसंकल्पाज्जगदात्मासि हे शिशो ॥ ८ ॥ तस्मात्सोहं मन्त्रराजं जप वा स्मर वाऽथ वा । प्रणवं वा स्मर

१ कृतेयोगेपिद्वितीया तत्र तत्र दृश्यते.

स्वान्तःसंकल्पं त्यज सत्वरम् ॥ ९ ॥ कैवल्यं धाम संपन्नमस्मि-न्नेव क्षणे शिशो। इमामवस्थां जानन्ति सनकाद्या महर्षयः ॥ ११० ॥ दत्ताद्या अपि जानन्ति पराम्बायाः प्रसादतः। भग-वन्नद्भुतं जातं क माया क च पूरुषः॥११॥ क भोक्तारः क दातारः क संसारः क्षणादभूत्। कैवल्यमद्वितीयं तु ब्रह्मशब्दातिदूरगम् ॥ १२ ॥ अहं शब्दसमीपस्थमानन्दघनमाप्तवान्। गुरुत्वं सत्यमे-वासि स्वरूपं मे समर्पितम् ॥ १३ ॥ अयत्नसुखमेवास्मि संप्राप्यं किमतः परम्। अज्ञेयं संपरिज्ञातं ज्ञातमित्यपि भाषितुम् ॥ १४ ॥ लज्जां वहति मे चेतः कीदृशी वाक्कला तव। ब्रुवतैव हृतं विश्वं किं दास्ये तव पूजने ॥ १५ ॥ आत्मानमर्पयाम्यद्य हंसः सोहमिति स्मरन्। तदैक्यमोमिति ज्ञात्वा निःसंधिः संस्थितोऽस्म्यहम् ॥१६॥ संतृप्तः स्वपिमि स्वस्थस्त्वत्कृपामञ्चके गुरो। इदमालिङ्गनं लोके लब्धं केन जनुष्मता ॥ १७ ॥ तृणाय मन्ये भगवन्ब्रह्माद्यानन्द-शीकरान्। कैवल्यधाम्नः शीर्षेसिन्नावा(?)मेवेतरन्न हि ॥ १८ ॥ नरीनर्ति सुखं भूरि कांचिच्छ्रावय सत्कथाम्। शृणु वत्स महा-बुद्धे महाभाग्यशिखामणे ॥ १९ ॥ येन ते सुखिनः सर्वे यान्ति दृष्टिपथे शिशो। अधीतवेदवेदाङ्गो युवा साधुर्दृढाङ्गकः ॥ १२० ॥ यशस्वी बलवान्भोक्ता सार्वभौमो धनेश्वरः। एष एकः सुखी लोके मानुषानन्दभाजनम् ॥ २१ ॥ यं दृष्ट्वा श्लाघते सर्वलोकोऽयं नति-पूर्वकम्। सोऽपि तं श्लाघते नित्यं विषयी गानलोलुपः ॥२२॥ यद्गा-नलुब्धा हरिणा गन्धर्वो मानुषेषु यः। स चापि देवगन्धर्वं श्लाघते रागलोलुपः ॥ २३ ॥ यद्गानलुब्धा देवाद्याः किं मानुषतनूभृतः। स चापि चिरलोकस्थं पितरं श्लाघते चिरम् ॥ २४ ॥ चिरस्थानै-करसिको भोगी विषयलम्पटः। स चापि श्लाघते देवमाजानज-मिति श्रुतम् ॥ २५ ॥ यं सर्वेऽपि च मन्यन्ते जना अमिततेजसम्। स चापि कर्मदेवं तं श्लाघते संपदावृतम् ॥ २६ ॥ यत्संपत्कर्म-

बलतो बलाढ्येति श्रुतं यतः । सोऽपि तं सहजं देवमक्षीणामितसंपदम् ॥ २७ ॥ श्लाघते भोगरागेण कर्मक्लेशाद्यभावतः । सोपि तं श्लाघते देवमिन्द्रं सिंहासनेश्वरम् ॥२८॥ यत्संपल्लेशलेशेन तुलिताः सर्वसंपदः । इन्द्रोपि श्लाघते बुद्धिलुब्धस्तं च बृहस्पतिम् ॥ २९ ॥ यद्बुद्ध्या तुलिता इन्द्रसंपदो लेशलेशतः । अव्याहताज्ञं वागीशः प्रजापतिमकल्मषम् ॥ १३० ॥ श्लाघते यत्प्रजाव्याप्तं सर्वं ब्रह्माण्डमण्डलम् । ब्रह्माण्डमण्डलाधीशं ब्रह्माणममितौजसम् ॥ ३१ ॥ संपदामत्र सीमेति श्रुतयः प्राहुरादरात् । किमेते सुखिनः सर्वे विद्वत्त्यक्तपरायणाः ॥ ३२ ॥ तुच्छबुद्ध्या त्यज्यतेऽन्यैरन्यैः संगृह्यते जगत् । कथं ते सुखिनो ब्रूहि मृगवारिणि वारणाः ॥ ३३ ॥ यत्र नो रसलेशोऽपि रमते रसिकः कथम् । रस आत्मा सर्वरसः स्वेनैव परितृप्यति ॥ ३४ ॥ यदि त्वादृशपादाब्जमकरन्दरसं पिबेत् । दुर्लभं मानुषं जन्म दुर्लभा च मुमुक्षुता ॥ ३५ ॥ दुर्लभा साधुभिर्वार्ता यत्र तृप्तिर्निरन्तरा । ब्रह्मादिमानुषान्तानि तृणानीव पदानि हि ॥ ३६ ॥ विभान्ति साधुवार्तायामात्मा भाति सुखैकभूः । किं तरङ्गे रसः कश्चित्किं प्रकाशोऽस्त्यलङ्कृतौ ॥ ३७ ॥ किं सत्ता शुक्तिरजते किं सुखं धावतां बहिः । तरङ्गस्यालङ्कृतेश्च शुक्तिरूप्यमृगाम्भसोः ॥ ३८ ॥ सुखं ख्यातिश्च संस्था च वारिहेमादिकं मतम् । किंचित्कालस्य विश्वस्य सुखमात्मा सनातनः ॥ ३९ ॥ तस्मादात्माराम एव सुखिराजो विराजते । ममत्वपाशबद्धानां किं सुखं केन कुत्र हि ॥ १४० ॥ त्यक्तैषणानां स्वाच्छन्द्यसीमगानां सुखं पदे । निरीहाणां वेदमूर्धवासिनां सहजं सुखम् ॥ ४१ ॥ ब्रह्मादिमानुषान्ताः किं श्रमिणो वर्णितुं क्षमाः । यतो वाचो निवर्तन्ते मनो यस्मान्निवर्तते ॥ ४२ ॥ तद्वक्तुं केन वा शक्यं तद्विद्वान्न बिभेम्यहम् । श्रीगुरो तव पादाब्जसंगमस्य फलं मया ॥ ४३ ॥ लब्धं येन फलाकाङ्क्षा सर्वा विगलिता हृदः । गुरुवंशसमुद्भूतस्तृप्ति-

माप्नोति शाश्वतीम् ॥ ४४ ॥ शास्त्रसीमा कर्मसीमा फलसीमा च यत्र हि । नमः कैवल्यनाथाय शरणागतबन्धवे ॥ ४५ ॥ ब्रुवन्नेव हि कैवल्यं ददास्येव मुमुक्षवे ॥ १४६ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतकैवल्यगाथायां पुराणपुरुषनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

ॐ तृप्तेनासाद्यते मुक्तिर्नातृप्तेन कदाचन । तस्मात्तृप्तेन चित्तेन कालं नय महामते ॥ १ ॥ देवासुरपरीक्षेयं तृप्त्यतृप्ती इति द्विधा । यथा तृप्तस्तथा देवो यथाऽतृप्तस्तथा सुरः ॥ २ ॥ तृप्तः संपूज्यते स्थाने इतरो भ्रमणातुरः । तृप्तस्तर्पयते लोकान्भ्रमयत्यपरः परम् ॥ ३ ॥ तृप्तः किं न त्यजेल्लोके न गृह्णीयात्परः किमु । तृप्तस्त्यजति देहाशामतृप्तस्तां च वर्धयेत् ॥ ४ ॥ कर्मकाण्डमतृप्ताय प्राह वर्णाश्रमस्थितिम् । तृप्ताय सर्वसंत्यागं प्राहार्थिकमिदं श्रुतिः ॥ ५ ॥ तृप्तः स्वपिति लोकेषु विमुखो दृश्यवस्तुषु । मार्जारवदतृप्तोऽपि जागर्ति जगतीतले ॥ ६ ॥ शास्त्रं भिन्नमतृप्तस्य प्रवृत्तिर्यत्र सर्वदा । तृप्तस्यापि च तद्भिन्नं यत्र स्वापो निरन्तरम् ॥ ७ ॥ तृप्तस्य दर्शनं भिन्नं सुखवार्तैव यत्र हि । अतृप्तस्यापि तद्भिन्नं दुःखवार्तैव केवलम् ॥ ८ ॥ अतृप्तोऽन्यसुखं द्रष्टुमशक्तः सुखवर्जितः । तृप्तोऽन्यदुःखवार्तायां कम्पते कोमलान्तरः ॥ ९ ॥ सर्वेषामपि मन्त्राणामर्थ एकः सनातनः । इति येन च विज्ञातं स तृप्त इति कथ्यते ॥ १० ॥ मन्त्रभेदादर्थभेद इति ज्ञातमशिक्षितैः । अतृप्तिहेतुविज्ञानादतृप्तास्ते नरा मताः ॥ ११ ॥ शास्त्रं न चेत्तृप्तिहेतुः कथं तच्छास्त्रमुच्यते । तृप्तिकामायोपदेशः पारतन्त्र्यं न युज्यते ॥ १२ ॥ सुखहेतुः स्वतन्त्रत्वमिति सर्वेऽपि जानते । परंतु लभ्यते कैश्चिदुपदिष्टैर्महात्मभिः ॥ १३ ॥ कस्यापि वशता द्वैतसत्यबुद्धेर्नरस्य च । यद्वशे विद्यते यत्तु तच्च तस्माद्बिभेति हि ॥ १४ ॥

भयतृष्णयोरेकवस्तुनिष्ठा नैवोपपद्यते। तस्मात्तृप्तिस्तत्र मित्र यत्र स्यात-न्वयमेव हि ॥ १५ ॥ तत्सत्यत्वं तदैव स्याद्यदा द्वैतं मृषा भवेत्। मन्त्रभेदस्ततो यस्मादधिकारविभिन्नता ॥ १६ ॥ तृप्तिकामस्य मन्त्रस्तु ॐनमःसिद्धमित्यहो। यल्लाभात्सर्वसिद्धिः स्यादाकण्ठं तृप्तिकारिणी ॥ १७ ॥ सच्चिदानन्दरूपाय गुरवे तृप्तिहेतवे। द्रोणाचलनिवा-साय तृप्तायास्तु सदोंनमः ॥ १८ ॥ सिद्धपञ्चाक्षरीमन्त्रस्यार्थं शृणु महत्तरम्। श्रुत्वा यं तृप्तिमाप्नोषि कल्पान्तेऽप्यविनाशिनी ॥ १९ ॥ यत्समो नास्ति भो वत्स निगमेष्वागमेष्वपि। यो मूर्ध्नि सर्ववेदानां भेदानां मूलकृन्तनः ॥ २० ॥ यत्सिद्धं साधनाकाङ्क्षारहितं साध्य-भासकम्। तारैकवेद्यं संसारतारकं तन्नतोऽस्म्यहम् ॥ २१ ॥ यत्सिद्धं सर्वरूपाणि प्रदर्शयति पश्यति। न तद्द्रष्टृ नवा दृश्यं तारमात्रं नतोऽस्म्यहम् ॥ २२ ॥ यत्सिद्धं सर्ववाग्बीजं वाग्वृक्षफ-लरूपकम्। ज्ञेयाज्ञेयनिरासेन तारवेद्यं नतोस्म्यहम् ॥ २३ ॥ सर्व-स्यापि च वाग्राशेः सिद्धान्तोऽयमुदाहृतः। ॐनमःसिद्धमित्येव न जीवो न जगन्न खम् ॥ २४ ॥ ॐमित्येकाक्षरं ब्रह्म नमःशब्दोऽपि जीवकः। तयोरभेदे वाग्राशिरिति सिद्धं समासतः ॥ २५ ॥ ॐमि-त्युक्ते साधकेन सिद्धं कैवल्यमक्षतम् ॥ नमःशब्दस्तदालम्बसूचनाय मनौ स्थितः ॥ २६ ॥ भेदवादे मिथो नष्टे कैवल्यं तारसंश्रितम्। सिद्धमित्याह वाग्देवी नमोङ्गीकरणार्थकम् ॥ २७ ॥ अखण्डसिद्धं सद्वस्तु निर्विकल्पं निरञ्जनम्। तारवेद्यं परं ब्रह्म तन्नतोस्मि भवामि तत् ॥ २८ ॥ अखण्डसिद्धं चिद्वस्तु मनोवाचामगोचरम्। तारवेद्यं स्वयंज्योतिस्तन्नतोऽस्मि भवामि तत् ॥ २९ ॥ अखण्डसि-द्धमानन्दं सर्ववादास्पदं परम्। ताररूपं जगज्जीवं तन्नतोऽस्मि भवामि तत् ॥ ३० ॥ यः सिद्धः सर्वरूपेण परमात्मा सनातनः। सर्वशब्दासहः स्वच्छो वेदवेद्यस्तमोंनमः ॥ ३१ ॥ परोक्षमपरोक्षं च यत्रैतद्भासते जगत्। तत्सिद्धं वस्तु तारेण प्रतिपाद्य नमस्यते

॥ ३२ ॥ प्रतिरूपं च यत्सिद्धं प्रतिनाम विभासते। नामरूपे परित्यज्य तारः सिद्धं नमस्यति ॥ ३३ ॥ यस्मिँल्लब्धे पूर्णकामः साधकोऽसौ भविष्यति। तत्सिद्धं दर्शयेत्तारोप्यङ्गीकुरु नमस्कुरु ॥ ३४ ॥ सर्वेषामपि वेदानां रहस्यमिदमेव हि। ॐनमःसिद्धमित्याह कैवल्यं पारमार्थिकम् ॥ ३५ ॥ तन्त्राणामपि सर्वेषां रहस्यमिदमेव हि। ॐनमःसिद्धमित्याह कैवल्यं पारमार्थिकम् ॥ ३६ ॥ बुद्धिमद्वार्तया सिद्धं किमस्ति जगतीतले। ॐनमःसिद्धमित्याह मनुरेष सनातनः ॥३७॥ ॐमित्युक्ते य एवेह प्रतीयेत परः शिवः। तस्मै सिद्धाय तत्त्वाय गुरवेऽस्तु सदा नमः ॥ ३८ ॥ यत्र यत्र मनो याति तत्र सिद्धाय शोचिषे। तारोद्घाटितरूपाय गुरवेऽस्तु सदा नमः ॥ ३९ ॥ दृश्यं च दर्शनं द्रष्टा य एवैको निगद्यते। तस्मै सिद्धाय तत्त्वाय गुरवेऽस्तु नमोनमः ॥ ४० ॥ द्रोणाचलनिवासाय सच्चिदानन्दमूर्तये। यतिवेषधरायास्तु नमः कृष्णाय वेधसे ॥ ४१ ॥ पञ्चाक्षरस्य मन्त्रस्य रहस्यं वेत्ति शंकरः। अम्बिका वा हरिर्ब्रह्मा वसिष्ठाद्या महर्षयः ॥ ४२ ॥ समाश्रितस्य पुंजन्म सफलं दुर्लभं किमु। चिन्तामणिः कल्पवृक्षः कामधेनुरयं मनुः ॥ ४३ ॥ सत्यं शौचं दया भक्तिर्वैराग्यमिति लक्षणम्। यत्रास्ति दुर्लभं तस्य किमस्ति मनुसेविनः ॥ ४४ ॥ सिद्धस्तोत्रमिदं यस्तु गुरोर्लब्ध्वा पठेन्नरः। सिद्धो भवति चाल्पेन कालेनास्मिन्कलावपि ॥ ४५ ॥ गुरुप्रसादो बलवान्न कालो बलवत्तरः। अत्र मानं शिवः साक्षाच्छ्रुतिः स्वानुभवस्तथा ॥ ४६ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ४७ ॥ देवाः परोक्षताप्रीताः स्वभावो महतामयम्। सहसा तत्त्वकथनं न स्वभावोऽपि तादृशाम् ॥ ४८ ॥ गुरुभक्तिविहीनेषु स्वभक्तिरहितेषु च। नरेषु पशुतुल्येषु

कथं देवः प्रसीदति ॥ ४९ ॥ प्रसन्ने देवदेवेशे श्रीगुरौ तत्त्ववेदिनि । आतृप्ति तत्त्वकथनं सफलं भक्तिभाजिनि ॥ ५० ॥ ज्ञाते तत्त्वे तत्प्रसादात्किं फलं तृप्तिमन्तरा । इयमेव परा सिद्धिश्चरसान्तिमजन्मनाम् ॥ ५१ ॥ पश्य तृप्ता हरिर्ब्रह्मा शंकरः श्रीपराम्बिका । सिद्धान्तशिखरारूढा दत्ताद्याश्च महर्षयः ॥ ५२ ॥ सिद्धान्तो यैर्न विज्ञातस्तृप्तिं यास्यन्ति ते कथम् । हृद्दारिद्र्यं कथं तेषां निवर्तेत चिरन्तनम् ॥ ५३ ॥ तस्मात्तृप्ता मोक्षभाजः सिद्धान्तज्ञा विचक्षणाः । दैवीं संपदमारूढा गुर्वाज्ञामार्गचारिणः ॥५४॥ तस्माद्गुरौ हरौ भक्तिमङ्गीकृत्य भवं तर । न ताभ्यामन्तरा कोऽपि सिद्धपञ्चाक्षरीं वदेत् ॥ ५५ ॥ श्रीगुरुं बुद्धिदातारं मन्यन्ते सकला जनाः । तमेवेशं प्राह देवी गायत्री सर्वसंमता ॥ ५६ ॥ तस्मात्तत्पादपाथोजमकरन्दरसं पिबन् । सिद्धपञ्चाक्षरीमन्त्ररहस्यं लभते नरः ॥ ५७ ॥ ओमित्येकाक्षरं ब्रह्म तदेव नम उच्यते । यस्मात्तस्मै सर्वकामा नमन्तीति यजुःश्रुतिः ॥ ५८ ॥ असाध्यं सर्वथा नित्यसिद्धत्वात्सिद्धमुच्यते । तस्मात्तदोंनमःसिद्धमुपास्यं ज्ञेयमेव च ॥ ५९ ॥ ॐकारेणाविचालित्वं नमःशब्देन साक्षिता । सिद्धशब्देन लब्धत्वं मनुराह सनातनः ॥ ६० ॥ नैतन्मन्त्रसमः कोपि मन्त्रोऽस्ति जगतीतले । कामधेनुः कल्पवृक्ष इव तृप्तिकरः परः ॥ ६१ ॥ न श्रोतव्यं न मन्तव्यं न ज्ञातव्यं च किंचन । शिष्येतास्मिन्मनौ लब्धे न भोक्तव्यं च किंचन ॥ ६२ ॥ एतद्विज्ञानसिद्ध्यर्थं प्रवृत्ता ह्यक्षरावली । सा वेदादिस्वरूपेण चैतदन्तावसीयते ॥ ६३ ॥ नमस्ते गुरुनाथाय पाठिता सकला श्रुतिः । पञ्चाक्षरमिषेणैव निमेषोद्घाटनं कृतम् ॥ ६४ ॥ पदत्रयेण यस्मात्त्वं व्याप्य तिष्ठसि हे गुरो ।

---

१ तत्त्वविच्चेद्गुरुर्भक्तोऽनेहसा तत्त्वविद्भवेत् । पशुप्राये गुरौ शिष्यः पशुरेव न संशयः । ईदृशस्यापि प्रकरणस्य प्रकृते आसीदावश्यकता. २ कचभाव ऐच्छिकः. ३ सिंहावलोकनमेतत्.

त्रिविक्रमोसि भगवन्पादयोरस्म्यहं बलिः ॥ ६५ ॥ गुरोः सदन-
मासाद्य येन केन वपुष्मता । संपादितः प्रसादश्चेत्तं मन्ये भाग्य-
शालिनम् ॥ ६६ ॥ गुरोरपि गृहं गत्वा धिकृत्यैव निराकृतः ।
पशोः पशुतरं मन्ये तं नरं त्वपरं खरम् ॥ ६७ ॥ कृपादृष्टिर्द्वयो-
र्दृष्टा गुरौ मातरि चानघा । तत्र तीर्थे नरः स्नात्वैवाक्षयं सुखमे-
धते ॥ ६८ ॥ सुखं स्वापयते माता सुखं स्वापयते गुरुः । नान्यः
कश्चित्सुखस्वापक्रमं वेत्ति द्वयं विना ॥ ६९ ॥ द्वावेव पोषकौ लोके
इतरे शोषका मताः । भोगेन माता ज्ञानेन गुरुः पोषयते शिशुम्
॥ ७० ॥ पुनः शृणु महाप्राज्ञ ऋतं पथ्यं च मे वचः । यज्ज्ञानेन
भवेत्पुष्टिः कैवल्यारोहणक्रमे ॥ ७१ ॥ षड्विधानि दरिद्राणि यस्य
नष्टानि बोधतः । स कैवल्यपदारोहाधिकारी श्रीगुरोः सुतः ॥ ७२ ॥
केन मानेन संसिद्धौ हर्षशोकौ वदाशु मे । कस्तयोर्विषयः सिद्धः
कथं वा संस्थितौ हि तौ ॥ ७३ ॥ न किंचित्तत्र मानं तु पशुदृष्टि-
मृते ऋतम् । कथं मृगजलाभेऽस्मिन्सत्यबुद्धिमृते हि तौ ॥ ७४ ॥
इयमेव पशोर्दृष्टिर्या दृष्टं मनुते हठात् । न विचारविशालत्वं तत्रै-
वैतौ स्थितिं गतौ ॥ ७५ ॥ षडिमे रिपवो येन जिताः कामादयः
शठाः । गुरुदत्तपदारूढो मुक्तो दैवेन जायते ॥ ७६ ॥ षडिमे
रिपवो येन जितास्तेन जगज्जितम् । गुरुदत्तपदारूढो मुक्तो दैवेन
जायते ॥ ७७ ॥ गुरुदत्तपदं तत्तु यत्र किंचिन्न विद्यते । कैवल्य-
धाम तद्विद्धि न चिन्त्यं नापि चिन्तनम् ॥ ७८ ॥ यः सेवामन-
पेक्ष्य वीक्ष्य शरणं यातं मुदैकाक्षरं वेदानामखिलासनां हृदि दृढं
गाढं निगूढं रसम् । दत्ते दास्यति दत्तवान्निजपदाम्भोजाश्रिते
सज्जने तस्मै श्रीगुरवे दयार्द्रवपुषे भूयात्सदा मङ्गलम् ॥ ७९ ॥ वत्स
तुष्टोस्मि ते बुद्ध्या वाचस्तुष्यन्ति मामकाः । हृदये तव तिष्ठन्तु चिरं
जीव सुखं वस ॥ ८० ॥ का क्षुच्छब्दासके विश्वे का क्षुदासनि चि-
द्रसे । नित्यलब्धे परानन्दे तृप्तिरेवावशिष्यते ॥ ८१ ॥ किंवा तृप्तस्य

कर्तव्यं जगद्विस्मरणं विना । तच्च स्वयं भवत्येव जाग्रतः स्वप्नवच्छिशो ॥ ८२ ॥ दुर्लभौ श्रीगुरोः पादौ न मोक्षो बत दुर्लभः । यतस्तत्पादपाथोजमाश्रित्यैव प्रतिष्ठितः ॥ ८३ ॥ वाक्शक्तिर्बोधगगने शिवे क्रीडति सा शिवा । तामालिङ्ग्य दृढं शेते स्वानन्दे सुखमद्वयः ॥ ८४ ॥ पश्य क्रीडा शमं याति सामरस्यं च जृम्भते । को बोधोऽस्ति विना शब्दं कः शब्दो बोधमन्तरा ॥ ८५ ॥ बोधः शब्द इति व्यक्तं वक्तुं शक्नोति को नरः । गतौ तौ शब्दबोधाख्यौ जगद्रूपधरौ नटौ ॥ ८६ ॥ कैवल्यधाम्नि संलीनौ तया सह मया सह । आवयोः संगमस्यैतत्फलं यत्सहजं सुखम् ॥ ८७ ॥ विश्रम्यतामत्र वत्स नात्र किंचन विद्यते । भाषणं बहु संजातं मथापि च विरम्यते ॥ ८८ ॥ प्रणवाक्षररूपायै शिवायै सततं नमः । तदेकज्ञानवित्ताय शिवाय सततं नमः ॥८९॥ तत्सामरस्यवित्ताय गुरवे स्वस्ति मे सदा । तत्पादपद्मरजसा स्नातेभ्योऽप्यस्तु मङ्गलम् ॥ ९० ॥ कैवल्यगाथे दुग्धि त्वं शान्ते दान्ते निजं रसम् । येन तुष्येच्छ्रीगुरुर्मे निरामिषदयाकरः ॥ ९१ ॥

॥ इति श्रीकैवल्यधामनिवासिकृष्णानन्दविरचितायां कैवल्यगाथायां निर्वाणपदवीकथनं नामाष्टादशोऽध्यायः ॥ १८ ॥

---

# भगवद्गीताशास्त्रोपसंहारः ॥ १२ ॥

जय सच्चिदानन्द ।

धीश्रीसंगतिविस्त्रौढौ नरनारायणावृषी ।
को न वन्देत मतिमान्न नन्देत्तद्वचःसु कः ॥ १ ॥

अथ श्रीमद्भगवद्गीतायां नीतिधर्मात्मज्ञानतदधिकारित्र्यवस्थापिकायामुपसंहारवाक्यं 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं

---

१ मोक्षोपयोगिशास्त्रपरिशीलनव्यसनितया परिचितमोक्षरहस्यमित्यर्थः.

त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः' इति। उपसंहारे परामृष्टे सर्वं शास्त्रं परामृष्टं भवतीति न्यायेन तत्परामृशामः। कः प्रश्नो भगवतः सर्वधर्मपरित्यागकथनेऽनुपदमेवोक्तं स्वयमेव 'एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च। कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमसि'ति। नापि पृष्टमर्जुनेन सर्वधर्मपरित्यागः कर्तव्यो न वेति। यदि सर्वधर्मपरित्याग एवोपदिष्टः तर्हि कथं भवेद्धर्मस्थापनम्। यदि धर्मस्थापनं तदा कथं सर्वधर्मपरित्यागोपदेशः। अत्र बीजमन्वेष्टव्यमन्विष्टं वा स्यात्। नापृष्टोपदेशः संभवति। यथा पृष्टं तथोत्तराणि दत्तानि भगवता। क्षत्रियाणां न संन्यासाधिकार इति च बोधितं। 'न निरग्निर्नचाऽक्रिय' इति। तदग्निसमारोपशास्त्रस्य नावकाशस्तथा शिखासूत्रत्यागशास्त्रस्यापि। सत्यं क्षत्रियेष्वनवकाशः-'कर्मण्येवाधिकारस्ते' इति, 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यत' इति च वाक्यान्तरात्। तस्मात् 'काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणा' इति पृथक्कृतिः। कर्मणां काममूलत्वम्। कामश्चैषणा च पर्यायः। एषणात्यागो हि संन्यासः। 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छती'ति वाक्यशेषात्। 'संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्। त्यागस्य च हृषीकेश पृथक्केशिनिषूदने'ति संन्यासत्यागपार्थक्यजिज्ञासायां काममूलसर्वकर्मणां त्यागः संन्यास इतरे त्यागविशेषा इति। अत्र कवयो विचक्षणा मनीषिणस्त्रयोऽधिकारिणो निर्दिष्टाः क्रमेण ब्राह्मणक्षत्रविशस्तत्र ब्राह्मणः संन्यासेऽपरौ द्वौ त्यागेऽधिकृताविति व्यवस्थायां प्राप्तायां कविमतमनुरुन्धानं शिखासूत्रत्यागशास्त्रमग्निसमारोपशास्त्रं च ब्राह्मणेषु चरितार्थं प्रतिबन्धाभावादधर्म्यानभिधानात् 'ब्राह्मणाः प्रव्रजन्ती'ति श्रुतेश्च। तस्मादुपन्यस्तवाक्ये कवयो ब्राह्मणाः। ज्ञानकर्मणोरसमुच्चयात्। तस्मात् लोकद्वयविदो विच-

क्षणाः क्षत्रियाः समुच्चयावलम्बिनः तथाधिकारात् जनकादिवत्फलत्यागपराः । तत्र संमतिर्भगवत इदानीमावयोः क्षत्रियत्वान्निश्चितं मतमुत्तममिति । उत्तमत्वं तु युद्धप्रसङ्गे क्लैब्याङ्गीकारप्रसङ्गाभावात् । अतएवाह—'नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तित'इति । तमोधर्मः क्लैब्यं । नियतं च युद्धं । तथाच नीतिः पुराणी । 'असन्तुष्टा द्विजा नष्टाः सन्तुष्टाश्च महीभुजः । सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गने'ति । संन्यासो नाम संतोषधर्मः । सच ब्राह्मणानामेव युक्तोऽन्यस्य 'परधर्मो भयावह' इति मनसि निदधतापि सर्वधर्मपरित्यागः कथमुपदेष्टव्य इति विचक्षणानामैहिकामुष्मिकज्ञानवतां कोटिप्रविष्टस्य भगवतः संमतेरर्थो वेदितव्यः । एकवाक्यत्वाय मनीषिणो व्यवहारचतुरा विशः सभ्या एतल्लोकचतुरास्तेषां मतं परिशिष्टं दुष्टकर्मपरित्यागः त्याग इति निमग्ना माभूदग्रे नौरिति व्यवहारविदां तदुपन्यासः । सत्येवं कोऽवकाशो भगवतो—'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे' इति विधिवचनानि सफलानि ब्रुवत इति चेदस्तु 'चोदनालक्षणोऽर्थो धर्म' इति लक्षणसमन्वयो न तद्विरोधलेशोऽपि । यस्मात्प्रथमाध्याये दत्तोऽवकाशः पार्थेन 'समानानामुत्तमश्लोको भवती'ति श्रुतिमनुस्मृत्य 'स्वजनं हि कथं हत्वा सुखिनः स्याम माधवे'ति शङ्कामुत्थाप्य युद्धे स्वपरविचारस्यासांप्रतत्वेऽपि दृढं पूर्वपक्षमुपन्यस्तवान्—'यद्यप्येते न पश्यन्ति लोभोपहतचेतसः । कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् । कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम्' । अस्माभिः समावर्तनसमये गुरुभिरध्यापितां—'प्रजातन्तुं मा व्यवच्छेत्सीरि'ति श्रुतिं जानानैः । अस्तु मित्रद्रोहः पुनः मैत्रीप्रसङ्गात् । अतएव संनिहितमासीत् । कुलक्षये दोषं विशदयति—'कुलक्षयकृतं दोषं प्रपश्य-

द्भिर्जनार्दन । कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः । धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत । अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः । स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः । संकरो नरकायैव कुलघ्नानां कुलस्य च । पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः । दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः । उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः । उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन । नरके नियतं वासो भवतीत्यनुशुश्रुमे'ति । जातिधर्मेषु कुलधर्मेषु नष्टेषु मनुष्यमात्रे पर्यवसित एष उपप्लवः ।–'अहो बत महत्पापं कर्तुं व्यवसिता वयम् । यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः । पूर्वपक्षमेवं समाप्य वर्णसंकरहेतुता प्रतिपक्षिष्वेवास्त्वित्याह ।—'यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः । धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्' । इतीमां शङ्कां यावन्न समाधास्यसि तावन्न चापं बिभर्मि इति पार्थाभिप्रायं संजय उवाच । 'एवमुक्त्वाऽर्जुनः संख्ये रथोपस्थ उपाविशत् । विसृज्य सशरं चापं शोकसंविग्नमानस' इति । अतएव उत्तिष्ठोत्तिष्ठेति भूयः प्रतिबोधितोऽपि 'क्लैब्यं मास्मगमः पार्थे'ति कोपितोऽपि नोत्तस्थौ तस्मात्कलिप्रसारशङ्कां यावन्न समाधास्यासि तावदयं नरोऽपि नोपतिष्ठेदिति विज्ञाय लिङ्गैराह ।—'सर्वधर्मान्परित्यज्ये'ति । ये केचिज्जातिधर्माः कुलधर्माश्च ते कलेः पञ्चसहस्रान्ते मुमूर्षवो भविष्यन्ति नाधुना, न तत्र त्वं निमित्तम् । कस्मादेतत् तदाह—'मामेकं शरणं व्रजे'ति । सर्वविश्वस्य रक्षितारं मामेकमेव विद्धि पञ्चसहस्रान्तं जातिधर्मान्कुलधर्माश्च पालयिष्यामि । कस्मात्तदन्तता तदाह—अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि । त्वयि धर्मोपप्लवनिमित्तता माभूदिति । तर्ह्युपप्लव एव माभूदिति चेत्त्वं तु माशुचः कालचरित्राणि न रोद्धुं शक्यन्ते ये शक्नुवन्ति ते धुरीणाः यथा श्रीशङ्करः यथा वा भवान् । धर्मोपप्लवनिमित्तता तु धार्तराष्ट्रेष्ववतरति । न त्वयि न मयि ।

खलशासनमात्रमावयोः कर्म प्रकृतम् । तद्विज्ञायाह–'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत । स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तवे'ति । प्रकृते त्वदुक्तन्यायान्मोहो वर्णसंकरनिमित्ततामोहो नष्टः स्मृतिश्चावयोरवतारसङ्केतस्य लब्धा ततो गतसंदेहश्चापमुद्यम्य स्थितोऽस्मि अधुना उत्थितोऽस्मि तव वचनं करिष्ये इति धनुष्टङ्कारं कृतवान् ईदृशः संशयच्छेत्ता कस्त्वदन्य इति क्षात्रनमस्कारं, जातिसंरम्भं मोहस्थगितमपि वेद कृष्णोऽधुनाऽर्जुनः। तस्मात्सर्वधर्मानिति वाक्यस्योभयैकवेद्यत्वादुक्तं–'इदं ते नातपस्काय नाभक्ताय कदाचन । नचाऽशुश्रूषवे वाच्यं नच मां योऽभ्यसूयती'ति शपथचतुष्टयरूपम्—'य इदं परमं गुह्यमि'त्यादिसंवादस्वरूपमधिकारिफलं निर्दिष्टं तत एष परामर्शः । कृष्णभक्तेपु समर्पितो भक्तप्रियः श्रीकृष्णस्तुष्यताम् । विषादयोगादारब्धस्य गीताशास्त्रस्य संशयत्यागयोगे समाप्तिरन्यथा विषादापरिहारादिति गीतासूत्रम् । संशयमूलो हि विषादः । गुरुप्रसादसंपन्नः संजय उवाच–इत्यहमित्यादि । गुरुशिष्ययोः कृतकार्यत्वादन्येषां च तत्संभवात् । 'या प्रीतिः संजयस्यासीत्तव वाचि जगद्गुरो । सा प्रीतिरस्तु मच्चित्ते किमन्यदवशिष्यते' । –'अध्येष्यते च य इमं धर्म्यं संवादमावयोः । ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः' इति भगवदुपसंहारे धर्म्यविशेषणतात्पर्यं संजय उवाच—'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्ममे'ति । अतो धर्म्यत्वं गीताध्ययनज्ञानयज्ञश्चेत्युपसंहारो धीश्रीसंयोजनसूत्रमिति विश्रामः । न कृष्णेन न पार्थेन धार्तराष्ट्रा अमी हताः । दौर्मन्त्र्यस्य प्रभावोऽयमिति वै वेद संजयः ॥ १ ॥ एकवारं शमं याताः शंकरादमितौजसः । पुनर्बुद्धाः प्रबुद्धाः स्युस्तदा स्याद्वर्णसंकरः ॥ २ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतश्रीमद्भगवद्गीताशास्त्रोपसंहारपरामर्शः संगतिसूत्रमिति शम् ॥

---

# ब्रह्मसूत्रकुतूहलम् ॥ १२ ॥

जय सच्चिदानन्द ।

ॐ अधिगच्छति शास्त्रार्थः स्मरति श्रद्धाति च । यत्कृपावश-तस्तस्मै नमोस्तु गुरवे सदा ॥ १ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टेऽपरावरे ॥ २ ॥ नूनं हि भक्तिर्गुरुपादुकायां नूनं हि शक्तिर्गुरुपादुकायाम् । नूनं हि भुक्तिर्गुरुपादुकायां नूनं हि मुक्तिर्गुरुपादुकायाम् ॥ ३ ॥ नमोस्तु गुरवे तस्मै यत्र तत्र निवासने । सच्चिदानन्दपादाय चरमाय मुहुर्मम ॥ ४ ॥

अथ भगवतो व्यासस्य ब्रह्मसूत्राणि विमृशामः कानिचिद्य-थामति । अभूत्पूर्वमीमांसामहर्षिषु यथा "को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देवा अस्य विसर्ज-नेनाथा को वेद यत आबभूव । इयं विसृष्टिर्यत आ बभूव यदि वा दधे यदि वा न । यो अस्याध्यक्षः परमे व्योमन्त्सो अङ्ग वेद यदि वा न वेदे"ति दुर्निरूपत्वं प्रपञ्चस्य प्रदर्श्य "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्" इति तर्काभ्य-नुज्ञां दत्वा तर्काणामप्रतिष्ठानाद् श्रुत्यैव सिद्धान्तः श्रावितो "ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षु"रिति । अस्या एव मीमांसाया वाक्यशेषः 'सर्वो वेदान्त' इति सूचयन्भगवा-न्बादरायणकृष्णः सूत्रयामासोपनिषदः कस्मादुत्थितेयं मीमांसेति महामुनीनां जिज्ञासाप्रसङ्गे । नह्यप्रसक्तं पण्डितः किंचिल्लिखति ब्रूते वा तस्मादस्या मीमांसाया इयमुत्थानिका ।

ॐसकलेष्वपि लोकेषु ज्ञानमज्ञानमिति पदार्थद्वयं सकलसंमत-मत एव पश्यन्ति मुह्यन्ति च । सकलसंमतमोहविनाशाय ज्यो-

तान्यपि सूर्यादिशब्दान्तानि दृश्यन्ते तैर्ज्योतिर्भिर्व्यवहाराः सर्वे साध्यन्ते निर्विवादम् । तत्र च मोहपात्रे संसारे केचित्सूर्येण ज्योतिषा केचिच्चन्द्रेण केचिदग्निना केचिद्द्वाभ्यां केचित्त्रिभिरेकेन केचित्पश्यन्ति नानाविधांश्चमत्कारांस्तमोगर्भे भूयः पश्यन्तोऽपि मुह्यन्ति ततोऽवशिष्टमेव तमो नान्तं पश्यति कश्चन कस्यचित् । अतएव कश्चित्पृच्छति कश्चिद्वक्ति तस्योत्तरं तस्मात्सिद्धं ज्योतिष्ट्वं शब्दस्य । तेन सूक्ष्मो व्यवहारः सिध्यति मानुषादीनाम् । यथा-यथा व्युत्पत्तिस्तथातथा शब्दप्रामाण्यं प्रसिद्धं मानुषेषु । प्रत्यक्ष-मात्रेण व्यवहरन्ति केचिन्, केचित्प्रत्यक्षानुमानाभ्यां, केचिदु-पमानेन त्रिभिः, केचिच्छब्देन चतुर्भिः, केचिदर्थापत्त्या पञ्चभिः, केचिदनुपलब्ध्या षड्भिर्व्यवहरन्ति मिथः कलहायन्ते च । न केन-चित्प्रमाणेन निर्णीतं विश्वं, यदि निर्णीतं तर्हि कस्मात्कलहा एते षडपि प्रमाणावलम्बास्त्वं यथा पश्यसि तथा नास्ति, यथाहं पश्यामि तथैवैतदिति सिद्धान्तयामासुः । किमेष सिद्धान्तः, कि-मेषा प्रमाणसरणिः, किमेतत्पाण्डित्यं, किमेषा संसारनिवृत्तिरिति भगवती श्रुतिराह—नास्ति नानात्वं नास्त्यन्नह्मेति । यस्यैकसा-क्षिकं तत्कथमस्ति स्वप्नादिवत् । अतएवागमापायिनामभावं नित्य-मङ्गीकुर्वन्ति केचित् येन स्वाभावसामानाधिकरण्यं नित्यसिद्धम् । यत्र स्वयमस्ति तत्रैव स्वाभावो घटादिप्रपञ्चस्य तथापि प्रतीति-मात्रप्रतिबन्धस्तेनैव हेतुनाऽस्तीति व्यवह्रियते । अभावो नामा-ऽनुपलब्धिः स च नित्यः । त्वं नामानुपलब्धिसामानाधिकरण्ये-नोपलब्धिविषयस्तदङ्गीकारः किं प्रामाणिकस्तस्मादङ्गीकुरु । नेह नानास्तीति यद्यस्ति तर्हि कथं नित्योऽत्यन्ताभावः ? तस्मात्कुण्ठी-भूतप्रमाणानामनपोढतमसां सिद्धान्तः संसारोऽस्तीति । तत्र च चमत्कारः कश्चित्तत्त्वानि षट्त्रिंशदित्याह कश्चित्पंचविंशतिं चतु-र्विंशतिं षोडश सप्त चत्वारि त्रयो द्वावेक इति । कथमपि वदतु

कोऽपि, तथापि यथादृष्टि निरूपणं तत् ततस्तस्यास्तित्वसाधनं दुर्घटमित्यत्यन्ताभावो नित्यः सिद्धस्तत्समानाधिकरणोपलब्धिरनुपलब्धिरिति वेदयति तस्माद्वेद इति परंपरासिद्धत्वाच्छ्रुतिरिति। सा प्राह सर्वं ब्रह्मेति भ्रमप्रतीतानामधिष्ठानेतररूपासंभवात्तत्र कल्पयन्ति परमाण्वादीन्युपादानानि न तत्र किंचिन्मानं तमोगर्भे तर्कासंभवात्। अतएव मतभेदा वल्गन्ते। तत्र च हेतुः कल्पकभेदात्कल्पनाभेदस्ततो मतभेदः ताः सर्वाः कल्पनाः सर्वज्ञस्य परमेश्वरस्य विषया(ये) भ्रमात्मका भ्रमपोषकाश्च। तत उवाच भगवाननादिः परमपुरुषः शास्त्रमनादिसिद्धम्। यत्र भ्रमात्मकस्यापि विश्वस्य व्यवस्था बाधश्च निरूपितः कर्मकाण्डो ज्ञानकाण्ड इति काण्डद्वयेन। तत्र पूर्वकाण्डेन सव्यवस्थे विश्वे ज्ञाते शास्त्रप्रामाण्यग्रहस्ततो व्युत्पत्तिवृद्धिः पूर्णायां व्युत्पत्तौ तत्त्वमसीत्याह। यत इदं वाचारम्भणं जगत् ततो यद्वाचारम्भणं वाचारम्भणसमर्थं तत्त्वमसीत्याह। वाचारम्भणश्रुतेरेवार्थो 'नेह नानास्ति किंचन', 'यत्र द्वैतमिव भवती'त्यादिः। तत्त्वमसीत्यस्यैवार्थो 'ऽहं ब्रह्मास्मी'ति जीवब्रह्मैक्यम्। अत्र बहवोऽर्था वर्णिताः पण्डितैरपि यथामति परंतु मिथ्याभूतस्य न भेदहेतुत्वमिति निर्विवादम्। नहि मरीचिजलं मरुभेदाय दृष्टं जलं तु दृष्टं। सति तथात्वे कः प्रतिबन्धस्तत्त्वमसीत्यैक्यविज्ञाने ? तस्मादिदमनुमीयते यावद्वाचारम्भणश्रुतेर्नार्थविज्ञानं तावद्द्वैतमिव भवतीति श्रुतेर्नार्थविज्ञानं तस्मिन्प्रतिबद्धे नेह नानेति वाक्यं प्रतिबद्धं तदा तत्त्वमसीति वाक्यं च प्रतिबद्धमेवेति। किं मृगवारि मरुभेदायालं पश्य पश्य मृगवारि मरुभेदहेतुं मा वद तदा ज्ञातः स्याद् श्रुतीनामर्थः। यदि कोऽपि नाप्राक्ष्यज्जगत्तदा नावदिष्यच्छ्रुतिर्नेह नानास्तीति। स्वाभावसामानाधिकरण्यं च प्राह श्रुति 'नासदासीदि'त्यादिना 'सदेव सोम्येदमग्र आसीदि'त्यादिना च। तस्मान्मृगवारिवत्स्वाभावसमानाधि-

कारणं विश्वं मिथ्येति भेदहेतोरभावाज्जीवो ब्रह्मेति । किं मृगवार्य-नृपत्याननृपत्ताभ्यां मरुभूमौ भेदं विदध्यात् । किं स एवायं मरु-रित्युपदेशं प्रतिबन्धीयात् । स्वयं मिथ्याभूतस्य न भेदहेतुत्वमिति व्युत्पन्नानां जीवब्रह्मैक्यबोधः प्रतिबन्धरहितः । तदितरेषां केषां-चिद्व्युत्पन्नानां सर्वज्ञत्वाल्पज्ञत्वादिधर्मप्रयोजकत्वान्न मिथ्या विश्व-मिति शुद्धयां ब्रह्मत्वं प्रतिबद्धम् । अत्र व्युत्पत्तिरेव ब्रह्मत्वाब्रह्म-त्वबोधे कारणमेकमेव तु शास्त्रम् । यथा जगत्सव्युत्पन्नानां नास्ति नीतिर्व्युत्पन्नानामस्ति, यथा शास्त्रव्युत्पन्नानां नास्तीश्वरो व्युत्प-न्नानामस्ति, तत्राव्युत्पन्नानां परोक्षो व्युत्पन्नानामपरोक्षः स तस्मि-न्नव्युत्पन्नानां कर्तृत्वभोक्तृत्वादयो व्युत्पन्नानां तदुभयरहितः तत्रापि व्युत्पन्नानामखण्डैकरसः । सा च व्युत्पत्तिः शिक्षकव्यु-त्पत्त्यनुरूपा । अतः सर्वशिक्षकस्य भगवत इयं शिक्षा 'त्रैगुण्य-विषया वेदा निस्त्रैगुण्यो भवाऽर्जुने'ति । तत्रोपपत्तिमाह । 'निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवानि'ति । निर्द्वन्द्व इति त्यक्तद्वैतबुद्धिः । नित्यसत्त्वस्थ इति परिशिष्टसन्मात्रानुसंधातेति । निर्योगक्षेम इति स्वाभावसमानाधिकरणानां वस्तूनामयाचनमसं-ग्रह इति । आत्मवानिति परिशिष्टः सन्मात्रोऽहमिति विश्रान्त इत्यर्थः । इत्थं विजानतां सर्वशाखिनामेक एव सिद्धान्त इत्याह 'यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्म-णस्य विजानत' इति । यथा सर्वतः संप्लुतोदक उदपाने सरसि कस्मिन्नपि घटे यावांस्तावानेवार्थस्तथा ब्राह्मणस्य मातापितृशिक्षा-पूर्वकगुरुसंप्रदायादधिगतविद्यस्य विजानतस्तत्त्वमेकमेव सर्वेष्वपि वेदेषु । तस्मान्मतभेदः शिक्षोपप्लवमूल इति पर्यवसानम् । अत-

१ अमेदिंदं नृप दयात्पुरुहूतदिग्भेरितिवत्प्राधान्येनोपलक्षणतया ब्राह्मणपदो-पादानम् । अतएव च मूर्खव्यावृत्तये विजानता इति विशेषणं, सिद्धेन्ते जन्मना तस्यापि ब्राह्मणत्वात्.

एवाह 'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दने'ति शिक्षितबुद्धेरेकविषयत्वादेकत्वमित्यर्थः। इति शिक्षितबुद्धेः समाध्यधिकारमुक्त्वा तदितरस्यानधिकारमाह 'बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिना' मिति। अव्यवसायिनामशिक्षितानां बुद्धयो बहुशाखाः स्वेच्छया कल्पनारूढाः बहुविषयत्वादनन्ता इत्यर्थः। लोकाशया लोका लभ्यन्ते यथायं लोकः तथा परमात्माशया परमात्मा संनिहितोऽपि लभ्येत समिच्छन्ति सर्वे जना ब्रह्मादिलोकान्, न समिच्छन्ति परमात्मानं यो हि यत्र कुत्रापि लभ्यते गुरुप्रसादप्रासादः। अतएवाह 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मन' इति। तस्मात्साम्यशिक्षणं गुरुलक्षणम्। तत्साम्यं चाह 'निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिता' इति भगवान्सान्दीपिनिसंप्रदायस्थः। निर्दोषमिति सुखदुःखदूरत्वादिदोषरहितं, सममिति सर्वज्ञत्वाल्पज्ञत्वादिवैषम्यरहितम्। तस्यैव जिज्ञासितव्यत्वमाह ब्रह्मेति। तस्मान्निर्दिष्टाज्ज्ञानात्ते जिज्ञासवो ब्रह्मणि स्थिता इत्यर्थः। किं कुक्षौ कलहं पालयन्तो ब्रह्मनिष्ठा उताद्वितीयं ब्रह्म वदन्तो ब्रह्मनिष्ठा इति विचार्यं। अतएवाह जगद्गुरुः कृष्णः 'विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिन' इति। अस्यायमभिप्रायो यदि वैषम्यदृष्टिस्तर्हि जगद्दृष्टिः, यदि समदृष्टिस्तर्हि ब्रह्मदृष्टिरिति। इदमेव पाण्डित्यं शिक्षाफलम्। किं मृगवारिणि वैषम्यं वैषम्यं, किं रज्जुसर्पः सर्पः, किं शुक्तिरौप्यं रौप्यं, किं ब्रह्मणि जगज्जगदिति शिक्षाफलं प्रदर्शितं पाण्डित्यं समदर्शिन इति। अतएवाह श्रुतिरपि विदिताविदितान्यत्वं तयोरपि वैषम्ये गणनात् 'अन्यदेव तद्विदितादथो अविदितादधी'ति। इदमेव स्वप्रकाशत्वं यद्विदिताविदितान्यत्वं विदितत्वे परप्रकाशत्वमविदितत्वेऽप्रकाशत्वं तुच्छत्वं वा। तदुभयातीत आत्मा।

एवं ज्ञानतत्त्वं निरूपितम् । यन्न विदितं नानभ्युपगतं तच्च नात्मनोऽतिरिच्यते । अतएवाज्ञानोपस्थापितं सर्वं प्रकाशयति यथा सुवर्णं स्वर्णकारोपस्थापितानलङ्कारान्, यदि नात्मा स्यादलङ्काराणां सुवर्णं तदा न प्रकाशयेदुपस्थापनमात्रेण तथा यदि नात्मा स्याज्ज्ञानं तदा न प्रकाशयेद्विश्वमज्ञानोपस्थापितम् । न कर्मणा नाभावेन वोपस्थापितं तयोरप्यज्ञानोपस्थापितत्वाद्विश्ववैचित्र्याय । तच्चाज्ञानं विश्वहेतुत्वात् सत्, बाधयोग्यत्वादसत् । अन्यथा प्रमाणवैयर्थ्यापत्तेः । अतएव व्यवहरन्ति जना अस्मिन्नर्थे इदं प्रमाणमिति । संप्रतिपन्ने च तस्मिन् भ्रमो निवृत्त इति मन्यन्ते । भ्रमो नाम विपरीतज्ञानमिति सकलसंमतं तच्च नश्यति प्रमाणसहकृतधिया, सा च धीः प्रमाणप्रापितार्थाकारा तिष्ठति निश्चलं तत एव पूर्वदृष्टदर्शननिषेधः । तस्मादेव वक्तृश्रोत्रोः संप्रतिपत्तिः । एतदेव प्रमाणानां बलं यदज्ञातज्ञापनं येनाज्ञातता ग्रस्ताऽविद्यमानवस्तुप्रदर्शनपरायणा यदि विद्यमानमेव प्रदर्शयेत्तदा प्रमाणकोटौ निवेशस्तद्दर्शनहेतोस्तदा येन यथा प्रतीतं तथैव तदिति प्राप्तं तदापि प्रमाणमन्विष्यन्ति किमस्मद्दर्शनानुकूलमिति केचिदुदाहरन्ति केचित्कल्पयन्ति स्वस्वदर्शनप्रामाण्याग्रहात् । कथमपि कल्पयन्तूदाहरन्तु वा प्रमाणं तथापि स्वदर्शननिष्ठानामज्ञत्वमव्याहतमेव । एतदेवाज्ञानं यत्स्वस्वदर्शननिष्ठत्वं तत एव कलहा नोपशाम्यन्ति । तस्माद्ब्रह्मवादिनो मन्यन्ते सर्वेऽप्येते कलहाः प्रमाणपरिशुद्ध्यर्थमिति । सति तस्मिन्नुपलब्धे परिशुद्धे स्वयमुपशाम्यन्ति तच्छुद्धिविधिमभ्युपगच्छन्ति । लोके श्रूयते कश्चनेवशब्दः शब्दमात्रेण कृताभिसंधिः । अतएव घटइव पटइवेत्यादिव्यवहाराः स्पष्टमुपलब्धास्तथैव वेदेपि 'यत्र द्वैतमिव भवती'ति श्रूयते तद्वाक्यं कमर्थं समर्पयति, लोकसिद्धं घटइवेति कमर्थं समर्पयति तन्मीमांसितव्यम् । ननु घटइवेति वाक्यं घटसदृशमर्थं

समर्पयति तथैव द्वैतमिवेति वचनं समर्पयति का तत्र मीमांसेति चेत्, दृष्टा ते मीमांसा कदाचित्संभवेदपि घटसादृश्यं वहन्पाषाणादिस्तत्कथं द्वैतमिवेति वाक्यार्थतामावहेद् द्वैतं यतो द्वैतमात्रस्यैव शब्दान्वयितावच्छेदकलामत्वं तस्माद् दृष्टान्तासिध्याऽन्य एवार्थो वर्णनीयः संभावितः। उपमाया असंभवान्नोपमेयता द्वैतशब्दार्थस्य ततो वक्तव्यमवश्यमुत्प्रेक्षायामेतद्वचनमिति शक्यते च वासनाभिरुत्प्रेक्षितुम्। यथा नटोऽज्ञाततत्त्वो योषिदिति ज्ञातोऽपि परीक्षिततत्त्वो योषिदिवेति व्यवह्रियते कोऽर्थोऽत्रावतिष्ठते योषित्सदृशो नट इति योषिदित्युत्प्रेक्षायोग्यो नट इति वा। किमत्र प्राप्तम्। योषित्सदृशो नट इति प्राप्तं स्तनकेशादिसाधर्म्यात्। न प्राप्तं तथा। बाधदर्शनात्। नटो योषिदिति प्रत्यक्षात्। तस्मादुत्प्रेक्षायामेतद्वाक्यमित्यबाधितम्। चन्द्र इव मुखमित्यादौ तु रमणीयत्वादीनामबाधितत्वादस्तूपमापरत्वम्। वन्ध्यायां योषिदिति योषिदिवेति वाक्यमुत्प्रेक्षापरमेव पुत्रोत्पादनशक्तेर्मुख्यधर्मस्याभावात्। तथा देहादावात्मशब्दोऽप्युत्प्रेक्षितः सातत्यादिमुख्यधर्माणां बाधात्। आविचारादहंप्रत्ययविषयत्वेऽपि विचारकालबाधितत्वान्नटयोषिद्वत्। तस्मान्नटमुद्दिश्येयं योषिदिति वदन्भ्रान्तोऽभ्युपेयते तथा देहमुद्दिश्यात्मानं वदन्नपीति। यदि ब्रूयाद्विदितात्मतत्त्वो देहमुद्दिश्यात्मशब्दं तदेव शब्दसंसृष्टमेव। कदाचिदिवशब्दाभावेऽपि तदर्थोऽभिप्रेत एव। तथाधिकारात्। यथा नटं योषिदिवेति प्राह यथा मृदं घट इवेति यथा तन्तून्पट इवेति यथा रज्जुं सर्प इवेति तथात्मानं देह इवेति ततः प्राह भगवान्बादरायणः कृष्णः—

## अथातो ब्रह्मजिज्ञासा ॥ १ ॥ इति ॥

अथेति प्रमाणपर्यालोचनाधिकारसिद्ध्यनन्तरमित्यर्थः। अत

इति प्रमाणपर्यालोचनया विपरीतज्ञानहेतुरज्ञानं नश्यतीति हेतोर्ब्रह्मजिज्ञासा प्रवृत्ता । ब्रह्मात्मेति पर्यायः । 'आत्मानमेवावेदहं ब्रह्मास्मीति स आत्मा तत्त्वमसी'ति च श्रुतेः । प्रवृत्तेः सफलत्वात् 'आत्मा वा अरे द्रष्टव्य' इति विधिरुपपद्यते 'श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्युपायाश्चोपपद्यन्ते । यावतां प्रमाणानामेक आत्मैव विषयो नेतरो यथा बह्वृचाः 'त्रय आवसथास्त्रयः स्वप्ना' इति, तैत्तिरीया अपि 'अन्धो मणिमविन्दत तमनङ्गुलिरावप'दिति 'इन्द्रो मायाभिः पुरुरूप ईयत' इति च, सामगाश्च 'यत्र द्वैतमिव भवती'ति 'वाचारम्भण'मिति चाथर्वणिकाश्च 'ओमित्येतदक्षरमिदं तस्योपव्याख्यानमि'त्याद्यामनन्ति । द्वैतमात्रस्य प्रमाणागोचरत्वमेकस्यात्मन एव तद्गोचरत्वमिति । 'द्वासुपर्णे'ति तु द्वाविव सुपर्णाविवैकं वृक्षं परिपस्वजाते इवेत्युपपद्यते । अतएवोत्तरत्र 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान' इति द्वासुपर्णेत्यादिप्रतिपत्तिरुत्तरिता द्वित्वप्रतीतिमूलकशोकस्य मोहमूलत्वादिति श्रवणम् । अतएव तत्त्वमसीत्युपदेशोऽप्युपपद्यते । 'नान्योऽतोस्ति द्रष्टा श्रोते'त्यादिभेदनिषेधश्चोपपद्यत इति मननम् । अविचालिता श्रवणमननाभ्यां परिष्कृतेर्थे निदिध्यासः । त्रिष्वेतेषु पक्वेषु सहजा स्थितिरात्मदर्शनम् । तस्माद्ब्रह्मजिज्ञासा प्रवृत्ता सफलेति प्रमाणशुद्धिः । यस्मादिवशब्दसंबन्धो द्वैतमात्रस्य मनोवाचामगोचरस्यात्मनो नेवशब्दसंबन्धयोग्यता तस्माज्जिज्ञासासाफल्यसिद्धिरधिकारिणः । स च निर्दिष्टः 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तः समाहितो भूत्वाऽत्मन्येवात्मानं पश्ये'दिति । समाहित इति श्रीगुरुमुखागमलब्धज्ञानविनिहतसंशयः । आत्मन्येवेति स्वबुद्धिगृहीतेऽहङ्काराद्यवच्छिन्ने एवात्मानं प्रमाणप्रापितं

१ स्वस्मिन् जीवात्मनि ब्रह्मणि वासुदेवे शिवेचेति तत्त्वम् । शिववासुदेवयोरन्यतरो ब्रह्मापरो जीव इति विचारस्तु पापण्डिनामुदरदरीपूरक इति स इहोपेक्षितः । गुणभेदेनेश्वरत्वं सर्वत्रैव तदनपेक्षे ब्रह्मणि तु भेदएव न कुतश्चान्यतरत्वम्.

पश्येद् । दूरत्वं त्यजेदित्यर्थः । एते शान्त्यादिगुणा धर्मजिज्ञासोत्थाः। यत एते षडपि गुणा धर्मजिज्ञासायाः फलं तस्य चात्मदर्शनमेव तस्मादधिकारसिद्धिरिति निष्कर्षः । अतएव श्रुत्यन्तरं 'मातृमान्पितृमानाचार्यवान्पुरुषो वेदे'ति प्राशस्त्ये मतुप् । ज्ञातुमिच्छा जिज्ञासा ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा। सत्यां तस्यां मीमांसामाह—

## जन्माद्यस्य यतः[1] ॥ २ ॥

इति। इदन्तामापन्नस्यास्य जगतो जन्मस्थितिलया यस्मात्तद्ब्रह्मेति। जन्महेतुत्वान्निमित्तत्वं तरङ्गस्य वायुवत्, 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये'ति भगवत्स्मृतेः। स्थितिलयहेतुत्वादुपादानत्वं तरङ्गस्य जलवत् 'अविभक्तं विभक्तेष्वि'ति स्मृतेः । तस्मादस्य जगतो यदभिन्ननिमित्तोपादानं तद्ब्रह्मेत्यर्थः। सर्वथैव स्वतन्त्रत्वं ब्रह्मत्वमित्यर्थः पर्यवसन्नः। तच्च स्वातन्त्र्यं न स्वेतरसामग्रीसापेक्षस्य नापि परिणममानस्यापेक्षया व्याहतत्वात्। अपेक्षाहि स्वातन्त्र्यं छिनत्ति। नहि परिणमयितुरपेक्षा नास्तीति वक्तव्यं, नापि परिणमयितैव परिणमत इत्यपि विशेषणविशेष्ययोरभेदासंभवाण्णिचो वैयर्थ्याच्च । नहि स्थाणुपुरुषोत्प्रेक्षायां स्थाणुर्वा पुरुष उत्प्रेक्षयिता वा पुरुषो नायं पुरुष इति बाधयोग्यतापरीक्षणात् । तस्मादप्रसिद्धस्यास्य[2] जगतो यः कल्पयिता द्रष्टा श्रोता मन्ता च तद्ब्रह्मेति विशिष्टोऽर्थः। उत्प्रेक्षितृसत्तातिरिक्तसत्ताया अदर्शनात्। न उत्प्रेक्षायामुत्प्रेक्षितमस्तीति वक्तुं शक्यते परंतूत्प्रेक्ष्य मोदते हसति खिद्यति स एव जाग्रत् क्रियते तत्त्वमसीति । या हि जगज्जन्मादिवार्ता 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभि-

---

१ येन यस्माद्यस्मिंश्चेति श्लेषः. २ वस्तुतोऽसिद्धस्यापरमार्थस्य.

संविशन्ती'ति सा तदैवेति । तस्मात् 'अयमात्मा ब्रह्मे'ति जिज्ञासितस्यात्मत्वेन समन्वयः । यथा पुरुष उत्प्रेक्षितस्तथा स्थाणुरपीति नाभिन्ननिमित्तोपादानत्वविरोधः ॥२॥ यदभिन्ननिमित्तोपादानं 'तद्विजिज्ञासस्वे'त्युपदिष्टमध्यापितं यत् 'अधीहि भगवो ब्रह्मे'त्युपक्रान्तं ब्रह्म, कथं तस्याभिन्ननिमित्तोपादानत्वं तत्राह—

## शास्त्रयोनित्वात् ॥ ३ ॥

शास्त्रं हि वाक् तत्कारणत्वात् । नह्यनात्मनो वागुत्थिता भवति नापि वाचोऽन्यस्माज्जगदुत्थितं भवति तस्य वाङ्मात्रत्वात् तस्मादुपपन्नमभिन्ननिमित्तोपादानत्वमित्यर्थः ॥३॥ ननु कथमुच्यते वाङ्मात्रं शास्त्रमिति चेद्वाङ्मात्रस्य जगद्धेतुत्वाव्यभिचारादज्ञातज्ञापकत्वाव्यभिचाराच्च । इदमस्तीदं नास्तीदं कुर्विदं मा कुर्विदं जानीहीदं मा जानीहीत्येतावन्मात्रा हि वाक् । सा चानुशासनान्न व्यभिचरति तस्माच्छास्त्रं वाक् । शास्त्रस्य योनिः शास्त्रयोनिः । शास्त्रं योनिरस्येति पूर्वाचार्यैर्व्याख्यातमेव कथं वाचः शास्त्रत्वं तत्राह—

## तत्तु समन्वयात् ॥ ४ ॥

तत्तु शास्त्रत्वं तु समन्वयादबाधात् । परिहृतविरोधत्वादित्यर्थः । सर्वतो विरोधे परिहृते शास्त्रत्वे किमवशिष्यते । तथाच समन्वयो नाम यत्र विप्रतिपत्तेरनवकाशः । स च विश्वमस्तीति निश्चित्य न सिध्यति । तस्माद्विप्रतिपत्तिविनाशायैकवाक्यत्वं सर्वेषामपि शास्त्राणामभ्युपेतव्यम् । अभ्युपेते चैकवाक्यत्वे विप्रतिपन्नं विश्वदर्शनं विनश्यति तद्दर्शनसाक्षी स्वयंप्रकाशः सच्चिदानन्दघन आत्मा ब्रह्मेति सिध्यति निर्विवादं । तस्मादेतत्पर्यवसानानि सर्वाणि शास्त्राणि । यत्र तानि शास्त्राणि समन्वितानि तद्वाक्यं महावाक्यमिति व्यवह्रियते प्रमाणकुशलैः । तस्माद्वाङ्मात्रस्य शास्त्रत्वे तद्यो-

नित्वात्तदात्मत्वेन सर्वात्मत्वाज्जगज्जन्मादिकारणत्वादात्मा ब्रह्मेति सिद्धम् ॥ ४ ॥ तज्जिज्ञासितव्यं प्रमाणैः शब्दैरित्याह—

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

ईक्षेरितिशब्दप्रमाणैर्विप्रतिपत्तिशान्तिदर्शनात्तद्रूपे ब्रह्मणि शब्दः प्रमाणं नास्तीति न विवदितव्यमित्यर्थः। शब्दमात्रस्य विप्रतिपत्तिशान्तिपरत्वात्। यो हि न तथा स न शब्द इत्याकूतं भगवतः। अतएवाप्तवाक्यं शब्द इति तल्लक्षणमतो विप्रतिपत्तिपराणां वाक्यानामनाप्तवाक्यत्वेनाशब्दत्वात्तत्सिद्धसिद्धान्तो न सिद्धान्त इति पर्यवसन्नम् ॥५॥ ननु मतभेदात्स गौणोऽस्तु सिद्धान्त इति चेदाह—

## गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

गौण इत्यपि स सिद्धान्तो न मन्तव्य आत्मानं पक्षीकृत्य प्रवृत्तत्वादित्यर्थः। आत्मन्येवात्मना द्वैतं दृष्टं तच्चित्रमिति भावः। तस्मादुपाधिभेदाद्वैतदर्शने किं चित्रम् ॥६॥ उपाधिभेदात्मभेदव्यवहारोपपत्तौ शब्दमात्रत्वादुपाधीनामसत्त्वोपपत्तौ सजातीयविजातीयस्वगतभेदत्रयशून्यब्रह्ममात्रत्वसिद्धान्तोपपत्तौ च फलमाह—

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥

अद्वैतसिद्धान्तनिष्ठस्य संसारानुपपत्तेरित्यर्थः। यथा मृद्दर्शनवह्निना घटदर्शनेन्धनं दह्यते तथा संसारदर्शनेन्धनं ज्ञानाग्निना दह्यते। 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे'ति भावः ॥७॥ श्रुतिश्च 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'त्यादिस्तस्मादद्वैतसिद्धान्तनिष्ठायां हेतुमाह—

---

१ मृदतिरिक्तत्वेन घटस्यानिरूप्यनाणत्वेन मृद्बुद्धेर्नाशकत्वाद्घटबुद्धेश्च नाशकत्वाद्दृष्टान्तोपपत्तिः.

## हेयत्वावचनाच्च ॥ ८ ॥

यथा 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती'ति द्वैतदर्शनस्य हेयत्वमुक्तं नोक्तं तथाऽद्वैतदर्शनस्य प्रामाण्यव्याघातापातादित्यर्थः ॥८॥ अद्वितीयब्रह्मात्मनिष्ठस्य मोक्षोपदेशः कस्मादिति चेदाह संसारानुपपत्तिम्—

## स्वाप्ययात् ॥ ९ ॥

स्वस्मिन्नद्वितीये ब्रह्मात्मनि संसारस्याप्ययाद्विलयाद्बाधादित्यर्थः। नह्यद्वितीये ब्रह्मणि द्वैतस्य संभवः प्रमाणप्रापिताद्वैतबाधप्रसङ्गात् । न किंचिद्द्वैते प्रमाणमस्ति निषेधश्चोपलभ्यते 'नेह नानेति, नेति नेती'ति च। श्रुत्यन्तरं च 'ईशावास्यमिदꣳ सर्वमि'ति ईशा सर्वतः स्वतन्त्रेण परमात्मनेदं सर्वं प्रतीतिगोचरं वास्यमाच्छादनीयं यथा रज्ज्वा सर्प आच्छादनीयोऽन्यसत्तया परिदृश्यमानस्तस्मादुपपद्यते प्रमाणोपलब्धात्मनो मोक्ष इति भावः । संसाराच्छादनप्रकारश्चोपपादितः श्रुतिभि'रैतदात्म्यमिदꣳसर्वमेतत्सर्वं यदयमात्मा सर्वं ह्येतद्ब्रह्म ब्रह्मैवेदं सर्वमात्मैवेदं सर्वमि'त्यादिभिः। यथा काष्ठमेवायं हस्तीत्याच्छाद्यते काष्ठेन हस्ती तथा ब्रह्मणा संसार इति ॥ ९ ॥ कस्मादेष सिद्धान्तः सत्य इति चेत्तत्राह—

## गतिसामान्यात् ॥ १० ॥

सर्वेषामपि प्रमाणानामेकार्थतात्पर्यादित्यर्थः। यदि नेह नानास्तीत्युपपाद्यते वेदेन तर्हि सृष्टिरपि तथैव वक्तव्या येन निषेधचरितार्थताऽतो द्वैतमिवेत्युक्तं तेन गतिसामान्यमिति भावः ॥ १० ॥ अद्वैतसिद्धान्तनिष्ठायां हेत्वन्तरमाह—

## श्रुतत्वाच्च ॥ ११ ॥

एवंहि श्रूयते 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं

जिघ्रेदि'त्यादिना विद्वदनुभवस्तस्मादुपपन्ना अद्वितीयब्रह्मात्मनिष्ठोपपन्नेत्यर्थः। क्रियाकारकभेदोपमर्दादिति भावः ॥ ११ ॥ अवस्तूनां प्रमाणैर्बाधदर्शनादित्युक्तं प्राक् तन्निष्ठाभ्यासस्य फलमाह—

## आनन्दमयोऽभ्यासात् ॥ १२ ॥

अभ्यासान्निदिध्यासरूपादानन्दमय आनन्दप्रचुरो भवति जिज्ञासुरित्यर्थः। एकस्मिन्वस्तुनि दृष्टिद्वयप्रसङ्गे प्रमाणप्रापितदृष्टेर्बलवत्त्वादप्रामाणिकी जगद्दृष्टिराच्छाद्यते प्रमाणदृष्टेरानन्दप्रधानत्वात्प्रचुरमानन्दं भुङ्क्ते ब्राह्मं, विस्मरति च संसारं स दुःखं क्रमेणेत्यर्थः। यथायथा व्युत्पत्तिवृद्धिस्तथातथा वस्तु(ब्राह्मी)दृष्टिरुद्घाट्यते तथातथानन्दं च भुङ्क्ते इति भावः। यथायथानर्थस्तिरोधत्ते तथातथानन्दो वर्धते स ब्रह्मानन्दान्न भिद्यते स्थायित्वात् ॥ १२ ॥ ननु न स्यात्स्थायी स वृद्धिकथनादिति चेदाह—

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ १३ ॥

वर्धनं हि विकारशब्दितं तस्मान्न स्यात्स्थायितायोग्यमिति चेन्न तथा। कस्मात्। प्राचुर्यात् प्रमाणप्रापितानन्दप्राचुर्यात्। प्रमाणं हि 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इति 'आनन्दो ब्रह्मेति व्यजानात्'इति तदा तटस्थस्वरूपलक्षणप्रापितानन्दब्रह्मदृष्टेः प्राचुर्यं न कस्मात्तस्मादयं व्युत्पत्तिकालिक आनन्दः स्थायीत्यर्थः। प्रमाणपरतन्त्रत्वाद्बुद्धेरिति भावः ॥ १३ ॥ तन्त्रोपपत्तिमाह—

## तद्धेतुव्यपदेशाच्च ॥ १४ ॥

'आत्मा वा अरे द्रष्टव्य'इति विधित्सितात्मदर्शनोपायेपु श्रवणमनननिदिध्यासनेपु शास्त्रतात्पर्यनिर्णयोपपत्तिचिन्तनव्युत्पत्तिवृद्धिरूपेषु निदिध्यासनस्यान्तरङ्गस्य व्युत्पत्तिरूपस्य वास्तवानन्दपरस्य क्रमवृद्धेर्हेतोरवश्यं व्यपदेशादङ्गीकार्यान्निमित्तात्प्रमाणप्रापि-

तानन्दो वास्तवः स्थायी व्युत्पत्त्यधीनाभिव्यक्तिरित्यानन्दप्रचुरो विश्वं तिरोदधानो व्युत्पत्तिपरायणोऽत 'आनन्दमयोऽभ्यासा'दित्यर्थः ॥ १४ ॥ कस्मादसावानन्दप्रचुरस्तत्राह—

## मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥

'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति । ब्रह्मण आत्मन आनन्दं विद्वान्निष्कामलभ्यं विजानन्निष्काम आत्मारामः । कस्मादपि न बिभेति तस्मादुच्यते गीयते 'आनन्दमयोऽभ्यासादि'ति । वास्तवानन्दप्रचुरत्वं प्रमाणपरतन्त्रस्येत्यर्थः । मया व्यासेनेति शेषः ॥ १५ ॥ ननु प्रमाणपरतन्त्रबुद्धेः सत्वप्रधानत्वाद्गुणपरिणामरूपोऽयमानन्दो नित्यानन्दाद्ब्रह्मणो भिद्यत इति चेदाह—

## नेतरोऽनुपपत्तेः ॥ १६ ॥

अयं प्रमाणपरतन्त्र आनन्दो नेतरोऽव्युत्पत्तिकालसाधारणोऽनुपपत्तेः अप्रामाण्यप्रसङ्गात्प्रमाणानामित्यर्थः ॥ १६ ॥ अव्युत्पत्तिकालिकादानन्दाद्व्युत्पत्तिकालिक आनन्दो भिद्यते तृप्तिहेतुत्वादित्याह—

## भेदव्यपदेशाच्च ॥ १७ ॥

अव्युत्पत्तिकालिक आनन्दः कामं वर्धयति व्युत्पत्तिकालिकः कामं शमयतीति भेदस्यागोपालं प्रसिद्धस्य व्यपदेशात् निमित्ताद्भिद्यते प्रामाणिको ब्रह्मानन्द इत्यर्थः ॥ १७ ॥ असौ भेदः प्रत्यक्ष इत्याह—

## कामाच्च नानुमानापेक्षा ॥ १८ ॥

अस्मिन्भेदे कामात्प्रत्यक्षान्निमित्तात्प्रमाणान्तरावलम्बिनोऽनुमानस्यापेक्षा नास्ति सिद्धसाधनापत्तेरित्यर्थः ॥१८॥ अत एवाह—

## अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

अस्मिन्प्रमाणप्रापिते ब्रह्मानन्दे अस्याकामहतस्य विदुषो व्युत्पन्नस्य तद्योगं तेषां मानुषानन्दादिहिरण्यगर्भान्तानन्दानां योगमन्तर्भावं शास्ति श्रुतिस्तद्विषये कामानुत्थानादित्यर्थः। अकामस्यैवाप्तकामत्वादित्यर्थः ॥ १९ ॥ यस्मिन्नानन्दे सर्वेषामानन्दानामन्तर्भावो यस्मादाप्तकामता च स सर्वेषां प्रमाणानां विषय इत्याह—

## अन्तस्तद्धर्मोपदेशात् ॥ २० ॥

अन्तः अन्तरङ्गः प्रमाणानां कस्मात् यस्मात्तद्धर्माणां वास्तवानन्दधर्माणामकामत्वानां प्रतिपर्याये श्रोत्रियस्य चाकामहतस्येत्युपदेशादाम्नानादित्यर्थः। हिरण्यगर्भान्तानामानन्दाभासानामनाभासे नित्यापरोक्षे ब्रह्मात्मानन्दान्तर्भावो युक्ततरः, आभासा न भिद्यन्ते मुख्याद्बिम्बादतएव सूर्य आप्तकामः प्रकाशाभासादिति भावः ॥२०॥ ननु नेदं युक्तं द्वासुपर्णेति मन्त्रे जीवेश्वरौ प्रक्रम्य 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति जीवस्यानाप्तकामत्वमभिधाय 'अनश्नन्न्यो अभिचाकशीती'ति ब्रह्मधर्मत्वाभिधानादाप्तकामत्वस्य तस्मादेवोपपद्यतेऽस्मिन्मन्त्रेऽन्यशब्द इति चेदाह—

## भेदव्यपदेशाच्चान्यः ॥ २१ ॥

भेदस्य जीवब्रह्मणोर्व्यपदेशान्मोहमूलादारोपादन्य इति व्यपदिश्यते जीवो ब्रह्म वेत्यर्थः। वस्तुतस्तु 'नान्योऽतोस्ति द्रष्टा श्रोता मन्ता विज्ञाते'त्यादिना जीवब्रह्मणोर्भेदनिषेधात् 'अनीशया शोचति मुह्यमान'इत्युत्तरमन्त्रवर्णादनीशया प्रमाणबाध्यया मायापरपर्यायाऽविद्यया मुह्यमानः शोचन्नभोक्तारमन्यं मनुते भोक्तारं चान्यं

---

१ अतएव कामानां भूतत्वम्.

तस्मादन्य इत्युच्यते, मन्त्रस्तु न भेदविधानार्थः किंत्वन्वेष्टव्यविज्ञानार्थो यस्मात् 'सयुजौ सखायौ समानं वृक्षं परिषस्वजाते'इति ब्रवीति । सयुजौ युगपदेवानाद्यविद्यागर्भोत्पन्नत्वात्सखायावेकारूप्यत्वादतः समानमेकं वृक्षं वृश्च्यते छिद्यते प्रमाणैर्बाध्यत इति वृक्षं पिण्डमविद्यापरिणतं परिषस्वजाते आलिङ्ग्यावलम्ब्य तिष्ठतः, यत्र श्वेतः सुपर्णस्तत्रैव कृष्णो नानयोर्देशान्तरं । तयोः सितकृष्णयोः सुपर्णयोरन्योऽन्यतरः पिप्पलस्याश्वत्थस्य श्वः स्थास्यतीत्यनिश्चितस्वभावस्य स्वादु फलं भुङ्क्ते स्वादु मत्वा फलरूपेणोपस्थितं तमेवाश्वत्थं भुङ्क्ते एष कृष्णः सुपर्णो यदनात्मपरायणः । प्रमाणपरिचयहीनस्ततोन्योऽन्यतरः प्रमाणपरिचयप्रवीणोऽनश्नन्नभुञ्जन्नशितुं विषयमपश्यन्नभि सर्वतश्चाकशीति प्रकाशते स्वयमेव भुक्तत्वाद्भोग्यजातस्य । 'यस्य ब्रह्म क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स'इति श्रुत्यन्तरात् सर्वं भुञ्जान एवानश्नन्नित्युच्यते ज्ञातात्मतत्त्वस्तस्मादेष श्वेतः सुपर्णो नानयोर्भेदो मन्त्रार्थः किंतु विश्वमिथ्यात्वं तस्मादनेन मन्त्रेण विज्ञापितं विज्ञापितव्यमद्वितीयं ब्रह्मेत्यर्थः । यो ह्यभोक्ता स एव भोक्ता यो भोक्ता स एवाभोक्ता प्रमाणपरिचयापरिचयाभ्यामन्योन्यमप्रसिद्धावप्येकात्मानावत एव 'यत्र द्वैतमिव भवति तदितर इतरं पश्यति । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दिति यत्रशब्दप्रयोग इति भावः ॥ २१ ॥ एतावत्कृतमीमांसासिद्धं स्वरूपमाहात्मनः—

## आकाशस्तल्लिङ्गात् ॥ २२ ॥

आकाश इति सिध्यति आसमन्तात्काशत इत्याकाशः न परिच्छिन्न इत्यर्थः । तल्लिङ्गात् तस्माद् बाधालिङ्गाद् हेतोरित्यर्थः । परिच्छिन्नोपाधीनामजातानामपि जातप्रायाणां बाधे स्वयमेवापरिच्छिन्न आत्माकाशः सिध्यतीति भावः । कथं नामरूपाणां बाध-

विषयतोच्यते तत्राह—आकाशस्तल्लिङ्गात्। आ समन्तात्काशते दीप्यते स्वेनैव रूपेण। कस्मात्। तल्लिङ्गाद् 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ती'ति श्रुतौ लक्षणपरायां यतो येन यस्मिन्निति त्रिभिर्यच्छब्दैरेकमभिप्रेतं वस्तु तच्चेत्परिणामि तदा यत इति पञ्चम्यन्तेनाविकृतमभिप्रेतं विकारहेतुत्वकथनप्रसङ्गात् पुनर्जातजीवनकथनप्रसङ्गे येनेति तदेव परामृष्टं पुनर्विलयकथनप्रसङ्गे यस्मिन्निति तदेव परामृष्टमन्यार्थकथने मानाभावात्। यदि त्रिभिरपि यच्छब्दैरेकमेवाविकृतमभिप्रेतं तदा द्वैतमिव भवतीत्यापतितं तदा ईदृशजगद्दर्शनाल्लिङ्गादेव आकाशोऽनामाशरीर आत्मेत्यर्थः। उत्तरोत्तरसूत्रं 'जन्माद्यस्य यत' इति प्रतिज्ञासूत्रं व्याख्यायते इति भावः। अथवा कथमुच्यते जन्माद्यस्य यत इत्येकस्यैव जगज्जन्मादिकारणत्वं तत्र पुनराह—आकाशस्तल्लिङ्गात् ॥ २२ ॥ स्वरूपलक्षणमुक्तं 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति। सत्यमित्यपरिवर्तनस्वरूपं ज्ञानमिति स्वप्रकाशमनन्तमित्यपरिच्छिन्नं तस्माद्विशेषणाल्लिङ्गादाकाश उच्यते। नह्येतेषु विशेषणेषु काचनाकार्ययोग्यता दृष्टा तस्मादित्यर्थः। सत्यत्वाज्जन्मकारणत्वं ज्ञानत्वात्स्थितिकारणत्वमनन्तत्वाल्लयकारणत्वं यत्सत्यं तज्ज्ञानं यज्ज्ञानं तदनन्तं यदनन्तं तत्सत्यमिति विशेषणत्रयाभिहितमेकं वस्तु ब्रह्मतयाभिहितं तस्यैवात्मत्वं पुरस्कृत्य जगत्कारणत्वमुक्तं 'एतस्मादात्मन आकाशः संभूत'इत्यादिना। तेन सिद्धं स्वरूपलक्षणतटस्थलक्षणवाक्ययोरेकवाक्यत्वं तदा सत्यत्वादि तटस्थस्वरूपलक्षणाविरोधेन जगत्कारणत्वे वक्तव्ये कार्यमभ्युपगन्तव्यं तथा यथाकारणं यथास्थितमेवावतिष्ठेत तदा कार्यं कार्यमिव कारणं कारणमिव तदा सिद्ध्यत्येक एव ज्ञानाकाशोऽनन्तः सत्यस्तस्मिन्निदं दृष्टमपि तदेवेति जगतो विपरिवर्तनमात्रत्वात्सत्त्वाभावे जन्मादिकारणत्वं व्यपदेशमात्रमिति भावः। यदि किंचिदुत्पद्येत

तदा निमित्तमन्यदुपादानमन्यदभ्युपगन्तव्यमिति श्रुतितात्पर्यम् । अथवा कथमभिन्ननिमित्तोपादानत्वं जिज्ञास्यब्रह्मण इति चेदाह—आकाशस्तल्लिङ्गात् ॥ २२ ॥ आ समन्तात्काशते आकाशः पूर्ण इत्यर्थः । कस्मात्तल्लिङ्गात् । आकाशस्य विभोः कारणत्वाल्लिङ्गात् । यो हि पदार्थो यत्कारणं सद्व्याप्य तिष्ठति तस्मादित्यर्थः । नहि पूर्णेऽन्यप्रवेशसंभवः पूर्णत्वविरोधात् । नहि पूर्ण भोक्तृभोग्यादिभेदभाक् । नापूर्ण पूर्णे प्रवेष्टुमर्हति द्वाराभावात् । तस्मात्पूर्णत्वाविरोधेन जगत्कारणत्वे वक्तव्ये पूर्णमेव वस्तु जगदिव भवतीत्यर्थः । तस्मात् 'जन्माद्यस्य यत' इति सूत्रस्य यस्माज्जगज्जातमिव येन जीवितमिव यस्मिन्नभिसंविशतीव तद्ब्रह्मेति विजिज्ञासितव्यमित्यर्थ इति भावः ॥ २२ ॥ एतावता सिद्धमर्थमाह—

## अतएव प्राणः ॥ २३ ॥

अतएव सत्यज्ञानानन्तरूप एव जगदिव भातीति हेतोः स एव परमात्मा प्राण आयुरित्यर्थः । येन बलेन वयं जीवाम इत्यनुभवन्ति स परमात्मा विश्वायुः यथा नट एवायुर्वेषाणां, मृदेवायुर्घटानां, रज्जुरायुः सर्पस्य तथायं विश्वस्यायुर्नित्यानन्दः परमात्मेति भावः । 'प्राणस्य प्राणं'इति 'येन प्राणः प्रणीयते'इति च श्रुतेः ॥२३॥ तस्य स्वयंप्रकाशत्वमाह—

## ज्योतिश्चरणाभिधानात् ॥ २४ ॥

एष प्रकृतः परमात्मा ज्योतिः प्रकाशमात्रस्वभावः । कस्मात् चरणादभिधानाच्च । येन ज्योतिषा चरति अभिधत्ते च तज्ज्योतिः परमात्मेत्यर्थः । चरतिरत्र गतिकर्मा । उपादेयं चरति गच्छति हेयाच्च निवर्ततेऽभिधत्ते चेदं हेयमिदमुपादेयमिति चैतत्रयं यत्प्रकाशात्तद्ब्रह्मेति भावः । 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा

विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाती'ति श्रुतेः। नटज्योतिषा वेषाः प्रकाशन्ते, मृज्ज्योतिषा घटाः। न वेषज्योतिषा नटो न घटज्योतिषा मृत्प्रकाशते तथा तमेव भान्तं परमात्मानमनुसृत्य विश्वमिदं विभाति न स्वज्योतिषा तदा (किमिमे?) सूर्याचन्द्रमसादिज्योतींषि किमात्मीभूतं प्रकाशस्वभावं प्रकाशयेयुर्यस्मात्तत्र सूर्याचन्द्रमसादिज्योतींषि स्वयमेव न प्रकाशन्ते तानि कथमात्मानं प्रकाशयेयुः। 'किं घटेन मृत्प्रकाशितोत मृदा घट'इति न्यायादिति श्रुतिडिण्डिमात्। यदुक्तं 'आकाशस्तल्लिङ्गादि'ति पूर्णत्वमात्मनस्तत्रोपपत्तिमाह—

ज्योतिश्चरणाभिधानात्। यदिदं किंचित्परिच्छिन्नं परिदृश्यते तत्सर्वं ज्योतिरात्मज्योतिषो न भिद्यते कस्माच्चरणाभिधानात् भक्षणाभिधानात्। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं' 'तयोरन्यः पिप्पलं स्वाद्वत्ती'ति च भक्षणाभिधानात् 'चर गतिभक्षणयो'रिति स्मृतेः। भक्षणं च तादात्म्यापादनमदनीयस्य। तच्च प्रमाणेन कर्मणा वा यद्यस्मिन् ज्योतिषि कल्पितं तत्तस्माज्ज्योतिषो न भिद्यते इति प्रमाणं, यथा हेम ज्योतिषो न भिद्यतेऽलङ्कारस्तस्माद्धेमपूर्णत्वस्य न प्रतिबन्धः प्रत्युत हेमपूर्णत्वेनैव हेतुना प्रथतेऽलङ्कार इति, तथात्मपूर्णत्वेन जगत्प्रथते तस्मान्न भिन्नं पूर्णज्योतिषो जगन्नापि प्रतिबन्धकं पूर्णत्वस्य। यत्तु भिन्नं मन्वानोऽस्ति जीवस्तदप्यात्मनैकीकुर्वन्नेव कर्मणात्ति यथा सूर्यश्चन्द्रादिज्योतींष्यात्मनैकीकुर्वन्नस्तं नयति तानि ज्योतींषि तदात्मकान्येवातोऽस्तं यन्ति तस्मिंस्तथा भोक्तृचैतन्यज्योतिषो न भिद्यन्ते भोग्यानि तानि तत्तदिन्द्रियावच्छिन्नज्योतिषैकीभूतानि भुक्तानीत्युच्यन्ते स साक्षात्कारो विषयाणां नित्यः सन्नेवावच्छेदकोपाधीन्देशकालविषयान्प्रकाशयति। ते च तदभिन्नतया प्रकाशन्ते तथापि तत्पूर्णतां पालयन्त्येव तस्मात्पूर्णत्वमविरुद्धमित्यर्थः। नैतज्जगत्साक्षात्कारादन्यत्र

तिष्ठति भवितुमर्हत्यन्यद्वा तस्मादेष नित्यपूर्णः साक्षात्कारज्योति-रात्मेति भावः । कर्म नाम भोक्तृभोग्यसंमेलनव्यापारो भोगो नाम साक्षात्कारो यद्यदुपाध्यवच्छिन्नः स तद्भोग उच्यते तस्मि-न्नित्योपलब्धिस्वरूपे साक्षात्कारेऽहं मामिदं मां भानेपि स साक्षा-त्कारो न विभज्यते विभागप्रकाशकत्वात् । नहि दीपो विभज्यते विभजनीयभेदेऽपि, अथवा ज्योतिश्चिन्मात्रं नान्तःप्रज्ञमित्यादिनि-गदितमात्मा कस्मात् चरणाभिधानात् ब्रह्माक्षरस्य चरणाश्चत्वारो-ऽकारादयस्तैर्विश्वविराडाद्यवस्थानां पादा मात्रा मात्राश्च पादा इत्य-न्योन्यमभेदेनाभिधानादित्यर्थः । अवस्थानां शब्दमात्रत्वे चिन्मात्रं ज्योतिरात्मैवावतिष्ठत इति तात्पर्यम् । अथ यदुच्यते ब्रह्माक्षरेण चिन्मात्रं ज्योतिः प्रतिपाद्यत इति तन्मीमांसितव्यम् । कस्मात् । प्रतिपाद्यस्य ब्रह्मणोऽपि चतुश्चरणाभिधात् तस्माद् ब्रह्म ब्रुवदप्य-क्षरं जगदपि ब्रवीति । कथं तत् । ॐकारव्याख्यापरायां माण्डू-क्यश्रुत्यां सोऽयमात्मा चतुष्पादित्यादिना ब्रह्मण आत्मत्वं विधाय तस्यैव चतुष्पात्त्वं च विधत्ते तस्माच्चिन्मात्रज्योतिरपि विश्वाद्यव-स्थात्मकं जगदपीति प्राप्तम् । न प्राप्तं । तथापि क्रमोपसंहारयोरेक-तात्पर्यावगमात् । उक्तंचोपक्रमे 'ओमित्येतदक्षरमिदमि'ति तेन शब्दात्मत्वमभिधाय दृश्यवर्गस्य पुनर्ब्रह्मत्वं चाभिधाय जीवस्य च तमेवापरोक्षमात्मानमुपक्रम्य चत्वारश्चरणा अभिहिताः, किं तावत्सिद्धं किं जगदस्तीति सिद्धमुत नास्तीति । अस्तीति सिद्धम-न्यथा चरणानुपपत्तेः । नास्तीत्यपि सिद्धमन्यथा शब्दमात्रत्वानु-पपत्तेः । नन्वस्तीत्येव सिद्धमन्यथा ब्रह्माभेदविधानानुपपत्तेर्जीव-वत् । अथ नास्तीत्येव सिद्धमन्यथा त्वदुक्ताभेदविधानानुपपत्तेः । कथमेतत् । एष नियमो दृश्यवर्गस्य यद्धि यदभेदेनैवावभासनशीलं तत्तत्सत्ताशीलं यथैवालङ्कारादिमरुजलान्ताः सति तथा नियमे ब्रह्माभेदेनावभासनशीलं जगदपीति प्राप्ते ब्रह्ममात्रत्वं प्राप्तं जग-

तोऽलङ्कारादीनां स्वर्णादिमात्रत्ववत्। अतएव नान्तःप्रज्ञमिति निषेधवाक्यं संगच्छते। यदि श्रुतिवाक्यसंदर्भे सर्वस्य दृश्यस्य वाङ्मात्रत्वं ब्रह्माभिन्नत्वं निषेधश्चोपलभ्यते तर्हि कुत्र तात्पर्यमिति गवेषणीयम्। यदि किंचिद्रजतं शुक्तिसत्तया कृतार्थं तर्हि तद्वाङ्मात्रं तर्हीदमर्थशुक्तिमात्रं प्रतीयमानमपि निषेधे पात्रं च तथा ब्रह्मसत्तया कृतार्थस्य दृश्यस्य शब्दमात्रत्वे ब्रह्ममात्रत्वे निषेधपात्रत्वे कः प्रतिबन्धः का च हानिः। ननु निषेधपात्रत्वे चतुष्पात्त्वं नोपपन्नं, सति तथात्वे शब्दमात्रत्वमनुपपन्नं तदनुपपत्तौ च शास्त्रविधेयोपि ब्रह्माभेदो गौण इति प्राप्तमिति चेदाह चतुष्पात्त्वोपपत्तये विधेयाभेदगौणत्वं न गमकं किंतु प्रतीतिर्गमिका। तस्मात्प्रतीतिपराधीनस्य शब्दमात्रत्वे ब्रह्ममात्रत्वे च न कश्चन प्रतिबन्धः। अतएव चतुष्पात्त्वेन सर्वप्रज्ञामयत्वमङ्गीकुर्वाणापि नान्तःप्रज्ञमित्यादिनिषेधवर्गं सूते यतो येन केनचित्प्रकारेण ज्ञाता अलंकाराः सुवर्णमेव तथापि तत्र सुवर्णज्ञाने प्रकारतया भासमाना अपि कटकत्वादयो न लक्षणकोटिप्रविष्टास्ततस्तन्निषेधमुखेनैव विज्ञेयं सुवर्णं तथा चाह हरिः 'अविभक्तं विभक्तेषु विभक्तमिव च स्थित'मिति। सर्वात्मनो ब्रह्मणः स्थितिमतएवैकवाक्यत्वं 'सोयमात्मा चतुष्पात्' 'नान्तःप्रज्ञमि'त्यादिवाक्ययोः सर्वस्यापारमार्थिकत्वादतएव निगमनं संगच्छतेऽदृष्टमित्यादि तस्मादेकाक्षरं ब्रह्मैकं प्रतिपादयतीति ज्योतिर्मात्रं विज्ञेयं निषेधार्थं चरणाभिधानादिति समन्वयः।

ननु न निषेधार्थं पादाभिधानं किंतु नान्तःप्रज्ञमित्यादिभेदविधानार्थमिति चेत्प्रसिद्धं समाधानं यदि सावधानमुपक्रमे 'सर्वं ह्येतद्ब्रह्मे'त्यभेदविधानं कृतं, तमभेदं पालयन्त्येव प्रवर्तितव्यमुत्तरश्रुत्येति निषेधार्थमेव चरणाभिधानमन्यथा विरोधापत्तेर्मिथो ध्यान-

ध्यातृध्येयादित्रिपुटीनामवभासकं त्रिपुटिरहितं चिज्ज्योतिरात्मेति सूत्रश्रुत्योर्निष्कर्षः ।

अथवा ननु बाधोत्थानमूलं 'यत्र द्वैतमिव भवती'ति श्रुति'रादित्यो यूप' इति पदार्थान्तरपरा पण्डितवरैः सतो वाऽसतो वा कार्यत्वाङ्गीकारात्कार्यस्य सत्वाङ्गीकाराच्च 'नेह नाने'ति श्रुतिरप्यर्थान्तरपरेति प्राप्ते आह । ज्योतिश्चरणाभिधानात् । ज्योतिश्च ज्योतिर्मात्रमेव । कस्मात् चरणाभिधानात् सदुत्पद्यते नासत् असदुत्पद्यते सदिति वादिभिः कलहाभिधानान् कलहस्य मिथो दूषितत्वादिदमुत्तरं नोत्पद्यत एव कार्यमात्रं सत्वादेवासत्वादेवेति तस्माज्ज्योतिर्मात्रं तत्र द्वैतमिव भवति तस्मादेव नेह नानास्तीत्यर्थः । अथ वक्तव्यं यदुच्यते द्वैतमिव भवतीति श्रुतेरर्थान्तरपरत्वमिति कथमिव भवतीतिश्रुतेरर्थान्तरपरत्वमिति कथमस्य संभवः स्यादादित्यो यूप इत्यस्य प्रत्यक्षबाधादित्यसदृशे लक्षणा, द्वैतमिवेत्यत्र तु सादृश्यमेवेवकारार्थं उत्प्रेक्षात्वनभीष्टैव तत्र द्वैतसदृशमित्यर्थे पर्यवसन्ने प्रतियोगिन्युपस्थितेऽप्यनुयोगिनोऽन्यधर्मावच्छिन्नस्यानुपस्थितेर्वाक्यवैयर्थ्यापत्तेः सार्थक्याय पूर्वद्वैतसदृशमुत्तरद्वैतमित्यर्थेऽङ्गीकृतेऽपि पूर्वोत्तरशब्दाध्याहारे मानाभावः ।

ननु 'धाता यथापूर्वमकल्पयदि'ति श्रुतिरेव मानं पूर्वोत्तरशब्दाध्याहार इति चेत् युक्तमुक्तं विदुषा, परमिदमालोचनीयं धाता यथेति वाक्यं द्वैतमिवेति वाक्येनैकवाक्यतापन्नं यथापूर्वं द्वैतमकल्पयदिव भवतीत्यर्थे प्राप्ते कथं यथापूर्वशब्दबलेन पूर्वोत्तरशब्दाध्याहारः कृतेऽप्यध्याहारे किं द्वैतशब्देन पूर्वशब्दोऽन्वेत्युतोत्तरशब्द उभयथापि तव मनोरथो न सिद्धः । एकस्मिन्द्वैतशब्दे न भिन्नार्थयोः पूर्वोत्तरशब्दयोरन्वयसंभवो द्वितीयद्वैतशब्दाध्याहारे मानाभावः । ननु पूर्वोत्तरशब्दाध्याहारबलेन द्वितीयो द्वैतशब्दोऽध्याहर्तव्य इति चेदिदमकाण्डताण्डवम् । अकल्पयदिवेत्यर्थसमर्प-

णेन द्वयोरपि वाक्ययोः कृतार्थत्वात्। तस्मादव्युत्पन्नकथैषा पूर्वद्वैतसदृशमुत्तरद्वैतमिति द्वैतं सत्यमिति च। ननु यथाभीष्टमर्थं कल्पयितुं शक्नुमो यतः श्रुतिः कामदुघेति चेद्यथाभीष्टार्थ एव स न यथा प्रमाणः प्रामाणिकोऽर्थस्तु क्लृप्तो न कल्पनापरतन्त्रः पण्डितश्चेन्न, काल्पनिकार्थमारोहेच्छात्मपरतन्त्रत्वादिति 'तत्र को मोहः कः शोक एकत्वमनुपश्यत'इति श्रुतिमनुसरन्ती 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि'त्यादिना प्रामाणिकबोधोत्तरं संसारादर्शनमाहापरा श्रुतिः। अतएव भगवानुवाच 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी। यस्यां जाग्रति भूतानि सा निशा पश्यतो मुने'रिति। सर्वभूतानां साधारणदृष्टीनां प्रमाणपरिष्कारशून्यबुद्धीनामिति यावत्। संयमी प्रमाणपरतन्त्रधीः। सर्वभूतानां या यद्विषयिणी निशा स्वापः स्वापकालो वा तेषां तस्यां तद्विषयिण्यां निशायां स्वापे स्वापकाले वा सत्यपि संयमी जागर्ति तं विषयं साक्षात्करोति। यथान्धानां रूपे स्वापे सत्यपि चक्षुष्मान् जागर्ति। यस्यां यद्विषयिण्यां निशायां सत्यामपि भूतानि जाग्रति यथोपसंहृत्येन्द्रियाणि निशां बलवतीं संपाद्य स्वाप्नप्रपञ्चे जाग्रति पूर्ववासनाविशिष्टाविद्यायां सत्यामेव पूर्ववासनाबलेन स्वप्नं पश्यन्ति जाग्रतोऽपि समीपस्थस्य पुंसः स्वाप एव सः तथा पश्यतोऽपि मुनेः श्रीगुरुवचनागमलब्धदृष्टेर्मननशीलस्य व्युत्पन्नमतेः सा निशा स्वापस्तत्कालो वा। यथा दारुविकारे हस्तिनि बालेषु जाग्रत्स्वपि प्रौढो दारुणि जागर्ति स्वपिति च हस्तिनि। मुनेः पश्यत इति विशेषणादितरेषां भूतानामन्धत्वं तद्विषयः संसार इति भगवतोऽभिप्रायः। अतएव श्रुतिराहा'न्धो मणिमविन्दते'ति। वस्तुदर्शनसामग्रीविधुरः संसारं पश्यतीति तदर्थः। किमु वक्तव्यं मोहनिशायां संसारदर्शनं स चापसार्यते महागुरुणा मुनेः शिष्यस्य तस्माज्ज्योतिर्मात्रं ब्रह्मतत्त्वमिति दिक्। यथा दारुमयं

हस्तिनं पश्यतोऽव्युत्पन्नस्य विलुप्तकाष्ठजातिर्हस्ती विभाति तथैवाव्युत्पन्नस्य विश्वं पश्यतो विलुप्तब्रह्मस्वभावं विश्वं विभाति । यथा तस्य हस्तिनं पश्यतोऽपि सतो व्युत्पन्नस्य विलुप्तहस्त्याकारं दारु विभाति तथा प्रमाणव्युत्पन्नस्य विलुप्तविश्वाकारं ब्रह्म विभाति तस्मादाह 'ब्रह्म वनं ब्रह्म स वृक्ष' इत्यादिकौतूहलमलमिति विश्रामः।

प्रार्थितः[1] केनचित्पूर्वं रामदुर्गे द्विजन्मना ।
तस्मादेतत्कृतं[2] किंचिद्ब्रह्मसूत्रकुतूहलम् ॥ १ ॥

कौतूहले न गण्येत दोषः केनापि धीमता ।
श्रीमता शङ्करेणापि हरिणा गुरुणापि च ॥ २ ॥

इति श्रीचैतन्यधामनिवासिकृष्णानन्दस्वामिप्रणीतं ब्रह्मसूत्रकुतूहलं समाप्तम् ॥

॥ इति ब्रह्मविचारप्रकरणम् ॥

---

१ अहमिति शेषः. २ मयेति शेषः.

श्रीमत्परमहंसकृष्णानन्दसरस्वतीविरचिता

# विचारत्रयी ।

## नीतिविचारः ॥ २ ॥

## सुदर्शनसन्नाहः[1] ।

जय सच्चिदानन्द ।

### शास्त्रव्यञ्जनाध्यायः ॥ १ ॥

ॐ उत्तिष्ठोत्तिष्ठ गोविन्द उत्तिष्ठ गरुडध्वज । उत्तिष्ठ कमलाकान्त त्रैलोक्यं मङ्गलं कुरु ॥ १ ॥ तां भारतीं भावयामो भारतं भूषितं यया । जगज्जिगाय बालोऽपि यया शङ्करभारती ॥ २ ॥ सृष्ट्वा यो मानुषान्देवो मुदमाप रमापतिः । स एव तद्व्यवस्थायां प्रभुस्तत्स्मरणं बलम् ॥ ३ ॥ ब्राह्मण्यपाको ब्रह्मत्वं क्षात्रपाको दिवीन्द्रता । वैश्यपाको निधीशत्वं शूद्रपाको यशस्वता ॥ ४ ॥ मनुष्याणां सशास्त्रत्वं महाभाग्यमिति स्मरन् । तिलकं रचयाञ्चक्रे वर्णानां मूलपूरुषः ॥ ५ ॥ अशास्त्रमस्तकं प्रायस्तिलकं नाभिनन्दति । किं राजमुकुटार्हं स्यात्सर्वेषामपि मस्तकम् ॥ ६ ॥ मस्त-

१ नीतिविचाराख्येऽस्मिन्सुदर्शनसन्नाहे—१ शास्त्रव्यञ्जनम्, २ भाग्यमूलकथनम्, ३ धर्मप्रवृत्तिकथनम्, ४ नष्टोद्धारकथनम्, ५ नष्टोद्धारसरणिनिरूपणम्, ६ नष्टोद्धारावश्यकत्वनिरूपणम्, ७ शास्त्रफलनिरूपणम्, ८–९ पुराणानामवाधितप्रामाण्यनिरूपणप्रसंगः, १० निर्विघ्नफलनिरूपणम्, ११ मूर्तिपूजाबीजकथनम्, १२ धर्मप्रवृत्तिस्थानकथनम्, १३ सुदर्शनसन्नाह—( ग्रन्थोपसंहार)—निरूपणम्.

णानि तु चत्वारि मनुष्येषु महीतले । वर्णभेदेन भिन्नानि वर्णः शास्त्राधिकारिता ॥ ७ ॥ अधिकारश्चतुर्धा स्यात्ततस्तिलकभिन्नता । पालनत्रयभेदेन शास्त्रे व्यवहृतावपि ॥ ८ ॥ व्यवहारे कथंचित्ता शास्त्रज्ञानैककौतुता । ब्राह्मणत्वमिदं प्रोक्तं विशालतिलकास्पदम् ॥ ९ ॥ व्यवहारे च शास्त्रे च समता क्षत्रलक्षणम् । मुकुटार्हं चन्दनार्हं तन्न्यूनतिलकास्पदम् ॥ १० ॥ व्यवहारप्रवीणत्वं न्यूनता शास्त्रशीलने । विट्टणां भूरिभाग्याढ्यस्तन्न्यूनतिलकास्पदम् ॥ ११॥ शास्त्रस्पर्शी प्राप्तकार्यनिर्वाहनिपुणोऽन्तिमः । तन्न्यूनतिलकाढ्यस्तु सत्कारास्पदमुच्यते ॥ १२ ॥ स्त्रीणां भालं कुङ्कुमाङ्कं सशास्त्रनरस-ङ्गमान । अलङ्कारार्हमत्युग्रं यत्र लक्ष्मीः प्रदृश्यते ॥ १३ ॥ रेखा-गुञ्जोज्ज्वलत्वेन योषिद्भाग्यं त्रिधा जने । अतो रेखां च बिन्दुं च कलिकां वा करोति सा ॥ १४ ॥ पुंभालं भस्मशोभाढ्यं सशास्त्रं त्वकदृनुकम् । त्रेतालाभाद्भाग्यरेखात्रितयं भस्मना कृतम् ॥ १५ ॥ रेखामानं तु शास्त्रेभ्यो विज्ञेयं मतिमत्तमैः । भाग्यभेदान्मानभेद इति शास्त्रविदां मतम् ॥ १६ ॥ ब्रह्मतेजो ब्राह्मणानां भाग्यं ब्रह्म-विदां मतम् । सिंहासनं क्षत्रियाणां भाग्यमुक्तं धुरन्धरैः ॥ १७ ॥ प्रत्युत्थानं विशां भाग्यं सभा येन विराजते । ब्रह्मक्षत्रविशां शोभा रक्षणं भाग्यमुत्तमम् ॥ १८ ॥ लोकं लोकोत्तरं चापि प्रदीपयति यो नरः । स ब्राह्मण इति प्रोक्तो भिक्षावृत्तिं समाश्रितः ॥ १९ ॥ लोकं रञ्जयते नित्यं व्यवस्थापालनोद्यतः । क्षताच्च त्रायते विश्वं स राजा नरपुङ्गवः ॥ २० ॥ आपत्सु विशते नॄणां गुप्तैरपि महाधनैः। गोपायति च गुप्तश्च गुप्त उक्तो विशांपतिः ॥ २१ ॥ शोकप्रसङ्गे द्रवति द्रुतं द्रावयते शुचम् । शुचा द्रवति पूर्वोक्तांस्तेन शूद्रो नरो-त्तमः ॥ २२ ॥ शास्त्रं शस्त्रं तुला सेवा वृत्तयो वर्णशः क्रमात् ।

१ गुप्तैर्ब्राह्मणादीनां कर्तव्यमुक्तं नतु लक्षणम्. अतएवच न शास्त्रं शस्त्रमित्या-दिभिर्विरोधः.

तारतम्यं हि भाग्यस्य यत्रैव हि परीक्ष्यते ॥ २३ ॥ यद्विस्मृत्या विस्मृतं स्याद्भाग्यं देवविनिर्मितम्। यत्स्मृत्या स्मृतमेवेति मन्यन्ते लोकवित्तमाः ॥ २४ ॥ ब्रह्मत्वादवतीर्णस्य शास्त्रमेव महाबलम्। ज्ञानमाज्ञामानसुखे येन सिद्ध्यन्ति मानुषे ॥२५॥ ईशत्वादवतीर्णस्य देवत्वं प्रोच्यते बुधैः। देवत्वादवतीर्णस्य मानुषत्वमिहोच्यते ॥२६॥ मर्त्यत्वादवतीर्णस्य पशुता शास्त्रबाह्यता। शास्त्रारूढस्य मर्त्यत्वं देवत्वं चेशता क्रमात् ॥ २७ ॥ तस्माच्छास्त्रं मानुषाणां भाग्यमित्येव निश्चयः। भाग्यरेखा ललाटेषु तिलकं तत्र धारयेत् ॥ २८ ॥ सशास्त्रत्वं महाभाग्यमिति भस्म धृतं जनैः। वैष्णवत्वं महाभाग्यमिति मृत्स्नापि कश्चन ॥ २९ ॥ अन्तर्भूतं द्विजत्वे तदिति शास्त्रविदां मतम्। तच्चेज्जागृतिमायातं मुखबाहूरुतोऽशितुः ॥ ३० ॥ पादत्वं चान्त्यवर्णस्य भाग्यं वैष्णवतास्पदम्। यथाकल्पं तस्य भाले तिलकं भाग्यसूचकम् ॥ ३१ ॥ इत्थमन्येषु कल्पेषु व्यवस्था तिलकस्य हि। भाग्यमेव हि तत्सर्वमधिकारिप्रभेदतः ॥ ३२ ॥ ततो निन्दा न युज्येत तिलकानां कथंचन। त्यागोऽपि च न युज्येत फलमूलविचारणात् ॥ ३३ ॥ संपूज्य विधिवद्देवं तच्छिष्टैरेव चन्दनैः। यथेच्छं तिलकं कुर्याद्व्यवस्थां परिपालयन् ॥ ३४ ॥ द्विजेष्ववृत्तं शूद्रेषु न दीर्घमिति निर्णयः। व्यञ्जयन्स्वाधिकारं को मानं नाप्नोति मानुषः ॥ ३५ ॥ व्यञ्जकत्वागतो व्यङ्ग्यं न्यग्भवत्यल्पकालतः। ततो मानन्यूनतापि ततः पौरुषहीनता ॥ ३६ ॥ तिलकं वर्णमुद्बोध्य जातिमुद्बोधयत्यपि। ततो वीर्यं समाबोध्य लक्ष्मीं यच्छति सादरम् ॥ ३७ ॥ प्रासङ्गिकं तु यत्किंचिद्वर्णितं कृष्णभिक्षुणा। अत्र तत्त्वं वेद देवो विद्वांसोऽपि पुरातनाः ॥ ३८ ॥ इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्के शास्त्रव्यञ्जनं नाम प्रथमोऽध्यायः ॥ १ ॥

# भाग्यमूलकथनाध्यायः ॥ २ ॥

ब्रह्मतेजः शर्मरूपं वर्म क्षात्रं महो मतम्। गुप्तं महो वैश्यजातेन्नुरिचे दासता स्फुटा ॥ १ ॥ शिक्षणाय च मोक्षाय प्रवृत्तो ब्राह्मणो यदा। तद्रक्षणाय क्षेमाय क्षत्रं खङ्गकरं तदा ॥ २ ॥ खङ्गहस्तं समाश्रित्य धनं यच्छन्स्पृशन्नपि। गृह्णन्नपि च धर्मस्य गोपनायोद्यतो वणिक् ॥ ३ ॥ त्रितयारब्धकर्माणि यथा सिद्ध्यन्ति सेवया। तथैवाचरितव्यं स इत्युद्यतपदोऽन्तिमः ॥ ४ ॥ वक्तृत्वाद्ब्राह्मणो वक्त्रं क्षत्रं बाहू च रक्षणात्। उभयोः स्थैर्यहेतुत्वादूरू वैश्यो व्यजायत ॥ ५ ॥ पदक्रमं विना का वा क्रिया सिध्यति लौकिकी। जङ्गमानां ततः पादे स्थितः शूद्रोऽपि सेवया ॥ ६ ॥ इत्थं चतुर्व्यूहदेहः पुरुषो धर्म उच्यते। देहसंस्थाव्यवस्थायां धर्मसंस्था स्वयं भवेत् ॥ ७ ॥ प्रतिव्यूहं त्रिधैवैत आकारगुणजातिभिः। बाल्ययौवनवार्धक्यावस्थाभिश्च पुनस्त्रिधा ॥ ८ ॥ बाल्यमाकारमात्रं स्याद्यौवनं शास्त्ररूढता। वार्धक्यं शास्त्रसंपाक इति वेदविदो विदुः ॥ ९ ॥ गुणः शास्त्राधिरूढत्वं जातिस्तन्मर्मवेदनम्। बाल्यं नयेद्यौवनेन वार्धक्येन च तन्नयेत् ॥ १० ॥ राज्ञः पित्रोश्च कर्मैतदवस्थापरिवर्तनम्। तयोराज्ञापको वृद्धो ब्राह्मणो गुरुरिष्यते ॥ ११ ॥ वृद्धास्तु ऋषयः प्रोक्तास्तरुणाः शास्त्रशीलिनः। उदरम्भरयो बालाः शास्त्रमङ्गीकृतं न यैः ॥ १२ ॥ शास्त्राङ्गीकरणं पित्रो राज्ञो वा कर्म तन्मतम्। पित्रानुशिष्टं गुरुराड् बालं शास्त्रे प्रवेशयेत् ॥ १३ ॥ शास्त्रमार्गप्रविष्टानां लक्ष्मीप्राप्तिरथैयते। येन शास्त्रस्य साफल्यं बुद्ध्वा शास्त्रे विशेन्नरः ॥ १४ ॥ मुखे लक्ष्मीर्ब्राह्मणानां बाहौ क्षत्रकुलस्य च। ऊरौ लक्ष्मीर्वैश्यजातेश्चरमस्य च पादयोः ॥ १५ ॥ राजा तु पितरं शास्ति पिता शास्ति च बालकान्। आचार्यस्त्रितयं शास्ति

धर्मो लक्ष्मीः स्थिरा यतः ॥ १६ ॥ अन्यथा देशधर्माणां कुलधर्मस्य संक्षये। तेजोहीनं मानुपत्वं पशुतासमतामियात् ॥ १७ ॥ क्षत्रियाणां महाभाग्यं प्रजाभाग्यनिरीक्षणम् । प्रजानां तन्महाभाग्यं राजभाग्यनिरीक्षणम् ॥ १८ ॥ आचार्याणां महाभाग्यमुभयोर्भाग्यदर्शनम् । उभयोस्तन्महाभाग्यमाचार्यैश्वर्यदर्शनम् ॥ १९ ॥ सत्यमुक्तं नीतिशास्त्रं धर्मालम्बनकारणम् । भाग्योदयस्यापि हेतुं श्रुत्वा भाग्याधिको भवेत् ॥ २० ॥ इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्के भाग्यमूलकथनं नाम द्वितीयोऽध्यायः ॥२॥

## धर्मप्रवृत्तिकथनाध्यायः ॥ ३ ॥

धर्मो भिनत्ति कालं च राजप्राप्तबलो यदा । कालो भिनत्ति धर्मं च राजदत्तबलो यदा ॥ १ ॥ राजप्राप्तबलो धर्मो राज्यं रञ्जयतेऽखिलम् । राजदत्तबलः कालो राजमात्रं तु रञ्जयेत् ॥ २ ॥ राजमानः स्वयं राज्यं रञ्जितं नहि पश्यति । न लक्ष्मीश्चक्षुषोस्तस्य बाह्यावेव हि तिष्ठति ॥ ३ ॥ गेहमात्रे कृता शोभा न राजत्वाय कल्पते । राज्यमात्रे कृता शोभा न गेहेशत्वभाजनम् ॥ ४ ॥ गेहेशानां गेहमात्रे राज्येशानां च सर्वतः । सुप्रजस्त्वं सलक्ष्मीत्वं शोभाभाग्यं च भूरि तत् ॥ ५ ॥ स्वस्वमार्गेण गन्तारो बाला वृद्धाश्च मध्यमाः । देशे देशे च शोभन्ते संमतं सर्वदेहिनाम् ॥ ६ ॥ निरीक्ष्यं त्रिभिरेवैतत्स्वाधिकारोऽस्ति यावति । पितृभ्यां गुरुणा राज्ञा गेहं देशो जगत्तथा ॥ ७ ॥ प्रजानां पालका एते गुरू राजा पिता तथा । गेहाधिपः पिता प्रोक्तो गुरू राजा च देशपः ॥ ८ ॥ आचार्याणां पीठसंस्था राज्ञां

१ आचार्यैश्वर्यं तस्य लोकोत्तरमाहात्म्यानुगतं तथाविधोपदेशकौशलम्.
२ राजसिंहासनस्य परंपराप्राप्तस्वामिकत्वेऽपि तदनुशासनस्य तन्मात्रपरतन्त्रत्वाभावेन न तत्रानर्थसंभवः पीठस्य त्वाचार्यैकविचारपरतन्त्रतया संभवति

सिंहासनं तथा । गेहाधिपत्वं पित्रोश्च पारम्पर्यक्रमागतम् ॥ ९ ॥ गुरुत्वं मूलपुरुषे राजत्वं पितृतापि च । सृष्टिक्रममनुप्राप्तो व्यभजत्त्रितयं हि तत् ॥ १० ॥ मुखे गुरुत्वं राजत्वं बाहौ कल्पितवान्प्रभुः । पितृत्वं सर्वसामान्यमीशत्वं त्रितयेऽपि च ॥ ११ ॥ अस्त्यत्र मूलपुरुषो निर्विभागस्वरूपवान् । स्त्रीपुंभिदानाश्रयोऽसौ तत्र गर्भो व्यजायत ॥ १२ ॥ ततो हिरण्यगर्भोऽभूच्चतुष्कं तत्र चाहितम् । सर्वात्मापि स चैकात्मा तत्र गर्भो व्यजायत ॥ १३ ॥ सोऽभूच्चतुर्मुखो बालश्चतुष्केण समन्वितः । ततः सृष्टिक्रमो जातस्तनस्तच विभाजितम् ॥ १४ ॥ तेन दत्तं वसिष्ठाय धर्मज्ञानासनं शिवम् । ददौ तु मनवे नीतिगर्भं भद्रासनं पुनः ॥ १५ ॥ ईशत्वं पितृसामान्ये विना तिर्यञ्चमक्षयम् । पितृत्वं सर्वसामान्यं युग्मशः स्फुटमस्फुटम् ॥ १६ ॥ स्फुटं तज्जङ्गमेष्वेव स्थावरेष्वस्फुटं मतम् । तिर्यगादिस्थावरान्तमनीशत्वमशिक्षणात् ॥१७॥ शिक्षकात्रय एवेह पिता राजा गुरुः कृती । ईशत्वं त्रिषु मन्तव्यं दण्डस्त्रिष्वेव दृश्यते ॥१८॥ यदा दण्डधरो राजा तदा दण्डधरो गुरुः । यदोत्पथपरो बालस्तदा दण्डधरः पिता ॥ १९ ॥ यदोत्पथपरा नारी तदा दण्डधरः पतिः । तदा दण्डधरो राजा यदोत्पथरता प्रजा ॥ २० ॥ यदोत्पथरताः सर्वे तदा दण्डधरः प्रभुः । चक्रवर्ती स भूत्वा तु सर्वज्ञं गुरुमीहते ॥ २१ ॥ वसिष्ठादिक्रमेणैव सर्वज्ञपदमागतम् । मन्वादिक्रमतो लोके राजसिंहासनं तथा ॥ २२ ॥ ईशो नारायणो ब्रह्मा वसिष्ठ इति पूरुषाः । दिव्यौघे परिगण्यन्ते संप्रदायाप्तसंपदः ॥ २३ ॥ शक्तिः पराशरो व्यासः शुको गौडपद-

---

तादृशाचार्यप्राप्तावनर्थसंभव इति योग्याचार्यानुपलब्धौ पीठे कस्यापि प्रतिष्ठा न श्रेष्ठा रिक्तेऽपि पीठे दोषाभावात् लाघवात् योग्यव्यक्तितिरस्काराभावाच्च । पीठस्वामितामेव योग्यतां मन्यमानो यदा सत्स्वपि तत्रोपस्थितेषु विद्वत्सु तत्समानाश्रमवर्णवयस्सु पीठमधितिष्ठति सामान्यो भवति तिरस्कारोऽन्येषाम्.

स्तथा। सिद्धौघे परिगण्यन्ते संप्रदायाग्रसंपदः ॥ २४ ॥ गोविन्दभगवत्पादस्तथा शङ्करभारती। पद्मपादादिचत्वारो मानवौघे प्रतिष्ठिताः ॥ २५ ॥ ततःप्रभृति लोकेऽस्मिन्नाचार्यश्चतुरासनः। चक्रवर्तिनरेशानामसंभावनतोऽभवत् ॥ २६ ॥ एतदन्तं चक्रवर्तिराज्यं मत्वा जगद्गुरुः। सुधन्वराज्यसमये चक्राराचार्यसंस्थितिम् ॥ २७ ॥ द्वारकादिक्रमेणैव पद्मपादादयः क्रमात्। स्थापिताः श्रीमदाचार्यैः शृङ्गेर्यां चक्रवर्तिता ॥ २८ ॥ अद्यापि दृश्यते पीठं यज्जगद्गुरुतास्पदम्। तथैव दृश्यते लेखो न वादस्तत्र कश्चन ॥ २९ ॥ चक्रवर्तिसमो लेख आचार्यस्यैव युज्यते। आचार्यसनलेखस्तु युज्यते चक्रवर्तिनः ॥ ३० ॥ उभयोरेकमूलत्वादेककर्माधिकारतः। बाह्वोर्बलं मुखाधीनं ततश्च गुरुशिष्यता ॥ ३१ ॥ मुखशोभा बाह्वधीना ततो मानोद्गमो मिथः। मिथः शोभास्पदत्वेन द्वावेतौ चक्रवर्तिनौ ॥ ३२ ॥ चक्रं नाम प्रजाधर्मो विज्ञानं श्रीश्च तुर्थिका। एतत्सङ्घं यथा यस्तु प्रवर्तयति पूरुषः। चक्रवर्ती स विज्ञेयः स च सिंहासनाधिपः ॥ ३३ ॥ आचार्योऽस्त्वथ राजा वा लोकोत्तरपदाश्रितः। स एव शरणं नृणां ततश्चक्रं प्रवर्तयेत् ॥ ३४ ॥ आचार्यवंशः संप्रोक्तो राजवंशमथो ब्रुवे। यैरेव पालितो धर्मः प्रजा श्रीर्भूश्चतुष्टयम् ॥ ३५ ॥ ईशादिमनुपर्यन्तं दिव्या राजेश्वरा मताः। अग्रे राजर्षयः प्रोक्ता रघ्वन्तं चक्रवर्तिनः ॥ ३६ ॥ अग्रे तु मानवाः प्रायो धार्मिकाश्चक्रवर्तिनः। काले काले

---

१ अन्यान्यसंप्रदायाचार्यपरम्परोपेक्षया पक्षपातो न शङ्क्यः तेषामाचार्यानुकरणरूपत्वात् लोकसंग्रहहेत्वर्थकल्पिततत्तद्देवतत्तदवस्थावैशिष्ट्यतत्तदाचारादिना तेषु वास्तवाचार्यकार्यकल्पनाया मूलतस्संदिग्धत्वात् कथमन्यथाऽनाद्यविच्छिन्नपरम्पराप्राप्तवर्णाश्रममर्यादापरिपालनायाश्रिततथाविधकार्यदक्षक्षत्रियशरीरैः श्रीमद्भिर्भगवद्भी रामकृष्णादिभिरपि वन्दितपादारविन्दानां महत्वृन्दानामपि वन्दनीये तदीयपीठे निरवसितशरीरस्यापि पाटवेन प्रवेशः स्यात्.

सृष्टिचक्रं शास्त्रमार्गे न्यवेशयन् ॥ ३७ ॥ मालिन्यमपि चौद्धत्यं मार्गान्मार्गाद्विचार्यं च । यापनीयं यापनीयं राज्ञाऽऽचार्येण वा भुवि ॥ ३८ ॥ याज्ञवल्क्यादिमुनयः पारावारविदां वराः । स्मर्तारो धर्मदृष्टीनां नाचार्यत्वं प्रपेदिरे ॥ ३९ ॥ आचार्यवंशसद्भावे नान्य आचार्यतास्पदम् । अविरोधे सहायत्वं विरोधे तु प्रमादिता ॥ ४० ॥ एष न्यायश्चक्रवर्तिष्वपि योज्यो मनीषिणा । दायभावं गतं लोक एतत्सिंहासनद्वयम् ॥ ४१ ॥ न जयेनासनद्वन्द्वं गृहीयान्नापि छद्मना । अदायेषु द्वयोर्योगो दायेषु न्याय एव हि ॥ ४२ ॥ राजासनं खड्गबलाद्ग्रहीतुं शक्यते नरैः । धर्मज्ञानासनं धर्मज्ञानाभ्यां न विहन्यते ॥ ४३ ॥ खड्गिनोः समतायां तु जयाजयपरीक्षणम् । धर्मिणोर्ज्ञानिनोर्वापि समतायां च संमतिः ॥ ४४ ॥ वैषम्ये धर्मविज्ञानदायादस्य जयः स्मृतः । पारम्पर्यागतद्वन्द्वं हन्यात्काल्पनिकं द्वयम् ॥ ४५ ॥ तेनाद्यापि च लोकेऽस्मिन्पीठं सर्वज्ञतास्पदम् । दृश्यते लिख्यते चापि जगद्गुरुपदेन हि ॥ ४६ ॥ तथैव श्रीहरिः साक्षाज्जगदीशपदेन हि । पीठे पीठेऽपि पूज्यः स राजते परमेश्वरः ॥ ४७ ॥ स एव श्रीहरः साक्षात्पीठे सर्वज्ञतास्पदे । संदृश्यते पूज्यते च यावत्सा भारती भुवि ॥ ४८ ॥ वर्णाश्रमविभागश्च तत्त्वज्ञानं जगत्स्थितिः । व्यवस्थितं यत्र शास्त्रे सा हि शङ्करभारती ॥ ४९ ॥ अनुव्रता शङ्करं या शङ्करो यामनुव्रतः । एकरूपधरौ लोके जयिनौ चिरजीविनौ ॥ ५० ॥ सर्वज्ञस्येश्वरत्वेन राजा शङ्करभारती । अतएव हि तत्पत्रे राजधानीति लिख्यते ॥ ५१ ॥ स एव तिलकं कुर्याच्चक्रवर्तिन्युपस्थिते । यः सर्वज्ञपदारूढो यथा ब्रह्मा मनौ स्थिते ॥ ५२ ॥ धर्ममार्गे समुच्छिन्ने गुरोरुद्धृतिमर्हति । गुरुमार्गश्च शिथिल ईशादुद्धृतिमर्हति ॥ ५३ ॥ संप्रदायमनुप्राप्तो धर्मो ज्ञानं च भूतले । पराक्रमस्तु पुण्येन संप्रदायागतं कुलम् ॥ ५४ ॥ पराक्रमी क्षत्रजन्मा यदो-

त्पश्यति भूतले । तदाचार्यबलं लब्ध्वा नष्टोद्धारं समाचरेत् ॥ ५५ ॥ आचार्यस्तिलकं कृत्वा नष्टे पीठे निवेशयेत् । कुलीनमप्रमत्तं च सर्वज्ञपदभूषणम् ॥ ५६ ॥ वसिष्ठस्तिलकं कृत्वा नष्टे दशरथे नृपे । निवेशयामास रामं सर्वज्ञपदभूषणम् ॥ ५७ ॥ राजपीठे यथा न्यायः स च सर्वज्ञतास्पदे । न्यायः संचारणीयः स्यादेको हेतुर्द्वयोर्यतः ॥ ५८ ॥ अन्यथैव प्रविष्टस्तु निर्लज्जो भोगलम्पटः । न सर्वज्ञपदं कश्चिद्बलादारोढुमर्हति ॥ ५९ ॥ नीतिपीठं बलात्कश्चिदारोढुं शक्नुयान्नरः । योग्यश्चेत्तिलकं कुर्यादन्यथा न प्रयोजनम् ॥ ६० ॥ एवं कालानुसारेण नष्टोद्धारपरायणौ । मुखबाहू विराजेते ताभ्यां पृथ्वी च राजते ॥ ६१ ॥ स्पष्टीकृतजगज्जालो दक्षो वस्तुविनिर्णये । पादाक्रान्तजगज्जालो नीतिज्ञस्तस्य पालने ॥ ६२ ॥ तावुभौ बालकान् शास्त्रेऽधिकारेण नियोजनम् । कुर्वाते तरुणत्वाय ततो वृद्धत्वमाप्नुयुः ॥ ६३ ॥ ततः पुनर्वृद्धसेवा ततस्तत्त्वप्रबोधनम् । नीतिप्रबोधनं चापि ततः स्यात्कालभेदनम् ॥ ६४ ॥ इत्थं धर्मेण कालस्य भेदः प्रोक्तो मनीषिभिः । राजाऽऽचार्यानुकूल्येन कालः संपरिवर्तते ॥ ६५ ॥ इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्के धर्मप्रवृत्तिकथनं नाम तृतीयोऽध्यायः ॥ ३ ॥

# नष्टोद्धारकथनाध्यायः ॥ ४ ॥

वक्ता सर्वज्ञपदभाक् श्रोता चक्रप्रवर्तकः । उभयोः सङ्गमः सर्वभाग्याद्भवति नान्यथा ॥१॥ वक्ता न लभ्यते श्रोता श्रोत्रा वक्ता न लभ्यते । उभयोः सङ्गमे ज्ञानं सुखं मोक्षो बलं यशः ॥२॥ सर्वभाग्यं

---

१ अयं भावः—यथार्थ आचार्यः कुलीनं राजपीठे निवेशयति तथैव राजापि योग्यमाचार्यं पीठे निवेशयेत् । संप्रति यथाऽऽचार्यो राजपीठे नाधिकरोति तथैव राजाऽपि नाधिकरोति गुरुपीठे प्रमत्तस्तु सुतरां नाधिकरोतीति न्यायप्राप्तम्.

तु तन्नूनं वा यथा शास्त्रसंस्थितिः । अशास्त्रत्वमभाग्यं स्याज्जीवानां नर्तनं मतम् ॥ ३ ॥ सशास्त्रत्वं द्विधा भिन्नं भोक्तृभोग्यविभेदतः । भोक्ता भोग्यं द्विधा भिन्नं सशास्त्राशास्त्रलक्षणात् ॥ ४ ॥ सशास्त्रभोक्ता यदि च सशास्त्रं भोग्यमन्वियात् । भाग्यं तन्मन्यते वृद्धैः पशुव्यावृत्तिदर्शनात् ॥ ५ ॥ अशास्त्रभोक्ता यदि चाशास्त्रं भोग्यं समन्वियात् । न्यायेन योग्यं मन्वानो व्युदस्यति न पश्यति ॥ ६ ॥ सशास्त्रजीवा लोके ते ये सशास्त्रकुलोत्थिताः । अशास्त्रजीवा अपि ते ये ह्यशास्त्रकुलोत्थिताः ॥ ७ ॥ यत्सशास्त्रं कुलं लोके ये[1] सशास्त्रं स्वसंततिम् । उत्पाद्य वर्तयिष्यन्ति तदन्यच्चान्यथाकुलम् ॥ ८ ॥ अशास्त्रं वा सशास्त्रं वा मिथः संबन्धमागतम् । साजात्यैः शोभते लोकेष्वन्यथा तन्न शोभनम् ॥ ९ ॥ सशास्त्रस्य सशास्त्रं तु सजातीयं प्रचक्षते । तथैवाशास्त्रपक्षेऽपि सजातीयविदो विदुः ॥ १० ॥ देशभेदाज्जातिभेदात्कुलभेदात्त्रिधा मतम् । सशास्त्रमप्यशास्त्रं वा सजातीयमहोचितम् ॥ ११ ॥ यद्यशास्त्रं सशास्त्रेण गृहीतं जातितश्च्युतः । सशास्त्रं यदशास्त्रेण गृहीतं दण्डमर्हति ॥ १२ ॥ सशास्त्रं तु सशास्त्रेण संस्कारेण पुनर्नवम् । अशास्त्रं शास्त्रसंपर्कान्नवत्वं याति कुत्रचित् ॥ १३ ॥ तत्रैव नवता तस्य यत्रास्ति विधिदर्शनम् । नष्टोद्धारः सुराप्राह इत्युदाहरणद्वयम् ॥ १४ ॥ विधिगोचरतामेव सशास्त्रत्वं विदुर्बुधाः । तदगोचरतामेव शास्त्रबाह्यं प्रचक्षते ॥ १५ ॥ यदोत्पन्नस्तदा माता पिता वित्तं वसुन्धरा । शास्त्रं च विजितं तेन तैर्जितः सोऽपि पूरुषः ॥ १६ ॥ अन्योन्यं स्वत्वबद्धत्वाज्जयोऽयं सहजः स्मृतः । आपादनीयस्वत्वेऽर्थे शास्त्रं शस्त्रं बलद्वयम् ॥ १७ ॥ शास्त्रं शास्त्रबलेनैव शस्त्रं बाहुबलेन हि । विजेतव्यं हि विदुषा राज्ञा च बलशालिना ॥ १८ ॥ बलं शास्त्रेण संपन्नं क्षेमाय जगतोऽमितः । शास्त्रं बलेन संपन्नं तदेव कुरुते फलम्

---

१ यत्कुलोत्पन्नाः.   २ एतेन गुणकर्मतो जातिवादिनो विमानिताः.

॥ १९ ॥ एकमेकं कथंचित्तु दुःखाय च सुखाय च। यथैव काणता लोके तथा शास्त्रं तथा बलम् ॥ २० ॥ शस्त्रं शास्त्रविहीनं चेच्छङ्कनीयं पदं भवेत्। शास्त्रं शस्त्रविहीनं चेन्नूनं षण्ढतिलायते ॥ २१ ॥ कालेन ग्लानिमायाति क्रमेण पशुतामपि। स्वबुद्धिं मानमासाद्य यथेच्छं मार्गरोहणम् ॥ २२ ॥ इच्छया मार्गरोहे तु क्वचिदान्ध्यं सुनिश्चितम्। ज्ञानेन मार्गारोहे तु पारं गच्छन्ति मानवाः ॥ २३ ॥ ज्ञानं शास्त्रेण संबद्धं शास्त्रं मानवसङ्गतम्। मानवाः शास्त्रसंबद्धाः सुखं यास्यन्ति कालतः ॥ २४ ॥ शास्त्राश्रिताः शस्त्रबलैर्हीना दुःखास्पदं नराः। शस्त्राश्रिताश्च शास्त्रेण हीना उद्धततां गताः ॥ २५ ॥ शस्त्रशास्त्रान्वितो राजा नरसिंह इति श्रुतः। तपःशस्त्रान्वितो राजा राजर्षिरिति गण्यते ॥ २६ ॥ केवलं शास्त्रसंपन्नो राजा धार्मिक उच्यते॥ केवलं शस्त्रसंपन्नो राजा[1] चोर उदाहृतः ॥ २७ ॥ तपसापि च शास्त्रेण ब्राह्मणानां गृहं शुभम्। शस्त्रेणापि च शास्त्रेण राजसद्म विराजते ॥ २८ ॥ शास्त्रेणापि धनेनापि मङ्गलं वैश्यसद्म तत् ॥ २९ ॥ सशास्त्रजनयोगेन धनेन विनयेन च। शूद्रगेहं सर्वगेहप्रतिष्ठारक्षणं महत् ॥ ३० ॥ गेहान्येतानि चत्वारि मङ्गलानि महीतले। पालयेद्राजराजस्तु राज्यकर्मधुरन्धरः ॥ ३१ ॥ धुरन्धरं तं मन्यन्ते पालयन्नेव मङ्गलम्। मङ्गलान्यधिकान्येव वर्धयेद्यो नरोत्तमः ॥ ३२ ॥ हापयन्पूर्वसंसिद्धं दित्सुरन्यच्च मङ्गलम्। स्थापयेत्सन्धिकाले स यदि स्यात्सर्वभूपतिः ॥ ३३ ॥ न नासाभरणं कण्ठो न नासा हारमुत्तमम्। न नूपुरं करः क्वापि न पादोऽर्हति कङ्कणम् ॥ ३४ ॥ यथाव्यवस्थं तन्वानो राज्यं भूमिपतिर्हरिः। सर्वज्ञपीठमाश्रित्य पालयिष्यति मेदिनीम् ॥ ३५ ॥ वक्ता श्रोता यदा लोके समर्थौ भुवि मङ्गलम्। संक्षेपतश्च संप्रोक्तं नीतिशास्त्रमिदं शुभम्

---

१ उच्छृङ्खलैर्मननीयमिदं वाक्यम्.

॥ ३६ ॥ इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे नष्टोद्धारकथनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

# नष्टोद्धारसरणिनिरूपणाध्यायः ॥ ५ ॥

शस्त्रं संपरिवर्तेत न शास्त्रं परिवर्तते । शास्त्रं न पुरुषायत्तं पुरुषाश्रयमेव तत् ॥१॥ शस्त्रं बुद्धिपराधीनं शास्त्रं सहजसंस्थितम् । तत्पराशुत्तिचक्रस्तु धर्मोपप्लव उच्यते ॥२॥ यथा कालो यथा शत्रुर्यथैव स्वबलं भवेत् । तथा निर्मीयते शस्त्रं न शास्त्रं केनचित्कचित् ॥ ३ ॥ नीतिर्नूनापि कल्प्येत रक्षणे शस्त्रशास्त्रयोः । न चैवैकविधः कालो रक्ष्यं तु द्वितयं नरैः ॥ ४ ॥ शस्त्रं संरक्ष्यते दुर्गैर्बलवद्भिर्भटैरपि । मन्त्रज्ञैरपि चामात्यैस्तथा प्रभुबलेन च ॥ ५ ॥ शास्त्रं संरक्ष्यते वर्णैर्बलवत्पण्डितैरपि । मन्त्रज्ञैरपि भूपालैस्तथाऽऽचार्यबलेन च ॥ ६ ॥ यः सर्वज्ञपदारूढः सार्वभौमः स उच्यते । इतरे मण्डलाचार्याः सशास्त्रा यदि पूरुषाः ॥ ७ ॥ अशास्त्रपुरुषाः केचिदाचार्यत्वमुपागताः । आचार्यत्वमशास्त्रत्वं विरुद्धमिदमासनम् ॥ ८ ॥ शास्त्रैकदेशमासाद्य केचिदाचार्यतां निजाम् । प्रथयन्ति च लोकेषु ते वै माण्डलिका मताः ॥ ९ ॥ पीठैकदेशमासाद्य केचिदाचार्यतां गताः । तेऽपि माण्डलिकाः प्रोक्ता मूलपीठसहायकाः ॥ १० ॥ शास्त्रैकदेशिभिर्लोके शासितोपासना जने । पीठैकदेशिभिर्वेदमार्ग एवानुशासितः ॥ ११ ॥ प्रतिष्ठा च तथाद्यापि दृश्यतेऽस्मिन्महीतले । लिख्यते दृश्यते तद्वदाचार्यश्च जगद्गुरुः ॥ १२ ॥ पद्मपादादिचत्वारो जगद्गुरुपदास्पदम् । अन्योन्यसंमतत्वेन मिथः पालनतोऽपि च ॥ १३ ॥ एकाचार्यत्वयोगेन चत्वारोऽप्येक एव हि । आचार्यपीठयोगेन चत्वारश्चक्रवर्तिनः ॥ १४ ॥ शृङ्गेर्या चक्रवर्तित्वं सार्वभौमत्वमप्युत । चिह्नान्यपि तथाद्यापि दृश्यन्ते मठभेदतः ॥ १५ ॥ मताचार्यप्रभेदेन चिह्ना-

न्यपि तथा तथा। लेखा अपि च दृश्यन्ते धर्मा अपि पृथक्पृथक् ॥ १६ ॥ शिष्या एव हि ते सर्वे पीठानां वैदिकात्मनाम् । यतो भारतखण्डोऽयं वैदिको नास्त्यवैदिकः ॥ १७ ॥ वैदिकत्वे वैदिकस्य शिष्याः पीठस्य सर्वशः । अवैदिको भारतस्तु न श्रुतो विकृतिं विना ॥ १८ ॥ प्रविष्टं वा विना कोऽपि न च संभाव्यते बुधैः। ज्ञानेन विकृताः केचित्कर्मणा विकृताः परे ॥ १९ ॥ अर्धशिष्या इमे प्रोक्ता उभाभ्यां चेद्बहिर्नरः । उभाभ्यामपि युक्तस्तु पूर्णशिष्य इति स्मृतः ॥ २० ॥ ज्ञानेन विकृतं ज्ञानैः कर्मणा विकृतं च तैः। संशोध्य शिष्यं कुर्वीत यदि स्यादधिकारिता ॥ २१ ॥ यावदेव सशास्त्रत्वं तावत्येव हि शिष्यता। शिष्यत्वं शास्त्रमानेन निर्णेयं मतिमत्तमैः ॥ २२ ॥ पद्मपादादिचत्वारो गुरुदत्तासनस्थिताः । विश्वरूपाचार्य एको गुर्वासनमुपाश्रितः ॥ २३ ॥ अतः स सार्वभौमोऽभूत्त्रयोऽन्ये मण्डलेश्वराः । सार्वभौमः स एवैकः शृङ्गेरीपीठमास्थितः ॥ २४ ॥ स सर्वपीठैः संभूय धर्मस्थापनमाचरेत् । नासंभवः प्रवृत्तस्य जाग्रतः श्रीजगद्गुरोः ॥ २५ ॥ देशेदेशे पुरे ग्रामे स्थाप्याः पञ्च महाशयाः। निर्लोभा निरहङ्कारा धर्मकामाः कुलोत्तमाः ॥ २६ ॥ अधिकारपदं दत्त्वा प्रतिष्ठां च यथागुणम्। अविस्मरणमानेया स्वीया वैदिकपद्धतिः॥२७॥ वैदिकावैदिकेनैव बलमर्हन्ति सत्पथाः। अन्यथा दुर्विपाकेनानुमेयं फलमास्तिकैः ॥ २८ ॥ न चात्र बहु वक्तव्यमित्याज्ञाप्य जगद्गुरुः। प्रवर्तयेद्धर्ममार्गं ज्ञानमार्गं च भूरिशः ॥ २९ ॥ सुखेनायं प्रवृत्तः स्यादनुकूले तु राजनि । अन्यथात्वे ज्ञानमार्गे न विरोधोऽस्ति कश्चन ॥ ३० ॥ राजप्रवेशो ज्ञानेषु दुर्घटः स्थिततां गतः। धर्ममार्गे कदाचित्स्यान्न धर्मस्तेन नङ्क्ष्यति ॥ ३१ ॥ ज्ञानमार्गरता मर्त्या वेदप्रामाण्यचिन्तकाः। सिद्धे तस्य प्रमाणत्वे धर्ममार्गोऽपि सुस्थिरः ॥ ३२ ॥ प्रामाण्यमूलौ द्वौ मार्गौ तन्नाशो न भविष्यति।

न प्रामाण्यं राजहस्ते नाचारोऽपि कथंचन ॥३३॥ नीतिमात्रासनो वीरः षष्ठं भागमुपाहरेत् ॥ पारम्परीकं संपाद्य स्वैश्वर्यं वर्धयेदपि ॥ ३४ ॥ राजैश्वर्यं न धर्मेण विरोधं कर्तुमर्हति ॥ धर्मोऽपि राजैश्वर्येण न विरोधाय कल्पते ॥ ३५ ॥ उभयोर्भिन्नमूलत्वाद्भिन्नाधिकरणादपि । प्रामाण्यमूलो धर्मस्तु नीतिमूला च राजता ॥ ३६ ॥ न सपत्नौ नीतिधर्मौ मिथः पालकतां गतौ । पुनर्भूपणमन्योन्यं राजेते दम्पती इव ॥ ३७ ॥ नीतेर्धर्मेण सौभाग्यं नीत्या धर्मस्य तत्तथा । अन्योन्यविमुखत्वे तु विधवाविधुरौ च तौ ॥ ३८ ॥ अतएव तथा लोके दृश्यते प्रायशो जनैः । विधवाविधुराभ्यां हि समन्तात्पूरितं जगत् ॥ ३९ ॥ मङ्गलं राजपुण्येन ज्ञानमाचार्यपुण्यतः । तीव्रे पुण्यद्वये शुद्धे पृथ्वीभाग्योदयो भवेत् ॥ ४० ॥ शस्त्रं नीत्या च संत्यक्तं प्रामाण्येन च पुस्तकम् । तत्क्षुरं तद्बकमिति तत्तत्तत्त्वविदो विदुः ॥ ४१ ॥ न सा नीतिः प्रजा सर्वा मज्जिता दुःखसागरे ॥ न तच्छस्त्रं निजैश्वर्यरक्षणायोद्यतं न यत् ॥ ४२ ॥ न तच्छास्त्रं स्वसिद्धौ यत्पौरुषं बलमिच्छति । न स धर्मो निजं तेजो येन ग्लानिमवाप्नुयात् ॥ ४३ ॥ राजा तु त्रिविधः प्रोक्तः क्षुधितस्तृप्तसुप्तकौ । नीतेर्भेत्ता पालयिता विस्मर्तेति त्रयो गुणाः ॥ ४४ ॥ क्षुधितः श्रियमादत्ते सकलां जगतोऽमितः । हृतश्रीकं निजं राज्यं निरीक्ष्य सुखमेति सः ॥ ४५ ॥ तृप्तः श्रियमुपाधत्ते जगतः सकलाङ्गिकीम् । ऋद्धश्रीकं निजं राज्यं निरीक्ष्य सुखमेधते ॥४६॥ सुप्तस्तु सर्वतो लक्ष्मीं विस्मृत्य मदमोहितः । व्यसने वाथ निद्रायामायुर्नयति मानवः ॥ ४७ ॥ तृप्ते प्रौढिमुपायातः सुप्ते ग्लानिमुपागतः । जर्जरः क्षुधिते राज्ञि न नङ्क्ष्यति कदापि सः ॥ ४८ ॥ प्रामाण्यं व्याहतं चेत्स्याच्छ्रुतीनां तर्हि संभवः । तदेव दुर्घटं मन्ये ततो धर्मः सनातनः ॥ ४९ ॥ इच्छया कल्पितो धर्म इच्छयैव

---

१ एतल्लक्षणं भारतीयेषु घटते.

निवर्तते । ज्ञानेन सिद्धो धर्मस्तु ज्ञानमाश्रित्य तिष्ठति ॥ ५० ॥ दण्डे सत्युज्ज्वलो धर्मः सुप्ते दण्डे स्वपित्यसौ । अदृष्टप्रायतां याति दण्डाभावे कचित्कचित् ॥ ५१ ॥ एष एव कलिः प्रोक्तः कालज्ञैर्धर्मवित्तमैः । धन्यमेतत्कले राज्यं स्वधर्मे स्वस्य दण्ड्यता ॥ ५२ ॥ स हन्यते कचिद्राज्ञा प्रजयापि च हन्यते । आचार्येणापि हन्येत जाग्रता हन्यते कलिः ॥ ५३ ॥ सुप्तस्य गेहमन्यत्तु जाग्रतो गेहमन्यथा । क्षुधितस्य गृहं चान्यत्तृप्तस्य गृहमन्यथा ॥ ५४ ॥ ब्राह्मणस्य गृहं चान्यत्क्षत्रस्य गृहमन्यथा । वैश्यस्य गेहमन्यत्तु शूद्रस्य गृहमन्यथा ॥ ५५ ॥ अन्येषामपि गेहानि भिन्नान्येव महीतले । तेन भेदानुमानेन निर्णयः काल आदरात् ॥ ५६ ॥ निर्णीते कालरूपे तु शुभाशुभविनिर्णयः । सर्वैरेव प्रकर्तव्यस्तदा क्षीणबलः कलिः ॥ ५७ ॥ स्वापकाले प्रवृत्तस्य बलं क्षीयेत जाग्रति । जाग्रत्काले प्रवृत्तस्य बलं स्वापे विनश्यति ॥ ५८ ॥ जाग्रत्काले प्रवृत्तं तु शास्त्रं पूर्णविचारदम् । स्वापकाले प्रवृत्तं तु तम एव न चापरम् ॥ ५९ ॥ तमोऽविरोधि यत्किंचित्तम एव न संशयः । तेजोऽविरोधि यत्किंचित्तेज एव न चापरम् ॥ ६० ॥ शास्त्राभावस्तमःकालः स्वाप एव न संशयः । तेजःकालः शास्त्रकालो न सूर्यस्तेज उच्यते ॥ ६१ ॥ स एव जागृतिः प्रोक्तो यत्र सूक्ष्मं प्रदृश्यते । शास्त्राभावः स्वापकालो यत्र स्थूलं न दृश्यते ॥ ६२ ॥ दृष्टं चेदन्यथैवैतद्यथा स्वप्न इति स्थितिः । उभयात्म जगज्ज्ञेयं तमस्तेजःसमन्वयात् ॥ ६३ ॥ सौरे ज्योतिषि वर्तन्ते मार्जारा मूषकादयः । शास्त्रे ज्योतिषि वर्तन्ते ये नरा न च वानराः ॥ ६४ ॥ मानुषत्वस्थापनेन कार्तार्थ्यं याति भूपतिः । आचार्योऽपि च तेनैव तत्र यत्नो विधीयताम् ॥ ६५ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्के नष्टोद्धारसरणिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

# नष्टोद्धारावश्यकत्वनिरूपणाध्यायः ॥६॥

शास्त्रं नाम गुरोर्वाक्यं गुरोरपि गुरुर्मतः । तस्यापि चेत्थं संवृत्तः सर्वज्ञो गुरुरादिमः ॥ १ ॥ गुरुवाक्यं श्रुतिः प्रोक्तं श्रीगुरोर्मुखतश्श्रुतम् । श्रुतिर्वेद इति प्रोक्ता वेदनं वेद उच्यते ॥ २ ॥ वेदनं निश्चितं ज्ञानं तच्च नित्यं न कल्पितम् । अतो वेदो नित्य इति सिद्धान्तोद्घोषणं भुवि ॥ ३ ॥ सर्वज्ञेन तु विज्ञातं कथितं तद्यथातथा । श्रोत्रे श्रुतं च वित्तं च श्रुतिर्वेद इति प्रथा ॥ ४ ॥ सर्वज्ञः सर्वकर्तापि न ज्ञानं कर्तुमर्हति । ज्ञानकर्ता ज्ञानहीन इति दोषप्रसङ्गतः ॥ ५ ॥ किं कल्पितं ज्ञानमुक्तमुताज्ञानस्य चातुरी । याथार्थ्यं ज्ञानमित्युक्तं न च तत्कल्पितं भवेत् ॥ ६ ॥ ज्ञानत्वं कल्पितत्वं च विरुद्धं जगतीतले । ज्ञानं वेद इति प्रोक्तं कल्पितं जगदुच्यते ॥ ७ ॥ अकल्पितं कल्पितं वा बोधयेदविकल्पितः । द्रष्टृवर्गं दृश्यवर्गं यथा सूर्यस्तमोपहा ॥ ८ ॥ अकल्पितं मूलतत्त्वं निष्कलं निर्विकल्पकम् । कल्पितं भुवनं सर्वमक्षरादिक्षरान्तकम् ॥ ९ ॥ उभयं वेदयत्येष वेदनामा हि पूरुषः । ब्रह्मनाम वहत्येष उभयोरपि बृंहणात् ॥१०॥ त्रयस्तु पूरुषा ज्ञेया ब्रह्म वेदो विराडिति । मध्यमः पुरुषश्चायमुभावपि हि वेदयेत् ॥ ११ ॥ शिक्षयैव स्वयं वेद्यः शिक्षितेनोभयं तथा । शिक्षाधिकारी संप्रोक्तस्तेनैव पुरुषेण हि ॥ १२ ॥ शिक्षा व्याकरणं छन्दो निरुक्तं ज्यौतिषं तथा । कल्पश्चेति षडङ्गानि वेदस्याहुर्मनीषिणः ॥ १३ ॥ छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ १४ ॥ शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ १५ ॥ साङ्गं सर्वं पूर्णफलं प्रसूते विकलं नहि । विकलं विकलं सूते नात्र वादोऽस्ति कश्चन ॥ १६ ॥ अधिकार्यपि साङ्गश्चेल्लभते सकलं फलम् ।

सशास्त्रं जन्म संस्कारोऽधीतिर्मेधा तदङ्गकम् ॥ १७ ॥ सर्वज्ञकल्पः सर्वज्ञाल्लेभे वेदं सनातनम्। स च प्रवर्तयामास स्वसृष्टेष्वधिकारिषु ॥ १८ ॥ कालेकाले विशीर्णानि वेदाङ्गानि पुनः पुनः। योजितानि पुनस्तानि तेषां नामानि तत्र हि ॥ १९ ॥ स्वरेण सहितो वेदस्तेनार्थो व्यज्यतेऽखिलः। पारम्परीकैः स ज्ञातस्ततो निर्बन्धसुन्दरः ॥ २० ॥ कस्मिन्नर्थे वाक्प्रवृत्तिः किं फलं चावगाह्यते। कुत्र वा पर्यवसितं किं कुर्वित्यपि भाषते ॥ २१ ॥ स्वरैरेव व्यज्यते तत्तथा व्याख्या क्रमागता। फलं पर्यवसानं च विधिवाक्यं च सिद्ध्यति ॥ २२ ॥ तेन सिद्धं ब्राह्मणं च सूत्रमङ्गानि सर्वशः। इदं विद्धि फलं चैतदत्र पर्यवसानकम् ॥ २३ ॥ इदं कुर्वित्ययं त्वं च ब्रूहीत्थमिति सिद्ध्यति। सर्वं स्वरेण संप्रोतं ज्ञातं विज्ञापितं च तत् ॥ २४ ॥ वेदेषु स्वरविन्यासो गाम्भीर्यस्य प्रयोजकम्। स्वरभेदादर्थभेद इति सर्वसतां मतम् ॥ २५ ॥ अक्षरैरर्थविज्ञानं यत्रैव स्याद्विवक्षितम्। न तत्र स्वरविन्यासो वेदेष्वपि बहुत्र हि ॥ २६ ॥ स्वरहीनं वेदवाक्यं तत्तु सस्वरमूलकम्। सस्वरं वेदवाक्यं यत्तत्स्वमूलं सलक्षणम् ॥ २७ ॥ स्वरमूलकवाक्यं तु सस्वरेणैव योजयेत्। सस्वरं वेदवाक्यं तु स्वरमूलेन योजयेत् ॥ २८ ॥ षडङ्गः सिद्ध्यति तदा वेदनामा हि पूरुषः। तिष्ठत्येष वदन्नेव यावन्निद्राति नो जनः ॥ २९ ॥ स्मृतिः पुराणं तन्त्रं च प्रतिबिम्बतया स्थितम्। तेनैव प्रतिबिम्बेन बिम्बं जानाति बुद्धिमान् ॥ ३० ॥ बिम्बाभिप्रायमाश्रित्य प्रामाण्यपदवीं गतम्। अधिकारिप्रभेदेन व्यवस्थामपि चागतम् ॥ ३१ ॥ स्वरः स्वरूपं वाग्देव्यास्तस्या मूलं स एव हि। अकारः सर्ववर्णानां संभवः श्रूयते यतः ॥ ३२ ॥ उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा। एवं चतुर्विधो मूलवर्णः परिणतिं गतः ॥ ३३ ॥ वाक्प्रपञ्चस्ततो जातः

मन्त्रेऽन्यथ निःस्वरः । यथा यावत्फलं वाच्यं तथा तत्र स्वरः स्मृतः ॥ ३४ ॥ मन्त्रे वा ब्राह्मणे चाऽपि स्वरो व्यभिचरत्यपि । तेनेदमुच्यते यावत्फलं तत्र तथा स्वरः ॥ ३५ ॥ सामान्यतः साङ्गवेदे स्वर एकविधः स्थितः । सामान्यतो जीववाण्यां स्वर एकविधः स्थितः ॥ ३६ ॥ ऋषिवाण्यां देववाण्यां देशवाण्यां तथा तथा । स्वरत्वेनैव मर्मज्ञैः प्रामाण्यं स्वीकृतं तथा ॥ ३७ ॥ मन्त्रब्राह्मणमन्त्राणामेकत्वं चैककार्यतः । तत्पालकानि चाङ्गानि तथोपाङ्गानि सर्वशः ॥ ३८ ॥ साङ्गोपाङ्गस्त्वधीतोऽसौ सर्वज्ञत्वाय कल्पते । गोपितो बलमाधत्ते ज्ञातः कैवल्यसंपदम् ॥ ३९ ॥ वेदे मानं वेद एव मानौ मानं तु भानुमान् । आत्मन्यात्मैव मानं तु सर्वथैषां हि मानता ॥ ४० ॥ स्वस्वमानं वस्तुजातं ज्ञायते पारगैरिह । परमानं वस्तुजातं कीटान्तैरपि सर्वतः ॥ ४१ ॥ कीटान्तमानतो जन्तून्स्वमाने संनिवेशयेत् । एतदाचार्यकर्मैतद्राज्ञो वा चक्रवर्तिनः ॥ ४२ ॥ आचार्यस्य बलं ज्ञानमाज्ञा सिंहासनेशिनुः । ज्ञानमाज्ञा युगीभूय कालं संपरिवर्तयेत् ॥ ४३ ॥ मनुष्यत्वं प्रमाणं चेच्छास्त्रं समनुधावति । आचार्यश्च तदा राजा मिथो मैत्री समामृतः ॥ ४४ ॥ तथा संसिद्ध्यति ज्ञानं धर्मो नीतिः सुखं यशः । तेन नन्दति राजा च प्रजाऽऽचार्यश्च मेदिनी ॥ ४५ ॥ इत्थं परम्पराप्राप्तं शास्त्रं संपरिपालयन् । जगज्जयति सर्वज्ञः श्रीमच्छङ्करभारती ॥ ४६ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाख्ये नष्टोद्धारावश्यकत्वनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥

## शास्त्रफलनिरूपणाध्यायः ॥ ७ ॥

एवं समुद्धृते शास्त्रे धर्माधर्ममयं जगत् । दृश्येतापि प्रवर्तेत नीतिर्लोकैकरञ्जनी ॥ १ ॥ ययैव रञ्जिते लोके धर्मः पुष्टिमवाप्स्यति । धर्मे पुष्टिं समापन्ने शास्त्राणां चरितार्थता ॥ २ ॥ तदा

भवति जिज्ञासा तत्त्वातत्त्वविमर्शिनी। तदोपनिषदां नूनमवकाशो विचारणे ॥ ३ ॥ यदभूद्भूतमात्रं तु तदभूद्धर्ममात्रकम्। यदिदं धर्ममात्रं तु किं तत्सत्यमुतानृतम् ॥ ४ ॥ यदि सत्यं तदा कर्म गले पाशायते यतः। यद्यसत्यं तदा का वा जगदाशा भविष्यति ॥ ५ ॥ सत्यमित्येव संप्राप्तं सर्वलोकैकसाक्षिकम्। शास्त्रं च तत्र साक्ष्येव लोकाल्लोकान्तरं वदत् ॥ ६ ॥ परंतु–न शास्त्रपरतन्त्रः सन्विश्वं पश्यति बालकः। येन तत्सत्यतां तस्मै ब्रूयात्साक्षिपदे स्थितम् ॥ ७ ॥ प्रत्यक्षपरतन्त्रः सन् दृष्ट्वा तत्र च सत्यताम्। निश्चित्य तत्र शास्त्राणि साक्षीणीति ब्रवीति हि ॥ ८ ॥ शास्त्रं तु वक्ति नास्तीति प्रत्यक्षं दर्शयत्यदः। किमत्र मानं शास्त्रं वा प्रत्यक्षं वा विचार्यताम् ॥ ९ ॥ किं तयोरेकवाक्यत्वमुताहो भिन्नवाक्यता। यदि स्यादेकवाक्यत्वं दृश्यते नास्ति सिद्ध्यति ॥ १० ॥ अथवा नास्ति यद्वस्तु तद्दृश्यमिति सिद्ध्यति। भिन्नार्थत्वे नास्ति शास्त्रं प्रत्यक्षं वेति सिध्यति ॥ ११ ॥ शास्त्रबाधे बलं याति प्रत्यक्षं पशुतास्पदम्। प्रत्यक्षबाधे शास्त्रं तु संपूर्णं बलमावहेत् ॥ १२ ॥ तदा तुच्छत्वमेव स्यादिति सिद्धान्तसंग्रहः। अविचाराद्भाति सत्यं विचारादनृतं तथा ॥ १३ ॥ आरूढे तुच्छतां याति विश्ववार्ता समूलिका। कृतार्थाः श्रुतयस्तत्र श्रोता च सुकृती कृती ॥ १४ ॥ सृष्टिशास्त्रं धर्मशास्त्रमश्रुतोपनिषत्कथे। चरितार्थे यथा बाले स्वाच्छन्द्यचरितार्थता ॥ १५ ॥ बालत्वं यापयेत्तस्माच्छास्त्रशिक्षासमन्वयात्। शिक्षितेषु तु शास्त्रेषु यथा शास्त्रं जगद्भवेत् ॥ १६ ॥ विश्वे भाते यथा शास्त्रे धर्माधर्मात्मके तदा। चरितार्थः सेशवादस्तदा च तदुपासना ॥ १७ ॥ उपासनायां शुद्धायां तत्त्वज्ञानाधिकारिता। शास्त्रं तत्त्वमसीत्याह जगन्नास्तीति भूरिशः ॥ १८ ॥ दृष्टं दृष्टमिवेत्याह वाक्यत्रयसमन्वये। अद्वितीयं ब्रह्मतत्त्वं सिद्धान्तपथमागतम् ॥१९॥ दत्त्वा मतिं

शास्त्रहस्ते शास्त्रयोनौ विशेश्वरः । शास्त्रं गृहीत्वा हस्ते तु यात्यधोधो विमूढधीः ॥ २० ॥ अस्पृष्टशास्त्रा जीवास्तु संत्येवान्धे तमस्यमी । अन्धं तमो भिनत्त्येतच्छास्त्रं नाम सुदर्शनम् ॥ २१ ॥ अदृष्टं दर्शयत्येतदृष्टं दृष्टमपोहति । सुखं संतनुते नित्यं शास्त्रं नाम सुदर्शनम् ॥ २२ ॥ परिचीय मनोर्वंशमार्षं वा वंशमप्यथ । पृष्टे तिष्ठत्ययत्नेन शास्त्रं नाम सुदर्शनम् ॥ २३ ॥ दत्तं पुरा शङ्करेण विष्णवेऽद्भुतकर्मणे । तेन प्रवर्तितं चक्रं शास्त्रं नाम्ना सुदर्शनम् ॥ २४ ॥ तदेव च मनोर्वंशं महर्षीणां च सर्वशः । पात्युद्धत्ते यशः सूते शास्त्रं नाम सुदर्शनम् ॥ २५ ॥ गृहात्तु कलिदोपघ्नः श्रीकृष्णो दक्षिणे करे । शान्तये सर्वजगतां शास्त्रं नाम्ना सुदर्शनम् ॥ २६ ॥ मङ्गलं भगवन्विष्णो मङ्गलं गरुडध्वज । मङ्गलं पुण्डरीकाक्ष त्रैलोक्यं मङ्गलं कुरु ॥ २७ ॥ धन्यः स वालो द्विजभूमिपालः शास्त्रालवालः शठखण्डकालः । वादे करालो हृदये विशालो भार्ग्यैः सदोलो मम चन्द्रभालः ॥ २८ ॥ किं शङ्करः किंकरस्य धुनोति वचनावलीम् । कथं पार्थाय शवरो ददौ पाशुपतं स्वकम् ॥ २९ ॥ वक्रोऽपि सुन्दरो लोके कौस्तुभो विष्णुना धृतः । वक्रोऽपि सुन्दरश्चन्द्रः शम्भुना शिरसा धृतः ॥ ३० ॥ शास्त्रं सुदर्शनं नाम हस्ते कृत्वा द्विजातयः । सुखं वैदिकपद्धत्यां संचरन्तु मुदा सदा ॥ ३१ ॥ कृष्णानन्दसरस्वत्याः सदा नूत्ना सरस्वती । पुरातनतमा सैव पुरारिहृदयङ्गमा ॥ ३२ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे शास्त्रफलनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

# पुराणानामबाधितप्रामाण्याध्यायः ॥ ८ ॥

व्यासोक्तीनां तु तात्पर्यं गम्भीरं श्रुतिसंमतम् । किंचिदुद्घाट्यते तेन सर्वं श्रोतव्यतां गतम् ॥ १ ॥ लोके सप्तशती नाम महामन्त्रमयी स्तुतिः । यस्याः संसेवनात्सिद्धा बहवः पारदर्शिनः ॥ २ ॥

आलस्यं यदि संत्यज्य जागृतो जायते नरः। कं न हन्यात्कं न जीयात्प्रथमे चरिते कथा ॥ ३ ॥ यया संमोहितो विष्णुः सा काली यदि सेविता। संमोह्य नाशयेच्छत्रूञ्जाग्रद्भूतो जनार्दनः ॥ ४ ॥ श्रीमहाकाल्यै नमः ॥ ४ ॥ महिषो यदि राज्येशो हन्यते योषितैव सः। महाबलो महैश्वर्यो द्वितीयचरिते कथा ॥ ५ ॥ बुद्धीनामेकसद्भावो महालक्ष्मीः प्रकीर्तिता। सा यैः संसेविता तेषां गेहे लक्ष्मीर्दिनेदिने ॥ ६ ॥ श्रीमहालक्ष्म्यै नमः ॥ २ ॥ महाकामी यदा राजा सोऽपि हन्येत योषिता। बहुतन्वाऽप्येकतन्वा तृतीयचरिते कथा ॥ ७ ॥ अव्याहतबला वाणी बहुरूपापि चैकला। महासरस्वती सेव्या महोत्पथविनाशिनी ॥ ८ ॥ श्रीमहासरस्वत्यै नमः ॥ ३ ॥ ॥ इति सप्तशती व्याख्यासंक्षेपः कृष्णभिक्षुणा। प्रादर्शि पश्येद्यस्तं तु स नरः क्षेममाप्नुयात् ॥ ९ ॥ राज्याभिषेके संप्राप्ते गजे च पुरतः स्थिते। अभिषेकमुपेक्ष्यास्ते केसरी गजगण्डयोः ॥ १० ॥ धीरेण सुविनीतेन यूना गम्भीरचेतसा। भाव्यमित्याह वाल्मीकिर्यथा रामः श्रियां पदम् ॥ ११ ॥ प्राप्तं तु समयं त्यक्त्वा पुनरिच्छति तत्पदम्। स हन्यते मर्कटैरित्याह वल्मीकसंभवः ॥ १२ ॥ धीरस्य सुविनीतस्य पुंसस्तु कृतकर्मणः। पादौ सुसेवते लक्ष्मीरित्यादिकविभाषणम् ॥ १३ ॥ क्रव्यादतामुपगतेषु महीसुरेषु स्वाद्वन्नतामुपजगाम मुनीन्द्रवर्गः। चित्रं न तत्र यदि नर्तति घोरलीलो राजा कलिः सबलवाहनभृत्यवर्गः ॥ १४ ॥ आरामः कल्पवृक्षाणां विरामः सकलापदाम्। अभिरामस्त्रिलोकानां रामः श्रीमांस्तदा प्रभुः ॥ १५ ॥ कलौ प्रविष्टे गेहेषु पिता वैरिपदं गतः। भाग्योदयमनुप्राप्ते पुंसि दासायते कपिः ॥ १६ ॥ इति रामायणं शास्त्रं नीतिगर्भं मनोहरम्। श्रुत्वा परीक्ष्य जायेत नरोऽपि नरपुंगवः ॥ १७ ॥ वक्ष्ये भारततात्पर्यं यथानीति यथामति। येन कृष्णो व्यासदेवो धर्मस्तुष्टिमवाप्नुयात् ॥ १८ ॥ अयमेव हि कृ-

ग्गस्य भूभारहरणोद्यमः । शिष्टच्छले प्रवृत्तिर्या दुष्टानामनपायिनी ॥ १९ ॥ आरब्धेऽपि छले दुष्टैः शिष्टः सत्त्ववतां वरः । कालेन जयमाप्नोति यदि गेहच्छलो नहि ॥ २० ॥ सत्त्वं सत्त्ववतां ग्राह्यमिति बुद्धिरता नराः । वरं स्वनाशं मन्यन्ते मत्सरः कलिरेषु तु ॥ २१ ॥ योषितां धर्मसंकष्टे लज्जा रक्ष्या मनीषिणा । एषा नीतिरयं धर्मो न चेन्नाश उपस्थितः ॥ २२ ॥ द्वन्द्वे धर्मस्य कलिना कलिनाशः सुनिश्चितः । धर्मो नष्ट इवाभाति न नश्यति हरेः प्रियः ॥ २३ ॥ नीतिं खड्गमुपादाय धर्मेण कवचीभवन् । हरेः सखा नरः कोऽपि जगज्जयति चैकलः ॥ २४ ॥ व्यर्थं सत्त्ववता वैरं वृथा नश्येद्बलं द्वयोः । जयः सत्त्ववतो नित्यो भूभारोऽपि शमं गतः ॥ २५ ॥ महावीरस्य भीष्मस्य शिखण्डी शत्रुतां गतः । स्वयंकृतापराधोऽयं का तत्र परिदेवना ॥ २६ ॥ द्रोणस्यापि च वीरस्य धृष्टद्युम्नोऽभवद्रिपुः । स्वयंकृतापराधोऽयं० ॥ २७ ॥ महावीरस्य कर्णस्य सारथिः शत्रुतां गतः । स्वयंकृता० ॥ २८ ॥ अन्धहस्तगते राज्ये शिष्टाः क्लिश्यन्ति भूरिशः । उद्धताः स्वजना नूनं जगन्नाशाय केवलम् ॥ २९ ॥ म्रियमाणोऽपि धर्मात्मा धर्मं ज्ञानं च संब्रुवन् । म्रियेत नाविचारेणेत्येवं भारतदर्शनम् ॥ ३० ॥ इति भारतमाख्यानं पठनीयं नरोत्तमैः । कलिपीडा शमं याति भाति लक्ष्मीश्च संमुखे ॥ ३१ ॥ ॥ अथ भागवतं नाम ग्रन्थचिन्तामणिं ब्रुवे । श्रीव्यासदेवसर्वस्वं शुकचञ्चुविराजितम् ॥ ३२ ॥ ईश्वरः परिचेतव्यः सृष्टिस्थितिलयक्रमैः । तदेकरतवक्त्रात्तु देहान्तन्याससंस्थितैः ॥ ३३ ॥ ईश्वरस्त्रिविधः प्रोक्तोऽधिदैवादिप्रभेदतः । जगद्बीजं चावतारो जीव एवं क्रमः स्मृतः ॥ ३४ ॥ एतेषामैक्यविज्ञानं श्रेयोरूपमिति स्थितिः । वर्णिता यत्र शास्त्रे तु तद्भागवतमुच्यते ॥ ३५ ॥ जगद्बीजं तु जगता जीवैश्च श्रुतिभिः सह । रमतेऽत्र न संदेहो महारासोऽयमद्भुतः ॥ ३६ ॥ संचितेषु तु तीव्रेषु तपः-

स्वागःसु भूतले। तदेतत्फलदानार्थमीशोऽप्यवतरिष्यति ॥ ३७ ॥ सृष्टिं दर्शयते काले पालनं चापि कालतः। संहारमपि कालेन येनेशत्वं नरैर्मतम् ॥ ३८ ॥ क्रीडामिच्छद्भिरेवायं क्रीडति क्रीतमानसः। तेनापि क्रीतमनसः केऽपि का अपि कुत्रचित् ॥ ३९ ॥ रन्तुं मनांसि चेत्तेषां रमतेऽसौ यथारुचि। न मर्यादा कापि तत्र मूलतत्त्वानुसंहितेः ॥ ४० ॥ मूलतत्त्वं तु रमते सर्वैरपि सदैव हि। तदज्ञातं ज्ञापयितुं भाग्यैरेव हि कश्चन ॥ ४१ ॥ प्रतिगोपि स्वयंसिद्धः प्रतितालं च नर्तनम्। प्रतिगीतं गीयते च सर्वात्मा सन् सनातनः ॥ ४२ ॥ शिष्टारिष्टप्रदान्कांश्चिद्घ्नन्ति शिष्टांश्च पात्यपि। प्रसङ्गेऽभिनवां सृष्टिं संदर्शयति कौतुकात् ॥ ४३ ॥ संदर्शयन्स्वमीशत्वमवतार उदाहृतः। न प्रमादस्तत्र कल्प्यः सनिमित्तैककर्मणि ॥ ४४ ॥ गोपालनं गोपसङ्गो गोपीभिः खेलनादिकम्। सनिमित्तमवश्यं तन्न प्रमादः परात्मनि ॥ ४५ ॥ अध्यात्ममपि देवोसौ रासक्रीडां सदैव हि। तनोति मनुते सत्यं भुङ्क्ते भोजयतेऽपि च ॥ ४६ ॥ प्रतिवृत्ति स्वयंसिद्धो मध्ये मध्ये विभाति हि। कूटस्थः साक्षिरूपोसौ न मत्तोन्यो भुगस्ति हि ॥ ४७ ॥ इति वादयते वेणुं रञ्जयत्यपि सर्वतः। तथातथा नरीनर्ति या या गोपी यथा यथा ॥ ४८ ॥ वेद्योसौ शास्त्रसाहस्रैरुपास्यो मध्यमः स्मृतः। प्रथमे तु परोक्षत्वमपोह्यं श्रुतिपारगैः ॥ ४९ ॥ त्रयः[1] कृष्णा इमे प्रोक्ता अज्ञानावरणान्विताः। तदपोहे त्रयोप्येत एक एव भवन्ति ते ॥ ५० ॥ इति भागवतं नाम पुराणं वेदसंमितम्। यथामति समाभाषि मुनिना कृष्णभिक्षुणा ॥ ५१ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे पुराणानामबाधितप्रामाण्यनिरूपणप्रसङ्गेऽष्टमोऽध्यायः ॥ ८ ॥

---

१ यदुकुलतिलक एकः, पार्थो द्वितीयः, व्यासस्तृतीयः.

# पुराणानामबाधितप्रामाण्यनिरूपणाध्यायः ॥ ९ ॥

देवीभागवतं सर्ववाग्रहस्यं पुरातनम् । यद्विज्ञाय नरो नूनं शब्दसागरपारगः ॥ १ ॥ देवस्य देवनं देवी देवनं देव उच्यते । देवो देवीति शब्दोक्त्या यदुक्तं तन्महः परा ॥ २ ॥ भर्गं भगवतो बीजं भर्गं शक्तिः स्वतन्त्रता । ययेशत्वं तया सर्वं सृष्टं पातं हृतं जगत् ॥ ३ ॥ तदनुग्रहतः सर्वे दीव्यन्ते दृष्टमेव नः । शक्तिहीने देवशब्दः कुत्रापि न विराजते ॥ ४ ॥ यथा यथा स्फुटा शक्तिर्देवत्वं च तथा तथा । सर्वं देवमयं तस्माच्छक्तिरङ्गेण रञ्जितम् ॥ ५ ॥ शक्त्यैवैकं द्विधाभूतं शक्त्यैवैकं पुनर्द्विधा । शक्तिक्रीडा जगत्सर्वं शक्तिरेका सनातनी ॥ ६ ॥ तस्याः स्वातन्त्र्यमेवेदं जगल्ललितकन्दुकम् । तत्राधिकारिणः पञ्च पञ्चकृत्येषु योजिताः ॥ ७ ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः । एते पञ्च महाप्रेता देवीपादतले स्थिताः ॥ ८ ॥ सृष्टिः स्थितिर्लयश्चापि तिरोधानमनुग्रहः । एतानि पञ्चकृत्यानि तत्र पूरुषपञ्चकम् ॥ ९ ॥ जाग्रत् स्वप्नः सुषुप्तिश्च तुरीया चोन्मनी तथा । रूपाणि पञ्च तेषां तु चतुर्वक्त्राद्युपासने ॥ १० ॥ सद्योजातो वामदेवोऽघोरस्तत्पुरुषस्तथा । ईशना इति पञ्चापि जाग्रदादिस्वरूपकाः ॥ ११ ॥ प्रेतत्वमेषां मिथ्यात्वात्कार्यत्वादधरस्थितिः । कारणत्वान्मस्तकेस्मिन्नर्वाक्शाखोर्ध्वमूलके ॥ १२ ॥ अनुन्मेपात्समुन्मेष ईशानो ज्ञानवारिधिः । ततः स्यादात्मविश्रम्भस्तत्पूरुष इति स्मृतः ॥ १३ ॥ येनात्ममयमेतत्तु दृश्यते निखिलं जगत् । याति तद्बीजतां भूयोऽघोरता सा स्थितिर्मता ॥ १४ ॥ स चोच्छून इवाभूद्यद्वामदेवोऽभवत्तदा । स एव दृढतां यातः सद्योजात इति स्मृतः ॥ १५ ॥ सद्योजातादिचत्वारः पादाः श्रीमञ्चकस्य हि । ईशानः फलकस्तस्य तत्र श्रीजगदम्बिका

॥ १६ ॥ कर्मकाण्डः पूर्वपाद उपासा दक्षिणस्तथा। योगकाण्डः पश्चिमस्तु ज्ञानकाण्डः स उत्तरः ॥ १७ ॥ समाधिकाण्डः फलकस्तत्रस्था शांभवी परा। सच्चिदानन्दरूपा सा श्रीमत्त्रिपुरसुन्दरी ॥ १८ ॥ पुराणि त्रीणि तत्रवस्तिस्रस्तत्र च साक्षिणी। उक्ता वेदैश्च तन्त्रैश्च श्रीमत्त्रिपुरसुन्दरी ॥ १९ ॥ सैव लज्जाबीजमुक्ता सैव वाग्बीजमुच्यते। कामबीजं सैव राज्ञी शक्तिबीजं च सैव हि ॥ २० ॥ अन्यान्यपि च बीजानि शक्तिरूपाणि सर्वतः। ततो मन्त्राः समुद्भूतास्ततः सर्वं व्यवस्थितम् ॥ २१ ॥ विद्यामयं जगत्सर्वं पश्यन्नेव विमुच्यते। देवीभागवतस्यार्थो गायत्रीसंमतो मतः ॥ २२ ॥ उपासकास्तु निर्दिष्टा विद्यादर्शनहेतुना। कृतार्था इति संप्रोक्तं देवीभागवतं लघु ॥ २३ ॥ सर्वोपनिषदां तत्त्वं तन्त्राणां च रहस्यकम्। एकीकृत्योक्तमीशेन व्यासेन ज्ञानिमौलिना ॥ २४ ॥ एकार्थत्वे पुराणानां विरोधोद्भावनं हि यत्। अविचारफलं मन्ये यत्र सर्वज्ञनिन्दनम् ॥ २५ ॥ अन्यान्यपि पुराणानि सुविचार्य मनीषिभिः। विरोधः परिहर्तव्योऽनुसर्तव्यो महापथः ॥ २६ ॥ पुराणमेव संप्रोक्तं यत्सिद्धं शास्त्रविग्रहे। अज्ञातज्ञापकत्वेन व्यासः कर्तेति संस्मृतः ॥ २७ ॥ अविरोधे पुराणानां वेद एवोपबृंहितः। स्मृतीनामविरोधेन वेद एवोपबृंहितः ॥ २८ ॥ स परंपरया प्राप्तो मानुषत्वैकहेतुना। वर्णाश्रमविभागेन पालितः पालयन्तु च ॥ २९ ॥ शब्दार्थविग्रहा देवी जाग्रदादिस्वरूपिणी। उन्मनान्तारूढलभ्या सा मां पातु महेश्वरी ॥ ३० ॥ अनेन कर्मणा देवो भगवान्देवकीसुतः। ब्रह्मण्यदेवः प्रीणातु सुदर्शनकरो हरिः ॥ ३१ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे पुराणानामबाधितप्रामाण्यनिरूपणप्रसङ्गे नवमोऽध्यायः ॥ ९ ॥

# निर्विघ्नफलनिरूपणाध्यायः ॥ १० ॥

अथो गणपतेर्गुह्यं यत्पुराणे प्रकाशितम्। वेदे सिद्धान्तितं चापि

ब्रुवे संशयनाशनम् ॥ १ ॥ भूतानां भौतिकानां वा गणानामधिपः प्रभुः । स वै गणपतिः प्रोक्तो नात्र वादोस्ति कश्चन ॥ २ ॥ वर्णेष्वपि गणा अष्टौ मादिनान्ता लघुर्गुरुः । तेषामप्यधिपः प्रोक्तो गणपो नात्र संशयः ॥ ३ ॥ उभाभ्यामपि रूपाभ्यां व्याप्य विश्वमिदं स्थितः । लघुर्ऋद्धिर्गुरुर्बुद्धिरिति सिद्धिद्वयान्वितः ॥ ४ ॥ गणा अष्टौ ततोऽप्यष्टावभवत्परमेश्वरः । गणे वर्णत्रये बीजं गणेशस्य प्रतिष्ठितम् ॥ ५ ॥ अथर्वशीर्षतो ज्ञेयं नात्र तस्यास्ति विस्तरः । वर्णत्रयं मेलयित्वा वाचं धत्तेति सुन्दरीम् ॥ ६ ॥ लघुर्वाऽस्तु गुरुर्वाऽस्तु सा सिद्धिस्तस्य चाग्रतः । कचिदेका कचिद्युग्मं तिरोभूता च कुत्रचित् ॥ ७ ॥ सिद्धिर्वागीश्वरं देवं न मुञ्चति कदाचन । न मुञ्चति च तां सिद्धिं वागीशः परमेश्वरः ॥ ८ ॥ ऋद्धिबुद्धी ईशसिद्धी अविनाभावमाश्रितौ । गणे गणाद्बहिश्चापि स्थिते एते सनातने ॥ ९ ॥ अर्थात्मापि च शब्दात्मा परमात्मा सनातनः । उपासितश्च विज्ञातो ध्यातो विघ्नहरः प्रभुः ॥ १० ॥ परमं मङ्गलं मत्वा वक्त्रं गजनिभं भजेत् । गजान्तं मङ्गलं लोके तद्ध्यानं मङ्गलप्रदम् ॥ ११ ॥ ॐकाररूपं तद्वक्त्रमिति वा मङ्गलं परम् । जगद्वशीकारशौण्डस्ततः सिन्दूरसंनिभः ॥ १२ ॥ आनन्दतुन्दिलत्वेन तुन्दिलं तस्य तद्वपुः । चतुर्भुजैस्तु संधत्ते पुरुषार्थचतुष्टयम् ॥ १३ ॥ ऋद्धिसिद्धी पार्श्वगते एवं ध्येयो गजाननः । ऋद्धिं सिद्धिं च लभते वेदपारंगतो भवेत् ॥ १४ ॥ शब्दार्थरूपं रूपं तु विज्ञेयमधिदैवतम् । अवतारोऽधिभूतं च प्रत्यगाध्यात्ममुच्यते ॥ १५ ॥ अधिदैवं जगद्बीजं द्वितीयो नगजासुतः । देहद्वयनियन्ता तु तृतीयः परिकीर्तितः ॥ १६ ॥ द्वितीयोपासनासिद्धस्तृतीयः प्रथमो भवेत् । पुराणं गाणपं प्रोक्तं श्रुतिसंघोपबृंहितम् ॥ १७ ॥ इत्थं सर्वपुराणानि जगद्बीजनिरूपणात् । प्रक्रियाभेदभिन्नानि तेषां वाक्यैकवाक्यता ॥ १८ ॥ शिवं विष्णुं रविं दुर्गां गणपं वा यथे-

प्सितम्। सर्वांसानं परं बुद्ध्वा कृतार्थां नात्र संशयः ॥ १९ ॥ इतिहासास्तु विज्ञेया विद्याया लाभहेतवः। इमां विद्यामधीयानः श्रेयः प्रेयश्च विन्दति ॥ २० ॥ एवं श्रीव्यासदेवेन प्रक्रियाणां प्रभेदतः। अधिकारिप्रभेदाच्च वस्तु चैकं निरूपितम् ॥ २१ ॥ उपासनं च विज्ञानं फलं कर्माधिकारिणः। निरूपिताः श्रीव्यासेन न विरोधोस्ति कश्चन ॥ २२ ॥ प्रतिश्लोकं धर्मशास्त्रं नीतिः प्रत्यक्षरं तथा। तिरस्कुर्वन्ति पुराणं तत्को विवेको विचार्यताम् ॥ २३ ॥ प्रतिमन्त्रं परं ब्रह्म ब्राह्मणानां गृहे गृहे। तिरस्कुर्वन्त्यपि तं वेदं को विवेको विचार्यताम् ॥ २४ ॥ प्रतिमन्त्रं महासिद्धिः प्रतिकर्म च सा तथा। तिरस्कुर्वन्त्यपि तत्तन्त्रं को विवेको विचार्यताम् ॥ २५ ॥ समन्वयाल्लक्षणस्य ब्रह्मत्वं वक्ति हि श्रुतिः। तिरस्कुर्वन्त्यपि तत्तत्त्वं को विवेको विचार्यताम् ॥ २६ ॥ तत्त्वं नोत्पद्यते किंचिदतत्त्वं नैव जायते। अङ्गीकुर्वन्ति यत्नेन को विवेको विचार्यताम् ॥ २७ ॥ किं तेन बहुनोक्तेन श्रुतेन श्रावितेन वा। एतावानेव सिद्धान्तो व्यासस्यापि श्रुतेरपि ॥ २८ ॥ परोक्षोपि च विश्वस्यो यदि स्याच्छास्त्रसंमतः। अपरोक्षो न विश्वस्यो यदि तद्बाधहेतवः ॥ २९ ॥ शास्त्राब्धिः कातिगम्भीरः काल्पा दृष्टिः क तत्तलम्। क सिद्धान्तमणेर्लाभः क साफल्यं वपुष्मतः ॥ ३० ॥ केचिद्भोगेन मन्यन्ते जीवितेनापि केचन। पराक्रमेण केचित्तु विनयेनापि केचन ॥ ३१ ॥ प्रतिष्ठयैव केचित्तु मदेनैवेति केचन। मन्यन्ते सफलं जन्म तन्नेति ब्रह्मवादिनः ॥ ३२ ॥ तज्जन्म यत्र शास्त्रार्थो यथार्थमवगाहितः। सा मृतिर्यत्र कर्तव्यं न किंचिदवशिष्यते ॥ ३३ ॥ तच्च शास्त्रेणेति बुद्धिराचार्यस्य जगद्गुरोः। मन्वानस्तन्मतं राजा शास्त्रं पालयते बहु ॥ ३४ ॥ तेन वर्णाश्रमाचाराः पालिता एव मार्गतः। सशास्त्रं तेन विज्ञानं तेन प्राप्यं परं पदम् ॥ ३५ ॥ सशास्त्रं दर्शनं तत्तु यदशास्त्रदशामयम्। विश्वं लोकयेत कुत्रापि तेनैव सफलं जनुः

॥ ३६ ॥ आरोहमवरोहं वा समिच्छन्ति जना इमे । तावुभौ संपरित्यज्य मुक्तः कोऽपि विराजते ॥ ३७ ॥ अशास्त्रो मलिनो देशः सशास्त्रो यत निर्मलः । अनित्यौ तावुभौ त्यक्त्वा मुक्त एको विराजते ॥ ३८ ॥ इन्द्रजालं समालोक्य बाला मुह्यन्ति नो बुधाः । सज्जन्तेऽपि च केचित्तु त्यक्त्वा मुक्तो विराजते ॥ ३९ ॥ मृगा मृगजलं पीत्वा यदि संप्राप्ततृप्तयः । किं गाङ्गमम्बु पास्यन्ति यामुनं वा सुशीतलम् ॥ ४० ॥ परीक्षाक्रममादाय परीक्ष्येत यदा जगत् । तदा जगत्प्रसीदेत प्रसीदेत परीक्षकः ॥ ४१ ॥ परीक्षकं सुप्रसन्नं कृत्वा विश्वं निवर्तते । परीक्षकस्य सा तृप्तिरनिवर्त्या महासनः ॥ ४२ ॥ इत्थं गुह्यतमं शास्त्रं राज्ञाचार्येण पालितम् । मिथः शोभास्पदं भूत्वा राजेत त्रयमद्भुतम् ॥ ४३ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे निर्विघ्नफलं नाम दशमोऽध्यायः ॥ १० ॥

# मूर्तिपूजाबीजकथनं नामाध्यायः ॥ ११ ॥

अथ प्रासादरचनाहेतून्वच्मि समासतः । यान्कृत्वा मोदते प्राज्ञः स्वाभिप्रायं च दर्शयेत् ॥ १ ॥ स्वसिद्धान्तविज्ञानं यथा स्यादधिकारिषु । इति यत्नेन रचिताः प्रासादाः पारदर्शिभिः ॥ २॥ प्रतिभूतं शिवो ज्ञेयस्तत्रास्ति श्रुतिशासनम् । इति सिद्धान्तमारूढः शिवालयमकल्पयत् ॥ ३ ॥ प्रतिभूतं विष्णुरिति तत्रास्ति श्रुतिशासनम् । इति सिद्धान्तमारूढो विष्ण्वालयमकल्पयत् ॥ ४ ॥ प्रतिभूतं सूर्य इति तत्रास्ति श्रुतिशासनम् । इति सिद्धान्तमारूढः सूर्यालयमकल्पयत् ॥ ५ ॥ प्रतिभूतं शक्तिरिति तत्रास्ति श्रुतिशासनम् । इति सिद्धान्तमारूढः शक्त्यालयमकल्पयत् ॥ ६ ॥ प्रतिभूतं गणाधीशस्तत्रास्ति श्रुतिशासनम् । इति सिद्धान्तमारूढस्तदालयमकल्पयत् ॥ ७ ॥ एकात्मानः पञ्च देवास्तदा श्रुतिसमन्वयः । इति सिद्धान्तमारूढः पञ्चालयमकल्पयत् ॥ ८ ॥ उपासते मिथश्चैते

तस्मादन्योन्यरूपता। उपासा नाम वै मुख्या भाव इत्युच्यते बुधैः ॥ ९ ॥ अनात्मनि स्याद्वैमुख्यं तच्च नात्मनि युज्यते। सांमुख्यमेव पञ्चानां तस्मादेकात्मता मता ॥ १० ॥ यथेन्द्रियाणि विषयानेकात्मत्वादुपासते। भिन्नात्मत्वे तु वैमुख्यमिन्द्रियेष्वेव दृश्यते ॥ ११ ॥ पञ्चान्यतम एकोऽपि पञ्चपूजाफलप्रदः। तस्मादेकैकपक्षोऽपि प्रासादानां प्रशस्यते ॥ १२ ॥ यैर्यैर्गुणैरुपास्यत्वं तथा विग्रहकल्पना। पुंरूपङ्गात्मादिभेदश्च वर्णवाहनकल्पना ॥ १३ ॥ यथा सृष्टिक्रमो यस्य तथा यन्त्रादिकल्पना। तथा तथा फलं तत्र कल्पितं शास्त्रपारगैः ॥ १४ ॥ स्वतन्त्रः सर्वशक्तिश्च यथैवोपास्यते जनैः। तथैव भाति दत्ते च फलं नास्त्यत्र संशयः ॥ १५ ॥ अतो विग्रहनानात्वं कल्पनानात्वमप्युत। कामभेदादिदं सर्वं परमात्मनि युज्यते ॥ १६ ॥ इत्थं चोपासनामार्गः प्रवृत्तः संप्रदायतः। गायत्र्यादिरयं मार्गः प्रणवान्त उदाहृतः ॥ १७ ॥ वाग्भवादिश्च मार्गोऽन्यः प्रासादान्त उदाहृतः। अत्रैवान्तर्भविष्यन्ति मार्गा अन्ये सहस्रशः ॥ १८ ॥ एवं चोपासनासिद्धो ज्ञानमार्गाधिकारवान्। ज्ञानं च तत्तु विज्ञेयं यत्र नैवास्ति किंचन ॥ १९ ॥ सर्वेऽपि कलहास्तत्र यत्र स्याद्भेदकल्पना। अतश्चोपासकाः सर्वे मिथः कलहभाषिणः ॥ २० ॥ अविज्ञाते मूलतत्त्वे किं फलं कलहं विना। विज्ञाते मूलतत्त्वे तु शान्तिरेवावशिष्यते ॥ २१ ॥ तस्मादुपासकाः सर्वे स्वोपासामूलचिन्तनम्। कुर्वन्त एव मुच्यन्ते शाम्यन्ति कलहा अपि ॥ २२ ॥ इत्थं चोपासनामार्गो ज्ञात्वा येन प्रवर्तितः। स मूलपुरुषो वन्द्यः परमात्मा सनातनः ॥ २३ ॥ ज्ञात्वा प्रासादरचनां कुर्वीत मतिमान्नरः। तत्रैव देवसांनिध्यं ज्ञानं देव इति श्रुतेः ॥ २४ ॥ इदं शास्त्रमधीयानः कलिदोषाद्विमुच्यते। जानाति जगतस्तत्त्वं शास्त्रतत्त्वं च बुद्धिमान् ॥ २५ ॥

इति श्रीकृष्णभिक्षुविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे मूर्तिपूजाबीजकथनं नामैकादशोऽध्यायः ॥ ११ ॥

# धर्मप्रवृत्तिस्थानकथनं नामाध्यायः ॥१२॥

गेहे गेहे पुरोधास्तु चातुर्वर्ण्यस्य दृश्यते । स च प्रतिनिधिस्तस्य यो वैदिकपथेश्वरः ॥ १ ॥ स च प्रष्टव्य आचार्यः सर्वज्ञपदमाश्रितः । गेहे गेहे महायज्ञाः संस्कारा अपि वैदिकाः ॥ २ ॥ अविलुप्ता विलुप्ता वा विलोपे शिक्ष्यता तत्र । विलोपहेतुर्वक्तव्योऽन्यथा दण्डार्हता द्वयोः ॥ ३ ॥ आलस्यं यजमानस्य किमालस्यं पुरोधसः । कुर्वीतैवाप्रसादेन मिथ आलस्ययापनम् ॥ ४ ॥ न शृणोति यदा चैको द्वौ वा दण्डार्हता द्वयोः । तत्रत्यशिष्टैर्विज्ञेया न चेत्पीठे निवेदयेत् ॥ ५ ॥ धर्माधर्मविचाराय पीठेऽस्त्येवाधिकारिता । विज्ञापनाधिकारो हि चातुर्वर्ण्येऽपि तिष्ठति ॥ ६ ॥ धर्मस्य वा ब्रह्मणो वा जिज्ञासा तत्र तत्र हि । पुरोहितैर्वा शिष्टैर्वा पूरणीयाऽधिकारिणाम् ॥ ७ ॥ तदभावे तु पीठस्थैराचार्यैः क्रियते खलु । एतदेव हि पीठस्य कर्मेति विनिगद्यते ॥ ८ ॥ अयाजनेन याज्यानामयाज्यानां च याजनैः । पुरोधा दण्ड्यतामेति त्याज्यतामपि तत्र हि ॥ ९ ॥ पौरोहित्यं चेशकर्म गीतासूक्तं परासना । पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ॥१०॥ पुरोहितत्वं च मुख्यं पीठे सर्वज्ञतास्पदे । निहितं तद्ब्राह्मणेषु तथैवाचार्यतापि च ॥ ११ ॥ यजमानत्वं च मुख्यमीशे सर्वप्रवर्तके । जीवेषु निहितं तत्तु शिवस्याष्टममूर्तिषु ॥१२॥ पौरोहित्यं याजमान्यं ब्राह्मणेषु स्थितं द्वयम् । अन्यत्र यजमानत्वं केवलं त्रिषु संमतम् ॥ १३ ॥ मिथः पोषकतां यातं लोके वर्णचतुष्टयम् । मिथः पोषकता सा तु धर्मेण च धनेन ॥ १४ ॥ आद्येन कथ्यते धर्मो दीयतेपि त्रिभिर्वसु । पूज्यपूजकतां याता दीप्यते मानुषी तनुः ॥ १५ ॥ मिथः पूजारक्ष-

---

१ धर्माधर्मविचाराय शिष्टैः पीठोऽस्ति कल्पितः । आलस्यं पीठनाथे चेद्दृश्यः सोपि यथोचितमित्यप्यचिंतमत्र वक्तव्यम्.

कस्तु जगत्पूज्य इति स्मृतः । स जगद्गुरुतां यातः श्रीमच्छङ्करभारती ॥ १६ ॥ तत्पीठस्थैः प्रतिदिनं विचार्य निजकर्म हि । तेनैधेत प्रतिष्ठा श्रीर्यशो वित्तं बलं मही ॥ १७ ॥ सुदर्शनं नीतिशास्त्रं रक्षा वैदिकपद्धतेः । शिक्षा सर्वमनुष्याणां कुक्षिंभरनरान्विना ॥ १८ ॥ दुर्दर्शनं छिनत्त्येतच्छास्त्रं नाम्ना सुदर्शनम् । दर्शनं जगतश्चेत्ते सशास्त्रं कुरु दर्शनम् ॥ १९ ॥ यन्न्यूनमधिकं वापि मयोक्तं तत्पराशना । क्षम्येतापि च तुष्येत कृष्णेन गुरुणापि च ॥ २० ॥ एतच्छास्त्रमधीयानो लोकवैदिकतत्त्ववित् । मान्यतामुपयात्येव विदुषां श्रीपुषामपि ॥ २१ ॥ श्रीगुरो तव सेवैषा मया संक्लेशितो बहु । न काचिद्दक्षिणा दत्ताऽनया प्रीणीहि हे प्रभो ॥ २२ ॥ यत्प्रेरितं भगवता हृदयस्थितेन यद्बोधितं च गुरुणा करुणार्णवेन । तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्मसद्मोत्थमोदमकरन्दरसाभिलाषी ॥ ॥ २३ ॥ मातर्देवि सरस्वति प्रतिपदं संक्लेशिताऽस्यन्वहं मूढानां पुरतः प्ररूढतमसां छद्मैकभक्त्यात्मनाम् । मानक्लेशजुषां निमीलितदृशां यन्नर्तिता बुद्धये तत्क्षन्तव्यमयि प्रसन्नहृदये भूयोऽस्तु सन्मङ्गलम् ॥ २४ ॥

इति श्रीमत्कैवल्यधामनिवासिश्रीसच्चिदानन्दसरस्वतीपूज्यपादशिष्यकृष्णानन्दसरस्वतीविरचिते नीतिशास्त्रे धर्मज्ञानाङ्गे धर्मप्रवृत्तिस्थानकथनं नाम द्वादशोऽध्यायः ॥ १२ ॥

## सुदर्शनसन्नाहकथनाध्यायः ॥ १३ ॥

दक्षकन्यां नुमो नित्यमनुयां जज्ञिरे सुताः । भद्राश्च भद्रकर्माणो देवा अमृतबन्धवः ॥ १ ॥ महासरस्वतीं नौमि तुरीयपुरवासिनीम् । क्रीडति ज्ञानदीपैर्या संसारतिमिरापहा ॥ २ ॥ कुलं संपाल्यते धर्मैः संप्रदायैश्च तेऽपि च । विद्यया संप्रदायाश्च सा च ब्राह्मणपुङ्गवैः ॥ ३ ॥ तया संपाद्यते सर्वं ब्राह्मणैर्जगतो हितम् । ब्राह्म-

णानां भुक्तशेषं भुज्यते सकलैरपि ॥ ४ ॥ तस्माद्यथा । कश्यपाय प्रजातन्तुवितानाय महर्षये । नमोऽस्तु यदपत्यैस्तु भुज्यते सकलं जगत् ॥ ५ ॥ अत्रयेऽपि त्रिमूर्तीनां पित्रे शास्त्रे सतांयुजे । नमोऽस्तु यदपत्येन श्रीदत्तेनोद्धृतं जगत् ॥ ६ ॥ भरद्वाजाय मुनये वेदाधीतिरताय ते । नमोऽस्तु यदपत्येन वक्तव्ये शिक्षितं जगत् ॥ ७ ॥ विश्वामित्राय मुनये गायत्रीसिद्धिभागिने । नमोऽस्तु यस्य यत्नेन तपसा शिक्षितं जगत् ॥ ८ ॥ गौतमाय मुनीन्द्राय तपःसिद्धाय योगिने । नमोऽस्तु मानिने मानखण्डनैः शिक्षितं जगत् ॥ ९ ॥ रेणुकाजानये जातु शान्ताय जमदग्नये । नमोऽस्तु यदपत्येन कुठारैः शिक्षितं जगत् ॥ १० ॥ वसिष्ठाय महाज्ञानसागराय च तद्विदे । नमोऽस्तु यस्य वंशेन विद्यया शिक्षितं जगत् ॥ ११ ॥ अरुन्धतीपतिं तस्मादरुन्धति सति प्रिये । वसिष्ठस्य महर्षेस्तु नमोऽस्तु तव पादयोः ॥ १२ ॥ अन्येभ्योऽपि महर्षिभ्यो नमोऽस्तु सततं नम । यद्वंशेषु समृद्धेषु वेदोऽद्यापि च दृश्यते ॥ १३ ॥ तत्र कश्चिद्भरद्वाजकुले वैदिकसंमते । विप्रोऽभूत्तत्त्वजिज्ञासुर्धर्मात्मा तपसां निधिः ॥ १४ ॥ श्रीनृसिंहसरस्वत्याः शिष्योऽसौ द्विजसत्तमः । सायंदेवस्तस्य वंशे दत्तशिष्यत्वमीयुषि ॥ १५ ॥ रायभट्टोऽभवद्विप्रः काश्यां येन मखः कृतः । विद्याधनाभ्यां संपन्नः संतत्यापि च पूरितः ॥ १६ ॥ तस्य पत्नी धर्मशीला सह तेन दिवं ययौ । कनीयांस्तस्य पुत्रोऽभूद्गुरुनाथ इति श्रुतः ॥ १७ ॥ शबर्या यत्र रामाय बदराणि मनीषया । दत्तानि तेन भुक्तानि तत्रासीदतिथिप्रियः ॥ १८ ॥ पम्पानदीनाम पुरे कुमशीकरपालिते । पुत्रपौत्रादिभिः सार्धमविघ्नो नन्दनेष्विव ॥ १९ ॥ ज्येष्ठस्तस्य सुतो रामोऽधुनास्ति तपसांनिधिः । तस्य भार्या जानकीति जाह्नवीति जयेति च ॥ २० ॥ नारायणः पिता यस्याः पटवर्धनपालितम् । जम्बूखण्डं समाश्रित्य तस्थौ वेदविदांवरः ॥ २१ ॥ श्रीरामजान-

कीपुत्रचूडामणिरिति श्रुतः। श्रीनाथपादग्रवणः कृष्णानन्दसरस्वती ॥ २२ ॥ रामानन्दसदानन्दौ सूर्याचन्द्रमसाविव। बभूवतुः पितापुत्रौ तत्कन्यावंशसंभवः ॥ २३ ॥ कृतकृत्योऽपि कर्तव्यं मत्वा कालनिरीक्षणात्। ग्रन्थद्वयमिदं कृत्वार्पयति स्वस्तिहेतवे ॥ २४ ॥ सुदर्शनं नीतिशास्त्रं तथा वैदिकपद्धतिः। यत्र सर्वं शास्त्रगुह्यं प्राय एकीकृतं द्वयोः ॥ २५ ॥ यथा—नीतिवक्त्रा धर्मगर्भा ज्ञानपुच्छा नवास्पदा। शास्त्रशृङ्गा वेदपादा स्वेष्टदोहा नराश्रया ॥ २६ ॥ विद्वद्वत्सा भूपगोपा कुतर्कतृणभक्षिणी। पुराणलोमसंगुप्तस्वाङ्गतन्त्रखुरान्विता ॥ २७ ॥ कैवल्यधामनिलया धर्मत्राणपरायणा। काचिद्धेनुरियं लोके नाम्ना वैदिकपद्धतिः ॥ २८ ॥ दोग्धारं काङ्क्षमाणेव संचरत्यभितो भुवि। कश्चित्पुरुषधौरेयो नूनं धोक्ष्यति तद्रसम् ॥ २९ ॥ तद्रक्षणाय लोकेषु सुदर्शनमिदं महत्। द्वादशारं जरापोहं शास्त्राणां च नृणामपि ॥ ३० ॥ भूयः समुच्यते किंचिद्गुह्यं मानुषतास्पदम्। यद्विज्ञाय नरो नूनं नर एव भविष्यति ॥ ३१ ॥ नरो नयान्वितो मर्त्यो नृनये इति धातुतः। नये प्रतिष्ठितं शास्त्रं नयः शास्त्रे प्रतिष्ठितः ॥ ३२ ॥ वैखर्यामुभयं प्राप्तं वैखरी मानुषास्पदा। कर्तृकर्मक्रियादिभ्यो वैखरी खलु सिद्ध्यति ॥ ३३ ॥ कर्त्रादयः शब्दवाच्याः शब्दमूलानि धातवः। कालेन क्षोभमायान्ति कालः प्रत्ययभूमिजः ॥ ३४ ॥ प्रत्ययोत्थेन सङ्गत्य धातवो बोधयन्ति हि। तदैव वाक्यमित्युक्तमन्यथाऽबद्धमुच्यते ॥ ३५ ॥ तेन सिद्धं सर्ववस्तु कालमाश्रित्य भासते। स च कालस्त्रिधा भाति वर्तमानादिभेदतः ॥ ३६ ॥ भूतो भावी वर्तमानान्निर्णीयेते तदाश्रितौ। पक्षौ पक्षिणमाश्रित्य दक्षिणोत्तरशब्दितौ ॥ ३७ ॥ स एष वर्तमानात्मा भूतभाविगरुद्धरः। सर्वशब्दप्रवृत्तीनामाधारो गरुडो मतः ॥ ३८ ॥ यद्येष वर्तमानात्मा नाभविष्यच्छकुन्तकः। तदा वेदाः शास्त्रसङ्घा लोकोक्तीनां गणास्तथा ॥ ३९ ॥ नाभविष्यन्का॰

लमूलधातूनामप्रयोगतः । तस्माच्छन्दोमये पक्षिण्यास्ते विष्णुरतन्द्रितः ॥ ४० ॥ सदा सन्निहितो ह्येष पक्षिराजो जनुष्मताम् । तस्मात्संनिहितो विष्णुः सर्वेषामपि सर्वदा ॥ ४१ ॥ सदैव वर्तमानस्य भूतं भावि च पश्यतः । विष्णोर्वाहनभूतानि छन्दांसीमानि सर्वशः ॥ ४२ ॥ यावच्छन्दो न व्यचारि तावद्विष्णोः पदं कुतः । सति च्छन्दसि सुस्वस्थे कुतो दूरे परं पदम् ॥ ४३ ॥ स उपास्यः सर्वजनैः सदा सर्वत्र सर्वगः । अश्रद्धयाच्छादितोऽसौ श्रद्धयोद्धाट्यते पुनः ॥ ४४ ॥ श्रद्धा विचारसंभूता विचारः शास्त्रभूमिजः । शास्त्रमीशालवालोत्थमीशः शास्त्रफले स्थितः ॥ ४५ ॥ तस्माच्छास्त्रेषु संमृग्यः श्रद्धयोपास्य एव हि । उपासया सिद्धिमाप्तः शास्त्रे संलभ्यते हरिः ॥ ४६ ॥ शास्त्रं तदेव यत्रास्ति विधिर्वाथ निषेधनम् । कर्ता कर्म च करणं संप्रदानं तथा विधिः ॥ ४७ ॥ संबन्धश्चाधिकरणं ज्ञानं ज्ञेयं च साधनम् । निरूपितं समीचीनं न कपोलप्रकल्पनम् ॥ ४८ ॥ तत्र सर्वे धातवोऽमी कालेन सह सर्वतः । बोधयन्ति जगज्जालं कालेन कलितं सदा ॥ ४९ ॥ स कालात्मा महादेवो धर्मतुष्टश्च कष्टजित् । प्रोच्यते विबुधैः सिद्धैः फलितः पुष्पितः सदा ॥ ५० ॥ यदि कालस्तर्हि वाणी यदि सा तर्हि शासनम् । यदि तत्तर्हि शास्ताऽपि सर्वज्ञोभ्युपगम्यताम् ॥ ५१ ॥ तस्येदं शासनं वेदः सर्वलक्षणलक्षितः । आकूतं तस्य चैतत्तु श्रूयतां मतिमत्तमैः ॥ ५२ ॥ इदमस्ति परं नास्तीत्यन्धंतमपथः स्मृतः । इदमस्ति परं चास्ति ज्ञानवृद्धिपथः स्मृतः ॥ ५३ ॥ इदं नास्ति परं नास्ति मोक्षप्राप्तिपथः स्मृतः । पूर्वः पाशवसामान्योऽपरौ शास्त्रैकहेतुकौ ॥ ५४ ॥ न तावानेव संसारो यावत्स्वस्यास्ति दर्शनम् । न सत्य एव संसारो यतो दृष्टिपथं गतः ॥ ५५ ॥ व्युत्पत्तिसिद्धये शास्त्रं यया सर्वं प्रदृश्यते । यया सर्वं बाध्यते च बुध्यते सुखमुत्तमम् ॥५६॥ अनुन्मेषमनस्तं च सुखमुत्तममुच्यते । शास्त्रव्युत्पत्ति-

संसिद्धमिति वेदविदो विदुः ॥ ५७ ॥ तस्माच्छास्त्रं दिव्यदृष्टिप्रापकं मानुषा भुवि। पालयन्तु सुधाभाण्डमिति शङ्करशासनम् ॥ ५८ ॥ जगदेतत्सुधाभाण्डं शास्त्रसंपूरितं यदि। यदि रिक्तं तेन तदा किं तन्नगरमुच्यते ॥ ५९ ॥ तदेतच्च सुधाभाण्डं कृष्णेन परमात्मना। श्रीशङ्करेणापि गुप्तं तस्मान्नगरमुच्यते ॥ ६० ॥ जगच्चक्षुस्त्रयीमूर्तिः पापहा तिमिरापहा। जगद्रक्षैकचरितः सूर्यो यच्छतु मङ्गलम् ॥ ६१ ॥ जगदाप्यायनीशक्तिरोपधीशः सुधाकरः। जगद्रक्षैकचरितो विधुर्यच्छतु मङ्गलम् ॥ ६२ ॥ भूमेर्बलं धनं वृष्टिं यच्छन्सामगपोषकः। जगद्रक्षैकचरितो भौमो यच्छतु मङ्गलम् ॥ ६३ ॥ ज्ञानं च नीतिनैपुण्यं ददाथर्वणेश्वरः। जगद्रक्षैकचरितो बुधो यच्छतु मङ्गलम् ॥ ६४ ॥ सद्विद्यां जीवितं दीर्घं ददानो बह्वृचां प्रभुः। जगद्रक्षैकचरितो गुरुर्यच्छतु मङ्गलम् ॥ ६५ ॥ वीर्यं तेजो धृतिं दाक्ष्यं दधानो यजुषां प्रभुः। जगद्रक्षैकचरितः शुक्रो यच्छतु मङ्गलम् ॥ ६६ ॥ स्थैर्यमुत्कटतां सत्यं गाम्भीर्यमपि संदिशन्। जगद्रक्षैकचरितः सौरिर्यच्छतु मङ्गलम् ॥ ६७ ॥ यशो मानं वाक्पटुत्वं कुलकेतुत्वमादिशन्। जगद्रक्षैकचरितः केतुर्यच्छतु मङ्गलम् ॥ ६८ ॥ अमृतं भगवच्चिन्तां यशो भूतिं च भूषयन्। जगद्रक्षैकचरितो राहुर्यच्छतु मङ्गलम् ॥ ६९ ॥ ये हि यत्राधिकारेषु नियुक्ताः परमात्मना। ते चेत्तत्रैव संनद्धा नृणां सपदि मङ्गलम् ॥ ७० ॥ मङ्गलं यादवेन्द्राय मङ्गलं ब्रह्मवादिने। मङ्गलं स्वस्तिहस्ताय गृहाणैतत्सुदर्शनम् ॥ ७१ ॥ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ ७२ ॥ लज्जा मेधा स्मृतिः प्रज्ञा वाणी नियतिरित्यपि। गीता वेदेषु तन्त्रेषु जगद्धात्र्यै नमो नमः ॥ ७३ ॥ शिवः शमलशातनः शमनशासनः शाश्वतः शशाङ्ककृतशेखरः शरधिभूतरत्नाकरः। शरीकृतहरिर्गिरीकृतधनुः स्थिरीभूतपाद्धरीकृतरथोद्धतः सपदि पातु विश्वंभरः

॥ ७४ ॥ कृष्णः कलिमलं हन्तुं नरसारथ्यमन्वगात् । भीष्मे भीष्मत्वमापन्ने चक्रहस्तो जनार्दनः ॥ ७५ ॥ श्रीशङ्करः सकलवेदविदां महर्षिर्येनोद्धृतं श्रुतिरहस्यमखण्डमेकम् । वर्णाश्रमादिविविधागममार्गरक्षाऽकारि स्मरामि तमहं जगदेकनाथम् ॥ ७६ ॥ अशुक्लकृष्णकर्मभ्यो महद्भ्योऽस्तु नमो मम । अकर्तृभ्योऽपि कर्तृभ्यः प्रसङ्गे समुपस्थिते ॥ ७७ ॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहं गङ्गां भवानीं मणिकर्णिकाम् ॥ ७८ ॥ काशिके काऽसि भासि त्वं कैलासः कामधुङ्मणिः । कल्पद्रुमो भवानी वा सर्वाङ्गशिवमण्डिता ॥ ७९ ॥ कैवल्यनाथ भगवन् क्षमस्व मम साहसम् । त्वत्पादमवलम्ब्यापि चिन्तितं जगदद्भुतम् ॥ ८० ॥ सर्व एष प्रयासो मे वृद्धानां तृप्तिहेतवे । तेषु तुष्टेषु बालानां सुखमत्र परेऽह्नि च ॥ ८१ ॥ मिताक्षरमिदं शास्त्रमधीयानोऽमितार्थवित् । मितोऽपि शब्दः संधत्तेऽमितार्थं बुद्धिमज्जने ॥ ८२ ॥ इदं शास्त्रमधीयानो नाकपृष्ठे महीयते । नाकं करोति धर्मात्मा प्राप्नोति सुखसंपदम् ॥ ८३ ॥ रामान्कृष्णं शङ्करं च विश्वामित्रं भगीरथम् । त्रिविक्रमं नृसिंहं च स्मृत्वाद्यन्ते पठेदिदम् ॥ ८४ ॥ महाकालीं महालक्ष्मीं महापूर्वां सरस्वतीम् । ईशशक्तीर्नमस्यामि याभिरीशो विराजते ॥ ८५ ॥ राजा नन्दतु सुप्रजस्तमनु सा राजन्वती नन्दतु नन्दन्त्वार्षकथाः प्रमाणसरणिश्रेणीयमानाः सताम् । वेदो नन्दतु वैदिकाश्चिरतरं नन्दतु नन्दतु च श्रीमद्वैदिकपद्धतौ द्विजवरा वर्षीयसा श्रेयसा ॥ ८६ ॥ नमोऽस्तु जगते तुभ्यं ज्ञातं तत्त्वं तवाधुना । यदि त्वमीदृशं न स्यात्तदा मोक्षस्य का कथा ॥ ८७ ॥ सुदर्शनसहस्रार द्वादशार नमोऽस्तु ते । जरातीत जगद्रक्ष करे तिष्ठ हरेरपि ॥ ८८ ॥ मोहो मृत्युस्तदपोहोऽमरत्वं नाभावात्मा मृत्युरस्ति प्रसिद्धः । भवात्माऽसौ सच्चिदानन्दनामा सर्वैः शास्त्रैः स्तूयते गाढगाढम् ॥ ८९ ॥ अच्युतः क्षमते नूनं मम च्युतिपरम्प-

राम् । अच्युते तु च्युतिर्नेष्टा क्षमा हि महतां गुणः ॥ ९० ॥ पृथ्वीभाग्यं भारतखण्डं जगदण्डे खण्डे खण्डे सन्ति जना यद्यपि विज्ञाः । शास्त्रप्रान्तं यत्र हि मर्त्येष्वपि दृष्टं भाग्यं तस्याप्येकः शङ्करगुरुनाथः ॥ ९१ ॥ जातो यो वसुदेवमेघपृषता श्रीदेवकीकुक्षिसच्छुक्तौ मुक्तमणिः प्रशस्तसरणिः सर्वप्रियः श्यामलः । गोपीभिर्हृदि राजभिः शिरसि यः सत्पण्डितैः पुस्तके मात्राङ्के रसिकैः श्रुतौ च विधृतः सोस्तु स्थिरश्रेयसे ॥ ९२ ॥ बाणचन्द्रवसुक्ष्माब्दे शालिवाहमहीपतेः । उदभून्मोहमय्यां तु मोहच्छेदि सुदर्शनम् ॥ ९३ ॥ इति श्रीकृष्णानन्दसरस्वतीविरचिते नीतिशास्त्रे धर्मज्ञानाङ्के सुदर्शनसन्नाहो नाम त्रयोदशोऽध्यायः संपूर्णः ॥ १३ ॥

मोहमय्यां गिरिग्रामे सुखवाट्यां सुशीतले ।
मुरारिवर्मणः सौधे नीतिशास्त्रमिदं कृतम् ॥ १ ॥

इति श्रीमत्कैवल्यनिवासिश्रीसच्चिदानन्दसरस्वतीपूज्यपादशिष्यश्रीमत्कृष्णानन्दसरस्वतीकृतौ नीतिशास्त्रं ज्ञानाङ्कं संपूर्णम् ॥

श्रीमत्परमहंसकृष्णानन्दसरस्वतीविरचिता

# विचारत्रयी ।

—————⊙—————

## धर्मविचारः ॥ ३ ॥

## वैदिकपद्धतिः ।

### ( नवपदी[1] )

जय सच्चिदानन्द ।

### नेत्रोन्मीलनम् प्रथमं पदम् ।

सहस्रमूर्धा सर्वात्मा सहस्राक्षः सहस्रपात् ।
दृष्टिं ददातु भगवाञ्छास्त्रतर्कविनिर्णये ॥ १ ॥

तर्केणाप्युपगच्छन्ति पशवः । शास्त्रेणाप्युपगच्छन्ति मनुष्याः । तत्र तर्को व्यामोह इत्येके शास्त्रनिष्ठाः । शास्त्रं व्यामोह इत्यपरे तर्कनिष्ठाः । शास्त्रं स्वतःप्रमाणं । सत्यनुकूलतर्के बलवदिति शास्त्रनिष्ठानां मतं । तर्कः स्वतःप्रमाणम् । सत्यनुकूले शास्त्रे बलवानिति तर्कनिष्ठानां मतम् । सानुकूलतर्कं शास्त्रं बलवत् सानुकूलशास्त्रस्तर्को बलवानिति मतद्वयेऽपि बलवत्त्वहेतुरन्यतरयोः शेषशेषिभाव[2] उभयोः संमतः । तत्र कः पक्षः श्रेयानिति संशये

---

१ अत्र प्रतिपाद्यनवपदक्रमः—नेत्रोन्मीलनम् १, वेदाधिकारनिर्णयः २, वेदशल्योद्धारः ३, वेदार्थविमर्शनी ४, द्विजलिङ्गनिर्णयः ५, गायत्रीस्तोत्रम् ६, तप्तचक्रमीमांसा ७, स्त्रीरत्नप्रस्तावः ८, शिवहृदयंगमविरुदावलिस्तोत्रम् ९, अन्तेपरिकरः परिशिष्टमिति. २ उपकार्योपकारकभावः.

तर्कस्य प्रमाणान्तरसापेक्षत्वनिश्चयादन्याधीनं प्रामाण्यं। शास्त्रस्य बलार्थं तर्कसापेक्षत्वेपि, न प्रामाण्यार्थं (तत्)। अशास्त्रत्वापत्तेः। यतः प्रतिपुरुषं तर्का भिद्यन्ते, न शास्त्रम्। अन्यथा शास्त्रतर्कयोरेकत्वापत्तेः सर्वं वादग्रस्तं सर्वं निर्विवादमिति शिक्षामार्गोच्छेदप्रसङ्गः, सर्वेषामविशेषात्, कः पुरुपार्थस्तर्कपरायणस्य। शास्त्रपरायणस्य फलं तु यथाधिकारं मार्गारोहो यथाशास्त्रं फलावाप्तिश्च। तर्हि किं शास्त्रं, तर्हि कस्तर्कः। शास्त्रं नाम शास्तुर्वचनं सानुग्रहं। कः शास्ता[1]। यः सृजति यत्, स तच्छास्त्यनुगृह्णाति च। कः सृजति। यो वक्त्यहं सृजामीति[2]। को वक्ति। ईश्वरः। कुत्र वक्ति। शास्त्रे। तर्हि कुत्रेश्वरः। कुत्र नास्ति। न कुत्रचित्। इदं कस्मात्। अनुपलब्धेः। नेदं युक्तं तवासर्वज्ञत्वात्। सर्वज्ञस्येदं वचनं न कुत्रचिदिति। यदि त्वद्दृष्टे प्रदेशे न स्यात्तर्ह्यन्यत्र स्यात्। तर्हि शशशृङ्गमपि स्यात्कुत्रचित्। न स्यात् तद्ग्राहकप्रमाणानुपलब्धेः। यतः प्रमाणानि षडेव। नन्वेकमेव प्रत्यक्षं प्रमाणं। न तथा। एकमेव प्रमाणमिति वचनस्यापि तव प्रामाण्याङ्गीकारात्। तर्कप्रामाण्याङ्गीकाराच्च। तर्हि किमीशे प्रमाणं। शास्त्रमिति ब्रूमः। तदेव तु मृग्यते। चेत्तदुपलभ्यते भरतखण्डे। किं तत्। वेदः सः। स न मन्यते इति चेत्किं बालोसि। यन्मृग्यते तदुपलभ्यते परंतु न मन्यते इति बालवचनम्।

ननु यथात्र वेदस्तथान्यत्रापि खण्डे शास्त्रमुपलभ्यते। यद्युपलभ्यते तत्त्वया मन्यते न वा। मन्यते चेत्तर्कदौर्बल्यं। न चेद्बालत्वं। तदेव मन्यते चेत्तत्रैव प्रतिपादित ईश्वरस्तव संमतश्च तस्यैवेदं वचनं वेदो नामेति। तर्हि म्लेच्छशास्त्राणामपि प्रामाण्यापत्तिः इति चेच्छास्त्रत्वे प्रामाण्यं केन वार्येत। तर्हि म्लेच्छतन्त्रस्य

१ शास्तेति अप्तृन्तितिसूत्रे प्रशास्तृणामिति पाणिनिः। २ आंभृणिसूक्ते।

शास्त्रत्वापत्तिः । कथं तत् । ईश्वरोक्तत्वाविशेषात् । अस्तु शास्त्रत्वं, का हानिः । वैदिकम्लेच्छयोः समत्वापत्तिः । न । विषमत्वं च । शास्त्राधिकारिषु वैषम्यनियमात् । यतोऽधिकारिभेदाद्भिन्नं शास्त्रं । यतो नैकस्मिन्कर्मणि ज्ञाने वा सर्वेप्यधिकारिणो दृश्यन्ते मानुषेषु पशुषु वान्यत्र वा । तस्माद्यत्र शास्त्रच्युतानामधिकारस्तत्र शास्त्रं । किमु वक्तव्यं बलात्कारेण छद्मना वान्यशास्त्रनिष्ठां प्रच्याव्यान्यशास्त्रे प्रवेशनं यत्र प्रतिपादितं तन्न शास्त्रमिति । वेदस्तु न तथा । यतोनधिकारिकर्णगोचरोपि न कदाचिद्भवितुमर्हति । कुतस्तत्र बलात्कारश्छद्म वा । तस्माद्वेद एव शास्त्रं तदविरोधीनि महर्षिप्रणीतान्यपि शास्त्राणि । यो हि वेदः श्रोतृवक्त्रोर्धर्मं प्रशास्ति तदतिक्रमे वक्तुर्जिह्वाच्छेदः श्रोतुः त्रपुजतुरसाभ्यां कर्णपूरणं । तस्मादत्र पैशुन्यापराधो निर्णीयते । तस्मात्सकलजनासाधारणत्वात् वस्तुनिर्णायकत्वाद्यथाधिकारं मार्गप्रवर्तकत्वादीशमूलत्वादतिगम्भीरत्वात्संप्रदायानारूढदुर्ज्ञेयत्वात्सकलतैर्थिकानां स्वस्वतन्त्रप्रामाण्ये दृष्टान्तीकरणाद्वेद एव शास्त्रमिति सिद्धं । वदतु भवांस्तर्कं । तर्को नाम संभावना, सकलसिद्धः । किमसौ प्रमाणं ॥ प्रमाणं; यदि प्रमाणान्तरसंवादः । तर्हि यत्संवादमभिलषसि तदेव प्रमाणं, न तर्कः । आबाधमिति चेद्बाधः सुस्थः । यतो बाधोपि तर्क्येत भयापगमस्य प्रमाणान्तरसाध्यत्वात् । तस्मात्तर्कः शेषः, शेषि शास्त्रमिति सिद्धं । शास्त्रं स्वतःप्रमाणं, तन्मूलस्तर्कोपि शास्त्रं, शास्त्रानुग्रहात् । तर्कः स्वतो न प्रमाणं, तन्मूलं शास्त्रमपि तर्कः, प्रमाणान्तरसापेक्षत्वात् इति शास्त्रतर्कयोर्निष्कर्षः ।

ननु अस्त्वयं निष्कर्षस्तव गेहे परंतु शास्त्रप्रणेतारमीशं न पश्याम इति चेत्, युक्तं तत् । यथा लोकसंस्काराभावे लौकिकं न पश्यति तथा शास्त्रसंस्काराभावे शास्त्रीयं । शास्त्रसंस्कारवन्तः पश्यन्ति शास्त्रीयं निर्विवादं । यथाञ्जनसंस्कृतचक्षुषो भूगत-

निधिं। ईशो जीवो जगत् धर्मस्तत्त्वमिति पञ्च विषया यत्र निर्णीयन्ते तच्छास्त्रं। अत्रैवान्येषामन्तर्भावः। ननु शास्त्रं भरतखण्डे एव दृश्यते नान्यत्रेति चेदिदमेव निदर्शनं भरतखण्डो विवेकभूयिष्ठ इति। यतो विवेकिषु शास्त्रं, तैरेव पाल्यते यतः। अविवेकिभिस्तर्कः पाल्यते स्वमनोरथानुरूपत्वसंभवात्। उपन्यस्ताः पञ्च शास्त्रैकविषया यथेच्छमूह्यन्ते त्यज्यन्ते च तार्किकैस्ततो मतभेदः। तन्निरासोपायस्तु मिथोव्याहतिरित्यनवद्यं। ननु नाद्रियते शास्त्रमिति चेत्किं सर्वज्ञो भूत्वा वदस्यसर्वज्ञो वा। तव सर्वज्ञता तु तव यत्नैरेव निर्णीता अनवस्थितप्रज्ञत्वात्। असर्वज्ञश्चेच्छास्त्रं नाद्रियत इति विषमं, तस्य बालादिषु प्रसिद्धत्वात्। यतः शास्त्रं नाम शास्तुर्वचनं, तन्न मन्ये इति वदन् कुत्र दृष्टः। यत्र देशे यस्मिन्वचने शास्त्रत्वग्रहस्तद्देशीयानां तद्वचने श्रद्धा दृष्टचरा बालान्विहाय। तस्मात्तवैकस्य वचनमसमञ्जसं। ननु मादृशाः शास्त्रानादरशरणा बहवः संमतिं यच्छन्ति तस्मादिदमपि पक्षान्तरं शास्त्रानादरणं नाम। किं बहुसंमत्या पक्षान्तरं। यतोन्धानां शतमप्येक एवांधः प्रमाणविरहसाम्यात्। तस्माद्यः प्रमाणमवलम्ब्य गच्छति सोनन्ध इति सांप्रतं। स्वयमसर्वज्ञानां शास्त्रत्यागिनां न पक्षान्तरं भवितुमर्हति, असर्वज्ञत्वप्रतिबन्धादिति मन्तव्यं बुद्धिमता। इदमेव तु जीवस्य जीवत्वं यदसर्वज्ञत्वं। अतः सर्वज्ञमपेक्षन्ते सर्वे जीवा यथार्थप्रतिपत्तये ज्ञानवृद्धये च सर्वज्ञत्वान्तं। सर्वज्ञः परमेश्वरः शास्ति, तस्येदं शासनं वेदो नामाकृत्रिमं वचममनुसंधानपूर्वत्वाभावाद्वक्तुः सर्वज्ञत्वात्। अतएव पाणिनिः कृत्रिमं वचनमनुशास्ति साध्विदमसाध्विदमिति। वेदस्त्वकृत्रिमं वचनं ततः सर्वं साध्विति छन्दसि दृष्टानुविधिः, इति सूत्रितवान्। तस्मादकृत्रिमस्य सर्वज्ञस्या-

१ अन्योन्यदूषितता.

कृत्रिमं वचनमल्पज्ञैः कृत्रिमासाभिमानिभिरवश्यं मन्तव्यं मानुषत्वात् । यतो वचनरहस्यवेत्तारो मानुषा एव दृश्यन्ते नेतरे । तर्हि किमस्माभिः सर्वैर्यथाशास्त्रमेव वर्तितव्यं । वर्तितव्यं निःसंशयं । ज्ञातव्यं च । तर्हि यथाशास्त्रवर्तने दुःखापत्तिरिति चेत्, न किंचिद्दुःखम् । इदं तु तारतम्यं लोकसिद्धम्, अशास्त्रजनबाहुल्ये सशास्त्राणां दुःखम्, सशास्त्रजनबाहुल्येऽशास्त्राणां दुःखमिति । परन्तु प्राप्तं मानुषत्वादिहेतुना सशास्त्रत्वमेव सुखहेतुरिति, प्रमाणत्वाच्छास्त्रस्य । यथा प्रमाणीभूतचक्षुर्हीना न सुखपात्रं । तथा शास्त्रहीना अपि इति युक्ततरम् । ननु विपरीतं दृश्यते, सशास्त्रा दुःखिनः, अशास्त्राः सुखिन इति । सत्यं विपरीतं, विचाराभावात् । प्रवृत्तिरेव कथयति सुखं दुःखं च । किं दुःखी प्रवर्ततेऽन्यो वा । सुखं नाम तृप्तिः, सा च भोगात्पशौ, ज्ञानान्मानवे । ज्ञानं च शास्त्रे । तस्मान्न पूर्वपक्षः समंजसः । किं ज्ञानं सुखं प्रतिवभाति । कः सुखपात्रं प्रमाणहीनः । यत आरण्यकाः पशवोऽपि प्रमाणाधीनसुखाः । अत एव पशुष्वपि प्रमाणवैगुण्ये दुःखिनः, साम्ये समं सुखम् । मानुषे तु यानि पशुसाधारणानि तानि शास्त्रं चेत्यधिकं सुखम् । यतः शास्ति शास्त्रज्ञः शिक्ष्यते च पशुः ।

ननु युक्तमेतद्यच्छास्त्रज्ञैरशास्त्रज्ञः शिक्ष्यत इति, परन्तु शास्त्रमेव तु दुर्लभम् । वेदे शतायुर्लिख्यते, सहस्रं लक्षं चिरमित्यायुः पुराणेषु । तत्र शतमेव दुर्लभं कुतः सहस्रादीति चेत्, साधारणं शतं न्यूनमधिकं वा सनिमित्तमिति ब्रूमः । यथा फलानां प्रायो नियतायुषां लवणादियोगे चिरमभिघातेऽल्पं दृष्टमायुः । तथा प्राणापानादियोगे चिरं तदभिघातेऽल्पमिति वेदे शतशब्दोऽनन्तपरो व्याख्यातो वैदिकैर्वेदपरिनिष्ठितैः । यथा सूर्याचन्द्रमसाभ्यां रात्र्यहनी कालनिर्णयः, तदधीनमायुर्ब्रह्माण्डाभिमानिनः, तथा प्राणापानाभ्यां रात्र्यहनी कालनिर्णयश्च प्राणिनां तदधीनमायुस्त-

दुभयापगमे आयुरपगमः, आयुपस्तद्रूपत्वात्। तज्जमिति पक्षे निमित्तापाये नैमित्तिकस्याप्यपाय इति प्रसिद्धेः। अस्तु प्रासङ्गिकम्, उपपत्तिचिन्तायां शास्त्रप्रामाण्यमव्याहतं न तर्कप्रामाण्यमिति सिद्धम्।

आस्तामेषा कथा, यत इदं भरतखण्डं शास्त्रं प्रमाणं प्रमाणमित्याम्रेडदेवेदृशदशामापन्नं, अनेनैव शास्त्रेण भरतखण्डं दुःखोदधौ पातितं, पुनस्तदेव प्रमाणीकर्तुमुद्यतोसि। यं वेदं भवान् ईशवाणीं वर्णयते तत्कस्यचित्कवेः काव्यं मन्ये निश्चिततरमिति चेत्। नायं निश्चयः श्रेयान्, यतस्तत्र न किञ्चित् कविलिङ्गं लभ्यते। लभ्यते तु परमाप्तलिङ्गं स्थले स्थले, तं कथं त्यजसि, कथमन्यं कल्पयसि कविम्। नायं विचारः किन्तु विरोधः। यथा कयापि रीत्या वेदेऽश्रद्धामुत्पादयामीति तव मनोरथः, यतः साहसमेतत्। किमीश्वर एव वक्ता। सत्यं शतवारम्। तर्हि तमुपलब्धुमिच्छामि। कुत्रास्ति सः। शास्त्र इत्युक्तं प्राक्। तर्हि सा वार्तैव। युक्तमुच्यतेऽज्ञातत्वात्। यतो वेद ईशं प्रदर्शयति न वार्तामात्रं करोति इति वेदस्य मुख्यो व्यापारः। तत्प्रतिपादनायैव शास्त्राणि षट् प्रवृत्तानि। तर्ह्यशुद्धबहुलोपि वेदः शास्त्रमिति मन्तव्यः। मन्तव्यो निःसंशयम्। अशुद्धबहुलं मा वद। शुद्धाशुद्धविचारः कुत्र योग्य इति विचारय। किं लतावक्रिमा सहजसिद्धापि निन्दास्पदं। तस्मात् कृत्रिमे शुद्धाशुद्धविचारः। अकृत्रिमे सर्वमनिन्द्यमिति न्यायः। तर्हि किं वक्ति वेदमीश्वरः। कुतो न वक्ति। अमुखत्वादिति चेत् किं त्वादृशं मन्यसे परमेश्वरम्। यतो मिथोविलक्षणानामनन्तानां निर्माता सर्वेभ्यो विलक्षणः पर्यवस्यति विचारे। किं न कुर्यात् परमेश्वरः। तर्हि कुतो न दृश्यते। सर्वविलक्षणत्वादिति ब्रूमः। कोऽपि पश्यति। पश्यन्ति बहवः। सत्यां सामग्र्यां फलावश्यम्भावनियमात्। सति प्रमा-

णेऽधिकारिणि प्रमातरि च कुतः प्रमेयं न प्रकाशेत । तस्मात् तवापराधोऽयं यच्छास्त्रं त्यजसि, ईश्वरः कुत्रेति भ्रमसि पृच्छसि च ।

ननु स्वयमुत्पद्यते जगत् तस्मात् वृथेश्वराभिमान इति चेत्, बहु सम्पन्नम् । स्वोत्पत्तौ स्वयं स्वतन्त्रमुच्यते तदा स्वोत्पत्तिसमये स्वयमस्ति न वेति स्वयमेव विचारय । अविद्यमानस्य स्वातन्त्र्यं युक्तमुत विद्यमानस्य । सृष्टेः प्राग्विद्यमानं न किंचिदासीद्तस्त- दुत्पादकं कंचनाङ्गीकुरु । तर्ह्यङ्गीकरोमि परमाणून् नित्यान्निरव- यवान्, ततः सृष्टिरुत्पद्यते, ते च कालाधीनतया कदाचिन्मिथो मिलन्ति कदाचिद्विगलन्ति, ततः सृष्ट्याद्युपपत्तिः इति चेत्, काले स्वातन्त्र्यमङ्गीकुर्वता ईशोऽङ्गीकृत एव । यतः स्वातन्त्र्यमेव प्रथम- मीशलक्षणं, न तत्सर्वज्ञं समर्थं विनाऽन्यत्र संभवति । यो हि जानाति स ज्ञापयतीति नियमाद्वत्त्यपि, ततस्तस्यैव वचनं वेदो नामेति प्रमाणमूर्धन्यम् ।

ननु मम तु मतं—भूगोलानि खगोलानि च निर्माय कन्दुका- नीव प्रक्षिप्तानि येन मानेन यथा वेगेन यादृक्सङ्कल्पेन तानि तथैव भ्रमंति परमेश्वरेच्छाया अव्याहतत्वात् स्वतन्त्रस्य यथेच्छ- त्वात् । तत्र भूगोलादीनि भ्रमन्ति, सूर्यगोलः स्थिरः स्थविष्ठत्वात् । अन्यच्च । प्रथमं भूगोले तृणादिसंभवः, ततः कृमिदंशाद्याः, ततः पक्षिसर्पादयोऽण्डजाः, ततो मृगादिश्वापदान्ताः, ततः पशवः, ततो मर्कटाः, ते च बहुविधा बहुदेशवासिनः, ततो मानुषाः, तत्र क्रमेण ज्ञानवृद्धिः, पूर्वपूर्वतरे मूर्खाः, उत्तरोत्तरं प्रज्ञावृद्धिस्तथैव प्राप्तक्रमादिति । किंच नाद्यापि शास्त्रं सिद्धं यतः प्रज्ञा विवृधि- पुरद्यापि । यदा चरमपरिणामारूढा भवेत् तदा शास्त्रं सेत्स्यति; तदा प्रमाणमपि शास्त्रं सेत्स्यति, तदा तदुक्तं सर्वमङ्गीकरिष्यामः; तावत्पर्यन्तं शतवारं जप्तमपि न श्रूयते शास्त्रम् । यतः पूर्वं पूर्व-

मज्ञानमुत्तरोत्तरं ज्ञानमिति नियमः। यथा वाला जाता अज्ञानघना उत्तरोत्तरं प्रवृद्धज्ञानास्तथैवेदं ब्रह्माण्डं प्रागज्ञानघनमुत्तरोत्तरं प्रवृद्धज्ञानं। पिण्डेन ब्रह्माण्डपरीक्षणात् स्थालीपुलाकवत्। अत एव यथोत्तरं मुनीनां प्रामाण्यमिति पाणिनिः। अत उत्तरेषामस्माकं प्रामाण्यं पूर्वपूर्वेषां पुराणादिवेदपर्यन्तकर्तृणामप्रामाण्यं क्रमप्राप्तत्वादिति। इदं विशदं तव मतं श्रुत्वा तृप्तोस्मि धन्योसि धन्योसि। प्रथमं तावदिदं विचार्यं, किमियं तव मतिः पूर्वजसम्मतोतोत्तरजसम्मता। न तावत् पूर्वजसम्मता, तेषां मूर्खत्वेनेदृशसिद्धान्ताज्ञानत्वात्। न तावदुत्तरजसम्मता, तव तस्मात् पूर्वत्वेन स्वयमेव मूर्खत्वाङ्गीकारात्। अहमेतद्विचारयामि यः स्वयं मूर्खत्वमङ्गीकृत्य सर्वान्मूर्खान् वदति तेन सह कथाप्रसङ्गे किं वक्तव्यमिति। अयं त्ववकाशो यः स्वसम्मतोऽन्यसम्मतश्च मूर्ख इति स मूर्ख एवेति वक्तुं, संशयाभावात् अभयाच्च। पूर्वेषामुत्तरेषां वा शिक्षणीयत्वासम्भवेन तव मतं त्वदर्थमेव। पूर्वे तु गतास्तव हस्तादग्रिमास्तु शिष्या वर्तमानाद्गुरोरधिकप्रज्ञा इति गुरोरेव सम्मतं, तस्मादिदं तव मतं कस्मै बुद्धिमते रोचेत। यतस्त्वमेव शिक्षयसि हे वत्साः शिक्षकाद्यूयं बुद्धिविभवाधिका इति।

ननु शिक्षितं ज्ञानमनुवर्ततेऽधिकं कालेन दीयते तदुभयं मिलित्वा भूयिष्ठमुत्तरोत्तरं ज्ञानमिति चेत्, यद्यदधिकं कालदत्तं ज्ञानं तत्किं शिक्षितज्ञानानुरूपमुतानुरूपम्। आद्ये शिक्षितज्ञानानुसारिणां नाधिकप्रज्ञता। द्वितीये शिक्षितज्ञानविरोधिज्ञानसम्पन्नेषु शिक्षावैयर्थ्यम्। शिक्षयितुः स्वरूपहानिः फलम्। किंच शिक्षितज्ञानानुसारित्वे परम्पराप्राप्तशिक्षैव शास्त्रमुच्यते, यतोऽनादिपुरुषात्प्रभृति शिक्षा वक्तव्यैव, ततः प्रथमशिक्षाप्रवर्तकः परमेश्वर एवान्यस्यासम्भवादिति तव सर्वः सिद्धान्तो हस्ताद्ग-

१ नचाप्युत्तरजेत्यादि पाठः.

लितः । तस्मादङ्गीकुरु वेदं परमेश्वरस्य सर्वज्ञस्य स्वतन्त्रस्य सर्वशिक्षाप्रवर्तकस्य वाचमनादिम् । किं बहुना उत्तरात्पूर्वपूर्वस्तु समीचीन इति प्रथा । गुणाधिकपरीक्षायैव बलं यच्छति सादरं ॥ १ ॥'

ननु पाणिन्यादिमहर्षिसम्मतमुत्तरोत्तरज्ञानभूयस्त्वं ततः पुराणीं वार्णीं न मन्यन्ते नवीनाः प्रज्ञाधिकाः । वह्निशकटी वर्तमाननिवेदकतन्त्री पुस्तकमुद्रणयन्त्रमन्तरिक्षगमनं महतोप्युत्तोलनमित्यादीनि बहून्यदृष्टपूर्वाणि कर्माणि नवीनैरेव दर्शितानि । यदि पुरातना ज्ञानाधिकाः कुतो न प्रदर्शितानि । तस्मादुत्तरोत्तरं ज्ञानवृद्धिः । सत्यमेतत् । परन्तु प्रमादः, यतो वह्निशकट्यां प्रतिवर्षं सहस्रान्ता म्रियन्ते जना इत्येका बुद्धिः । किं प्रमादः । तन्त्र्यां जगत्पैशुन्यं द्वितीया बुद्धिः । मुद्रणयन्त्रेपि स एव दोषस्तृतीया बुद्धिः, यत्र महतामपि गुह्यमापणे । अन्तरिक्षगमने पारतन्त्र्यं गन्तुः प्राणभयं चतुर्थी बुद्धिः । एवमादिप्रमादा यदि बुद्धौ गण्यन्ते किं गणको बुद्धिमान् किं गणनीयो बुद्धिमानिति स्वयं विचारणीयम् । किं प्राचीनैर्महत्कर्म न कृतं, किमनया बुद्ध्या प्राचीनान् स्थापयस्यज्ञा इति । शृणु तेषां कर्माणि—विमानं, स्वतन्त्रयानं, चिरजीवितोपायः, अस्त्रयुद्धम्, घटिकायामश्वेन शतयोजनयानम्, असाध्यप्रासादरचना, समुद्रसेतुः, अमायिकमानुषैः सह मायिकैः राक्षसादिभिर्युद्धं तत्र जयो मनुष्याणाम्, एवमादीनि महान्ति दुःसाध्यान्यप्रमाणां अप्रमादीनि ।

ननु श्रोतव्यानि तानि, न मन्तव्यानि, कथमपि दृष्टगोचराणि कथं मान्यानि विचारय । शृणु । श्रोतव्यमवश्यं नवीनेन प्राचीनचरितम् । अयमेवाष्टादशपुराणानां सिद्धान्तः । पुराणं श्रुत्वाऽग्रे गन्तव्यमिति । यदि न श्रूयते तवैव पितामहादयस्त्वया न मन्यन्त इति सिद्धम् । किमिदानीं दृश्यन्ते । कथं तव सम्भवः । न

चायमाकस्मिकः किन्तु बीजपूर्वः । यद्यङ्गीकरोषि पूर्वजान्नि-न्दितुं स्तोतुं वा तर्हि तत्कर्माण्यप्यङ्गीकुरु । यदि नाङ्गीकरोषि तर्हि निन्दानवकाशः । निन्दास्तुत्योरङ्गीकारमूलत्वात् । अङ्गी-कारो द्विविधः सप्रमाणः स्वतन्त्रश्चेति । आद्यः प्रौढेषु । द्वितीयो बालेषु बालिशेषु वा तस्य सर्वतोमुखत्वात् । अमुखत्वप्रसङ्गः। सप्रमाणाङ्गीकारस्य सन्मुखत्वादङ्गीकारो युक्तः । तत्र पूर्वजा-ङ्गीकारेऽर्थापत्तीतिहासौ प्रमाणद्वयम् । येनाङ्गीकरोषि तेनैव सिद्ध्यन्ति तत्कर्माणि । पूर्वपूर्वेषां बलाधिक्यं प्रत्यक्षं निर्विवादम् । बलं च बहुविधं सम्मतमेव सर्वेषां । प्रतिशतकं कियदधिकं किय-न्न्यूनं परीक्षस्व । तेन ते समाधानं भविष्यति । इतिहासस्तु स्पष्ट-मुपपादयति प्राचां कर्माणि, तर्केणापि च सिद्ध्यन्ति, बलाधिक्य-मूलत्वात् कर्मणां ।

ननु बलाधिक्येन पशुमूलत्वं कल्प्यत इति चेत्, कल्पनामूलं वद । उक्तं बलाधिक्यमिति । नोपपन्नम् । यत्र बलाधिक्यं तत्र पशुत्वमिति नियमाभावात् । उत्तरेभ्यः पूर्वस्य बलाधिकस्य पशु-त्वापत्तेः । ननु पूर्वस्य पशुत्वं मतमेव ममेति चेत्, अङ्गीकृतं पशुत्वं स्वस्य त्वया । अत एव प्रमाणमुत्सृज्य तर्कयसि । तस्मा-न्नोचितं पशुमूलसृष्टिकथनम् । यतः स्वमूलं मलिनं मन्वानो मलिनः पर्यवस्यति, ततो न विचाराधिकारः, ततः पशुत्वे पर्यव-स्यति । इदं तु न मानुषाणामभीष्टम्, अभीष्टं तु वर्तमानादधिकं । तन्न दृश्यते केनचित्, यतो भूतभविष्ययोराच्छादनं वर्तमानेऽत-स्तद्दर्शनसाधनं शास्त्रमेव । अन्यथान्ध्यनिवृत्तिः कथमपि न स्यात् । ननु स्यात् स्वयत्नेन इति चेत्, ब्रूहि किमन्धशतेनापि प्रयत्नसहस्रैरेकोपि सचक्षुः कर्तुं शक्येत । तस्माच्छास्त्रमुत्सृज्य तर्कः साहस इत्यनवद्यम् । यथा लोकानुग्रहाय पञ्च विषयाः प्रदर्शितास्तथा शास्त्रमपि प्रदर्शितमीशत्वज्ञापनाय कथं सुखिनो

भवेयुः कथं मां विन्देयुरित्यभिप्रायवता जगन्नाथेन । तस्मात्तत्प्रदर्शितं दृष्टं दृश्यमानं शास्त्रमङ्गीकर्तव्यं सत्यां बुद्धौ । ब्रूहि किं शास्त्रं त्यजसि किं पशुत्वम् । त्वं यथेच्छसि तथा कुरु परन्तु व्यासेन यल्लिखितं तत्तु स्पष्टं दृश्यते कलेः पञ्चसहस्रान्ते त्वादृशा भविष्यन्ति इति पुराणेषु स्पष्टम् ।

ननु किं पाषाणं पूजयन्तः परमेश्वरस्य जन्मकर्माद्यङ्गीकुर्वन्तः पशवः, किं ततो व्यावृत्ताः पशवः, तत्राहं मन्ये पाषाणपूजकाः पशव इति चेत्, न दृश्यन्ते पाषाणपूजकाः किंतु त्वत्सम्मतपूज्यपूजकाः । पूज्यन्ते प्रतिमन्दिरं प्रतिमाः । पूज्यस्तु मत्सम्मतोऽतिमान्यः परमेश्वर इति चेत्, ताः प्रतिमाः । कस्य । पाषाणस्येति चेत् किं पाषाणोऽपि प्रतिमीयते प्रतिमाभिः । किंतु प्रतिमीयते त्वत्सम्मतः परमेश्वरो विम्बसदृशः । किं तेन मुखेन किं वैर्बाहुभिः किं तैरायुधैः किं ताभिर्मुद्राभिः पाषाणो मीयेत कश्चिदृथोऽन्यो लोकविलक्षणः । ननु मीयेत लोकविलक्षणः, स मन्येत कथं लोकैः यतो लोकविलक्षणः । सत्यम् । यतो लोकविलक्षणोऽतएव पूज्यते यस्य प्रतिमापि । किं प्रतिमापूजया स तुष्यति । कुतो न तुष्यति मर्यादां पूजां च लभमानः । ननु किं भवेत् तस्य परोक्षस्य तोषेण । भवेत् सर्वं तस्य तोषेण यतोऽपरोक्षं सर्वं परोक्षपर्यवसानम् । तस्मात्परोक्षतोषाय मूर्तिपूजा सफला । ननु परोक्षोस्तीत्यत्र न मानमिति चेत्, जगदेव मानम् । अतएव तव वचनं सर्वाणीमानि गोलानि ईशो निर्ममे इति, यतः सर्वमपरोक्षं परोक्षमूलं । उत्पत्तेः प्राक् परोक्षं जगत्परोक्षेणेशेन सृज्यतेऽपरोक्षत्वाय । अतः परोक्षेश्वरतोषेणापरोक्षं फलं लभ्यतेऽधिकारिभिः । कः कुर्याद्वृथा पूजनं तच्छासनं वा ।

नन्वपरोक्षमृदादिभिरपरोक्षा घटादयो दृश्यन्ते तस्मात्परोक्षकारणकल्पना न युक्तेति चेत् । सत्यं, मृदादीनामपरोक्षाणां

घटादिकारणता दृश्यत इव, तथापि त्यक्तपूर्वावस्थानामेवोत्तरकारणत्वनियमात् पूर्वावस्थापरित्यागे सत्युत्तरावस्थाप्रवेशक्षणे तत्प्राक्क्षणे वा परोक्षाण्येव मृदादीनि घटादिकारणानीत्यमोघा पण्डितदृष्टिः, ततो दृष्टव्यापाराणां परोक्षकारणोद्बोधकत्वमित्येव न्याय्यम्। ततो दृष्टप्रतिमापूजादिनाऽदृष्टेश्वरतुष्टिः शिष्टसम्मतेति प्रतिमापूजा प्रवृत्ता विवेकिषु। ननु किं ते सन्ति ये प्रतिमाभिर्मीयन्ते, सन्ति चेत् कुतो न दृश्यन्ते, कुत्र वा सन्ति, इति चेत्, अदर्शनं द्रष्टॄणां भाग्यमन्दता, सन्ति तु शास्त्रे, विचारयेथाश्चेत्पश्येथास्तर्हि। यद्यधिकारी तर्हि कुतो न पश्येत्, यद्यनधिकारी कुतः पश्येच्छतमुक्तोपि। तर्हि दिदृक्षामि। चेत्, पश्य। तर्हि कुत्र पूजा विहिता। विहिता न्याये। कः स न्यायः। यो महान् स पूज्य इति। अस्तु न्यायस्तथापि पूजाया न सम्भवः पाषाणस्याचेतनत्वात् प्रतिमेयस्य परोक्षत्वादिति चेत्, सम्भवति पूजा प्रतिमायां विधानात्।

ननु कस्मिन्मन्त्रे तत्पूजाविधानमिति चेत्; युक्तं पृष्टं, विधिवचनं कुत्र मृग्यमिति ज्ञानाभावात्। को विधिर्मन्त्रे दृष्टः येन ते जिज्ञासा मन्त्रे उपपद्येत। यत्र विधिरुपलभ्यते स किं मन्त्र उत ब्राह्मणमन्यद्वा। मन्त्रः साधनं, ब्राह्मणेषु विधिः। तस्मादयं प्रश्नः अष्टारमवैदिकं स्पष्टयति। पूजां न्यायसिद्धामवलम्ब्याथर्वणे उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना रूपस्थानां देवतानां पुंस्त्र्यङ्गास्त्रादिकल्पनेति मूर्तिर्विहिता मन्त्रप्रविष्टब्राह्मणेन। पुराणादिषु सूत्रान्तेषु पूजापि। कथमेतद्विधानम्। प्रतिमेयप्रतिमयोरभेदादिति ब्रूमः। अतएव सर्वे तुष्यन्ति स्वप्रतिमां सुन्दरीं पश्यन्तो दर्पणादौ। अस्तु पूजा कथमपि परन्तु ताः प्रतिमाः कस्येति चेत्,

१ विचारयेथाः पश्येथाः इत्यात्मनेपदं क्रियाविनिमये द्रष्टुरधिकारद्योतनाय 'कर्तरिकर्मव्यतिहारे' इति पाणिनिः। कामं व्यतियोगः.

यस्येति कल्पितास्तस्य । ननु स कुत्रेति चेत्, कुत्राप्यस्तु, किं तया चिन्तया, यतः पण्डिता विधिपरायणा न चिन्तापरायणाः । ननु जिज्ञासानिवृत्त्यर्थं चिन्तेति चेत्, किं त्वं विवदिषुरथो विविदिषुरसि । आद्ये न्यायप्राप्तं द्वितीये शास्त्रप्राप्तमुभयप्राप्तं वा न कश्चित्त्यक्तुमीष्टे मनुष्यत्वात् । किं तावत् प्राप्तम् । इदं तु प्राप्तं मान्यस्य प्रतिमा तत्तुल्यतया मान्येति पूज्येति च । दृश्यते च प्रतिदेशं मान्यमानस्तत्प्रतिमान्तः । ननु मान्यमानः प्रतिमान्तः प्रसिद्धतमः तथापि नेश्वरप्रतिमासम्भवस्तस्य निराकारत्वादिति चेत्, अतएवानेकाकारः परमेश्वरः, यो ह्यनाकारः स एव नानाकार इति नियमात् । यथा वारि चतुष्कोणे चतुष्कोणं वृत्ते वृत्तं तथा । यथा प्रतिमा कल्प्यते तथा स परमेश्वर इति । ननु किं स परिणामी । न परिणामी । तर्हि कुतो नानाकाराः । किं न त्वया विचारितं चतुष्कोणादय आकारा उपाधेर्वारिणो वा । किं तूपाधेः । वारि तथा तथा दृश्यते उपाधिधर्माविद्धं । तथा परमेश्वरोप्युपाधिधर्माविद्धस्तथा तथा दृश्यते विचारधुरीणैर्न पशुभिः । अतएव मनुष्यैः पूज्यन्ते पशुभिस्तिरस्क्रियन्ते प्रतिमाः । ननु तर्हि रामकृष्णादिप्रतिमानामीशत्वापत्तिः । इष्टापत्तिः । ननु 'अग्नौ तिष्ठति विप्राणां हृदि दैवं मनीषिणाम् । प्रतिमास्वल्पबुद्धीनां सर्वत्र विदितात्मनाम्' इति मन्दबुद्धिविषयप्रतिमामपीशं मन्यसे । मन्ये । किं भयम् । अहो तां कारवो[1] निर्मिमते स कथमीश्वरः । त्वदुक्तश्लोकात् । कथं तत् । विप्रैरग्नौ मनीषिभिर्हृदि मन्दबुद्धिभिः प्रतिमायां प्रमाणकुशलैः सर्वत्र यदि दृश्यते परमेश्वरः, कथमपह्नवो न्यायविरोधाभावात् तथा शास्त्रविरोधाभावाच्च । ननु तर्हि न दृश्यत इति चेत्, त्वयाऽन्येन वा । द्रष्टारः श्लोकोपन्यस्ताः प्रसिद्धाः, परिशिष्टस्त्वमेको न पश्यस्यतोऽन्धत्वं तवैव सुस्थम् ।

---

१ कारवः शिल्पिनः ।

ननु किं प्रतिमायामीशः प्रतिमैव वेति चेत्, उभयमपि। कथं। द्विधाभिमानादहं ममेति। अहमभिमानात् प्रतिमाः ममेत्यभिमानात् प्रतिमायामीशः। किमभेदो युक्त आहोस्विद्भेदः। उभयं युक्तम्। किं भेदाभेदौ रामानुजसम्मतौ। स्तश्चेत् सर्वसम्मतौ, न चेन्न कस्यापि। कथं तत्। यतोऽभिमानानुसारिणावेतौ। अहमित्यभिमानकल्पनायामभेदः, ममेत्यभिमानकल्पनायां भेदः, ततो नैककालिकाविति न रामानुजसम्मतावेतौ किंतु प्रातीतिकावेतौ, अतः प्रतिमायामीशः प्रतिमैवेश इति पक्षद्वयम्। आस्तां प्रसक्तानुप्रसक्तेन, पूजा तु प्रतिमानां पूज्याभिमानवतीनां न्यायप्राप्ता पूज्यप्रतिमानां पूजादर्शनादपमानादर्शनाच्च। ननु यत्र विरोधिनो बहवस्तां प्रतिमापूजां कथमङ्गीकुर्म इति चेत्, के ते विरोधिनः। म्लेच्छाश्चेत्, स विरोधः किं सप्रमाणः।

ननु केचित् सप्रमाणा विरोधिनश्चेत्, किं तेषां प्रमाणं मूर्तिपूजाभावे। प्रमाणोपन्यासमन्तरा विरोधश्चेन्म्लेच्छतुल्यता। प्रमाणं चेत्, उपन्यसनीयं, तदकृत्वा विरोधाचरणं पाशवं कर्म। न कुत्रचिदुपलभ्यते मूर्तिपूजानिषेधः। सिद्ध्यति न्यायान्मूर्तिपूजा। विहिता च स्मृत्यादिपुराणान्तेषु ग्रन्थेषु श्रुतिमूलेषु वैदिकसम्मतेषु। ननु न मन्ये मानुषरचितप्रबन्धानिति चेत्, मनुष्यवचनं मनुष्येषु प्रमाणं साजात्यादिति प्राप्तं, न चेत्तव वागप्रमाणं स्यात्। नन्वाप्तवाक्यं प्रमाणमिति चेत्, व्यासमनुयाज्ञवल्क्यप्रभृतीनामाप्तत्वं प्रसिद्धतमं, त्वयि तु सन्दिग्धं वैदिकविरोधदर्शनात्। अवैदिकत्वमनाप्तत्वं च निश्चितं वा भवितुमर्हति वैदिकसम्प्रदायानभिज्ञत्वनिश्चयमूलम्। को वैदिको वेदो वा सम्मतिं यच्छति प्रतिमापूजानिषेधे। यच्छन्ति तु सम्मतिं व्यासादयो वैदिकास्तत्पूजायां। वेदेष्वपि दृश्यते प्रतिमाशब्दः, स च सादृश्येन निर्मितायां मूर्तौ रूढः। सैव प्रतिकृतिरित्यपि

गीयते । अतएव पाणिनिः "इवे प्रतिकृतौ कन्" इति मूर्तौ वाच्यायां इवार्थे प्रातिपदिकात्कनित्याह । उदाहृतं च पतञ्जलिना देवक इति । एतेन तत् सादृश्यात् तच्छब्दत्वमिति वैयाकरणानां मतमिति सिद्धम् । तथा च देवकशब्दार्थः सादृश्यमूलकदेवशब्दवती प्रतिकृतिरिति । लौकिकास्तु सादृश्यमूलकशब्दप्रवृत्तिमभिप्रेत्य कनं तदर्थं च विहाय प्रतिकृतिं देव इत्येव वदन्ति। इममेव व्यवहारं मनसिकृत्य वैयाकरणाः सादृश्यमूलकस्तत्त्वारोप इत्यभ्युपगच्छन्ति । वैदिकाश्च प्राणप्रतिष्ठया सादृश्यमूलमभिमानं बिम्बस्य प्रतिबिम्बे इति ख्यापयन्ति । वेदान्तिनस्तु, अधिष्ठानचैतन्ये यद्यदारोपितं तत्तदभिमनोत्यधिष्ठानचैतन्यं, ततो देवे समारोपितप्रतिमानां देवत्वं सहजसिद्धं यतस्तन्मते जगदेव देवमयम् ॥ प्राणप्रतिष्ठापनव्यापारस्त्वीश्वरविभूतीनां साकाराणां रामकृष्णादीनाम् । अतएव नार्मदादिषु न प्राणप्रतिष्ठा निराकारोपासनाधिष्ठानत्वात् ॥ पूजाविधिवाक्यानि प्रतिष्ठामयूखादिभ्योऽवगन्तव्यानि, तत्र सङ्ग्रहात् । अतो नास्माकं पृथक् प्रयत्नः ॥

ननु प्रतिमा हसन्ति रुदन्तीत्यादि वेदे दृष्टं कथं तदुपपद्यते इति चेत्, त्वमेव ब्रूहि रुदतो हसतो वा प्रतिमा किं करोतीति । अन्यथाऽस्येयं प्रतिमेति कथं परीक्षा ॥ ननु मिथोविरुद्धानि पुराणानि सङ्गिरन्व्यासोपि यद्याप्तस्तर्ह्युन्मत्तोपि भवन्मते श्लोकरचनाचतुरः प्रामाणिक इति प्राप्तम् ॥ न प्राप्तम् । व्यासे प्रमादादर्शनात् ॥ ननूपन्यस्तः पुराणानां मिथोविरोधः ॥ कथं सः ॥ 'क्वचिद्विष्णुं क्वचिच्छम्भुं क्वचिच्छक्तिं क्वचिद्रविम् । क्वचिद्गणपतिं चान्यमीशं व्यासो ब्रवीति हि ॥ १ ॥' उपन्यस्तं किंचित् ॥ पुराणानि दृष्टानि तत्र विरोधश्च दृष्टः, परिहारं न वेद्मीति ॥ शृणु तत्परिहारम् । तत्तदुपासकानामुपास्यदेवताद्वारा परमात्माधिगमोऽष्टादशपुराणानामधिकानां वा वैयासिकानामर्थः, यथा वेदानां

सर्वेषामुपास्यप्राणादिद्वारा परमात्माधिगमोऽर्थः । यतः सर्वेष्वपि पुराणेषु जगत्कारणमेव प्रतिपाद्यते यथा वेदे, ततः समानार्थकत्वेन समानप्रयोजनकत्वेन च प्रमाणानीति प्रथितानि पुराणानि वाक्यकोविदेषु । अकोविदास्तु मर्कटचेष्टामेव प्रदर्शयन्ति पुस्तकेषु । अनधिकारिष्वनुपयोगस्तत्र हेतुः । अन्यथा मर्कटपण्डितयोः को विशेषः । भरतखण्डस्थपण्डितानां तु श्रुतिस्मृतीतिहासपुराणानामेक एवार्थ इत्यभिप्रायः ॥ नन्वेकार्थत्वे प्रबन्धान्तरवैयर्थ्यं गतार्थत्वादन्येनेति चेत्, युक्तं गतार्थत्वमेकाधिकारिणि । दृश्यन्ते बहवोऽधिकारिणस्ततः प्रबन्धभेदः, उत्तरोत्तरं मन्दप्रज्ञत्वात् ॥ ननूत्तरोत्तरं प्रज्ञाधिक्यमिति चेत्, तवैव वचनमप्रमाणं स्यादित उत्तरमपि सृष्टेः प्रवृत्तेः । किंच त्वन्मतानुयायिन एव प्राचीनं प्राचीनतरं प्राचीनतमं प्रमाणयिष्यन्त्युत्तरोत्तरम् । यदुपन्यस्तं त्वया यथोत्तरं मुनीनां प्रामाण्यमिति तत्ते प्रतिकूलम् । यतो मुनीनां प्रामाण्यं न बालानाम् । मुनित्वं च प्रमाणोपपत्तिचिन्तनं । तन्न त्वादृशेषु दृश्यते, ततो मुनित्वं प्रामाण्यहेतुर्नोत्तरत्वमिति सिद्धम् । निरस्तोत्तरोत्तराधिकप्रज्ञता । ततः पश्वादिमूलकसृष्टिवादोऽपि निरस्तः । सिद्धं च शास्त्रप्रामाण्यम् ॥

अतः परं गोलभ्रमणं विचारयामः, विचारस्य प्रमाणमूलत्वात् ॥ ननु तदा शास्त्रं प्रमाणं यदा सम्भावितोऽर्थोऽवतिष्ठेत । तदेव तु न ॥ कथं तत् ॥ यतो नित्यतृप्तस्य निराकारस्य नित्यमुक्तस्यावतारान्वदन्ति वैदिका भूत्वापि कथं सम्भवेदीदृशस्यावतारः ॥ सत्यम्, एतावद्भिर्विशेषणैः । परमन्यान्यपि विशेषणानि बहूनि तानि यद्यनुकूलानि तर्हि सम्भवेदप्यवतारः ॥ तर्हि कानि तानि विशेषणानीति चेत्, एतानि–भक्तवत्सलो दयालुः स्वतन्त्रो नियतिपालक इत्यादीनि सुबहून्यनन्तानि प्रकृतकार्यनिर्वाहप्रतिपादकानि ॥ ननु सन्त्वेतानि विशेषणानि, घृणास्पदं गर्भवासादिकं

कथमङ्गीकुर्यात् ॥ सत्यं, पवित्रतमो नाङ्गीकुर्यात् यदि सर्वात्मा न स्यात् । सर्वात्मनि न सम्भवति घृणा । परिच्छिन्नात्मधर्मः सः, यतः कुत्रचिद्द्वेषः । स एव त्वीशे नास्तीशत्वादेव ॥ ननु यदि न द्वेपस्तर्हि रावणादयस्तेनैव हताः ॥ न । किंतु ते स्वकर्मणेति युक्तम् ॥ कथं तत् ॥ यत उत्पाती मरणमुत्पादयति, शान्ता रक्षणमुत्पादयन्ति; तदुभयमवतीर्येशः करोति तदुभयकर्मनिमित्तात् । यद्वद्दीपो गृहपतिना प्रकाशाय निर्मितोऽपि मरणाय शलभानां, प्रज्वलनं पतनं चान्यकर्म, दीपस्य स्थितिमात्रं कर्म । स्वस्वमनोरथं स्वयमेव साधयन्ति जनाः । एतेन कृष्णाद्यवतारकथा व्याख्याता । अवताराणामनेकविधतीव्रकर्मफलत्वात् । अतएव नावतारचरितेषु प्रमादकल्पना न्याय्या, ईशत्वात् । नहि दीपः प्रमादी कथमपि, यतः फलं ददात्युदासीनः सन्नपि कर्मानुसारम् । न तदन्यत्र सम्भवति द्वेपादिमूलत्वाज्जीवत्वस्य ॥ नन्वीशोऽवतरतीति चेत्, खण्डान्तरे कुतो नावतरति ॥ प्रयोजनाभावात् ॥ किं तत् प्रयोजनम् ॥ धर्मस्थापनमिति ब्रूमः ॥ किं नास्ति खण्डान्तरे धर्मः ॥ नास्ति । इदं त्वत्प्रश्नादवगम्यते । यदि धर्मस्तदोच्छेदप्रसङ्गस्तदावतारकथा ॥ ननु दृश्यन्ते खण्डान्तरे धर्माः ॥ किं ते मानुषा अर्थेतरे ॥ ननु मानुषाः ॥ के ते ॥ किंचित् किंचिदाचरन्त्येव खण्डे खण्डे ॥ किं तच्छास्त्रीयमाचरणमुताशास्त्रीयम् । शास्त्रीयं चेद्भङ्गप्रसङ्गोऽवतारप्रसङ्गश्च । यदि नावतारप्रसङ्गस्तर्हि नोच्छेदप्रसङ्गः, यदि नोच्छेदप्रसङ्गस्तर्ह्यशास्त्रीयत्वप्रसङ्गः, अशास्त्रीयत्वे कथं मानवीयत्वं धर्माणाम् । मानवा धर्माः शास्त्रपरतन्त्राः, तत्र विघ्नप्रसङ्गो बुद्धिवैचित्र्यात् ॥ ननु किं खण्डान्तरस्थानमानवान्वदसि ॥ नाहं वदामि, किंतु त्वं वदसि शास्त्रमनङ्गीकुर्वन् । यद्यङ्गीकरोषि तत्प्रवृत्त्यर्थं रक्षणार्थं चावतारा अङ्गीकर्तव्याः । ब्रूह्यवतारानङ्गीकरोषि न वा । आद्येऽस्मन्मतप्रवेशः । द्वितीये त्वशास्त्रत्वादमानुष-

त्वम्। अस्तु किमपि, यत्र धर्मोच्छेदप्रसङ्गस्तत्रावतार इत्यनवद्यम्॥

ननु अस्तु शास्त्राचारमूलिकाऽवतारकथा, परन्तु वराहावतारः सुतरां नोपपत्तिमान्। किमत्रानुपपन्नम्। इदमनुपपन्नं पृथिव्याश्रितजले यत्पृथ्वीनिमज्जनम्। नहि घटाश्रितजले घटमज्जनम्। युक्तं घटमज्जनं वहिरपि यदाऽम्भः। किं पृथ्वी जले। सत्यं जले पृथ्वी। कुत्र जलम्। स्वकारणे। यतः स्वस्वकारणे कार्याणि नान्यत्र। किं तज्जलकारणम्। किं तया चिन्तया। किं नापितस्य वयसो निर्णयेन। प्रकृतं विचारय वराहम्। तर्हि कुत्र तिष्ठन्नुद्धार। स्ववले। किं तद्बलम्। स्वतन्त्रत्वम्। ननु अस्तु स्वातन्त्र्यमस्तु वराहावतारः, यां वराहोद्धृतां मन्यसे तामहं भ्रममाणां मन्ये। कुतः। प्रत्यक्षात्। कथं तत्। अष्टसु प्रहरेष्वेका प्रदक्षिणा स्वाङ्गपर्यवसन्ना। द्वादशमासैर्द्वितीयाऽभिसूर्यम्। तेन रात्र्यहनी षडृतवश्चोपपन्नाः। तृतीया परिवर्तनाख्या, तयायनद्वयं दक्षिणतश्चोत्तरत इति चेत्, किमित्थं त्वया प्रत्यक्षीक्रियते। क्रियते। तर्हि भ्रमः शास्त्रविरोधात्। शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रं वलवत् सर्वज्ञोक्तेः, यथा भानुमण्डलं दृश्यते न दृश्यते लोकस्तत्रत्यः शास्त्रवेद्यः; स्रष्टव्ये स्रष्टृवचनानुसारित्वात्। लोकोक्तिप्रत्यक्षयोर्विरोधे प्रत्यक्षं वलवत्, वक्तुरल्पज्ञत्वात्। सूर्यमहीभ्रमणविवादे शास्त्रं प्रमाणं। महीत्यादिनामधेयस्वारस्यात् सूर्यस्तदेकदेशे भ्रमतीति निर्विवादं। अन्यथा द्वयोरप्रामाण्यापत्तेः। किंच निशीथेऽन्तरितस्यापि रवेश्चतुर्दिक्षु कमलदलवत्किरणा दृश्येरन्प्रतिवन्धकाभावात् पृथिव्या वहिश्चक्षुःप्रसारात्। सूर्यः पृथिव्या अल्पतरः, तदेकदेशे प्रतीयमानत्वात् दीपवत् गेहात्। ननु दूरत्वं सूर्याल्पत्वप्रतीतिहेतुरिति चेत्, प्रकाशाप्रकाशयोर्भिन्नत्वान्न दूरत्वं प्रकाशाल्पत्वप्रतीतिहेतुः, तदुभयप्रत्यक्षे तारतम्यावश्यकत्वात्।

प्रत्युत सूर्यादिस्थूलत्वप्रतीतिहेतुः स्यादिति सम्भाव्यते दूरस्थदीपादीनां स्थूलत्वदर्शनात् प्रभापटलस्य स्वाश्रयतेजःपिण्डेनैकीभावात्। किं दूरत्वमूलं महत्त्वमुत महत्त्वमूलं दूरत्वम् । यदि दूरत्वमूलं महत्त्वं तर्हि विपरीतमपि स्यात् । 'इदं तेजस्विनां तेजो या दूरे महती प्रभा । इदमन्यप्रकाशत्वं दूरे दूरेऽल्पता च या ॥१॥' इति।

ननु पृथिव्याः सदा सूर्यकिरणसम्बन्धदर्शनात् सूर्याश्रया पृथिवी स्वकरैर्भ्राम्यते सूर्येणामित इति चेत्, न । यत्र दृश्यते भ्रमणं तत्र स्वनिमित्तमन्यनिमित्तं वा कल्प्यम् । दृश्यते रवौ भ्रमणं, तत्र कल्पयितुं शक्यते पृथ्वीमवलम्ब्य स्वयं वा भ्रमति रविरिति । अतएव एकाकी सूर्यश्चरतीति शास्त्रं सङ्गच्छते । ननु नौकास्पदानां तीरस्थवृक्षभ्रमणभ्रमवत्पृथ्वीस्थितानां सूर्यभ्रमणं भ्रम इति चेत्, किमनेन दृष्टान्तेन पृथिवी भ्रमतीत्युच्यते उत सूर्यः । दार्ष्टान्तिकेऽननुभवादसाधको दृष्टान्तः । यतो भ्रमं निरूपयतापि सूर्ये भ्रमणं निरूपितं, तर्कप्रत्यक्षविरोधे प्रत्यक्षप्रामाण्यात् । किंच पार्थिवेषु पाषाणलोष्टादिषु बहुषु स्थलेषु गत्यभावः निश्चयात्पृथिव्यामपि गत्यभावो निश्चीयते । दीपादिषु तेजोविशेषेषु वर्त्यादिपृथ्वीभागावलम्बिषु परतः संचारदर्शनाज्जगत्प्रकाशाय निर्मितः सूर्योऽपि प्रकाशानुगुण्येन परतः संचारीत्यनुमीयते चन्द्रवत् । पार्थिवसम्बन्धशून्येषु स्वतो गमनं दीपादिषु दृश्यत ऊर्ध्वम्। तस्मात्केनचिन्निर्बन्धेन सूर्ये गतिकल्पना ज्यायसी प्रमाणान्तरसंवादात् । नन्वल्पे कल्पना ज्यायसीति चेत्, युक्तं प्रकाश्यादल्पत्वं तेजसो रवेर्दीपादिवत् । ननु प्रकाश्यबाहुल्याद्युक्तं तेजसो महत्त्वमिति चेत्, युक्तं महत्त्वं, तथापि न गेहाद्दीपो महान् कल्पितः केनचित् । ननु दूरस्थप्रकाशाय महत्त्वमिति चेत्, अनुकूलसान्निध्यकल्पनया गतार्थत्वात् । किंच किं स्थिरत्वान्महत्त्वं उत महत्त्वात्स्थिरत्वम् । नाद्यः, अद्यापि हेत्वसिद्धेः । न द्वितीयः, महत्त्वस्य

मह्यां प्रसिद्धत्वेन स्थिरत्वापत्तेः। पूर्वं महत्त्वं सम्पाद्य स्थिरत्वे वक्तव्ये दृष्टान्ताभावः प्रतिबन्धकः। अल्पत्वे तु गेहदीपादयो दृष्टान्ताः प्रसिद्धतमाः। ननु दूरत्वे सति दृश्यत्वान्महत्त्वं महत्त्वात् स्थिरत्वमिति चेत्, पृथिव्यामतिव्याप्तिः सूर्यमण्डलात् दूरत्वे सति दृश्यत्वात्। सूर्यमण्डलस्थैर्न दृश्यते भूमिरिति प्रतिज्ञातुमशक्यत्वात् तद्दृश्यत्वे स्थिरत्वं दुर्वारम्। ननु भूमेरूर्ध्वं प्रक्षिप्तः कन्दुकोऽन्यो वा न निर्गमदेशे पतति तस्मात् न स्थिरा पृथ्वीति चेत्, प्रक्षेपापराधो वाय्वाघातो वा कल्प्यः। अन्यथोर्ध्वाधःसमीकरणमानलोपप्रसङ्गात्। वह्निशकटभूम्योरनुकूलगताविन्धनाधानवैयर्थ्यप्रसङ्गात् सहसैव गमनप्रसङ्गात्॥

ननु भूम्याकर्षणनिवृत्त्यर्थमिन्धनाधानमिति चेत्, आकर्षणं केन सिद्धम्। पतन्तः सर्वे भूमिं यान्ति इति चेदस्थिरं स्थिरमपेक्षत इति न्यायात्पतन्तः सर्वे भूमिं स्थिरां ख्यापयन्ति इत्यपि वक्तुं शक्यते। यतः पततां सर्वेषां स्थिराश्रयाकाङ्क्षा। एतेनोर्ध्वं कस्मान्न गच्छतीति समाहितं, खगोलस्य चलत्वात्। किंच किं भूम्यामाकर्षणशक्तिमङ्गीकृत्य चलत्वमुच्यतेऽथवा चलत्वमङ्गीकृत्याकर्षणी शक्तिः। आद्ये तच्छक्तेर्न चलत्वहेतुता, चुम्बकादौ व्यभिचारात्। द्वितीये प्रत्यक्षविरोधः, कुत आकर्षणम्। अत्रेदमनुमानम्—सूर्यश्चलः खगोलाश्रितत्वाच्चन्द्रवत्, प्रकाशकत्वाद्दीपवत्, लघुत्वात्तूल-

---

१ महाभारते वनपर्वणि द्विचत्वारिंशत्तमेऽध्याये श्लोकौ— 'स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया॥ तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै॥ ३२॥ दीपवद्विप्रकृष्टत्वात्तनूनि सुमहान्त्यपि॥ तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः॥ ३३॥' इति। अस्यार्थः—पाण्डवोऽर्जुनो वैमानिकयात्रासमये इत्थमपश्यदित्याह॥ यानि तारारूपाणि द्युतिमन्तीह दृश्यन्ते तानि पुण्यलब्धया स्वयैव प्रभया द्योतन्ते नान्याधीनया॥ सत्येवं तानि ताराराणि प्रभास्वन्ति रूपवन्ति तनूनि विप्रकृष्टत्वाद्धेतोः सुमहान्त्यपि अपश्य-

वत् पतङ्गवत्; अतएव स पतङ्गः । त्वन्मते ध्रुवस्यापि चलत्वान्न व्यभिचारः । पृथिव्यास्तु नानुमानापेक्षा प्रत्यक्षत्वात् स्थैर्यस्य । नहि महानसे वह्निरनुमीयते । अथवाऽस्त्वेतदनुमानम्–पृथ्वी स्थिरा अदृष्टगतित्वात्पाषाणवत् । सत्यपि दूरत्वे उदयास्तयोः सूर्यस्य स्थूलत्वदर्शनान्नानुमानान्तरं । 'प्रतिक्षणं यः स्थूलोऽल्पोऽरुणो बभ्रुश्च पाटलः । दृष्टिभेदात्ततस्तर्को नार्के किंचिद्बलं वहेत् ॥ १ ॥' अस्त्वेतत्सर्वं कथं स संचरतीति चेत्, यथा खगोलं वातायनं । कश्चिदूर्ध्वाधरीभावेन, कश्चित्तिर्यग्भावेन गतिं वदति । प्रथमपक्षे भूच्छायया चन्द्रग्रहणस्योपपत्तिः, सूर्यग्रहणस्य चन्द्रेणेति । वस्तुतस्तु भूच्छायया चन्द्रग्रहणं चिन्त्यं । ग्रहणकाले मलिनकाचान्तःस्थदीपवत्पूर्णचन्द्रमण्डलदर्शनात्काचवदावरकं कल्प्यम् । द्वितीये राहुणोभयोपपत्तिः । स्वर्भानुरासुरस्तमो राहुः स्वेन वपुषा तमसा सूर्यमाच्छादयतीति शास्त्रे प्रसिद्धम् ॥

ननु शास्त्रं न मन्यते मयेति चेत्, किं त्वं नाधिकारी । अनधिकारिणो बाला वदन्ति न मन्यामहे शास्त्रमिति, अतएव ताड्यन्ते गेहे गेहे पितृभिः । नीत्यर्थमिति चेत्, सापि शास्त्रसिद्धाऽन्यथा मतिभेदान्मतभेदापत्त्या मिथोविरोधापत्तेः । दृश्यते मतभेद इति चेत्, स किं सिद्धान्त उत पूर्वपक्षः । आद्येऽस्मन्मतं प्रमाणसिद्धं ततः सिद्धान्तः त्वन्मतवत् । द्वितीये सर्वमतानां पूर्वपक्षत्वेन स्वतःसिद्धशास्त्रापेक्षा सुदुस्त्यजा । ननु शास्त्राण्यनन्तानि कर्तृभेदान्मिथोविरुद्धानि च ततो न प्रमाणमिति चेत्, अतएव त्वदुक्तमप्रमाणम् । ननु त्वदुक्तमपि तथेति चेत्, नैतन्मदुक्तं किंतु स्वतःप्रमाणमीशादाविर्भूतम् । नन्वीशादाविर्भूतमित्यत्र न प्रमाण-

---

दीपवत् ॥ यथा दीपो विप्रकृष्टः सुमहान् दृश्यते तनुरपीत्यर्थः ॥ सुमहान्त्यपि तनून्यपश्यदिति तु नार्थो दीपदृष्टान्ताविरोधात् ॥ प्रकाशाप्रकाशवस्तूनां स्वभावाभेदो दर्शितः ॥ तस्माद्दूरत्वं तेजसः स्थूलत्वप्रतीतिहेतुरिति सिद्धम् ॥

मिति चेत्, जगदेव तदाविर्भूतं प्रमाणम् । यथेशाज्जगत्तथा शास्त्रमिति ॥ नन्वन्यनिर्मितत्वसंशयान्न प्रमाणीभवति शास्त्रमिति चेत्, किमयं तवापराध उत शास्त्रापराधः । संशयिना ह्युपक्रमन्नं त्यज्यते तथेदं शास्त्रं त्वयेति । शास्त्रसंशययोस्त्यागप्रसङ्गे संशयस्त्याज्यः शास्त्रस्याप्तवाक्यत्वात् । नेशादन्यः कश्चनाप्तः सम्भवति, निश्चिताज्ञत्वात् । यथा तव वचनं भूच्छायया चन्द्रग्रहणमिति । नेदं प्रमाणं, पूर्णग्रहणसमयेऽपि पूर्णचन्द्रमण्डलस्य दर्शनादस्ति तेजः तिरोहितेपि चन्द्रे इति वक्तुं शक्यत्वात्, छायायास्तेजःसाम्मुख्याभावनिश्चयान्न भूच्छायाच्छादनं चन्द्रस्येति वक्तुं सुशकम् । ननु गणितादायाति तथेति चेत्, राहुवादिनः किं सुप्ताः, तदीयगणितेन राहुरपि सिद्ध्यति, उपपद्यते च कज्जललिप्तदर्पणवत् । यतो रक्तिमविशिष्टं मण्डलं चन्द्रस्य सूर्यस्य वा दृश्यते, प्रकाशस्तु निरुध्यते, यथा द्वितीयाप्रभृतिपञ्चम्यन्तं शुक्लपक्षे सम्पूर्णं दृश्यते चन्द्रमण्डलं निरुद्धतेजस्कं, कश्चिद्भागः स्फुटतेजा इति विशेषः । प्रतिमासं येनाच्छाद्यते स एव राहुरिति चेत्, न । तस्याष्टादशमासे राश्यन्तरगामिनो विधुसाहचर्यासम्भवात् । तर्हि प्रतिमासं केनाच्छाद्यते चन्द्र इति चेत्, न केनचित् । कलास्तूपचीयन्ते क्षीयन्ते च, ताश्च परतः स्वतश्चेति मतभेदः । तत्र स्वत इति पक्षः श्रेयान् पृथिव्याद्यन्तरितत्वकल्पनाक्लेशाभावात् । ननु सूर्यश्चन्द्रे प्रकाशमाधत्ते इति कथायाः का गतिरिति चेत्, दीपादिवत्तदुपपत्तेः, यथास्तं यन्नादित्यो दीपे तेज आदधाति तथा चन्द्र इति वक्तुं सुशकत्वात् । दीपचन्द्रयोरादित्यसान्निध्ये तिरोधानप्रसिद्धेः स्वास्तकाले चन्द्रदीपयोः स्वाधिकारं वस्तुप्रकाशनरूपं ददातीत्युक्तिर्ज्यायसी, रविसान्निध्येपि दीपचन्द्रयोर्यथाकथंचित्तेजोदर्शननिश्चयात् । अतएव सुधाकरः कलानिधिरित्यादिनामानि स-

१ कलाः.

मन्तरा न कोऽपि वक्तुमीष्टे पण्डितः सभायां । किं बहु वक्तव्यं, अद्यापि राजसभामान्यो मनुरप्याह "अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा" इति शं । क्षम्यतामत्र यः प्रमादः । अनेन तुष्यतु भगवान् राजारामः ॥

नन्दन्तु वैदिकाः सर्वे ऋग्यजुःसामभूषणाः ।
जयन्तु तेऽपि राजानो ये राजत्वविचक्षणाः ॥ १ ॥
रेवातीरे भृगुक्षेत्रे रुद्रनागमहीमिते ।
शाके श्रीशालिवाहस्य निर्मितः कृष्णभिक्षुणा ॥ २ ॥
वेदशल्योद्धार एष यथाशक्ति यथामति ।
तेन तुष्यतु लक्ष्मीशः शंकरः श्रीगुरुर्मम ॥ ३ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमत्कैवल्यसिंहासनाधीश्वरश्रीसच्चिदानन्दसरस्वतीकरकमलसंजातश्रीकृष्णानन्दसरस्वतीविरचिते श्रीवेदशल्योद्धारः श्रीपुराणपुरुषप्रीतये भूयात् ॥

---

# वेदार्थविमर्शनी(चतुर्थं पदम्) ।

हरिः ॐ ॥ अथ वेदं विमृशामः । सर्वज्ञचेतनाश्रितं नित्यसिद्धं ज्ञानं वेदः । सर्वज्ञचेतनमीश्वरः । को जानाति कदोत्पन्नो वेदः । को जानाति कदोत्पन्न ईश्वरः । श्रूयत एवेति श्रुतिः । श्रुत एवेति परोक्ष ईश्वरः । तस्माच्छास्त्रं योनिः । तस्माच्छास्त्रयोनिः । विद्यमानोपपादकं शास्त्रं । विद्यमानं वस्त्वीश्वरः सर्वनिर्वाहात् । ईश्वरो नित्यः । तदुपपादको वेदो नित्यः । तस्मादुभावपि नित्यौ । ततः स्मृत्युपपत्तिस्तस्य प्रतिकल्पं । स्मृत्या वेदप्रामाण्योपपत्तिः । अनुभूतविषयत्वात्स्मृतेः । प्रागनुभवितेश्वरः । पश्चात्स्मर्ता ऋषिः । अनुभवितृस्मर्त्रोर्नहि भेदः । तस्मादीशो वेदर्षिः । ईशज्ञानान्तो वेदयत्नः । तज्ज्ञाने वेदसमाप्तिः । तदेकप्रतिपत्तिस्तारः । ततो वेदबीजं सः । तदैश्व-

र्थप्रतिपादका इतरे मन्त्राः । तत्र च शाखाभेदो वेदभेदश्च । सर्वेषामपि तारतात्पर्यम् । ततो विश्वमिथ्यात्वसिद्धिः । इतरोपपादितानामविद्यमानत्वात् । ततस्तारे प्रविशन्ति वेदाः । तत एकमेवाद्वितीयं सिद्धं । तस्मादों नमः सिद्धम् ।

इति प्रथमः पादः । अस्मिन्पादे सूत्राणि ३२ ॥

ऐश्वर्यवत ऐश्वर्याय गायत्री । ऐश्वर्यांशलब्धय इतरे मन्त्राः । वस्तुयाथार्थ्यप्रतिपत्तये तारः । तदर्थप्रतिपादनमुपनिषत् । याथार्थ्यज्ञानं न कर्मायत्तं किंतु प्रमाणायत्तं । ततो न जिज्ञासोः कर्मापेक्षा । प्रमाणं श्रुतिः स्मृतिश्च । परम्पराधिगतत्वादवद्यत्वानिरूपणाच्छ्रुतिः प्रमाणं । अनुभवपूर्वत्वात्स्मृतिः । प्रमाणपूर्वत्वादनुभवस्य । ततः शिवमन्वादयः स्मर्तारो ह्यलौकिकदृशः । ततस्तदुक्तिर्धर्मः । लौकिकदृक्कल्पितो न धर्मः फलानिश्चयात् । न जिनादितन्त्राणि प्रमाणमनीशमूलत्वात् अवतारानङ्गीकारादीशत्वव्याघातान्न म्लेच्छतन्त्रम् । तदङ्गीकारेऽप्यवद्यत्वनिरूपणान्न पाञ्चरात्रं । अधिकारभेदव्यवस्थितं शास्त्रं । अधिकारभेदा बहुनिमित्ताः । शिक्षयाऽधिकारवृद्धिः जीवज्ञानस्य तत्तन्त्रत्वात् । ततः परम्परालब्धो धर्मः । अवराचार्याणामप्रामाण्यं तद्विच्छित्तेः । अज्ञानाङ्गीकाराच्च मिथः । ततो वेदः प्रमाणं । विरोधितन्त्राणामर्वाचीनमूलत्वमन्यथा विरोधानुपपत्तेः । मूलप्रमाणाविरोधाच्छिक्षायाः । न प्रमाणं मिथोविरोधिप्रामाण्यव्याघातात् । अत ऐश्वर्याय गायत्री । अंशायेतरे । यथार्थप्रतिपत्तये तारः । तदाहों नमः सिद्धमिति ।

इति द्वितीयः पादः ॥ अस्मिन्पादे सूत्राणि ३१ ॥

अधिकारसिद्ध्यर्थमधिकार्युक्ताचरणमप्रतिहतं राजाज्ञावत् । प्रतीघातेऽधिकारह्रासः । कायिकं वाचिकं मानसं च तत्कचित्समुच्चितं क्वचिदसमुच्चितं च संभवासंभवाभ्यां । नियम्यानां निया-

भक्त्वान्तोऽधिकारलाभः स च गुणमूर्त्यन्तस्तरतमभावापन्नः । विहिताचरणान्मलक्षयः । सति तस्मिन्प्रमाणसाफल्यमन्यथा प्रतिबन्धात् । प्रमाणं च विद्यमानोपपादनमसदपोहश्च । असत्प्रतीतिरशिक्षानिमित्ता । सहजाया अपि शिक्षयाऽपोहदर्शनात् । यदिष्यते तदसत्सत इष्यमाणत्वायोगाद्धटवन्मृद्वच्च । एष्टाप्यसन् घटवत् । कामायेष्यमाणं निरूपयति तन्न प्रमाणं सनिमित्तत्वात् । प्रमाणज्ञो गुरुः । तदनुवृत्तिर्ब्रह्मचर्यं । सिद्धे तस्मिन्प्रमाणप्रसृतिः । सिद्धं वस्तु प्रमेयं । तन्निरूपयत्यों नमः सिद्धमिति ।

इति तृतीयः पादः ॥ अस्मिन्पादे सूत्राणि १८ ॥

शास्त्राणामिन्द्रियारोहः कर्म । बुद्धावारोह उपासना । स्वयंप्रकाशारोहो ज्ञानं । जन्मप्रभृतीनामेषामुत्तरोत्तरं फलता । अतः सर्वेषां वेदानामेकतात्पर्यं । जीवानां शास्त्राधिकारः सुकृतहेतुः । सुकृते शिक्षाहेतुः । सुकृतं च शिक्षयितुराज्ञानुवर्तनं । शिक्षाश्रयः संप्रदायः । स च पूर्वस्मात्परस्मिन्निम्नगः । ततः शास्त्रमनादि संप्रदायश्च । बुद्धेः प्रेरकः परमात्मेति परमं शास्त्रं । तदनुश्रवं । सा गायत्री । बुद्धौ तदारोहाय कर्म श्रद्धामूलं । सफलत्वनिश्चयात्पूर्वपथानुवर्तनं श्रद्धा । तदभ्यासाद्बुद्धौ शास्त्रारोहः । तदननुवर्तनं तदनारोहश्च तिर्यगादिशूद्रान्तं तमःप्रसारात् । ज्ञानफलं प्रवृत्तिरिति द्वैतवादाः कर्मठाः । ज्ञानफलं तृप्तिरित्यद्वैतवादा विश्रान्तचित्ताः । ज्ञानमुपासनाङ्गमित्युपासकाः । कर्माङ्गमिति कर्मठाः । उभयं ज्ञानमित्यद्वैतनिष्ठाः । अज्ञानदशायामुभयोः संभवात् । कृत्यसमाप्तिरद्वैतज्ञाने । अतः स सिद्धान्तोऽभिलषितलब्धेः । प्रवृत्तिहेतुर्द्वैतज्ञानं । अतएव द्वैतनिन्दोपपत्तिः । अद्वैतज्ञानस्तुत्युपपत्तिश्च । तस्मादों नमः सिद्धमिति ।

इति चतुर्थः पादः ॥ अस्मिन्पादे सूत्राणि ३० ॥

शिक्षोपप्लवान्मतभेदः तत्त्वं न मतायत्तं । मतभेदाद्गतिभेदः ।

गतिभेदात्फलभेदः। फलभेदाज्जगद्वैचित्र्यं। अत उपप्लुतशिक्षाणामर्थे जगत्। अनेकत्वमर्वाचीनमेकत्वं मूलं वीजवृक्षवत्। अनेकत्वं समूलमेकत्वं स्वमूलमन्यथानुपपत्तेः। अतो नेकेष्वनुगतमेकत्वं। अत एकस्मिन्ननेकत्वं भ्रम उपजीव्यविरोधात्। अतोऽनेकत्वोपपादनमप्रमाणमतो न द्वैतसिद्धिः। तदाहों नमः सिद्धमिति।

इति पञ्चमः पादः॥ अस्मिन्पादे सूत्राणि १२॥

कृत इत्यधिकारः। तत्त्वज्ञैस्तत्त्वनिर्णयः। दोषज्ञैर्दोषनिर्णयः। गुणज्ञैर्गुणनिर्णयः। रसज्ञै रसनिर्णयः। भाषामिज्ञैर्भाषानिर्णयः। धर्मज्ञैर्धर्मनिर्णयः। जातिज्ञैर्जातिनिर्णयः। कुलज्ञैः कुलनिर्णयः। अतोऽपह्नवो ननु गुणोऽज्ञत्वप्रसङ्गात्। (इति व्यवहारः॥)

(अथ परमार्थः)

व्यवहारः सत्यपरायणः स्वभावात्। सत्यमीश्वरस्त्रिकालमबाधात्। अतोऽसत्यं दृश्यं। दृगात्मेति नित्यमुक्तिः। सर्वं ब्रह्मेत्यभेदनिरूपणान्नान्तःप्रज्ञमिति सर्वप्रज्ञानिषेधाद्विश्वमिथ्यात्वे वचनागम्यमात्ममात्रमिति समाधिः श्रौतः सिद्धः तदाहों नमः सिद्धमिति।

(ॐ इति ब्रह्म, नम इति जगत्, तयोरभेदं सिद्धमित्याह वर्णारम्भे वाग्देवता, इत्यध्येतृसंप्रदायः पारम्परीकोऽनादिः। तत्रैव वर्णानां तात्पर्यं, ततो वेदानां, वाक्यभेदे गौरवात्। तात्पर्यभेदेच्च तथा। अथवा ॐ इति वाचकं, नम इति वाच्यं, तयोरुभयोरपि सिद्धमेकं रूपं, ततो वाच्यवाचकभावो न वास्तवः। असिद्धस्य सिद्धं रूपमिति नियमः। न नमस्क्रियाकर्म ब्रह्म अव्यवहार्यत्वादकारकत्वात्। कचिद्दृष्टमपि तथा न वास्तवं निषेधस्य बलवत्त्वात्। तस्मात्समानविभक्तिकं पदत्रयमों नमः सिद्धमिति॥)

इति षष्ठः पादः॥ अस्मिन्पादे सूत्राणि १६॥

पञ्चाक्षर्यां सर्ववेदाः संभूय ब्रुवते ऋतम् ।
स्वरहस्यं वादशान्तिमहौषधमिदं वचः ॥ १ ॥
अयं परम्पराप्राप्तो मन्त्रो वेदैकरूपभृत् ।
तद्विमर्शनमेवेदं सर्ववेदविमर्शनम् ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दसरस्वतीपूज्यपादपद्मम-करन्दतुन्दिलमनोमिलिन्देन कृष्णानन्देन श्रीगुरुदत्तामन्दानन्देन विरचिता वेदार्थविमर्शनी पद्पदी गुञ्जन्तु पुञ्जे पुञ्जे द्विजानां विदुषां विनोदाय, तेन तुष्यतु गुरुः ॥

---

# द्विजत्वलिङ्गनिर्णयः (पञ्चमं पदम्) ।

आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥ १ ॥

अथ वैदिकं द्विजत्वलिङ्गं निरूपयामः । श्रीमान्परमेश्वरो भूतानि वर्णशो विभक्तानि सृष्ट्वा तेषामभ्युदयनिःश्रेयसरूपचतुर्विधपुरुषार्थसिद्धये षोडशाऽष्टाचत्वारिंशद्वा संस्कारान् प्रदर्शयितुं शास्त्रमुवाचेदं वेदं नाम साङ्गोपाङ्गं । तेषु संस्कारेषु मन्त्रा विनियुज्यन्ते अनेन मन्त्रेणायं संस्कारः कर्तव्य इति ब्राह्मणेन, सूत्रेणेतिकर्तव्यतोच्यते । सूत्राभावे ब्राह्मणवैयर्थ्यात्, ब्राह्मणाभावे मन्त्रवैयर्थ्यात्, मन्त्रब्राह्मणसूत्राणां संभूय कार्यकारित्वाद्वेदत्वं । तेन वैदिकसंस्कारेण ब्राह्मणादयो द्विजा भवन्ति । वैदिकसंस्कारहीनः प्रकृतौ तिष्ठति बालः शूद्रो वा । संस्कारहीनत्वसाम्येन बालेष्वपि शूद्रत्वं केचिद्वदन्ति । परन्तु सा न जातिः, उपनयप्रकृतित्वाभावप्रसङ्गात् । उपनयनप्रकृतयो ब्राह्मणः क्षत्रियो वैश्य इति । उपनीतो ब्रह्मचारी गार्हस्थ्याद्याश्रमप्रकृतिः । इत्थं प्रकृतिविकृतिभावापन्नैराश्रमैस्त्रयो वर्णाश्चतुर्विधफलभाजः । शूद्रस्य त्वेक एवाश्रमो गार्हस्थ्यं । त्रयाणामपि वर्णानां गायत्र्युपास्या । तया

सकलफलावाप्तिः । येषां न गायत्री तेषामवैदिका मन्त्रा अवैदिक्युपासना च । वर्णत्रयस्य गायत्र्यधिकृतस्य वैदिकसंस्कारवतो गायत्र्यामपरितुष्टस्य विष्ण्वादिदेवताभक्तस्य विष्ण्वादिमन्त्रेषु वैदिकेष्वधिकारः सहजसिद्धो वेदार्थमुपनयनात् ।

अस्तु कस्यापि वैदिकमन्त्रस्योपासकस्तस्य साग्निकत्वमव्याहतं । तथाच भस्मधारणमव्याहतं विधिदर्शनाद्योग्यत्वाच्च । अनग्निकानां द्विजानामन्यतः समानीतश्रौतभस्मधारणम् । अवैदिकदीक्षावतां गोपीचन्दनं चन्दनं वा । ये तु वैदिकदीक्षातो व्युत्थाय दीक्षान्तरं प्रविष्टास्तेषां दीक्षानुसारि तिलकं गोपीचन्दनं चन्दनमन्यद्वा । तत्र शैवदीक्षायां भस्म विहितं, वैष्णव्यां गोपीचन्दनं । सभस्मदीक्षायां न कश्चिद्विवादः प्रकृतिविकृत्योरैक्यात् । सगोपीचन्दनदीक्षायां पुनर्भस्म न धार्य, परावर्तनापराधादतिक्रमापराधाच्च पातित्यं । अतएव गोपीचन्दनाद्यधिकृतानां भस्मधारणं निषिध्यते यत्र कुत्रापि । नहि दुग्धं दधिदशामापन्नं पुनर्दुग्धं भवति किंतूभयभ्रष्टं भवति । तस्माद्भस्मबहिर्भूतदीक्षावतां भस्मधारणं निषिध्यते निन्द्यते च । युक्तं तत् । भस्मबहिर्भूतदीक्षाप्रवृत्तिर्वेदानादरणमूला वेदानधिकारमूला वा । यतो वेदेषु बहुश उपलभ्यते भस्मप्रशंसा, यथा "अग्नेर्भस्मास्यग्नेः पुरीषमसि संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्" । "मानस्तोके" इत्यादिमन्त्राणां विनियोगदर्शनं "अग्निरिति भस्म" इत्यादिमन्त्रैर्ब्रह्मत्वनिरूपणं । कर्मशेषो भस्म, निषेधशेषो ब्रह्म, तयोरभेदः कर्मशेषस्यैव

---

१ एतदुक्तिः कारुणिकानां सर्वथैव तथ्या । लोकप्रतारणाय वयं वैदिका वयमेव वा वैदिका इति वदन्तोऽपि केचन मायिनो महात्मानो यथा पाञ्चरात्रादिषु तन्त्रेषु यथा वा तत् तन्मतप्रवर्तकप्रथमादिपुरुषनिर्मिततत्तद्रहस्यपुस्तकेषु श्रद्दधते न तथा वेदादिशास्त्रेषु । यथाच तत्तन्मतपोषकेष्वाडम्बरेषु जाग्रति न तथा वैदिकेष्वपि नित्यनैमित्तिकादिषु कर्मस्विति स्फुटमद्यापि ।

निषेधशेषत्वात् । तद्धारयितुस्तत्त्वं । भासनाद्भस्मेति व्युत्पत्तिः । कालाग्निरुद्राख्योपनिषत्सु धारणविधानप्रकारश्चोपलभ्यते । पुराणं च "रुद्राक्षा यस्य गात्रेषु ललाटे यस्त्रिपुण्ड्रधृक् । स चाण्डालोऽपि संपूज्यः सर्ववर्णोत्तमो भवेत् ॥" इति मनुष्यमात्रसाधारणं भस्मधारणं प्रतिपादयति । न तद्दीक्षानिमित्तं । ननु रुद्रदैवत्यं भस्म शैवेष्वेवोपयुज्यते प्रकृतप्राकरणिकेषु मानस्तोक इत्यादिमन्त्रेषु रुद्रशब्ददर्शनात्, न साग्निकत्वनिमित्तं, नापि मनुष्यसाधारणमिति चेत्, वेदे रुद्रशब्दोऽग्नौ दृष्टः[1], तं मानस्तोक इति संप्रार्थ्य गृह्यते, तद्देवतां शिवं रुद्रनामधेयं संप्रार्थ्य ध्रियते । यथा वरुणदेवतां संप्रार्थ्य जलमवगाह्यते नैतावता स्नानं वारुणानामेवेति वक्तुं युक्तम् । किंच "यज्ञो वै विष्णुः" इति श्रुतेर्यज्ञाभिन्नस्य विष्णोरिदं वैष्णवं भस्म वैष्णवानां प्राप्तं । "शिवो वेदः" इति स्मृतेः शिवाभिन्नवेदसंस्कृतं भस्म शैवानामपि प्राप्तं । यतो वैदिका एव शैवा वैष्णवाश्चोच्यन्ते तेषामाश्रमवर्तिनामप्युपासकानां भस्म प्रत्यासन्नं वैदिकत्वात् । अत्याश्रमिणां न्यासिनां वैदिकप्रकृतित्वाद्भस्म प्राप्तं । नह्यवैदिका न्यासिनो भवन्ति । परिशिष्टाः शूद्रा अन्ये वा तान्प्रत्यपि विधीयते पुराणेन भस्मधारणं ॥ ननु गोपीचन्दनशास्त्रं निरवकाशं सर्वसामान्यविषयं भस्मधारणं बाधेतेति चेत्, न । तस्यावैदिकवैष्णवदीक्षाविषयत्वेन चारितार्थ्यसंभवात् । शैवा वैष्णवाश्च[2] द्विविधा वैदिका अवैदिकाश्च । तत्र

---

१ "सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं" इति यज्ञे रजतदक्षिणानिषेधप्रकरणे.

२ समुच्चयवादिनो द्वैतविरोधतत्परा मायोपादानत्वे जगतोऽनुकूलाः कोंकणादिदेशेषु बहुधा वसन्तः शैवं वैष्णवं च व्रतमाचरन्तो भागवता वयमिति वदन्तो वैष्णवा वैदिकवैष्णवाः । समुच्चयवादसाधारणाद्वैताद्यन्यतमसिद्धान्ता जगतो मायोपादानत्वे प्रतिकूला बहुरूपा बहुरूपमालातिलकश्रद्धालवः शैषिकप्रत्ययान्तेन तत्तत्पुरुषनाम्ना विशेषिताः शिवं शैवं च व्रतादिकं निन्दन्तस्तत्तत्प्रान्ते प्रसिध्यन्तो वैकुण्ठगोलोकादिप्राप्तिरेव परमपुरुषार्थ इति वदन्तस्तत्प्राप्तिश्च मदीयसमुदायक-

वैदिकानां भस्म प्राप्तमावश्यकं च । अवैदिकवैष्णवानां गोपीचन्दनविधानं भस्मनिषेधश्च । अवैदिकशैवानां भस्मानूद्यते न विधीयते मनुष्यसामान्यप्राप्तम् । अनेन गोपीचन्दनविधानेन सर्वथा भस्मनिषेधेन चावैदिकवैष्णवानां न कथमपि वेदसंबन्धगन्ध इति ध्वन्यते । अन्यथा होमान्ते प्राप्तभस्मधारणं कथं निषिद्ध्येत ॥ ननु भस्म निषिद्ध्यते न होम इति चेत्, होमस्याङ्गवैकल्यापत्तिः । साङ्गत्वे भस्मनिषेधायोगः । धृतभस्मनो वैष्णवस्य चण्डालत्वाभिधानाद्वैष्णवतन्त्रे । शैवतन्त्रे तु प्रशस्यते महाफलं च निरूप्यते यथा वेदे । तस्माद्विरजादीक्षावतां शैवानां वैदिकत्वमेव । अतएव श्रीरामचन्द्रोऽपि अगस्त्यात्प्राप्तदीक्षो भस्म जटां च दधारेति पाद्मे शिवगीतायाम् "एवमुक्त्वा मुनिश्रेष्ठे गते तस्मिन्निजाश्रमे । अथ रामगिरौ रामस्तस्मिन्गोदावरीतटे । शिवलिङ्गं प्रतिष्ठाप्य कृत्वा दीक्षां यथाविधि । भूतिभूषितसर्वांगो रुद्राक्षाभरणैर्युतः ॥ अभिषिच्य जलैः पुण्यैर्गौतमीसिन्धुसंभवैः । अर्चयित्वा गन्धपुष्पैस्तद्वद्वन्यफलैरपि । भस्मच्छन्नो भस्मशायी व्याघ्रचर्मासने स्थितः । नाम्नां सहस्रं प्रजपन्नक्तंदिवमनन्यधीः ॥" इति चतुर्भिः श्लोकैश्चतुर्थाध्याये । यच्च शैवानां तामसत्वमुच्यते तत्पाशुपतपरं वेदबाह्यत्रिशूलधारणात् तस्य वेदादनुपलम्भात् । तथा तामसत्वं वेदबाह्यचिह्नधारिणामन्येषामपि । द्विविधपाखण्डिनामेकैव गतिः, यतो वेदानादरः । अतएव स्मृत्या चक्रं शूलं च निषिद्ध्यते, तुल्यन्यायात् । तथा भस्मानादरमाचरन्तो वेदानादरमपीति वेदबाह्यत्वं । भक्षितेऽपि लशुने न शान्तो व्याधिरितिन्यायेन

---

ल्पिताचारानुष्ठानेनेत्युपदिशन्तो वैष्णवा अवैदिकवैष्णवा इति विवेकः । यत्र प्रविष्टानां वैदिककर्मानुष्ठाने कुतोऽपि कारणाद्द्वेषोऽथवौदासीन्यं समुत्पद्यते स संप्रदायः ( समुदायः ) अवैदिकः । यत्र च प्रविष्टानां तत्र श्रद्धा वर्धतेऽथवा नैव हीयते स स वैदिकः.

भस्मनिषेधाङ्गीकारेऽपि होमाङ्गभस्मधारणनिषेधायोगात् प्राप्ते भस्म-धारणे भस्मधारिणां चण्डालत्वं वदन्तो बुद्धिमन्त एवेति वक्तु-मवकाशः । स्वनिष्ठेनैव दोषेणान्यनिन्दाप्रवृत्तेः । तस्माद्भस्मनिषे-धवचनानि पूर्वापरविवेकहीनकल्पितानि न वा । किं भस्माङ्गी-क्रियतेऽथवानभिज्ञत्वं वैष्णवेन विचारणीयं । धन्या तव वैदिकता, वेदमवलम्ब्याप्यनङ्गीकृतः, भस्म निन्द्यते वेदेनापि स्तुतं, मृदम-ङ्गीकरोषि शूद्रसाधारणीं । वैदिकवैष्णवत्वे का हानिस्तव । किं न संति विष्णुमन्त्रा वेदे । किं न त्वामुद्धर्ति गायत्री । किं न वेदः समर्थः फलदाने । किं न तुष्यति वेदाच्छिवो विष्णुर्वा । किं श्रुतो वैदिकानां क्वचिदधःपातः । किमिदं ब्राह्मणैरेव ब्राह्मणा निन्द्यन्ते । किमिदं ब्राह्मण्यमुत कलिकौतुकम् ।

वेदे तु विष्णुः सर्वोत्तमत्वेन निरूपितः स एव गायत्र्यर्थः । तथा शिवोऽपि सोऽपि गायत्र्यर्थः । तामुपास्स्व शिव इति विष्णु-रिति वा । सा यच्छत्यभीष्टम् । इत्थं गौरीगणेशरव्योपि सर्वोत्त-मत्वेन निरूपिता गायत्र्यर्थाः ॥ ननु बहवः सर्वोत्तमा बहवो गायत्र्यर्थाः इदमसंभावितं, यत एकस्य सर्वोत्तमत्वेऽन्यस्य न्यून-ताऽर्थसिद्धा । युक्तमुच्यते । परंतु वेदे तथा निरूपिता अपह्नोतुं न शक्यन्ते त्वयाऽन्येन वा । अत इदं प्राप्तं एकः सर्वोत्तम इति मत्वाऽन्यनिन्दनमथवा तेषां भेदत्याग इति । आद्यं तु न समञ्जसं वेदो वन्दते स्वयं निन्दतीति मूर्खलक्षणापत्तेः । द्विती-यस्तु भवेद्वेदसंमतो वेदप्रतिपादितसर्वोत्तमत्वसामञ्जस्यात् ॥ ननु भिन्नरूपाणां पञ्चानामपि कथं मिथोऽभेद इति चेत्, दशावतारव-द्दिति विद्धि । किमेतेऽवताराः पञ्च । सत्यमवताराः पञ्च । इम-मेव वेदाभिप्रायं ज्ञापयितुं पञ्चापि पूज्यन्ते वैदिकैः । अवैदिकै-स्त्वेकः पूज्यते निन्द्यन्तेऽन्ये, वेदाभिप्रायानभिज्ञत्वात् । अपरैर्नै-कोपि पूज्यते । प्राप्तः कोऽपि सर्वोत्तमः स ज्ञातव्यो मन्तव्यो

ज्ञापयितव्यो मानयितव्यः पूज्यः पूजयितव्यो यथाधिकारं। वेदाभिप्रायस्तु पञ्चान्यतमरूपेणोपास्य एकस्तथेतरे चत्वारः पूज्या नावमान्या इति। तदवमाने वेदावमानात्। तर्हि पञ्चविधो गायत्र्यर्थः प्राप्तः। न प्राप्तः। तदर्थस्त्वन्तर्यामी सर्वात्मा नित्यानन्दरूपो बुद्धिसाक्षी। तस्येमानि पञ्च रूपाणि प्रयोजनभेदभिन्नानि सर्वोत्तमपरमेश्वराभिन्नानि। तत्तदुपासनया सर्वोत्तमपदं लभते इति वेदार्थो विरोधरहितः। अतएव पञ्चायतनविन्यासः। पञ्चविधोऽप्येकवाक्यतापन्नो वेदार्थं स्पष्टं कथयति विन्यस्तानां पञ्चानामन्यतमप्राधान्ये सर्वप्राधान्यमव्याहतमिति। प्राधान्यावच्छेदकमन्यतमत्वं यतः। इममेवार्थं निरूपयितुं श्रीशंकरोऽवततार बुद्धैरुपासकैर्वा वेदे[1] जर्जरीकृते। तदभिप्रायाभिज्ञैरङ्गीकृता तदीयव्यवस्थाऽभिज्ञैरप्यङ्गीकारिता। सा च यावन्न राजोपप्लवस्तावन्निर्विघ्नं प्रववृते। राजोपप्लवारम्भे धर्मोपप्लवारम्भो म्लेच्छराज्यमारभ्य। पुनरुपप्लवे पुनरवतारप्रसंगोऽवश्यं। प्राप्ते प्रसङ्गे किं न स्यात्। सिद्धमेतावता पञ्चानामीशत्वं, ईशो गायत्र्यर्थः, गायत्रीमूलोऽग्निः, अग्निमूलं भस्मधारणं, तेन वैदिकत्वद्योतनं, ततो वैदिककर्माधिकारः, ततः सर्वपुरुषार्थ इति। येन पञ्चान्यतमो निन्दितस्तेन वेदो निन्दितस्तत ईशोऽपीति युक्ता तस्याधमा गतिः। इयांस्तु विशेषः प्राग्बुद्धैर्वेदाद्बहिः स्थित्वा जर्जरीकृतो वेद इदानीं वेदे प्रविश्य क्रियते इति। एषा कलिबाधा वेदस्य। आस्तामेतत्प्रसक्तानुप्रसक्तम्।

प्रकृतं गोपीचन्दनमप्रत्यासन्नभस्मनां वेदविरुद्धदीक्षावतां। वैदिकदीक्षावतां प्रत्यासन्नं भस्म संत्यज्य मृदादिधारणकल्पना अन्याय्या। यतो वैदिकानां कदापि प्राप्तं भस्म न प्राप्तमवैदिकानामनग्नीनां, मृच्च प्राप्ता वैष्णवत्वात्। ततस्तत्र चारिताथ्येंन द्विजाव-

1 वेदतात्पर्ये.

श्यचक्रभस्मना बाध्यते । न मृदा भस्म बाध्यते होमादिव्यङ्गतापत्तेः ॥ ननु मृदं बिभ्राणेनैव होतव्यं होमान्ते भस्म धार्यमिति चेत्, तदा भस्मधारिणां निन्दा । परंतूभयधारणं प्राप्तं वैदिकत्वाकूलं सामान्यतो मृदिति चेत्, विशेषेण भस्मना बाध्येत सामान्या मृत् ॥ ननु न सामान्या मृत् किंतु वैष्णवत्वविशेषेण चेत्, किं वैष्णवत्वं द्विजत्वव्याप्यमुत तद्व्यापकं । आद्ये द्विजत्वसामान्यनिमित्तं किं भस्म बाध्यते उत द्विजत्वं । उभयथापि न भस्मप्राप्तिः । उचितं तु द्विजत्वबाधकत्वं तद्व्याप्यत्वे वैष्णवत्वस्य । बाधिते द्विजत्वे कथमुभयं । अव्याप्यत्वे भस्मबाध्यता दुर्वारा । कालभेदादुभयमिति चेत्, बाधककोटौ कालविशेषणे गौरवात् द्विजत्वसामान्येन मृद्बाधः । ततो नोभयमेका वा मृद्विजे सिद्ध्यति तक्रकौण्डिन्यन्यायात् । यदि वैष्णवत्वं न द्विजत्वविरोधि तर्हि कुतो भस्मविरोधि कुतस्तन्निन्देति चिन्त्यं । अत इदं सिद्धं वैष्णवानामवैदिकानां चक्रादिमुद्रा मृत्तिका तुलसी च मुख्यं लिङ्गं । शैवानामवैदिकानां त्रिशूलमुद्रा भस्म रुद्राक्षं च मुख्यं लिङ्गं । द्विजानां शिखा यज्ञोपवीतं भस्म च मुख्यं लिङ्गं । शूद्राणामेकहस्तेन वन्दनं वृत्ततिलकं शिखा च मुख्यं लिङ्गं । इतरेषामेकहस्तवन्दनं मुख्यं लिङ्गम् । वर्णानां क्रमेण पुस्तकखड्गतुलाप्रतोदा लिङ्गानीति । इत्थं प्रतिदेवमपि लिङ्गं भिन्नं भिन्नं तत्तदुपासकानां प्राप्तं, तच्च वेदबाह्यत्वेन निर्वाह्यते । वैदिकानां गायत्र्युपासनानिमित्तं यज्ञोपवीतं, अग्न्युपासनानिमित्तं भस्म, वर्णनिमित्ता शिखा चेत्यलं लिङ्गं ॥ ननु चक्रं मृत्तिका च द्विजत्वलिङ्गमिति चेत्, वैष्णवाचार्याणां रामानुजप्रभृतीनामुत्पत्तिकुले तदभावेन द्विजत्वाभावप्रसङ्गात् ॥ ननु शिखायज्ञोपवीते एव

१ ननु सर्वसाधारणस्य भस्मनः कुतो द्विजत्वे लिङ्गत्वमितिचेन्न, यज्ञोपवीतसदृचरितस्यैव तस्य तत्त्वे तत्त्वमित्याशयात्. २ द्योतकानि. ३ अन्यनमवैष्णवमुख्यानां शठकोपादीनां निरवसितजातीनां चक्रमृत्तिकयोरप्राप्तिप्रसङ्गाच्च.

लिङ्गमस्तु, माऽस्तु भस्मेति चेत्, सर्वोपासकानां तत्तल्लिङ्गे प्राप्ते गायत्र्युपासकस्यापि त्रिपादगायत्र्यभिन्नत्रिपादाग्निचिह्नं भस्म प्राप्तम्। अतएवाग्न्युपासनान्ते तद्धारणं विधीयते नान्यत्किंचित्। अग्निः शिवस्य तृतीया मूर्तिः, स एव यज्ञत्वाद्विष्णुः, "यज्ञो वै विष्णुः" इज्यन्ते सर्वे देवा अत्रेति यज्ञः। यज्ञियं भस्म गायत्र्या प्रापितं। अत इदमुच्यते सत्युपनयने तदङ्गहोमे च सति भस्मधारणं प्राप्तं तत्कदा त्यज्यते, कदा ध्रियते गोपीचन्दनं। एकत्यागमन्तरैकस्य प्रवेशायोगात्, अवकाशं विना त्यागायोगात्। कथं कदा भस्म त्यक्तं, कथं कदा गोपीचन्दनं धृतं कस्मिन्कर्मण्यङ्गतया प्रविष्टं, येन भस्मना प्रस्थानं कर्तव्यं। किं तत्कर्म गोपीचन्दनवता कर्तव्यमिति वेदे विहितं। भस्म तु लब्धं यदा गायत्री लब्धा, तदाग्निश्च, ततो गायत्रीसहचरितं भस्माग्निश्च तावदनुवर्तेत यावद्गायत्री यज्ञोपवीतं च। कदाचित्प्राप्तं वैष्णवत्वनिमित्तं गोपीचन्दनं। तथापि द्विजत्वलिङ्गं यज्ञोपवीतसहकृतं, आगन्तुकं गोपीचन्दनं, वैष्णवत्वादपि द्विजत्वस्य बलवत्त्वात्, यतो द्विजत्वमीशदत्तं, वैष्णवत्वं संपादितं। तत ईशदत्तद्विजत्वाविरोधेन वैष्णवत्वेन स्थातव्यं। द्विजत्वं लिङ्गेन व्यज्यते यज्ञोपवीतभस्मशिखाभिः। वैष्णवत्वं गोपीचन्दनेन। तदा न्यक्करोति द्विजत्वं गोपीचन्दनेन वैष्णवत्वं। तदयुक्तं द्विजेन द्विजचिह्नन्यक्कारः कृत इति। अतो द्विजत्वाविरोधेन वैष्णवत्वेन स्थेयं वैदिकगेहे, अन्यत्र तु प्रथितलिङ्गेन स्थेयं कुशलमबाधात्। एतेन शैवो[1] व्याख्यातः। न शैवत्वं वैष्णवत्वं वा पितृपरम्परानियतं। गायत्री तु नियता, गायत्र्युपासकपुत्र एव गायत्र्या दीक्षितव्य इति नियमात्। अतएव यं कंचन दीक्षयन्ति प्रत्यहं तत एव तेषु गुरुपरम्परैव न पितृपरम्परा, ततो न द्विजलिङ्गं तत्पूर्वजेषु चक्रं

१ लिङ्गायतादिर्विष्णुनिन्दकः.

शूलं वा निश्चेतुं शक्यते ततो द्विजत्वाभावप्रसक्तेः । शिखायज्ञोपवीतभस्मलिङ्गैर्नैव द्विजत्वं निश्चेतुं शक्रुमस्तत्पूर्वजानां यथाधुनिकवैष्णवशैवपूर्वजानां । ततो न द्विजलिङ्गेषु चक्रशूलमृत्तुलसीरुद्राक्षाणि परिगणितुं योग्यानि । तस्मादबाधितं परमेश्वरप्रसादलब्धं वेदमाश्रित्य, परम्परालब्धां गायत्रीमुपास्य, अग्निसाध्यानि कर्माणि कृत्वा, शिवं विष्णुमन्यं वा प्रधानीकृत्य पञ्चायतनानि संपूज्य, अभीष्टदेवं ध्यात्वा, गायत्र्यर्थं च ज्ञात्वा, देवयानपितृयाने च ज्ञात्वा, संसारासारतामनुभूय, तत्र विरज्य, त्रिविधकर्माणि न्यस्य, प्रणवं सकलवेदार्थस्य वक्तारं दर्शयितारं चोपास्य, ज्ञात्वा च तदर्थं, भवसागरं गोष्पदीकृत्य, चिराजन्तु वैदिका इति श्रीशंकराचार्याणां मतं शासनं च ।

इममभिप्रायमसहमाना अजानन्तो वा श्रीजगद्गुरुं निन्दकसेवकसाधारण्येन स्वाभिप्रायमाविष्कुर्वन्तं निन्दन्ति भाग्यहताः, कल्पयन्ति वचनानि प्रवेशयन्ति पुराणेषु लिखन्त्युत्साहेन स्वस्वनिबन्धेषु च । परंतु न विचारयन्ति वेदमार्गं कः पुपोषेति । कथमद्यापि द्विजत्वं दृश्येत यदि श्रीशंकरो न स्यात् । विचारयन्तु द्विजाः स्वस्वमण्डले । किमनेनाभिनानेन । वयं तु मन्यामहे सर्वमेतत्कलिनर्तनं । यतो बौद्धविरोधिनो वैदिकसिद्धान्तप्रतिपादकस्य निन्दकाः किं वैदिकपक्षेऽथवा बौद्धपक्षे । शत्रोः शत्रुः स्वस्य मित्रमिति न्यायोपि जागर्ति । द्विजश्चेद्बौद्धपक्षं नाधिरोहेत् । यद्यधिरोहेत्तं द्विजब्रुवं वदन्ति शिष्टाः । यतः आचार्या द्विविधाः सामान्योपदेशिनः कर्णोपदेशिन इति । सामान्यास्तु वेदाभिप्रायमुपवर्ण्य वर्णाश्रमान् स्थापयन्ति यथा श्रीशंकरः । कर्णिनस्तु शिष्यकर्णे इमं देवं भजानेन मन्त्रेणानेन प्रकारेणेति । एवं स्वाचार्यत्वे सिद्धेऽपि सामान्याचार्यशिष्यत्वमपोढुमशक्यं । तदपोहाय तन्निन्दां भिन्नसिद्धान्तं च रचयामासुः । परंतु न विजानन्ति स्वद्विजत्वं

शिथिलायत इति। अतएव विवदन्ते, द्विजेभ्यो वैष्णवाः श्रेष्ठाः, तत्र द्विजेभ्यः शैवाः श्रेष्ठा इति। अस्मिन्कलहे द्विजत्वं द्वाभ्यामपि तिरस्कृतं स्पष्टतरं। चतुर्थवर्णसमतामापन्नौ द्वावपि। युक्तं शूद्रेभ्यः श्रेष्ठा इति। कुतो न विचारयन्ति गायत्र्युपासनया शैवत्ववैष्णवत्वद्विजत्वानि स्वतःसिद्धानि शाक्तत्वं च। गायत्र्याः सर्वात्मत्वमुक्तं पुरस्तात्। मा रुष्यन्तु केऽपि कथमपि न प्राप्तोऽवकाशो निन्दायाः श्रीजगद्गुरोः श्रीशंकरस्य॥ ननु वयं जगद्गुरवो न शंकर इति चेत्, केन कर्मणा भवतां गुरुत्वं। शङ्खचक्रादिसहितमार्गस्थापनेनेति चेत्, अस्त्वस्मिन्नंशे, परंतु द्विजत्वं तु तदधीनमेव, वेदोद्धारोऽपि तथा। उद्धृते च वेदे स्थापिते च द्विजत्वे कश्चिच्चुकूज विष्णुः सर्वोत्तम इति कश्चिच्छिवस्तथेति। गायत्री सर्वोत्तमेति न कश्चिच्चुकूज। चुकूज तु परमहंसः शंकरः परमेश्वरः गायत्री सर्वोत्तमा सर्वात्मा वेदरहस्यमिति। अहो प्रतिदिनमुपासते त्रिकालं त्रिरूपां ब्रह्मरुद्रविष्ण्वात्मिकां तदपि मुह्यन्ति विवन्दते च विष्णुशिवयोर्मिथो न्यूनत्वेऽधिकत्वे वा। न तयोरधिकत्वं न्यूनत्वं वा किंत्वेकात्मानौ। प्रसिद्धस्तयोरात्मा गायत्री। अत्र प्रमाणं तव संध्यैव यथाचरसि। सा ध्यायते प्रतिदिनं भेदापोहाय त्रिभी रूपैस्तथापि भेदो नापोढस्त्रयाणां देवानां। ततः परिशिष्टं देवतोपदेशेनैव गुरुत्वं। सा च कैश्चिदभिलष्यते, न कैश्चित्। गायत्री वेदो द्विजत्वं चाभिलष्यते प्रमाणकुशलैर्मनुष्यैः। तां व्यवस्थामातन्वानो जगद्गुरुः शंकरो यथा नारायणः। अन्यैस्तु देवताकलहः कृतः, तदाचार्यत्वं न जगद्गुरुनिन्दाप्रयोजकं। बौद्धानां तु प्राप्ता निन्दा स्वसिद्धान्तविरोधात्। यदि द्विजत्वं तवाभिमतं तदेव प्रतिपादितं शंकरेण। यदि वदसि तदभिमतमद्वैतं ममासंमतं ततो निंदामीति चेत्, अस्तु तवासंमतं, त्वदुपास्यस्य तु सुसंमतं। तव भिन्नात्मत्वाभिमानेऽपि

१ एतदपि वैदिकम्.

तस्य सर्वात्मत्वाभिमानात् । सर्वात्मत्वं च सर्वरूपत्वं, तदेव न विजानासि । जानासि मालासूत्रवत् । किं भवेन्मणीनामात्मा सूत्रं । यदि सविचारं संध्यामाचरेथास्तदा सर्वात्मत्वमपि विजानीथाः । यदि जीवब्रह्माभेदनिरूपणमूलोऽयं द्वेष इति चेत्, अयं द्वेषः श्रुतौ पर्यवस्यति, यतः श्रुतिः "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुः" इति भेददर्शिनं निन्दति, वक्ति च "तत्त्वमसि" इति जीवब्रह्मणोरैक्यं । यदि "द्वा सुपर्णा" इति श्रुतिस्तव संमता ततो भेदस्तव संमतश्चेत्, तर्हि तव पशुत्वं वक्ति श्रुतिः । यदि "तत्त्वमसि" इति श्रुतिः संमता तर्हि ब्रह्मत्वं ॥ ननु तत्त्वमसीति संमतं तथापि दासत्वं संमतमिति चेत्, किं पशुत्वं दासत्वविरोधि । तर्हि "द्वासुपर्णा" इति श्रुतेः का गतिरिति चेत्, त्वदज्ञानानुवादेन कृतार्थता, तवापि न पशुत्वं । तस्माच्छ्रुत्यर्थानभिज्ञानमूला शंकराचार्यनिन्दा द्विजत्वमपोहति पशुत्वं च यच्छति ॥ ननु पुराणोपलब्धानां निन्दावचनानां का गतिरिति चेत्, श्रुतिमार्गानभिज्ञतामूलद्वेष एव शरणं । यतो न युज्यते श्रुतिमूलपुराणैः श्रुतिमार्गव्यवस्थापकनिन्दा, ततस्तादृशवैष्णवैः श्रुतिबाह्यलिङ्गधारिभिः कल्पितानीत्यनवद्यं । तस्मात्पशुत्वबौद्धपक्षपातित्वादिदोषापातान्निन्दा त्याज्या । द्विजत्वमूलं वैदिकत्वमङ्गीकार्यं श्रीशंकरप्रतिपादितम् ।

वैदिकत्वे तु वैष्णवत्वं च शैवत्वमन्यद्वा यदभिलपसि तत्सहजसिद्धं, गायत्र्यां सर्वान्तर्भावात् । यथा गायत्र्याः सर्वात्मत्वं तथोपासकस्यापि सर्वात्मतासिद्धिः श्रुत्या प्रतिपाद्यते भेदमपोह्य ॥ ननु नानुभूयते सर्वात्मतेति चेत्,गायत्र्युपासनाभावात् इति वक्तुं शक्यते। यतस्तद्ध्यानेन देवताभेदापोहस्तदर्थविचारेण जीवब्रह्मभेदापोहः । त्वदनुभवस्तु न शास्त्रबाधकः शास्त्रं तु त्वदनुभवबाधकं वक्तुं सर्वज्ञत्वादिति दिक् ॥

ननु भेदवाक्यानां का गतिरिति चेत्, अवैदिकेषु मूढेषु चारितार्थ्यं[1]। यतो भेदो मूढसाधारणः, अभेदबोधस्तु विद्वद्साधारणः, सुप्रसिद्धवाक्यमर्यादाज्ञानस्य विद्वद्साधारणत्वात्। वस्तुतस्तु स्वानुभवानुसारेण भेदवाक्यानि कल्पितानि पुराणादिषु, यथा त्वादृशेन वैदिकसंप्रदायबाह्यः पदच्छेदोऽऽतत् त्वमिति कृतः, यथाकाशोऽपि नित्योऽङ्गीकृतः केनचिन्नापि केनचित्तथा कल्पनसंभवात्। तस्मादकल्पितं वैदिकसंप्रदायं श्रद्धत्स्व, तेन तुष्यति भगवान् परमेश्वरो वेदवक्ता, किमितराधिकारिकपाञ्चरात्राद्याश्रयेण गोपीचन्दनलेपेन श्रीशंकराचार्यविषये यथेच्छप्रलापेन वैदिकत्वलोपेन। तस्मात्तमीशं तोषय, वेदं पोषय, पूर्वं कः पुपोषेति विचारय।

यत्तु कश्चित् त्र्यम्बकमन्त्रव्याख्यानप्रसङ्गे, त्र्यम्बकं त्रिलोचनं, यजामहे पूजयामहे उपास्महे इति यावत्, सुगन्धि पुण्यकर्माणं लोकोद्धारसमर्थं, पुष्टिवर्धनं पुष्टिमार्गस्याष्टाक्षरोपासनामार्गस्य वर्धनं प्रवर्तकं, पुण्यकर्मत्वात्पुष्टिवर्धनः पुष्टिवर्धनत्वात्पुण्यकर्मेति मिथो हेतुहेतुमद्भावं व्याचख्यौ; स पृच्छ्यते कथमष्टाक्षरोपासनामार्गः पुष्टिशब्दार्थः। वेदेऽयमष्टाक्षरः कुत्र पठितः। गायत्र्युपासनामार्गः कुतो न पुष्टिः। किं त्यक्ता गायत्री। किं नाधिगता। किं नाधिकारी त्वं। तथा तु लेखनीयं यथा वेदावमानो न स्याद्द्विजेनारब्धः। किं चामन्त्रविच्छब्दव्याख्यायाममन्त्रविच्छब्दार्थोऽष्टाक्षरानभिज्ञ इति व्याख्यातः, तत्र गायत्र्यनभिज्ञ इति व्याख्याने कुतो लेखनी निरुद्धा। किं गायत्र्या द्विजत्वं न लभ्यते। किं लभ्यतेऽष्टाक्षरेण, येन श्राद्धाधिकारिता स्यात्। कुतस्त्वयायं गाय-

1 व्यवहारे चरितार्थानां ततएव चोत्सर्गाणां भेदवाक्यानां तत्र निरवकाशेनाभेदवाक्येनापवादेन बाधः। इदमेवच व्यवहारस्यानित्यत्वे परमार्थसत्तायाश्च सत्त्वे प्रमाणम्.

न्यामनादरः । कुतोऽयमष्टाक्षरादरः । अस्मदुपास्यप्रतिपादकत्वादिति चेत्, किं न प्रतिपादयति गायत्री त्वदुपास्यं देवं ॥ नन्वष्टाक्षरोऽस्मत्सिद्धान्तं प्रतिपादयतीति चेत्, किं गायत्र्यां नास्ति तव सिद्धान्तः । कोऽयं गायत्र्यसंमतस्तव सिद्धान्तः । कोऽसि त्वं द्विजोऽन्यो वा । द्विजो भूत्वापि वेदं नाद्रियसे । तथा मा कुरु । द्विजत्वे स्थिरीभूतेन वैदिकोध्वा रञ्जनीयः । भवत्सदृशैः पण्डितैः शोभामाप्नुयाद्वेदमार्गः कल्पतरुणेव देववाटी, पाटीरवत्परिमलोपि व्याप्नुयान्महीं, कलहोऽपि शाम्येत । किं वहुना, त्वमेव पुष्टिवर्धनो भविष्यसि सुगन्धिरुयम्बकश्च । केयं वेदस्य दुर्दशा, स्वकीयैः परकीयैश्च पीडयितव्यः । किं वेदाद्वहिरेव गम्यतेऽष्टाक्षरगेहं । किं परावृत्यते चतुर्विंशत्यक्षरागेहं प्रति । यदि परावृत्तिस्तर्ह्यष्टाक्षरेण किं । यदि वहिर्गम्यते किं गायत्र्या दोहनासमर्थगवेव । इत्थं व्याख्याने कोऽपराधः, पुष्टिर्वेदः स्वतःप्रमाणत्वाद्धितोपदेशाच्च, तस्य वर्धनं प्रवर्तकं, सुगन्धिं यशस्विनं, त्र्यम्बकं श्रीशंकरमवतीर्णं वेदमार्गस्थापनाय, यजामहे पूजयामहे वेदमार्गस्थापनकर्मणा तुष्टा इति । सांप्रदायिकोऽर्थस्तु निरुक्ते निरूपितस्ततो द्रष्टव्यः ॥ ननु कः संप्रदायो वराकः, पण्डितैर्वहुदर्शिभिर्यथेच्छं व्याख्यातुं शक्यते व्याकरणादीनां तत्रैव साफल्यादस्मत्पाण्डित्यस्यापि च, तस्माद्वेदव्याख्याने सर्वे पण्डिताः संस्कृतभाषाभिज्ञाः काव्यादिष्विव स्वतन्त्रा इति चेत्, युक्तमेतत् प्रागल्भ्यं, पण्डितान्विहाय कुत्र तिष्ठेत् । परमेतद्विचार्यते संस्कृतभाषा किं स्वयंलभ्येत संप्रदायात् । स्वयंलाभे न मार्गः संप्रदायादिति वक्तव्यं तथा व्याकरणमपि । संप्रदायादिति वचने को हेतुः । तत्तत्परिभाषायाः संप्रदायाधीनत्वादिति चेत्, वेदपरिभाषा किं मार्गे पतिता । ततः संप्रदायाधीन एवार्थो वेदस्य । काव्यश्लोकोऽपि न व्याख्यातुं शक्यते यथेच्छं, यावच्छ्रूयते कवेरभि-

प्रायः कर्णोपकर्णतया। यथेच्छं व्याख्या तु संभावनामात्रं, न प्रमाणं; कव्यभिप्रायानुकूलस्तु प्रमाणं सकलसंमतः सशिरःकम्पं। यथेच्छं व्याख्याने बुद्धिवैचित्र्येणानेकार्थत्वेऽप्रामाण्यापत्तेः अनिर्णीतोऽर्थः प्रामाणिक इति विरुद्धं। किं यथेच्छत्वमपि पाण्डित्यं। तत्तु पाण्डित्यं यच्छास्त्रपरतन्त्रत्वं। शास्त्रपरतन्त्रत्वे संप्रदायपरतन्त्रताऽर्थसिद्धा, संप्रदायपरतन्त्रत्वे स्वपाण्डित्यस्य विनियोगः संप्रदायप्राप्तशास्त्रविज्ञाने, न यथेच्छकल्पनायां। तस्मात् त्र्यम्बकादिसकलवैदिकमन्त्राणां सांप्रदायिकोऽर्थः समञ्जसः श्रोतुरसंमतोऽपि। यतो न श्रोतृमतिमनुसृत्य शास्त्रं प्रवृत्तं, किंतु सर्वज्ञमतिमाश्रित्य प्रवृत्तं श्रोतुरज्ञातज्ञापनाय। अयमीशानुग्रहः—श्रोतरि श्रोतव्यं श्रावयति, द्विजादिशरीरं श्रवणाधिकारि ददाति, उपनयनाध्ययनविधिना शुद्धिमापादयति यया शास्त्रजिज्ञासोत्पद्येत। उपनयनप्राप्तगायत्र्यनुग्रहो जिज्ञासा, ततो रहस्यमुपदिशति शास्त्रं, तच्छ्रोतव्यं मन्तव्यं निदिध्यासितव्यं च। यतः शास्त्रमज्ञातं ज्ञापयति, तज्ज्ञानं न साहसिकं, ततो न यथेच्छत्वविनियोगावकाशः शास्त्रे। पाण्डित्यविनियोगस्तु प्रदर्शितः। तस्मात्संप्रदायप्राप्तो वेदमार्ग एव पुष्टिमार्गस्तुष्टिमार्गश्च। किं कष्टेन यथेच्छं पुष्टेनान्यमार्गेणेति निश्चित्य शास्त्रश्रद्धालवो भारतखंडमंडनाश्चत्वारो वर्णाः स्वस्वमार्गेण गच्छन्तु, का हानिः। मम तु मतिर्मही राजेत स्पष्टं विभक्तैर्वर्णैः स्वधर्मनिष्ठैः। बहवो रमणीयाः स्पष्टं विभक्ताः सान्निध्येन योजिता दृश्यन्ते तथा दृश्येत मही यथा नानावर्णमणिगणखचिता। तथा कुरु यथा नाधो गच्छेज्जनः। वेदमार्गादधः सर्वे मार्गा इति भरतखण्डसिद्धान्तः, तत्र वर्णाश्रमशो धर्मस्तमाश्रय। तस्माद्यथेष्टं पुष्टं पुष्टिमार्गमपहाय

१ ईदृशसंप्रदायास्तित्वमनावश्यकमेतेषां भारभूतत्वाद्वैदिककर्मलोपित्वात्कष्टप्रयोजकत्वेन वैमत्यसंपादकत्वेन च देशप्रकर्षप्रतिकूलत्वादविद्याप्रियत्वाच्च.

पुष्टतमं वेदमार्गं द्विजा अधिरोहन्तु,स्वस्वशिष्यान् यथाधिकारमुपदिश्य वैष्णवाः शैवा अन्ये वा नन्दन्तां मोदन्तु चेत्युपरम्यते । अत्रापेक्षितवचनानि श्रीमद्भट्टगट्टूलालकवीन्द्रविरचितमार्तण्डे द्रष्टव्यानि ॥

किं निन्दया निन्दितः स्याच्छंकरो लोकशंकरः ।
तन्निन्दया निन्दितः स्यात्केशवोऽपि नतेर्नयात् ॥ १ ॥
जिह्मोत्सहेत किं तस्य श्रुतिर्यस्यास्ति कर्णयोः ।
निन्दितुं शंकरं साक्षाच्छंकरं वेदगोपनम् ॥ २ ॥
किमन्यदेवतोपास्तिः शंकरेण विनिन्दिता ।
तमुपास्स्व महाभाग यं पश्यसि मनोहरम् ॥ ३ ॥
मानुषत्वं च वर्णित्वं द्विजत्वं विप्रतां तथा ।
ब्रह्मत्वं च क्रमाद्दत्वा समुद्धरति शंकरः ॥ ४ ॥
अधोऽधो नयते कालः स्वप्रवाहबलेन हि ।
तत्र कश्चित्स्थिरः प्राप्तपदे भूयोऽधिरोहति ॥ ५ ॥
आरोहो दुर्घटो नृणामवरोहः प्रमादतः ।
आरोहायावतारोऽभूच्छंकरस्य कलौ युगे ॥ ६ ॥
स्त्रीशूद्रद्विजबन्धूनां वैष्णवत्वं च शैवता ।
आरोहमार्गः संप्रोक्तस्तत्राचार्याश्च केचन ॥ ७ ॥
पुराणतन्त्रमार्गादिप्रवर्तनपरायणाः ।
गायत्र्या सर्वसंसिद्धिर्द्विजानां श्रुतिसंमता ॥ ८ ॥

अत्र प्रामादिकवाग्दोषनिवृत्तये श्रीकृष्णं कलिमलहरणं दीनोद्धरणं ब्राह्मणशरणं जगद्धितममितगुणं निपुणं स्मरामः ।

नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः ॥ १ ॥

ननु द्विजानां द्वीपान्तरगमनं कर्तव्यं न वा । कस्मादयं प्रश्नः ।

---

१ यथा सर्वदेवनमस्कृतिः केशवं प्रति गच्छति तथा तत्तद्देवनिन्दापि केशवं प्रति गच्छेदित्याशयप्रत्यायकोऽयं नतिनयः.

गत्वा च किं करिष्यसि। श्रूयते प्राक् श्रीरामचन्द्रो जगामेति। कस्मै प्रयोजनाय केन साधनेन। तत्रस्थेन केनचिद्रक्षसाऽपहृतां भार्यामन्विच्छन् स्वग्रथितसेतुनेति चेत्, दत्तमुत्तरं श्रीरामचन्द्रेण। कस्मादयं प्रश्नः गत्वा च किं करिष्यसीत्यस्योत्तरमवशिष्टं। अस्मादयं प्रश्नोऽस्ति मम दिदृक्षानिषेधश्च श्रूयते "द्विजस्याब्धौ तु नौयातुः शोधितस्याप्यसंग्रहः" इति। नानेन वचनेन गमनं निषिध्यते किंतु संग्रहो निषिद्ध्यते गतस्यागतस्य वा। तत्र नौयानं निमित्तं, अतो नावा न गन्तव्यं। तर्हि सेतुना गन्तव्यं। न गतव्यं तेनापीति श्रीरामाभिप्रायः, अतएव छिन्नः सेतुस्तेनैवेति श्रूयते। एतेनासंग्रहपक्षो बलवानिति गम्यते। द्विजस्येति गन्तुर्विशेषणात्। द्विजत्वबाधकमपि गम्यते गमनं। "अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च। तीर्थयात्रां विना गत्वा पुनःसंस्कारमर्हति॥" इति यथा देशविशेषाणां द्विजत्वबाधकता दृष्टा तथा द्वीपान्तरगमनस्यापीति। इयांस्तु विशेषः क्वचित्संस्कारेण ग्रहणं क्वचिन्नेति। द्वीपान्तरस्थैरुभयैरपि गतागतः पुरुषो न संग्राह्य इति स्वद्वीपान्यद्वीपस्थेषु न प्रवेष्टुमर्हति, निषेधस्य सामान्यविषयत्वात्। दृश्यते च तथा, तस्मात् दिदृक्षाशान्तिरेव समञ्जसा। नन्वर्जुनोऽपि सेतुं विना जगामेति श्रूयतेऽश्वमेधे। तर्हि तदा विमानान्यपि श्रूयन्त आसन्निति। गच्छतु नावाऽन्येन वा यानेन तथापि प्राप्तं गमनं वैधं दिग्विजयं विनाऽश्वमेधासंभवात्। श्रीरामचन्द्रो दुष्टनिग्रहाय सेतुनाऽर्जुनो विजयाय जगामेति राजधर्म उपन्यस्तः, नेदमुदाहरणं सर्वजनगमनप्रयोजकं। उर्वरितं च त्वं गत्वा किं करिष्यसीति प्रश्नस्य प्रतिवचनं। उपन्यस्तवचनस्यार्थस्तु गन्तव्यगमनावधि द्वीपस्थैर्नौयातुर्द्विजस्यासंग्रह इति। सेतुना विधिना वा गतयोर्धनुर्धरचूडामण्योः श्रीरामार्जुनयोर्नोपन्यस्तनिषेधविषयता॥

ननु द्विजकृतसमुद्राधिकरणकनौकायानस्य निषेधविषयता विधि-

नाहस्य, तथापि यदि विद्याधनादिसंपादनं तदधीनं तदायं निषेधो दुर्बलः फलस्य दृष्टविषयत्वान्निषेधस्य चादृष्टविषयत्वादिति चेत्, निषेधानामयं मुख्योऽवकाशो यत्रावश्यं प्रवृत्तिसंभवः । किंच विद्याधनादिकमस्मादेव द्वीपात्तत्र गच्छति तस्मादत्रैव संपाद्यं बुद्धिविभवे । तदभावे तु नात्र तत्र वा । अतएव द्वीपान्तरस्थैरत्र संपाद्यते धनं विद्या वा । न तत्र काचिद्विद्या द्विजसंपाद्या दृष्टचरा, शिल्पिसंपाद्या तु दृष्टचरा द्वीपान्तरे, अतएव तैरपि शिल्पं प्रदर्श्यते यत्र तन्तुवायाम्बष्ठलोहकारतक्षादीनामधिकारः । नापि तेषां गमनं निषिध्यते ॥ ननु धनार्थं शिल्पशिक्षणार्थं वा द्विजानामस्त्वधिकार इति चेत्, द्विजत्वाविरोधे सति निर्बाधोऽधिकारः । नहि श्रीरामार्जुनाभ्यां द्विजत्वमपहारितं, संपादितं च संपादनीयं, तस्मादुपन्यस्तवचनस्य श्रीरामार्जुनयोश्च द्विजत्वं नापनेतव्यमित्येवाभिप्रायः । नहि शिष्टाचारः शास्त्रं वा लाभं निरुणद्धि किंतु हानिं ॥ ननु नौयानं यदि प्रत्यवायस्तर्हि प्रायश्चित्तमपि, तदा संग्रहाभावः कस्मादिति चेत्, जातिनिष्ठानामियमेव परिपाटी यदन्यसंसर्गसंसक्तपरित्यागो यथा पक्ष्यादिषु द्विजेषु मर्कटाद्यद्विजेषु च प्रसिद्धः ॥ ननु पक्ष्यादिदृष्टान्तो मानुषाणामयुक्तो विवेकाधिकानामिति चेत्, युक्तमुपन्यस्तं । किं स्वस्वजातिविवेको न विवेकः । यथा विषामृतविवेकोऽन्यत्रमानुषेभ्यः प्रसिद्धोपि मानुषनिष्ठो विराजते, तथैवायं जातिविवेकः ॥ ननु नास्ति जातिः । किं त्वयि, किं ब्रह्माण्डे । मन्यते च सा सर्वैः स्वस्वनिष्ठा काचित् । यथा त्वया मनुष्यत्वं, तथा ब्राह्मणत्वादयोप्यन्यैः । यो हि यां जातिमात्मनि मनुते स तज्जातिहीनं न प्रवेशयति स्वजातौ । यथा मानुषाः पशूनन्यान्वा । तस्माज्जातिबाधकसंग्रहे द्वीपान्तरगमनं गणनीयं, ततोऽस्य प्रश्नस्योत्तरं शास्त्रनीत्यसंमतं द्वीपान्तरगमनमिति । जातिबाधकमिति

शास्त्रं। जात्यसंमतं न कर्तव्यमिति नीतिः। ज्ञानक्रियाविशेषाहंकारविशेषाभिव्यङ्ग्या जातिः। निमित्तवैपरीत्ये निमित्तिवैपरीत्यमिति नियमः। सति बलवति निमित्ते स्वाबाधकनिश्चये क्षत्रियैः शास्त्रमवलम्ब्य गन्तव्यं द्वीपान्तरमिति श्रीरामार्जुनयोरभिप्रायः। एवमेव वसिष्ठादिमहर्षीणामभिप्राय ऊहनीयः। गत्वा त्वं किं करिष्यसीत्यस्योत्तरं तु प्रार्थनीयमेव वंशोत्तंसानां। यतोयं न्यायः परगृहं सहसा न प्रवेष्टव्यमिति मर्यादामङ्गलम्॥

वस्तुतस्तु–परदेशी न विश्वस्यः स्वहृद्यं न प्रकाशयेत्।
जातिबाधा न कर्तव्या न कुर्यात्कुलदूषणम्॥ १॥

इति नीतिचतुष्टये सकलसंमते किमनेन द्वीपान्तरगमनप्रश्नोत्तरप्रपञ्चेन।

द्विजो अद्विजसंसर्गाद्दते गृह्णतेऽथवा।
द्विजत्वमद्विजत्वं वा तस्मात्सङ्गो न पावनः॥ १॥

इति श्रीपरमहंसपरिव्राजकाचार्यकैवल्यधामनिवासिश्रीकृष्णानन्दसरस्वतीविरचितः द्विजत्वलिङ्गनिर्णयः समाप्तः।

---

# सन्ध्याव्याख्या।

जय सच्चिदानंद।

मङ्गलं त्रिषु कालेषु त्रिषु लोकेषु कर्मसु।
त्रिषु वर्णेषु यस्यास्तां सन्ध्यां वन्दामहे वयम्॥ १॥

अथ सन्ध्यां व्याख्यास्यामः। आचमनाच्छ्रद्धाप्रवेशः प्राणायामाद्वीर्यस्मृतिलाभो मार्जनाच्छौचसिद्धिः पीडानिवृत्तिश्चाघमर्षणात्पापनिवृत्तिस्तेन कर्तव्यकर्मप्रतिबन्धनिवृत्तिरर्घ्यप्रदानादीश्वरानु-

---

१ अद्विजो द्विजसंसर्गाद्दते गृह्णते नवा। द्विजत्वमद्विजत्वं च हीनत्वादिति निर्णयः। १। दुग्धं मदिरया मिश्रमशुद्धं मदिरा नतु। दुग्धसंगाद्भवेच्छुद्धा रीतिरेषा प्रसर्पिणी। २।

संधानसमर्हणे जपात्तेनैक्यानुसंधानमुपस्थानात्कृतस्य कर्मणः स्वस्य च रक्षणमभिवन्दनात्संप्रदायशुद्धिरीश्वरार्पणात्कर्मसमृद्धिः । इति प्रथमः खण्डः । परमेश्वरः प्रपञ्चायाभिन्ननिमित्तोपादानमिति गायत्रीसगुणध्यानं स्त्रीरूपेण व्यक्तं स्त्रीपूत्तरोत्तरमभिन्ननिमित्तोपादानत्वं पारमार्थिकं रूपं तत्त्वार्थवर्णात्मत्वं सा संधिकालोपास्यत्वात्सन्ध्या देवतारूपा क्रियारूपा कालरूपा च गायत्रीछन्दस्कमन्त्रप्रतिपाद्यत्वाद्गायत्री तथा देवताप्रतिपादको मन्त्रोपि गायत्री शब्दा एवार्था अर्था एव शब्दाः सृष्टये स्त्रीरूपा मोक्षायात्मरूपा तामुपास्य लोकवन्द्या भवन्ति भवन्तीत्याह कृष्णानन्दसरस्वती । इति द्वितीयः खण्डः । वैदिकपद्धतिपरिशिष्टम् ।"

# गायत्रीस्तोत्रं ( षष्ठं पदम् ) ।

यस्मिन्दृष्टे नैव दृश्येत विश्वं यस्मिंल्लब्धे नैव लब्धव्यशेषः ।
यस्मिञ्ज्ञाते नैव वेद्यान्तराशा गायत्र्यर्थं पञ्चवक्त्रं प्रपद्ये ॥ १ ॥
या गायत्री नामधेयं महार्थं सार्थं कर्तुं संप्रविष्टोपनाये ।
मार्गे मन्त्रान्सर्वतो दर्शयित्वा तारे लीना सर्ववेदार्थदीपे ॥ २ ॥
श्रोतव्यं मे वाक्यमेतत्समस्तैर्वर्णैर्भाव्यं स्वाश्रमप्राप्तचिह्नैः ।
तेभ्यस्तुष्येच्छंकरः श्रीहरिर्वा प्रष्टव्यो वः श्रीगुरुः स्वैर्विनीतैः ॥३॥
गायत्री चेत्सम्यगाप्ता क्रमेण सा संजप्ता कर्मशुद्ध्या द्विजेन ।
सा विज्ञाता गोपिता संप्रदायात्किं नो दद्याद्वेदमाता मता चेत् ॥४॥
बुद्धावीशारोहणं कर्म तस्याः सा चेत्त्यक्ता त्यक्त ईशो द्विजेन ।
यस्यां सर्वा देवताः संप्रविष्टाः सर्वात्मानं मन्त्रराजं प्रपद्ये ॥ ५ ॥
विष्णुः शंभुर्भास्करो विघ्नराजो या वा का वा देवतास्या विभूतिः ।
सैकोपास्या वेदमार्गैकनिष्ठैः क्षीराब्धौ किं दुग्धभिक्षाप्रयासः ॥ ६ ॥
नेयं लभ्या मानुषाणां झषाणां गङ्गाशब्दो मानुषत्वैकहेतुः ।
यस्या लब्ध्यै वैदिकाग्रेसराणां वंशे वेदैः संस्कृते जन्महेतुः ॥ ७ ॥

मन्त्रैः किं तैर्यैः प्रतीक्ष्येत देवी गायत्र्यंवा संप्रवेष्टुं द्विजेषु।
देवैः किं तैरम्निना पुष्टिमद्भिस्तस्माद्भस्मोद्भूषितैः सा निषेव्या ॥८॥
दत्तं भस्म श्रीत्रिपादाम्बयैतत्र्यक्षैरग्नेः शेषरूपं स्वरूपम्।
तस्माद्भस्म प्रोच्यते भासनाच्च भूतिर्गायत्र्यम्बयैक्यात्रिपुण्ड्रम् ॥९॥

शैवोऽन्यो वा यां विना किं द्विजः स्यात्
शैवोऽन्यो वा दीक्षया वेदमातुः।
तस्माच्छैवो वैष्णवोऽन्येषु गण्यो
गायत्र्याप्ता ब्रह्मता वेदमान्या ॥ १० ॥

भेदापोह्न्याप्तृतिं सा बिभर्ति ध्यानैर्भिन्नैर्ध्याननिष्ठैकवेद्याम्।
तस्मान्नामान्यत्र संयान्ति सर्वाण्यस्यां निष्ठा शांभवी वैष्णवी च ११

लोकस्थास्ते विष्णुरुद्रादिदेवाः
कैश्चित्कामैः कैश्चिदेवाधिकारैः।
गायत्र्यास्ता भूतयः सेवनीया
गायत्र्यां ते सेविताः संभ्रमेण ॥ १२ ॥

ब्रह्मत्वं चेदाप्तुकामोऽस्युपास्व गायत्रीं चेल्लोककामोऽन्यदेवं।
कामो ज्ञातः स्वीयपादप्रवृत्त्या वादः को वा तृप्तिहीने प्रवृत्तिः १३
बुद्धेः साक्षी बुद्धिगम्यो जपादौ गायत्र्यर्थः सोऽनघो वेदसारः।
तद्ब्रह्मैव ब्रह्मतोपासकस्याप्येवं मन्त्रः कोऽस्ति तन्त्रे पुराणे ॥ १४ ॥
जात्यश्वः किं जातिमाप्तुं सकामो गत्यभ्यासात्स्पष्टतामेति जातिः।
ब्रह्मत्वाप्तौ कः प्रयासो द्विजानां यद्गायत्र्या व्यज्यते चाष्टमेऽब्दे ॥
ब्रह्मत्वस्य ख्यापनार्थं प्रविष्टा गायत्रीयं तावतास्य द्विजत्वं।
कर्णद्वारा ब्रह्मजन्मप्रदानादुक्तो वेदे ब्राह्मणो ब्रह्मनिष्ठः ॥ १६ ॥
एषा निष्ठा दुर्लभा मर्त्यबुद्धौ तस्माल्लोके वैष्णवाः शांभवाश्च।
भिन्नं भिन्नं मार्गमास्थाय वेदं क्षामं कुर्वन्त्यास्तिकच्छद्मनेमे ॥ १७ ॥

---

१ ईश्वरभावाप्तये गायत्रीतोन्यमन्त्रोपासनं व्यर्थमिति भावः.

पक्षिद्वन्द्वं विद्यते स्वस्वदेहे भोक्तारं सा ध्यानमाचष्ट एतत् ।
यावत्क्षीणा भोक्तृता स्यात्ततस्तु ज्ञात्वा ब्रूयाद्ब्रह्मतां स्वस्य विद्वान् ॥
गायत्र्यर्थं नो विजानाति कश्चित्तस्मादन्यं देवमाह द्विजोऽपि ।
विज्ञातश्चेत्सर्ववादस्य शान्तिर्मुक्तिर्हस्ते गायमानस्य मन्त्रम् ॥ १९ ॥
भस्मान्तं चेद्विश्वमेतत्समस्तं भस्मोद्भूतं भस्म संभासते च ।
तस्माद्ब्रह्म प्राहुराद्यैर्वचोभिर्वेदास्तस्माद्ब्रह्म लिङ्गं द्विजानां ॥ २० ॥
इति श्रीशंकराचार्याभिप्रायः कृष्णभिक्षुणा ।
वर्णितस्तेन गायत्री विभूत्या सह नन्दतु ॥ २१ ॥

इति श्रीपरमहंसपरिव्राजककैवल्यधामनिवासिकृष्णानन्दसरस्वतीविरचितं गायत्रीस्तोत्रं संपूर्णं ॥

---

# तप्तचक्राङ्कमीमांसा (सप्तमं पदम्) ।

यन्नामस्मरणं नृणां सकलाघौघनाशनम् ।
यस्य ध्यानं धर्ममेघस्तस्मै श्रीविष्णवे नमः ॥ १ ॥

इह खलु सकलकौतुकसंभृते जगति नृत्यति श्रीः सर्वेषां पुरतः, तां भजन्ते भुञ्जते च सर्वे जन्तव अन्धा इव तारतम्येन, यमानन्दमाचक्षते विचक्षणाः सोऽधिगन्तव्य इति सर्वेषामभिमतं । न तावत्पशुपक्ष्यादिषु तदधिगमसंभवः शास्त्रसमधिगम्यत्वात्तस्य परमात्मरूपस्य । ततस्तत्राधिकारिणस्तिर्यग्वहिःप्रकृतयो मनुष्या इत्यनवद्यं । तत्र च चत्वारो वर्णा व्यवहारधर्मज्ञानरक्षार्थं विभक्तास्तेषु त्रयो वेदाधिकारिणः, एकः सेवापरायणः पुराणाधिकारीति । तत्र त्रयो वर्णा वैश्यक्षत्रियब्राह्मणा वैदिकधर्मानुसारेण तारतम्येनोत्तरोत्तरोत्कृष्टभूमयः श्रुतिसंमताग्निहोत्राद्यनुष्ठाननिष्ठापक्वबुद्धय उपनिषद्भिस्तमानंदं मीमांसन्ते । शूद्रस्य तु त्रैवर्णिकसे-

१ अभ्यर्हितत्वमविवक्षि

वापरायणस्य परमात्ममीमांसानधिकृतस्य भक्तिरेव गरीयसीति भक्तिमार्गं सप्रशंसं प्रवर्तयामासुः पुराणानि तन्त्राणि च । तान्यपि प्रमाणानि वेदानुमतत्वादविगीतशिष्टाचाराच्च । चत्वारोऽपि वर्णास्तारतम्येन प्रतिष्ठिता ऊर्ध्वलोकभाजः प्रमाणानुसरणतारतम्येन फलभेदभाजश्च । तत्र त्रयो वेदे दीक्षिताः, एकोन्यत्र, ते यथा यथाध्वानमारुरुहुस्तथा तथा फलं भेजिरे । तत्र वैदिकोऽध्वा सर्वात्मताप्रतिपत्तिरूपमोक्षांतः, पौराणिकोऽध्वा तु सगुणसाक्षात्कारान्त उपासनाप्राधान्यादधमाधिकारिविषयत्वाच्च । यस्तूभयपरिच्युतः स तन्त्राध्वाधिकृतश्चतुर्थो वा भक्तिप्राधान्यात् । द्विजानां तु वैदिकदीक्षया संपाद्यसंपादनान्न तन्त्रापेक्षा । तत्राप्यपरितुष्टानां तान्त्रिकदीक्षायामनिषिद्धायामधिकारः । तथा च वैदिकाः पौराणिकास्तान्त्रिका मिश्राश्चेति चतस्रो भिन्नाः पंक्तय इति । शास्त्रपद्धतिर्वृद्धसंमता । अभ्युदयनिःश्रेयसहेतुभूतायामपि तान्त्रिकदीक्षायामदीक्षितस्य प्रत्यवायदर्शनान्नावश्यकी, वेदतन्त्रयोरेकतात्पर्यात्, द्वयोरप्येकोपनिषत्त्वाज्जीवो ब्रह्मेति । चत्वारो वेदाः स्वतःसिद्धाः, चतुःषष्टिस्तन्त्राणि शिवप्रोक्तानि स्वतःप्रमाणानि, वेदेन सह सिद्धत्वात्तन्त्रत्वं, सहसिद्धे तथाप्रयोगात् । पाञ्चरात्राणि तु हयग्रीवनारदादिप्रणीतानि तन्त्रनामधेयानि परतःप्रमाणानि । यासलानि तु तन्त्राङ्गानि । वेदस्तन्त्रमिति यमलं युगं, तत्संबन्धाद्यामलानि तदधीनप्रामाण्यात् । तस्माद्वैदिक्यस्तान्त्रिक्यः पौराणिक्यो वा दीक्षा अनेकविधा अप्यधिकारभेदव्यवस्थिता इति दीक्षाविदां परिनिष्ठितानामभिप्रायः । यासु पक्वाः परमात्ममीमांसामातन्वन्ति लभन्ते च निरतिशयानन्दरूपां मोक्षश्रियम् ।

तत्र कश्चिद्वैष्णवैकदेशी मुद्राङ्कनं श्रौतं मन्वानश्चातुर्वर्ण्यं तत्राधिकृतमिति प्राह । तत्रायं विचारः । श्रौतत्वं न चातुर्वर्ण्यव्यापकमश्वमेधादावतिप्रसङ्गात् । नापि चातुर्वर्ण्यं श्रौतत्वव्यापकं शूद्रे-

प्वतिप्रसङ्गात् । नहि शूद्रा वैदिके कर्मण्यधिकृताः । दृश्यन्ते च कैश्चिच्चक्रेणाङ्किताः शूद्राः । यद्ययं चातुर्वर्ण्यमुद्दिश्योत्सर्गस्तदा शूद्रेषु चारितार्थ्यात् द्विजान्साग्निकान्भस्मधारणाधिकृतान्न व्याप्तुमर्हति विशेषेण भस्मधारणशास्त्रेण बाधात् तक्रकौण्डिन्यवत् । अतएव "एकजातेरयं धर्मो यद्विष्णोर्लिङ्गधारणम्" इति स्मृत्या व्यवस्थापितं । एकजातिः शूद्रः उपनयनाभावात् । "यथा श्मशानजं काष्ठं सर्वकर्मसु गर्हितं । तथा चक्राङ्कितो विप्रः सर्वकर्मबहिष्कृतः ।" इति साग्निकेषु निन्दितं च । विप्र इति द्विजातेरुपलक्षणं साग्निकत्वसाम्यात् ।

अस्त्वेतत्सर्वं श्रौतत्वमेवासिद्धं चक्रधारणस्य । यदुदाहरन्ति "अतप्ततनूर्न तदामो अश्नुत" इति तत्र प्रमाणं तदसिद्धम् । अत्र मन्त्रे वैष्णवैश्चक्रेणेत्यध्याहृतं, पाशुपतैस्त्रिशूलेनेति । एतदुभयं तन्त्रमूलं न श्रुतिमूलं, अतो न श्रुतिव्याख्यायामुपकरोति, ततस्तपसेति श्रौतैरध्याहृतं योग्यत्वात् । तस्मान्नायं मन्त्रश्चक्रप्रतिपादकः । (यच्च) "स होवाच याज्ञवल्क्यस्तस्मात्पुमानात्महिताय हरिं भजेत् सुश्लोकमौलेर्वर्माण्यग्निना संदधते" इति शतपथश्रुतिं "प्रतद्विष्णो अब्जचक्रे सुतप्ते जन्माम्भोधीततवे चर्षणीन्द्राः । मूले बाह्वोर्दधन्ये पुराणा तु लिङ्गान्यङ्गे तप्तायुधान्यर्पयन्त" इति सामश्रुतिं च वैष्णवोपन्यस्तां प्रत्याचख्यौ पृथ्वीचन्द्र इति कमलाकरो निर्णयसिन्धौ, अतश्चक्राङ्कनं व्यामोहमात्रमिति शूद्रोऽपि न तत्राधिकारी । किंच चक्राङ्कनं श्रौतमस्तु तथापि किमिदं श्रौतेनोत स्मार्तेनाथ लौकिकेन वह्निना साध्यं । पक्षत्रयेऽपि यतिब्रह्मचारिप्रभृतीनामनग्निकानां नाधिकारः कर्मणोऽग्निसाध्यत्वात् । सत्यप्यधिकारे गृहस्थानां वैतानिके गृह्ये वा सूत्रेऽसंग्रहाच्चक्राङ्कनस्य न श्रौतत्वं नापि स्मार्तत्वं तथा सत्यपि श्रौतस्मार्ताग्निसाध्यत्वे तत्तदग्निसाध्यं तस्मिंस्तस्मिन्नेव विनियुक्तं स्यात्ततो न साधारणाधिकारिषु

प्रवृत्तं। लौकिकेन चेत्, कथं श्रौतत्वमस्य। श्रुतिप्रतिपाद्यत्वाच्छ्रौतत्वमिति चेत्, प्रतिपादकश्रुतीनां तप्तमुद्राग्रहणे विनियोगादर्शनादितिकर्तव्यतायाश्चादर्शनाद्ब्राह्मणे सूत्रे वा। तस्मादवैदिकं तप्तमुद्राग्रहणम्। अस्तु वा तथा। तथापि परपदप्राप्तिप्रतिबन्धकामत्वनिवृत्त्यन्तं दाहे तत्क्षणे मरणप्रसङ्गादाचार्याभावप्रसङ्गाच्च संप्रदायविच्छेदापत्तिप्रसङ्गः। एकदेशदाहे आमत्वानिवृत्त्या परपदलाभानधिकाराद्दाहदुःखमात्रानुभवेन कार्तार्थ्यप्रसङ्गः। संपूर्णभर्जनारोपेप्यारोपितसामग्र्याऽनारोपितपदारोहणं दुर्घटं। ततो व्यर्थ एष प्रयासो यद्वैदिकत्वप्रतिपादनं तप्तचक्राङ्कनस्य। उक्तहेतुभिरवैदिकत्वादेव तत्र पाञ्चरात्रं हायग्रीवं नारदीयं वा प्रमाणमिति तेन वैष्णवेनोररीकृतं, अन्यथोक्तानुवादेनाप्रामाण्यापत्तेः। प्रामाण्याङ्गीकारे वेदबाह्यविषयत्वं। अतएव कृतमुद्राग्रहणस्य दासान्तं नाम निर्दिशति त्रैवर्णिकबाह्यं। प्रामाण्यानङ्गीकारे सर्वथा हस्ताद्गलितम्।

ननु स्मृतीनामिवैकवाक्यत्वं वेदेन तन्त्राणामपीति चेत्, स्मृत्या चक्राङ्कितानां कर्मानधिकारनिर्देशादवैदिकविषयत्वं स्पष्टमुक्तमतो नैकवाक्यता वेदेन पाञ्चरात्रादितन्त्रोक्तचक्राङ्कनशास्त्रस्य। किंच किं कर्मशास्त्रेणोत ज्ञानशास्त्रेण चक्राङ्कनशास्त्रस्यैकवाक्यता। नाद्यः, तदङ्कितस्य सर्वकर्मबहिष्कृत इति नित्यनैमित्तिककाम्यप्रायश्चित्तबहिष्कृतत्वात्। न द्वितीयः, अङ्कनस्य कर्मरूपत्वेन प्रमाणकोटावनिवेशात्॥ ननु "अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा। ब्राह्मणस्य तथैवेदं तप्तमुद्रादिधारणम्॥" इति पद्मपुराणात्, तथा "ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः। शङ्खचक्राङ्किततनुस्तुलसीमंजरीधरः।गोपीचंदनलिप्ताङ्गो दृष्टश्चेत्तदघं कुतः।" इति काशीखण्डाच्च चक्राङ्कनं स्मार्तं नित्यं मनुष्यसाधारणं सकलपातकशमनं सिद्ध्यति इति चेत्, कर्णं दत्वा शृणु तदपोहं।

"यस्तु संतप्तशङ्खादिलिंगचिह्नतनुर्नरः । स सर्वयातनाभोगी चण्डालो जन्मकोटिषु । द्विजं तु तप्तशङ्खादिलिङ्गाङ्किततनुं नरः । संभाष्य रौरवं याति यावदिन्द्राश्चतुर्दश ॥" इति बृहन्नारदीयात् मनुष्यसामान्ये ब्राह्मणादिविशेषे च चक्राङ्कननिषेधः, तस्य तत्संसर्गिणश्चानर्थः स्फुटः । "शङ्खचक्राद्यङ्कनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥ शङ्खचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥" इति विष्णुस्मृतेरङ्कनस्य शूद्रधर्माभिधानाद्द्विजाधर्मत्वमुक्तं, तं स्वधर्मं मन्यमानस्य द्विजस्यापि वैदिकदीक्षाविधुरसाम्यप्रदर्शनपुरःसरं वैदिकधर्मात्प्रच्यावनं च स्पष्टं । किंच "यथा श्मशानजं काष्टमनर्हं सर्वकर्मसु । तथा चक्राङ्कितो विप्रः सर्वकर्मसु गर्हितः ॥" तथा "शिवकेशवयोरङ्कान्च्छूलचक्रादिकान् द्विजः । न धारयेत मतिमान्वैदिके वर्त्मनि स्थितः ।" इत्याश्वलायनवचनाभ्यां कर्मानर्हकाष्टदृष्टान्तोपष्टम्भेन चक्राङ्कितविप्रस्य सर्वकर्मानर्हत्वमुक्त्वाङ्कधारणस्य वैदिकदीक्षाविरोधिता स्पष्टमुक्ता । तस्मात् त्वदुक्तवचने ब्राह्मणशब्दो वेददीक्षाच्युतब्राह्मणपरः । अतएव यथा तथेति दृष्टान्तोपि स्वरसतः संगच्छते । यथा वेददीक्षारूढस्याग्निहोत्रवेदाध्ययनादिनित्यं, तथा तदनारूढस्याङ्कनं नित्यं तदितरोपायासंभवात् । अतएव त्वदुक्तद्वितीयवचने इतरशब्दः स्वस्वदीक्षाच्युतपरः । अतएव "तदघं कुतः" इति दीक्षाच्युतिरूपमघं कुत इति फलनिर्देशः संगच्छते । परंतु पङ्क्तिर्भिन्नैव, वचनान्तरे "स शूद्रवद्बहिष्कार्यः" इति पङ्क्तिनिषेधात् । अतएव पक्षद्वयवचनानामेकवाक्यत्वं । भिन्नवाक्यत्वे मिथः प्रामाण्यव्याघातात्कुत्रापि न सिद्ध्यति चक्राङ्कनं । एकवाक्यत्वे दीक्षाच्युतपरत्वं चक्राङ्कनस्य, नष्टोद्धाररूपत्वात्पुनरुपनयनवत् । नच विधिवचनानुरोधेन निषेधवाक्ये लक्षणा वक्तुं शक्या, निषेधोद्देश्यतावच्छेदककोटौ "वैदिके वर्त्मनि स्थितः" इति द्विजवि-

क्षेपणात्। तस्मान्निषेधवाक्यमनुरुन्धानं विधिशतमपि सामान्यतः प्रवृत्तं संकोचमापद्यते, न निषेधो विध्युद्देशैकदेशविषयत्वात्। तस्माच्छूद्रव्रात्यादिविषयं तप्तमुद्राधारणमिति सिद्धं, त्वदुपन्यस्त-श्रुतीनामनुपलम्भात् उपलम्भेऽप्युपन्यस्तस्मृत्यनुरोधेन व्रात्यादिवि-षयत्वौचित्यात्। अथवा ब्राह्मणविषयत्वाग्रहे निषेधस्मृत्यनुरोधेना-ग्निनाग्निबीजेन योजितानि सुश्लोकमौलेर्वर्माणि जगन्मङ्गलादिकव-चानि संदधते इति शतपथार्थः। इत्थं सामवेदेऽपि आयुधन्यासो वर्ण्यते सुतप्तेऽग्निबीजसंयुक्ते अब्जचक्रे शङ्खचक्रे दधन् न्यस्यन्नित्यर्थः।

किं बहुना, यत्नशतकल्पिताऽपि श्रुतिरर्थान्तरपरायणीकृता निषेधस्मृत्या। तस्माद्यथास्वं दीक्षिताः पक्वमानसा मीमांसमाना लभन्ते नित्यापरोक्षां निरतिशयानन्दरूपां मोक्षश्रियमिति शिवम्॥

ध्याननिर्धूतपापास्तु वैष्णवा मोक्षभागिनः।
अन्तर्बहिस्तापशून्या जयन्ति जगतीतले॥ १॥
दीक्षा एव पशुत्वस्य सहजस्य निवर्तिकाः।
तस्मात्पशुपतेः शिष्याः सर्वे श्रीशंकरस्य हि॥ २॥
रामचन्द्राहिभूवर्षे शालिवाहस्य गोंडले।
तप्तचक्राङ्कमीमांसा कृष्णानन्देन निर्मिता॥ ३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दसरस्वतीपूज्यपादशिष्येण
श्रीकैवल्यधामनिवासिना श्रीकृष्णानन्दभिक्षुणा विरचिता
तप्तचक्राङ्कमीमांसा समाप्ता॥

---

१ नैतत्कर्म वैदिकं बहूनां वैदिकानां विरोधदर्शनात्, वैदिकत्वे हीतरोपनयना-दीनामिव विरोधस्य विरुद्धत्वात्। केषाश्चिदेव चिन्तनीयचरिताचाराणां सान्निनि-वेशं प्रवृत्तिदर्शनाच्च नैवंविधं वैधमन्यत्किञ्चित्कर्मास्ति यत्रेत्थं परिपन्थिनौ स्तः पक्षौ, किञ्चैतत्कर्मप्रवृत्ता अपि विमता उपलभ्यन्ते। तथाहि—केचनानुदिनं नाति-तप्तेन चक्रादिना दह्यन्ते, केचन च प्रति मासं वर्षं गुरुदर्शनं वा दह्यन्ते, केचनतु सकृदेवातितप्तेन चक्रादिना वृषोत्सर्गवृषदाहं दह्यन्ते, केचन हि शीतेन चन्दना-द्यनुलिप्तेन तनुना चक्रादिना कामचारतोऽङ्किता भवन्ति। विस्तरस्त्वन्यत्र.

# स्त्रीरत्नप्रस्तावः ( अष्टमं पदम् ) ।

धर्मनीतिज्ञहस्ताब्जविकासायोदयाचलम् ।
रत्नप्रस्ताव आरूढस्ततो वर्णक्रमः स्फुटः ॥ १ ॥
नमो धर्माय गम्भीररूपाय सकलाप्तये ।
यद्विज्ञानाय लोकेषु विद्याः सर्वाः प्रतिष्ठिताः ॥ २ ॥
यद्विज्ञानात्सुखं सर्वमक्षया कीर्तिरुत्तमा ।
यदज्ञानान्नरो नूनमधोऽधः पातमृच्छति ॥ ३ ॥
शास्त्रतन्त्रो लोकतन्त्र इति द्वौ संगतौ पथि ।
लोकतन्त्रं शास्त्रतन्त्रो वक्ष्यति श्लक्ष्णया गिरा ॥ ४ ॥

तत्र प्रथमं लोकतन्त्र उवाच—दृष्टं ब्रह्माण्डमण्डले स्त्रीनाम रत्नं, लज्जाज्योतिषा महर्घं, आसेचनकं, महतामपि मोहकं, समुत्पादकधारकयोर्भूषकं, मर्यादामतिलङ्घ्य भोक्तुर्दूषकं, स्वसमानजातीनामनेकसद्गुणानामनर्घरत्नानामुत्पादकं, शीलसंस्तुतं, धिक्कृतैरप्यभिलष्यमाणंनासाभरणमिषेण मुक्तावज्रवैदूर्यस्वर्णादिगन्धाधिकृतं, वशीकृतकामदासं, कामपरवशहृदावासं, सकलब्रह्माण्डमूलं, मारितमहर्षिवृन्दमन्दहासं, मुखोपमादासीकृतचन्द्राब्जद्वयमद्वयं, किं बहुना पामरजनैरविदितानन्तसद्गुणं,यद्दानं दातुरनन्तश्रेयसे, प्रतिग्रहीतुरनन्तसुखाय पूजायै श्रेयसे च । तत्र च पात्रं विदितवर्णाश्रमविभागो विचारितभोगपरिणामो निश्चितभोगरसैकपरमार्थोऽभिलषितसंपादनदक्षो व्यवहारनिपुणो भोगचतुरः । तयोः संमेलने सांसारिकं किं किं न सिद्ध्येत् । अतो मिथो वंशकुलगोत्राचरणवृत्तिविद्याप्रभृति परीक्ष्य सम्बन्धं दानप्रतिग्रहरूपं कुर्वन्ति स्म पूर्वजाः । अहो यदनधीतविद्यमप्यधीतविद्यैर्नम्यते पूज्यते च, एतादृशं महारत्नं यद्भोक्तृकर्तृज्ञातृसद्भोग्यमतिमधुरं, येन दासीकृतं हरिहरादिजगत्, तदिदानीन्तना बहुभोग्यं मन्यन्ते यदेकमपि भोक्तारं

नाभिलषति यतो दासीकृतं जगत्, परंतु मामभिलषेति भोक्तारं सूचयति पश्यति चेतस्ततः को मामभिलषतीति येन चाभिलषितं पुमन्तरं विस्मृतं तेन स्त्रीत्वं, येन च तादृशं महारत्नं धर्मतो बहु संपादितं स्मृतं तेन च पुंस्त्वं। अतो बहुपत्नीत्वेऽपि पुंसो योषिद्रत्नं त्वेकपतिकमेव। स्वयोग्यतां स्वमंतरा कः पालयेत् अतो दानप्रतिग्रहनिर्बन्धः शोभनतमः॥

प्रथमं पूर्णस्वत्ववता पित्रा दत्तेऽपि ममत्वानुवृत्तिदर्शनात्परस्वत्वापादनेऽपि स्वस्वत्वानिवृत्त्या पितृपत्युभयस्वत्ववतः पुनर्दानायोग्यत्वान्न पुनर्विवाहान्तरं। यदि स्वयमभिलष्योपेयात्कंचन तदा को विशेषो व्यभिचारात्। अतः स्वयमनभिलषणान्मिथोदानप्रतिबन्धकस्वत्वद्वयसंक्रान्तेर्दानायोग्यत्वद्योतनाय सौभाग्यपरित्यागः क्रियते कार्यते च जनैर्न्यायपरम्पराप्रतिष्ठितैः पत्युरनन्तरं। यच्च वचनं पुनर्विवाहप्रतिपादकं तत् न्यायबहिर्भूतमिति न मतं कैश्चिद्द्यावधि, अतएव निर्मूलमिति वदन्ति तादृशं वचनं॥ ननु धर्मे को न्यायप्रसर इति चेत्, सत्यमुक्तं परंतु योग्यतापरीक्षा तु भिक्षते न्यायं यमन्तरा न काऽपि परीक्षा सिद्ध्यति लोके। तर्हि कोऽयं न्यायोऽज्ञानावस्थायामन्याधीनीकरणं निर्दयहृदयरचितं। एष एव न्यायो महान् सदयहृदयप्रियो यच्छिक्षणयोग्यावस्थायां शिक्षकायत्तीकरणं। अतएवाष्टमे हायने उपनीय शिक्षकायत्तीकुर्वन्ति बालान्। येन शिक्षकाभिमते आयत्तीकर्तृसंमते स्वयोग्ये गुणे निपुणा भवन्ति बालाः। शिक्षणीयबालगुणानां भोक्तारः पितरौ गुरुर्बान्धवाः पत्नी संततिरप्यग्रिमा स्वयं च। योग्यकालिकशिक्षाभावे दुःखिनः प्रागुपन्यस्ताः सर्वेऽपि। प्रसिद्धमेतत्। यथा बाल्ये पितृभ्यां गुरुणा च शिक्षित उभयानन्दवर्धनस्तथा कन्याऽपि दातृप्रतिगृहीतृकुलवृद्धशिक्षिता पितृश्वशुरकुलानन्ददायिनी स्वयं शिक्षणाधिकारिणी च भवति। पत्या परीक्ष्य संपादिते श्वशुरादिशिक्षापरिष्कृते पितृ-

संमतशीले के नाम दुःखं मन्वीरन्नुक्तरन्ने । अत इयमुभयकुलानन्ददायिनीति गीयते विद्वत्परिषदि । परीक्ष्य कर्मणि कृते को नाम संनिविष्टो न स्यान्महत्सभायां । अत इयं दानसमये ब्रह्मलोकावाप्तिहेतुरिति वदन्ति याज्ञिकाः, मोदन्ते च तद्वंशजाः पण्डिताश्च ॥

एतेन पुत्राणां बाल्ये विवाहो न शस्यत इति सिद्धं, अनधीतविद्यस्य समावर्तनानधिकारात्, कन्यापरीक्षानधिकारात्, गार्हस्थ्यगुणदोषानभिज्ञत्वाच्च । कन्यानां तूभयकुलशिक्षापेक्षत्वाद्युक्तं दानमष्टमे वर्षे, उपनयनवत् । अतएव स्त्रीणां विवाह एवोपनयनमिति वदन्ति वृद्धाः । परम्परालब्धधर्मशिक्षादीक्षैवोपनयनमिति निष्कर्षः । यच्च ऋतुमत्या वर्षत्रयं पितृगृहनिवासवचनं तत्पत्युरशक्तिविषयं, यतस्तत्र वासो विधीयते, न तु दानं दानकाल एवाभिरूप्य सहितौत्कृष्ट्यस्य सत्त्वाद्यौवनमात्रस्य प्रतीक्ष्यमाणत्वात् "ऋतौ भार्यामुपेयात्" इतिविधिरपूर्वत्वे नियमत्वे परिसंख्यात्वे वा नित्यत्वं न व्यभिचरति यतः,ततःप्रथमे रजसि गर्भाधानयोग्याय देयेति दानरहस्येऽपि सुरूपताविशिष्टमौत्कृष्ट्यं पात्रस्य प्रथमं लक्षणमिति तत्त्वं ॥ ननु अपक्ववीर्यासु गर्भाधाने विपत्तिप्रसङ्ग इति चेत्, अदृष्टरजःस्वपि व्यासकर्णशालिवाहनहूणगुरुप्रभृतीनां बलवतामुत्पत्तिदर्शनात्, प्रौढास्वपि विपत्तिदर्शनाद्गर्भाधाने वयोवृद्धिरप्रयोजिका । यतः स्त्रीवीर्यं पोषकं, पितृवीर्यं बीजमिति स्थितिः । तस्मात् दृष्टरजस्तु बीजपोषकत्वनिश्चयादृतौ भार्यामुपेयादिति विधिः प्राथमिकरजःप्रभृति प्रवर्तते, सति पुष्पे फलप्रतिबन्धस्यायोग्यत्वात् यद्यव्यक्तमपि पुष्पं फलोपधायकमिति दिक् । तस्मादविचारमूलो वयोवृद्ध्याग्रहः । अत एवादर्शं विवाहो मुख्यः । यत्त्वाधुनिकाः कन्यानामपि बाल्ये विवाहो न शस्यत इति वचनानि प्रदर्शयन्ति तानि पात्रदानपराणि, न वयोवृद्धिपराणि ।

अन्यथा वाक्यभेदापत्तेर्वचनान्तरविरोधापत्तेश्च ॥ ननु क्षात्रकन्यानां स्वयंवरविधिः श्रूयते, स च न प्रौढावस्थामन्तरा संगच्छत इति चेत् भोगप्रधानजातेरनुज्ञेयं, न विधिः । यथैकादशे हायने क्षत्रबाला उपनीयन्ते तथा कन्या अपि दीयन्ते जलपूर्वं, द्वादशे तु रजस्वलायां गणनात् । अनतीतकालमादाय वा व्यवस्था उपनयनवत् । कन्यादानं त्वष्टम एव विशिष्यते शिक्षाकालानतिक्रमसामञ्जस्यात् अदृष्टरजसो दानसामञ्जस्याच्च ॥

कथमपि पुनर्विवाहो न प्रसज्जते उक्तप्रतिबन्धात्। को नाम भुञ्जीतान्यस्मै परिविष्टं तेन च स्वीकृतं श्वमार्जारमन्तरा । दात्रा जलपूर्वं दत्तं प्रतिगृहीत्रा सप्तपद्या गृहीतं परिषेचितान्नमिव नान्यभोग्यमितिन्यायः। किं भोक्त्रा त्यक्तमन्नमन्येऽपीच्छन्ति मनुष्याः सन्तः। अतस्तद्योगस्य सर्वासंमतत्वात्पत्युरनन्तरं सौभाग्यपरित्यागो गृहमात्रसंस्थितिश्च संमता संभावितानांसभ्यानां।अतएव पत्या सह गमनं प्रशंसन्ति स्म वृद्धाः । पुनःपतिविधानवचनं सप्तपद्याः प्रागस्तु यथाकथंचिच्चरितार्थं, स्वस्वत्वापादकप्रतिग्रहसंस्कारस्य सप्तपद्यन्तत्वात् । वर्णस्वरयोरिव संपादिता सप्तपद्या मैत्री केन भेत्तुं शक्या केन वा वोढुं । तस्माद्विवाहस्वरसमजानद्भिः पशुप्रायैः कामतन्त्रैरङ्गीकृतः पुनर्विवाहो विवेकशैथिल्यमूलः । किं संपादितं मानुषजनुष्मता, किंह्यन्यै समर्पितं पशुभिः, प्रवृत्तितारतम्येऽपि विवेकसाम्यात् । एवं स्थिते न्यायपथे कः काचपात्रं पुनरुद्वाहस्येति वदतु भवान् । अथवा "पतिरन्यो विधीयते" इत्यत्रान्यशब्दो देवरपरः, "द्वितीयो वरो देवरः" इति निरुक्तात्। स च पत्युरनुजे रूढः। स च कलिवर्ज्यः। एतेनैतद्वचनं युगान्तरविषयं । कथमपि नैतद्वचनं पुनर्विवाहप्रतिपादकं । दत्तदानायोगाद्विभागेनाङ्गीकृतत्यागायोगाल्लज्जाभारस्थगितत्वादद्यपर्यन्तं निरुद्धः पुनरुद्वाहः ।

"न भ्रातृत्वं न देयत्वं स्त्रियः पत्युरनन्तरम् ।
न दाता न गृहीता वा न पाणिग्रहणं पुनः ॥"

विधयामुद्दिश्य स्नातकोपस्थानप्रसङ्गे दत्तादानप्रसङ्गे स्वीकृतत्यागप्रसङ्गे स्त्र्यावर्तादृप्रसङ्गे च भविष्यति पुनरुद्वाहः शिक्षकाभावात् । यतः

"सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः ।
सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥
किं मृतेनापि संत्यक्तः पाणिर्विधिनिपीडितः ।
किं छद्मिनौ दुर्बलौ वा वक्तारौ राजपण्डितौ ॥"

शिक्षाकालमपेक्ष्याष्टमादिद्वादशान्तं च प्रवृत्तो दानकालः अतिगम्भीरः प्राक्तनव्यवहारो धर्मरूप इदानींतनैर्ह्रसितविवेकैर्दुर्विज्ञेयोप्यनुसर्तव्य एव ।

"क धर्मो बहुगम्भीरः कोत्तरत्राविवेकिता ।
अतः परम्पराप्राप्तमार्गो धर्मः सनातनः ॥ १ ॥
क भूरिमतयः पूर्वे मन्वाद्याः पारदर्शिनः ।
तद्बुद्ध्यालम्बसंचाराः केदानींतनपण्डिताः ॥ २ ॥"

तस्माच्छिक्षायोग्यकालमभिप्रेत्याष्टमे वर्षे उपनयनविधिवदलंकृत्य कन्यामुदकपूर्वां दद्यादिति विधिः संगच्छते । अनुसृतोऽनुसर्तव्य एव सः । कन्यात्वं चाष्टमे मुख्यं जातिपरत्वेनापत्कालेन चातिदिष्टमाद्वादशं, अतएव दृष्टे रजसि त्यागो विहितो नतु दानं । पुंसस्तु रागप्राप्तत्वाप्रतिग्रहाधिकाराच्च यथाशक्ति यथाविभवं बहुपत्नीत्वं युज्यते । न कुत्रचिदपि पुंसो विवाहविधिः श्रुतस्तत्र कालनियमो वा, यथोपनयने संन्यासे वा । अध्ययनार्थं विधिरुपनयनस्य तत्त्वारामार्थं विधिः संन्यासस्येति तयोर्विनियोगे पुंसो विवाहो रागप्राप्त इति सिद्धं । तथा च रागप्राप्ते विवाहे सति रागमूलानि कर्माणि श्रौतस्मार्तानि नित्यनैमित्तिकानि च

विधीयन्ते। तत्र च हेतुः पत्न्येव। अतएव सहधर्मिणीत्यपि तस्या नाम। अतएव "पत्युर्नो यज्ञसंयोगे" इति पाणिन्यनुशासनं। पत्या सह पारलौकिककर्माचरणात् परलोकजिगमिषुणा पत्या सह गमनं न्याय्यं युज्यते च। तदिदानीमुपप्लुतं पुनरुज्जीवनीयं दयालुभिः पुरुषधुरीणैः। किं पुनर्विवाहवादेन शूद्रापसदसाम्यापादनेन मर्यादोच्छेदेन कामस्पष्टीकरणेन, यतो निर्वृतो धर्मः प्रथमविवाहेन। कन्यानां वयोवृद्धौ कानीनप्रजाप्रसङ्गः पुनर्विवाहे गोलकोत्पत्तिप्रसङ्गः। सत्यपि द्वितीयपतौ पूर्वपतिश्राद्धप्रसङ्गः स्त्रीणां मृतकधनमात्राधिकारप्रसङ्गो वर्णसंकरप्रसङ्गश्च। एतेनाधुनिकाः समाहिता इत्यवधेयं। यत्तु एकादशपतिपरायणाः श्रुतिं दर्शयन्ति, न पश्यन्ति "पतिमेकादशं कृधि" इति श्रुतावेकादशशब्दं द्वितीयैकवचनान्तमखण्डसौभाग्यसूचकं। अन्यथा को नाम भुञ्जीत दशपुत्रसुखम्॥

यत्तु केचिदेकपङ्क्तिभोजनवतां मिथः कन्यासंबन्धो योग्य इति वाचाटाः, किमत्र न्याय्यं, एकपङ्क्तिभोजनेन मिथः कन्यासंबन्ध उत कन्यासंबन्धाभावात्पङ्क्तिविच्छेदः। पश्यतु भवानेकपङ्क्तिभोजनवत्सु पशुपक्ष्यादिषु किं मिथः शारीरसंबन्धः। अहो यत्पशुभिरपि समानजातिः प्रार्थ्यते मनुष्यैरपि विस्मर्यते। तस्मादिदमत्र न्याय्यं कन्यासंबन्धाभावात्पङ्क्तिविच्छेद इति। "यथा कन्या तथा हविः" इति वचनं चात्रानुकूलं, मिथः पङ्क्तिव्यवहारे जातिविस्मरणप्रसङ्गाज्जातिविस्मृतौ मिथः कन्यासंबन्धप्रसङ्गादश्वतरादिवद्वैरूप्यप्रसङ्गात्संततिविच्छेदापत्तिप्रसङ्गात् संकरजातेरन्यस्या एवाङ्गीकारप्रसङ्गात्। तस्मात्प्राचीनं व्यवहारं समूलं संस्मृत्य स्थापयतु भवान्येन साफल्यं बुद्धेः। किं नास्ति त्वन्निकटे तादृशस्तर्को येन प्राचीनव्यवहारः समञ्जसो दृश्येत येन भवत्पूर्वजा नन्देयुः। एतत् सर्वेऽपि जानन्ति यदन्तरङ्गजनतोषणं बहिरङ्ग-

जनपोषणं नवीनजनशिक्षणं प्राचीनपथवर्तनं पथ्यमिति । नवीनमार्गः पारं गमिष्यतीति न निश्चयः, यतः परोक्ष उत्तरो देशोऽनन्तः । अतो नवीनेनापि बुद्धिमता प्राचीनः पन्था रक्ष्यो यथाबलं, तत्रैव लाघवात् ॥

किं प्रदोषसमयः संप्राप्तः, किं स्त्रीदेवता सिंहासनोपविष्टा, किं विष्ण्वादयोऽनुकूलाः, किं त्वं दिगम्बरः, कुतो नृत्यसि तत्पुरतः । पश्य तं महेश्वरं, कीदृशौ तौ दम्पती प्राथमिकौ । अतएव तौ पूजयन्ति कन्यकाविवाहसमये तद्वदैक्येप्सवः । अतो न दम्पत्योर्विभागो वर्णनीयः, नापि पुनर्विवाहः प्रतिपादयितव्यः, येन पुरुषमरणं पुरुषैरेवातियत्नेन संपादितमित्यापतितं स्यात् । अतो मिथो वर्णस्वरयोरिवाविभागमापन्नौ दंपती चिरं नन्दतां । परम्परासमधिगतो धर्मोपि सुप्रतिष्ठितोस्त्वित्याशास्महे ॥

इत्थं पण्डितपद्धतिक्षुण्णां श्लक्ष्णां लोकतन्त्रस्य वाणीमुपाकर्ण्य परिणतस्वान्तः शास्त्रतन्त्र उवाच—

शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ये नराः ।
मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ॥ १ ॥
गतानुगतिको लोको यतो मार्गः पुरातनः ।
ततोन्यत्काननं प्रोक्तं तत्र भ्रमति वानरः ॥ २ ॥
भारतोत्थद्विपादानां प्रकृतिः पशुतो वहिः ।
ततः शास्त्राणि तीर्थानि देवा भक्ताः कृपा त्रपा ॥ ३ ॥

अत इदं मानवं शास्त्रं—"प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः । स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ १ ॥ उत्पादनमपत्यस्य जातस्य परिपालनं । प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ २ ॥ अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा । दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ ३ ॥ उत्कृष्टायाभिरूपाय वराय सदृशाय च । अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥ ४ ॥" अष्टमवर्षात्प्रागपीत्यर्थः ॥ ४ ॥ "त्रीणि वर्षाण्यु-

दीक्षेत कुमार्यृतुमती सती । ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ५ ॥" कुमारी अक्षतयोनिः, सदृशं गर्भाधानसमर्थं, समानवयसोर्विवाहे प्रथमे रजसि पुंसो गर्भाधानशक्तेरभावाद्वर्षत्रयं प्रतीक्षेत पत्युः शक्तिं । दाने प्रतिग्रहे वा कन्यावरयोरौत्कृष्ट्ये चाभिरौप्ये च सति वयोनिरीक्षणमप्रयोजकमिति भावः ॥५॥ "काममामरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि । न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ६ ॥" गुणवते देयेति विधिः, नान्यः, अपिशब्दस्वारस्यात् ॥ ६ ॥ "त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीं । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ ७ ॥" आपदानूढायाः रजोहेतुना धर्मे सीदति सति सत्वरः सन्द्वादशवार्षिकीं वहेत् । सति रजसि त्याज्येति ध्वनिः । दृष्टरजसः स्वयंपतिवरणवचनं तु शूद्रविषयं, पराशरे त्यागविधानात् ॥ ७ ॥ "सकृदंशो निपतति सकृत्कन्या प्रदीयते । सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ८ ॥ न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते । एवं धर्मं विजानीमः प्राक् प्रजापतिनिर्मितं ॥९॥ एतावानेव पुरुषो यज्जायात्मा प्रजेति ह । विप्राः प्राहुस्तथा चैतद्यो भर्ता सा स्मृताङ्गना ॥ १० ॥ वर्णस्वरूपत्वात् ॥ १० ॥ "यस्या म्रियेत

---

१ मरणं नष्टक्लीबप्रव्रजितपतितानामुपलक्षणम् पराशरानुरोधात् । ये वदन्ति पराशरवचनं पुनर्विवाहपरमिति ते प्रष्टव्याः भवन्नये पतितपत्नीनां पुनर्विवाहो न्यायसिद्धः पतिताश्च भवन्त एव पराशराद्युक्त 'कुर्वन्नगम्यागमनं शूद्रः पतति तत्क्षणात् । वेदाक्षरविचारेण शूद्रस्य नरकं ध्रुवम् । ७३ । ७४ ।' इत्यादि पतितलक्षणसमाविष्टत्वात् इति भवतां पत्नीनां प्राप्तो द्वितीयादिविवाहः किमपरैः पतितैः सह भविष्यत्युतापतितैः सह । पतितैश्चेदनवस्थाप्रसङ्गः । पतितत्यागेन पतितस्यैव ग्रहणे प्रयासवैयर्थ्यप्रसङ्गश्च । अपतितैश्चेदसंभवो नहि कश्चनापतितः पतितोपभुक्तां पत्नीत्वेनाङ्गीकुर्यात् । कुर्याच्चेत् परपत्नीदूषकत्वात्पतितापतित्वाच्च सोऽपि पतितः स्यादिति पूर्ववदनवस्थादिप्रसङ्गः पतितस्त्रीपण्यस्त्रीभेदोऽपि क्रियातो दुरधिगमः स्यादिति एवं नष्टप्रव्रजितपत्नीविषयेऽप्यूह्यम्.

कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः ॥ ११ ॥" "नष्टे मृते प्रव्रजिते" इति वचनस्यायमवकाशः ॥ ११ ॥ "न दत्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः । दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतं ॥ १२ ॥" स्वयमापादितस्वत्वापलापप्रसङ्गादिति भावः ॥ १२ ॥ "नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् । न विवाहविधावुक्तं विधवावेदनं पुनः ॥ १३ ॥" मिथः प्रतिबद्धस्वत्वादिति ॥ १३ ॥ "अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः । मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ १४ ॥" अयं अस्वामिकभोगः ॥ १४ ॥ "स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा । वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ १५ ॥ ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् । नियोजयत्यपत्यर्थं तं विगर्हन्ति साधवः ॥ १६ ॥" वेनराज्यं मुख्योऽवकाशः पुनर्विवाहस्य नियोगस्य वा । तद्राज्यस्वरूपं तु मूले स्पष्टम् । एतैर्वचनैः संमनुते न्यायसिद्धमपि त्वदुक्तं प्रस्तावम् । किंच कुमारीवत्सधवावद्विधवाया अपि कंचन धर्मं प्राप्तमवश्यं संमनुते नीतिनिपुणः । यथा स्कान्दे "विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं तस्मात्कार्यं विधवया सदा ॥" इति व्यासः । कबरीबन्धस्य कथमपि भर्त्रर्थत्वात्पतिवदसाधारणत्वात्त्यागयोग्यत्वात्पत्युरसाधारणत्वात्तदभाव इति को न मन्वीत दम्पतिस्वरूपविचक्षणः । अतएव सहगमनं स्त्रियाः पत्येकार्थत्वात् । अतएव तत्पोषणं गले पतितं पत्युः संबन्धिनो वा । वपनं स्त्रिया मृतत्वद्योतकं । एतत्सर्वं विवाहमूलं । तदभावः पशौ ॥

पाराशर्यं च—"ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति । सा मृता नरकं याति विधवा च पुनः पुनः ॥ १ ॥ ऋतुस्नातां तु यो भार्यां संनिधौ नोपगच्छति । घोरायां भ्रूणहत्यायां युज्यते नात्र

१ मानवे शास्त्रे.

संशयः ॥ २ ॥" बीजव्यर्थीकरणमुभयोस्तुल्यम् ॥ १ । २ ॥ "नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ। एतास्वापत्सु नारीणां पतिरन्यो विधीयते ॥ ३ ॥" पताविति छान्दसं ॥ ३ ॥ अन्यो देवरो[1] व्युत्पत्ति-बलान्मनुभाषणादविरोधाच्च। न कुत्रचिदप्युपलब्धं पुनर्दानम् ॥ ३ ॥ "मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता। सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥४॥" योग्यत्वात् ॥४॥ "अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी। दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला ॥ ५ ॥" द्रवारम्भात् ॥ ५ ॥ "प्राप्ते तु द्वादशे वर्षे यः कन्यां न प्रयच्छति। मासि मासि रजस्तस्याः पिबन्ति पितरोऽनिशम् ॥ ६ ॥" अशिक्षणापराधात् ॥ ६ ॥ "माता चैव पिता चैव ज्येष्ठो भ्राता तथैव च। त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ७ ॥" त्रयाणामपि दानाधिकारात् ॥ ७ ॥ "यस्तां समुद्वहेत्कन्यां ब्राह्मणो मदमोहितः। असंभाष्यो ह्यपाङ्क्तेयः स विप्रो वृषलीपतिः ॥ ८ ॥" अतस्तत्त्यागः ॥ ८ ॥ "यत्करोत्येकरात्रेण वृषलीसेवनं द्विजः। स भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्विशुध्यति ॥ ९ ॥" ईदृशं तत्सेवनम् ॥ ९ ॥

किं बहु वक्तव्यं, शास्त्रमनन्तं। त्वदुक्तप्रस्तावे नीतिसिद्धे यदस्ति तदस्ति शास्त्रे मिथःपालकत्वात्। अत एतौ पुरातनौ, नव्ययोर्नीतिधर्मयोरुत्पथनामधेयात्, इतीशमूलकसृष्टिवादिनः। पशुमूलकसृष्टिवादिनस्तु तदुभयं नव्यं मन्यन्ते वादिनां स्वस्वमूलप्रकृत्यभिमानमूलोऽयं वादः। सति सत्त्वेनुकूलेऽनादिधर्मवादिनां जयः। तमसि च नव्यधर्मवादिनां जयो मूलप्रकृत्यवगाहानुकूलत्वात्। विवाहादिरनादिर्मानुषधर्मः। अविवाहादिरनादिः पशुधर्मः। तथा पुरुषपारतन्त्र्यं स्त्रियो मानुषधर्मः,स्वातन्त्र्यं सममिति प्रत्यक्षः पशुधर्मः। धर्मार्थं स्त्रीति मानुषः, रत्यर्थमिति पाशवः। प्रजा धर्म इति मानुषः,

[1] द्वितीयो वरो देवरः.

सहजेति पाशवः । आस्मृति संबन्धो मानुषः, आकार्यं संबन्धः पाशवः । अतो मानुषसंबन्धो दुस्त्यजो मानुषाणामिति न भवितुमर्हति मानुषेषु पुनर्विवाहो मानुषेतरसंमतः । अनवच्छिन्नपरम्पराप्राप्तशिक्षावत्त्वं मानुषत्वं धर्मनीतिरक्षासमर्थमिति लोकतन्त्रशास्त्रतन्त्रौ मिथः संभाष्य तुष्टौ प्राप्तकालनिरीक्षणविस्मितचित्तौ सर्वज्ञो व्याप्त इति स्मरन्तौ जग्मतुर्यथेष्टम् ॥

न च्यावयेच्छास्त्रमार्गादनादेर्मान्यसंमतात् ।
नवं न रचयेन्मार्गमसर्वज्ञत्वनिश्चयात् ॥

श्रुतोऽयं धर्मो नयश्च । तथापि विधवानां दुर्जयकामपीडितानां का गतिः यया तासां दुर्दशा निवर्तेतेति चेत्, अयं प्रश्नो दातुः प्रतिगृहीतुर्विधवाया वा । आद्ये न दानाधिकारः, द्वितीये न प्रतिग्रहाधिकारोऽन्यस्वत्वेन प्रतिबद्धत्वात् उभयोस्तस्या अपि । किंच किमयं धर्मप्रश्न उत कामप्रश्नः । आद्ये न धर्मः पुनर्दानानुपलब्धेः । द्वितीये न प्रश्नसंभवः । कया कामवत्या पतिसंख्येयत्तीकृता, संपादितेपि पुनःपत्यावपर्याप्तेः सुस्थत्वात् । अतएव पतयो रटन्ति कुलटानां । यथैका संख्या बाधिता सान्यामपि बाधेत कामवृत्तेर्दुरूहत्वात् ॥ ननु पुरुषवदात्रपि विवाहक्रम इति चेत् । उक्तं पूर्वं परस्वत्वप्रतिबन्धादिति स न पुरुषेऽन्तो बहुपत्नीकः ॥ ननु "पतिरन्यो विधीयते" इति स्पष्टमुपलब्धं पुनर्दानं, ततः पूर्वपतिस्वत्वं निवृत्तमिति चेत्, मृतपतिकानां दायाभावप्रसङ्गः । दायार्थं स्वत्वाङ्गीकारे न पत्यन्तरलाभः । यद्युभयमिष्टं तर्हि गोप्यं पत्यन्तरं, प्रकटः पतिः पूर्वगोत्रं छिनत्ति तथा संबन्धं, ततो न दायलाभः । यदि गोत्रानङ्गीकारस्तदा तु सुतरां दूरे दायः अपिण्डदत्वात् । यासां न दानं तासां निर्बन्धानुरूपो दायः । कन्यानां पतिस्वत्वाया दानं तन्निवृत्त्यै

घटस्फोटः। तस्मान्निवृत्तस्वत्वायाः पतिरपि तादृशो योग्यः। कोऽङ्गीकुर्यात्तादृशीं शिष्टः। तस्मात्पातित्यैकपद्धतिः पुनर्विवाहः। अथ तद्दुःखनिवृत्त्युपायश्चिन्त्यते। दुःखं कस्मात् विवाहादुत पतिमरणात्। आद्ये विवाहः धर्मादुत कामात्। आद्ये धर्ममूलदुःखस्य धर्मार्थत्वात् प्रतिक्षणमभीष्टसिद्धेः सर्वं सुखं। द्वितीये विवाहमन्तरापि कामसिद्धिर्बहुषु स्थलेषु ततस्तत्राप्रयोजको विवाहः। दायार्थं चेत्, किं धनार्थिन्योपि दायमर्हन्त्यतिप्रसङ्गात्। मरणाच्चेत्, नास्त्युपायः शीलप्रतिबन्धात्॥

किंच स्त्रियस्त्रिविधाः स्वकीयाः परकीयाः सामान्या इति। स्वकीयात्वहानिः कामहानिर्धनहानिरिति तासां दुःखत्रयं। क्रमात्स्वकीयात्वरक्षणमुपायः, यतो दायो धर्मः प्रतिष्ठेति सुखत्रयं प्रथमायाः; द्वितीयाया गुप्तपुरुषान्तरं, यतो दायः कामश्च; तृतीयायाः स्वातन्त्र्यं, यस्माद्विपुलं धनं कामश्चेति त्रय उपायाः। यदि कश्चित् सामान्यायै दायं बलाद्दापयेत् तर्हि सामान्यातुष्टस्य बलात्कारोऽयं न न्यायः। यदि न्यायस्तर्हि सामान्यात्वं दायभाक्त्वं च नैकत्र धनस्वत्वस्य पतिस्वत्वमूलत्वात्तदभावात्स्वत्वाभावः। तस्माच्छीलरक्षणं विधवानां सधवानां वा सुखोपायः प्रसिद्धतमो निर्णीतः। तच्छीलरक्षणं पुरुषाणामपि सुखोपायः। अतएव गीतायां "स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः। संकरो नरकायैव कुलघ्नानां कुलस्य च। पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः। दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः। उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः। उत्सन्नकुलधर्माणां मनुष्याणां

---

१ दारिद्र्येण दरिद्रस्येव वैधव्येन विधवायाः प्राप्तं दुःखं दैवायत्तमित्यत्र न शङ्कासमाधानयोरवकाशः। अजातगोदानसंस्कारपुरुषविवाहप्रथा शास्त्रासंमता विधवाबाहुल्यहेतुश्चेति सा यत्नात्परिहरणीया.

जनार्दन । नरके नियतं वासो भवतीत्यनुशुश्रुम" इति । तस्मात्स्त्रीपुरुषाणां दुःखोपस्थापनाय पुनर्विवाहस्थापनपुरुषार्थाः किमुदात्ताः किमनुदात्ताः किं स्वरिताः । त्रयोपि पुनर्विवाहे संमतिं न दातुमर्हन्ति नायकत्वात्पोषणसमर्थाः । तस्मात्प्रचयसामान्यासंमतः पुनर्विवाहो वर्णसंकरादानर्थहेतुः । तस्मात्संस्मरतु भगवान् स्वोक्तं "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं । परित्राणाय साधूनां विनाशाय च दुष्कृतां । धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥" इति वचनं । श्रीशंकरश्च "धर्मग्लानौ सत्यां क्रन्दन्त्यां गवि सुरेषु चलितेषु । धर्मस्थापनदीक्षादक्षस्त्वसतो वृषारूढः ॥" इति धर्मरूपवृषवाहनत्वहेतुं स्वाभिप्रेतं । राजानोपि संस्मरन्तु सिंहासनारोहणपद्धतिं, ब्राह्मणा अपि संस्मरन्तु आश्रममर्यादापद्धतिं, इतरेऽपि स्वस्वपरम्परामार्गं । येन सुखभूयांसः शान्ता नन्दन्त्विति शिवम् ॥

तौ दम्पती नमस्कुर्म ऋक्सामवदिवाद्वयम् ।
रूपं वहन्तौ दम्पत्योर्भाग्यसीमैकसूचकौ ॥ १ ॥
भिक्षुणाऽपि च कृष्णेन स्त्रीप्रस्तावमिषेण हि ।
कृता नरपरीक्षेयं धर्मनीतिज्ञतुष्टये ॥ २ ॥
उपप्लवः कश्चिदेकः स्यादभूदिति मे मतिः ।
यतः प्राचीनसिद्धान्ता इदानीं निन्दनास्पदम् ॥ ३ ॥
विवेकिनामयं सेतुर्धर्मो नीतिर्महाबलम् ।
यदाश्रितानां दुःखानि नश्यन्त्यागामिभिः सह ॥ ४ ॥

---

१ साक्षात्परम्परया वा धर्मसर्वस्वनाशहेतुर्वर्णसंकरता तस्या अधिकारिकुशलशरीरोत्पत्तिप्रतिबन्धकत्वाद्धर्मस्य सर्वस्य श्रौतस्मार्तस्याधिकारिनिबन्धनत्वात् । अधिकारिनिरपेक्षस्य मोक्षदीक्षादेर्धर्मत्वे प्रमाणाभावात् सरलोपायसाध्यत्वे पुरुषार्थचतुष्टयस्य तदर्थं कष्टानुष्ठेयमुपदिष्टवतो वेदादेरुन्मत्तगीतत्वप्रसङ्गादज्ञानिजनमुक्तये भजनभावादिरधिकारिनिरपेक्ष इत्युक्तिरज्ञानिजनस्यापि मुक्तिमङ्गीकुर्वतोऽज्ञानिसहोदरस्य । मूर्तिपूजाप्यधिकारसापेक्षैव.

क्षुण्णं पन्थानमुत्सृज्य चरन्नक्षुण्णपद्धतौ।
पतिष्यति क्वचित्खाते यथान्धो जातिभिः सह ॥ ५ ॥

इति श्रीमद्वाराणसीविराजमानब्रह्मघट्टप्रतिष्ठापितश्रीकैवल्यधामनिवासि-
श्रीकृष्णानन्दसरस्वतीकृतः श्रीरत्नप्रस्तावः समाप्तः ॥

---

# श्रीशिवहृदयङ्गमबिरुदावलीस्तोत्रं (नवमं पदं)।

सैव वाक् सफला नूनं यया वर्ण्येत शंकरः।
अतः किंचित्स्तौमि शंभुं यतः सा सफलाऽमला ॥ १ ॥

व्यक्षादृष्टे वस्तुनि धर्मे तत्त्वे त्वमेव मानमिति। त्र्यक्षत्वं कथयति ते तस्मान्मान्योऽसि सर्वेषां ॥ २ ॥ त्रिलोचनाय नमः ॥ प्रभुतां प्रकटीकर्तुं पीतं हालाहलं त्वयाऽत्युग्रम्। तां कीर्तिं कथयति ते कण्ठे कालः शरण्यस्य ॥ ३ ॥ नीलकण्ठाय नमः ॥ युगपद्वक्तुं भोक्तुं द्रष्टुं कः शक्नुते ऋते त्वत्तः। तस्मान्महेश शरणं दृष्टादृष्टस्य वस्तुनस्त्वं हि ॥ ४ ॥ पञ्चवक्त्राय नमः ॥ अन्योन्यात्मार्पणविधिवैवाहिकमङ्गलं त्वयि प्रथितं। अर्धाम्बिकेश हृद्यं वेदो वेदापि तस्य त्वं ॥ ५ ॥ अम्बिकापतये नमः ॥ गार्हस्थ्यं वनिताश्रितवनितान्यासङ्ग्र बटुता च। एकस्मिंस्त्वयि दृष्टास्तुष्टा अपि सर्वतः श्रुतयः ॥ ६ ॥ पुरुषोत्तमाय नमः ॥ विद्याधीश धनुर्धर धनद वृषारूढ गूढचारित्र। सर्वेऽपि त्वयि वर्णा दृश्यन्ते सर्वरूपत्वात् ॥ ७ ॥ सर्वात्मने नमः ॥ कुटिलोपि द्विजराजः शिरसा श्लाघ्येत केन देवेन। ब्रह्मण्यदेव तुभ्यं शतशो नतयो मदीयास्तु ॥ ८ ॥ चन्द्रचूडाय नमः ॥ विद्वन्नृमुण्डमालां धत्से बहुपन्नमेव तस्यास्तु। माङ्गल्यं पावित्र्यं तस्मै तुभ्यं नमो

भूयः ॥ ९ ॥ कपालमालिने नमः ॥ शास्त्रेणैव ज्ञातस्त्वमनन्तः पञ्चवक्त्र इति शंभो । शास्त्रान्तं वदसि विभो न तवान्तं शास्त्रमभिधाति ॥ १० ॥ अनन्ताय नमः ॥ गङ्गाधरता शिव ते स्वागतशिक्षां तनोति जनतायै । सुकुलोत्था च सुशीला विधृता बलदर्पिणी शिरसा ॥ ११ ॥ गङ्गाधराय नमः ॥ धर्मग्लानौ सत्यां नन्दत्यां गवि सुरेषु चलितेषु । धर्मस्थापनदीक्षादक्षस्त्वमतो वृषारूढः ॥ १२ ॥ वृषवाहनाय नमः ॥ शिवता ते स्पष्टतरा प्रणवं शूलाकृत्तिं करे धत्से । प्रणवालम्बी शिव इति माण्डूक्यं वक्ति शिवता ते ॥ १३ ॥ शूलपाणये नमः ॥ भस्माङ्गराग एष व्यक्तं वक्ति व्यपेतभयतां ते । चिरजीवितां च यस्माद्दग्ध्वा जगदाहृतं भस्म ॥ १४ ॥ भस्माङ्गरागाय नमः ॥ डमरुः शब्दगभीरः शरणागतबोधनाय करसंस्थः । शब्दमयं विश्वमिदं दृष्टिपथे तदपि नेतीति ॥१५॥ डमरुहस्ताय नमः ॥ सौभाग्यसीमतैषा योषा वपुषि त्रिनेत्रता चन्द्रः । वैराग्यं मणिभूदहिर्वाहो धर्मोऽपि दिङ्मुखता ॥ १६ ॥ सौभाग्यनिधये नमः ॥ रूपं ते शिल्पिशतं चित्तं वेदोऽपि वित्तमिन्द्रश्च । ईशत्वं ब्रह्मशतं न वयो गणकोऽपि वक्तुमलं ॥१७॥ वाचामगोचराय नमः ॥ शरणागतकरुणालयतरुणीशरणस्य कस्तु गुणगणनां । ईष्टे कर्तुं शिष्टः स्पष्टतया शास्त्रतुष्टोऽपि ॥ १८ ॥ गुणाकराय नमः ॥ दशशतवदनैर्वक्ति व्यक्तं द्विसहस्रलोचनैः पश्यन् । पञ्चास्य त्र्यक्ष विभो शेषः शेषोऽसि तस्यापि ॥ १९ ॥ शेषभूषणाय नमः॥ एतत्सर्वं मालालभ्यं लिखितं च पुस्तके किंचित् । इति दर्शयसि निगूढं स्वाभिप्रायं नतेभ्यस्त्वं ॥ २० ॥ आदिगुरवे नमः ॥ वेद्योहं वेदशतैर्भूते भूतेपि पञ्चवदनाढ्यः । त्र्यक्षः कोशाधीशः स्पष्टं मुद्रयमाचष्टे ॥ २१ ॥ आत्मारामाय नमः ॥ क्रूरा अपि धीरा अपि घोरा अपि शिव विमूढमतयोपि । संपाल्या इति सर्वं वेषाडम्बरमहं मन्ये ॥ २२ ॥ विश्वंभराय नमः ॥ मृगवच्चपलं चेतो

विग्राह्यं भूतिमिच्छता तु सता । इति हरिणो वर्ण्यते कर्णेन शृणोति कश्चिदहो ॥ २३ ॥ मृगपाणये नमः ॥ कस्ते मस्तकभूमौ हस्तं विन्यस्तुमर्हति प्रौढः । इति ते शिरसि कपर्दो नमयति कोटिं किरीटानां ॥ २४ ॥ कपर्दिने नमः ॥ पशुभोग्ये विश्वे तव युक्तोपेक्षैव पशुपतेः सुतरां । नापि च तेभ्यो लज्जेत्याशावासोर्ह-कृत्तिर्वा ॥ २५ ॥ दिगम्बराय नमः ॥ खण्डः परशुर्वक्ति व्यङ्ग्यं न त्याज्यमेव बलमिति च । केनापि च कालेन हि विघ्नच्छेदोऽपि दृश्येत ॥ २६ ॥ खण्डपरशवे नमः ॥ देवासुरकिंनरनरकृतन-तिनुतिमतिनिरीक्षणायेदं । तदभीष्टवितरणार्थं धत्सेऽनीदृशमहो रूपं ॥ २७ ॥ परमेश्वराय नमः ॥ पूर्णेन्दुबिम्बसदृशं भालल-च्छशिकपर्दवनिताढ्यं । उन्मनलग्नत्र्यक्षं मुखमीक्षेऽहं सतीदृष्टं ॥ २८ ॥ ललितधीरोदात्ताय नमः ॥ त्वद्गुणभृतार्णमालां धृत्वाऽऽयातां रसज्ञवरलिप्सुं । अन्यानूढामार्यां वृत्वा मामुद्धराशु भवात् ॥ २९ ॥ स्तुतिपात्राय नमः ॥ जानासि परमार्थं त्वं सृजसि प्रातिभासिकं । समुद्धरसि संसारव्यवहारं महेश्वर ॥ ३० ॥ सर्वज्ञाय नमः ॥ इमामार्यां गृहाण त्वमनार्यस्यापि शंकर । अनयैव कृतार्थत्वं कृता-र्थस्यापि ते यथा ॥ ३१ ॥ आर्याभरणाय नमः ॥ समर्थस्त्वं याच-कानां महार्घास्तव याचकाः । त्वय्येव दृष्टा लीलेयं शिवत्वाद-तिसुन्दरी ॥ ३२ ॥ महोदाराय नमः ॥ प्रभोः कैवल्यनाथस्य कृष्णानन्देन भिक्षुणा । कृता स्तुतिरियं भूयात्समुद्धरणहेतवे ॥ ३३ ॥ एतत्स्तोत्रं पठेद्यस्तु प्रयतः शुद्धमानसः । दिव्यां दृष्टि-मवाप्नोति शङ्करस्य प्रसादतः ॥ ३४ ॥ क्वानन्ताः शिवसद्गुणाः क्व च महामोहावृता जन्तवः क्वाकाशभ्रटकाः क्व यान्ति कथम-प्यन्तं किमेते बलैः । जाड्यव्याहतिहेतवे प्रयतते सर्वोपि जन्तु-र्यतस्तस्माज्जाड्यविनाशनास्तव गुणा गीता मया केचन ॥ ३५ ॥ अशेषोस्त्वथ शेषोऽस्तु किं शिवं वर्णितुं क्षमः । हंसोऽस्तु गरुडो-

प्यस्तु किं याति नभसः परं ॥ ३६ ॥ वृद्धाभ्यां तरुणाभ्यां वा नूतनाभ्यां प्रतिक्षणं । भक्ताभ्यामविभक्ताभ्यां शिवाभ्यां च मिथो नमः ॥ ३७ ॥ अन्योन्यवैरिणः शंभो क्रीडन्ति तव मन्दिरे । शिवे सति शिवं सर्वं क वैरं क च वा कलिः ॥ ३८ ॥ पञ्चवक्त्र महादेव कीदृशी स्यात्सभा तव । यत्र पञ्चापि वक्त्राणि वहन्ति फलपद्धतिम् ॥ ३९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसच्चिदानन्दसरस्वतीपूज्यपादशिष्य-श्रीकृष्णानन्दसरस्वतीविरचितं श्रीशिवहृदयंगम-विरुदावलीस्तोत्रं संपूर्णम् ॥

---

जय सच्चिदानन्द ।

श्रुतिस्मृत्योः स्वरूपम्—

बहुजन्मानुगतया स्मृत्या प्रोक्ता स्मृतिः स्मृतः । ब्रह्मवेदगतिं वेद तद्वचो वेद उच्यते ॥ १ ॥ तद्वेदनोत्थसंस्कारादुत्था वागुच्यते स्मृतिः । यथा कृष्णः प्राह पार्थं तवापि च ममापि च ॥ २ ॥ अतीतान्येव जन्मानि सुबहूनि परं यथा । तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ३ ॥ तस्माद्गीता स्मृतिः प्रोक्ता प्रामाण्यपदमागता । एतेन स्मृतयः सर्वा व्याख्याता इति मे मतिः ॥ ४ ॥ मन्वादीनां महर्षीणां बहुजन्मानुगा स्मृतिः । अतस्तदुक्तीः श्रुतिभिर्योजयन्ति मनीषिणः ॥ ५ ॥ स्मृतिः श्रुतेर्वा दृष्टेर्वा नान्या संभवति कचित् । श्रुतेर्दृष्टेरेकवाक्यमनुभूतं महर्षिभिः ॥ ६ ॥ अतस्तदुक्तं मानत्वमेतीति कवयो विदुः । नमस्तेभ्यो महर्षिभ्यो यद्वाक्यं मानतामगात् ॥ ७ ॥ नमोस्तु श्रुतये तुभ्यं प्रामाण्यं त्वामुपाश्रिते । वाक्येऽपि ज्ञानमूलत्वादिति शास्त्रार्थसंग्रहः ॥ ८ ॥ श्रुतेस्तु हृदयं तत्रमर्थवादः पुराणकम् । स्मृतिवच्चैकवाक्यत्वमबाधितमिति स्थितिः ॥ ९ ॥ यदा मन्त्रास्तदा तन्त्रं तदैवासीत्पुरा-

णकम्। उवाचेति वचोलेखो लभ्यते द्वितयेऽपि हि॥ १०॥ को वा स्वोक्तावुवाचेति लेखिता लक्षितो बुधैः। तत्रार्थवादस्मृतयोऽन्विताः श्रुत्येकमूलतः॥ ११॥ विद्या तु वेदविद्या तत्रं हृदयं पुराणमर्थवचः। स्मृतयः संस्कृतिमूला मिलितं मिथ एतदेव शास्त्रमिति॥ १२॥ अत्रायं दुर्गः॥ अत्रायं नायकः॥ गायत्र्यादिं श्रुतिं वेद प्रणवान्तां द्विजोत्तमः। स प्रवर्तयिता दुर्गे यथा श्रीशंकरो गुरुः॥ १३॥ इदं सिंहासनम्॥ संसारो भावनामात्रः पूर्वकाण्डार्थसंग्रहः। अतएव न सत्यत्वं ज्ञानकाण्डार्थसंग्रहः॥१४॥

अत्रायं प्रदीपः—

कस्मिन्कियन्ति सन्तीति गुणान्वक्तुं क ईश्वरः। अतएव हि लोकेषु पाषाणोऽपि च पूज्यते॥ १॥ अतएव हि दृश्यन्ते ज्ञानानि विविधानि च। तारतम्येन लोकेषु कः पारं याति मानवः॥ २॥ केचिच्छास्त्रेण पश्यन्ति केचिल्लौकिकचक्षुषा। केचित्पाशवदृष्ट्यैव केचिद्बालदृशाऽपि च॥ ३॥ तथापि पूज्यते सर्वं गुणज्ञेन गुणान्वितम्। कयापि दृष्ट्या संपश्येत् का हानिः कस्य वा भवेत्॥ ४॥ प्रवर्तन्ते निवर्तन्ते गुणदोषदृशा इमे। शास्त्रेण वा लौकिकेन स्वभावाद्वयसाऽपि वा॥ ५॥ परलोकान्तमीशान्तं जानते शास्त्रसंयताः। राजान्तं मरणान्तं च लोकदृष्ट्यैव केचन॥ ६॥ भक्षणान्तं मैथुनान्तं पशुदृष्ट्याऽपि केचन। स्वाच्छन्द्यान्तं भक्षणान्तं केचिद्बालदृशैव हि॥ ७॥ शास्त्रानन्त्यं तु मन्तव्यं गुणानन्त्येन हेतुना। केनचिद्गुणयोगेन शास्त्रं शास्ति तदर्हणम्॥ ८॥ केनचिद्गुणयोगेन यथा लोकेषु जन्तवः। पूजां नार्हति कोऽप्यत्र गुणयोगमृते ऋतं॥ ९॥ स्वादृष्टगुणयोगेन पूजितं वीक्ष्य पामरः। गुणानुमाननैपुण्यराहित्यात् द्रोग्धि रंहसा॥ १०॥ तावानेव गुणः किं वा यावांस्ते दृष्टिगोचरः। दृष्टिरल्पा गुणानन्त्यं ततः शास्त्रं प्रवर्तते॥ ११॥ अदृष्टगुणदोषेषु प्रमाणं शास्त्रमेव हि।

न प्रमाणं तावकीना दृष्टिः पशुसमा यतः ॥ १२ ॥ अग्निहोत्रादिकर्माणि प्रतिमा[1]पूजनानि च । शास्त्रदृष्ट्यैव सिद्धानि लोकश्चेतरदृष्टिभिः ॥ १३ ॥ जीवोऽस्ति सर्ववीजेषु मृतं वीजं न रोहति । अतः प्राग्जन्मनो जीवो देहान्तरसमागमी ॥ १४ ॥ नष्टोऽपि वृक्षो वीजस्थचेतनेषु प्रतिष्ठति । जलादियोगसंपन्ना चिदेव परितुष्यति ॥ १५ ॥ तृस्याङ्कुरदशामेति यथापूर्वं ततस्तरुः । पुनश्च तत्र वीजानि ततो वृक्ष इति क्रमः ॥ १६ ॥ वीजस्थमेकचैतन्यमानन्त्यं समपद्यत । अनन्ता गतयस्तेषां वीजानामिह सर्वतः ॥ १७ ॥ ऊर्ध्वं तिर्यगधस्ताच्च सङ्गाद्गच्छन्ति तानि हि । स्थलानुरूपं मोदन्ते शोचन्त्यपि हसन्त्यपि ॥ १८ ॥ वातार्चिर्धूममार्गैस्तु लोकान्तरगमागमौ । जीवानां परलोकस्तु नास्तीति न वचः शुभम् ॥ १९ ॥ यावन्न शास्त्रसंपर्कस्तावदित्थं प्रवर्तते । जाते तु शास्त्रसंपर्के चिन्मात्रत्वाद्विमुक्तता ॥ २० ॥ यत्र तत्र तदेवैषां विदुषां प्रतिभाति हि । यच्छास्त्रसिद्धं सद्वस्तु नाशास्त्रं किंचिदप्यहो ॥२१॥ शास्त्राज्ञापङ्कमग्नानां नश्यत्येव रजोगुणः । गुर्वाज्ञापङ्कमग्नानां विनश्यति तमोगुणः ॥ २२ ॥ शास्त्राभिप्रायमग्नानां सत्त्वं नश्यति तत्क्षणात् । गुर्वभिप्रायमग्नैस्तु कैवल्यमनुभूयते ॥ २३ ॥ जगदस्तित्वविज्ञानं वहुधा वाध्यते श्रुतौ । जगन्नास्तित्वविज्ञानमवाध्यं तु विधीयते ॥ २४ ॥ प्रत्यक्षं शाब्दविज्ञानवाधकं न भविष्यति । प्रमाणागोचरे शब्दः प्रमाणं वोधकं यतः ॥ २५ ॥

इयमत्राहूतिः—

जाग्रतोत्तिष्ठताद्यापि यदि वेदाधिकारिणः । वेदं रक्षत जागृत्या कलिर्घोरः समागतः ॥ १ ॥ गेहे गेहे महायज्ञाः पञ्च स्युश्चेद्द्विजन्मनाम् । तर्ह्यल्पेनैव कालेन वीर्यं वित्तं मतिर्यशः ॥ २ ॥ पुरुषाणां योषितां वा शिक्षा शिक्षकतुल्यता । तस्मात्परीक्ष्य

1 लिङ्गशालिग्रामादिरूपा.

शिक्षायां योजनीया यथागृहम् ॥ ३ ॥ समाधिः शाङ्करे भाष्ये सुस्पष्टं प्रतिपादितः। विक्षेपोऽन्येषु भाष्येषु कः सिद्धान्तो विचार्यताम् ॥ ४ ॥ विचाराः शाङ्करा लोकसमुद्धारधुरन्धराः। न यत्र लभ्यते किंचिदव्यवस्थपदे स्थितम् ॥ ५ ॥ ग्रन्थाः श्रीशाङ्करा लोकैर्ग्रामे ग्रामे पुरे पुरे। पठिताः पाठिता न्यायैः पालिता भारती मही ॥ ६ ॥ येन वर्णा आश्रमाश्च धर्मो ज्ञानं च पालितम्। तस्मिञ्जगद्गुरौ श्रद्धा पुनरुज्जीवनक्षमा ॥ ७ ॥

अत्रैषा कथा—

सिद्धलभ्या स्थितिर्ह्येषा ब्राह्मी नाम श्रुतेर्यशः। तस्मादङ्गीकृता ज्ञानपारगैरिति शुश्रुम ॥ १ ॥ कुलमीश्वरसंबद्धं जातयो व्यक्तिसंश्रिताः। धर्मोऽधिकारसंबद्धो ज्ञानं वेदनिबन्धनम् ॥ २ ॥ वेदः श्रुतिरिति प्रोक्तः श्रुतिरादिं न पश्यति। तस्या अनुश्रवत्वं हि स्वरूपमिति मार्मिकाः ॥ ३ ॥ अन्ने स्वत्वं मनुष्याणां तृणे स्वत्वं चतुष्पदां। मांसे स्वत्वं श्वापदानामिति सृष्टिविनिर्णयः ॥ ४ ॥ मेध्यामेध्यविचारेण मनुष्येष्वपि केषुचित्। तत्र हेतुर्मनुष्यत्वमिति शास्त्रविदां मतम् ॥ ५ ॥

एष सिद्धान्तघोषः—

शीलपाकः शास्त्रपाकः कर्मपाकस्ततः परं। ज्ञानपाकस्ततो मुक्तिरिति वैदिकदर्शनम् ॥ १ ॥ महोद्यमः प्रकर्तव्यो येन केन विधेन हि। असाध्यमपि संसाध्यमिति लौकिकदर्शनम् ॥ २ ॥ महोद्यमोपि कर्तव्यो धर्मसंपीडनं विना। तस्मिन्संपीडिते विश्वं पीडितं नीतिराह सा ॥ ३ ॥ धर्मे संपालिते विश्वं पालितं नात्र संशयः। धेनौ संपालितायां तु दुग्धमर्थात्सुरक्षितम् ॥ ४ ॥

अयमत्र डिण्डिमः—

यथा दृष्टिस्तथा विश्वं न यथाकाममस्ति हि। अत एते वादिवर्गा विवदन्ते मिथोऽभितः ॥ १ ॥ यथामति यतो विश्वं न

प्रमाणं ततोऽर्हति । प्रमाणजन्या बुद्धिस्तु कैवल्यपदमीहते ॥ २ ॥ द्रष्टुः संकल्प एवेदं यथामति यतो जगत् । तद्विमोकाय शास्त्राणि प्रवृत्तानीति विद्महे ॥ ३ ॥ तद्विमोके सुखं शान्तं कैवल्यमवशिष्यते । तस्माद्द्वैतसिद्धान्तः श्रुतिसंमत इष्यताम् ॥ ४ ॥

एषा ध्वजपटी—

धर्मः शास्त्रादरो नाम ज्ञानं गुर्वादरो मतः । सुखं मोक्षादरो नाम नीतिर्लोकादरो मतः ॥ १ ॥ शास्त्रमीशादरो नाम गुरुर्ब्रह्मादरो मतः । मोक्षः शमादरो नाम लोकः कीर्त्यादरो मतः ॥ २ ॥ ईशः श्रद्धादरो नाम ब्रह्म बोधादरो मतः । शमो बोधादरो नाम कीर्तिर्निर्मलतादरः ॥ ३ ॥ श्रद्धा सत्त्वादरो नाम बोध आत्मादरो मतः । बोधस्तदेकनिष्ठत्वं नैर्मल्यं नित्यतृप्तता ॥ ४ ॥ नित्यतृप्तिर्महालक्ष्मीः सुन्दरी श्रीः पराम्बिका । नित्यतृप्तः परशिवः सच्चिदानन्दसद्गुरुः ॥ ५ ॥ यत्नाः कालानुसारेण धर्माः शास्त्रानुसारतः । शास्त्रं परम्परायातमिति वैदिकपद्धतिः ॥ ६ ॥

अयमत्रादेशः—

जगत्पश्यसि चेत्पश्य धर्मं नीतिं तथेश्वरम् । न चेत्पश्याद्वयं ब्रह्म यतः श्रेयो भविष्यति ॥ १ ॥ यदि ते ब्रह्मजिज्ञासा प्रज्ञानं ब्रह्म संस्मर । यदि ते स्वात्मजिज्ञासा ब्रह्मैवाहमिति स्मर ॥ २ ॥ यदि ते विश्वजिज्ञासा सर्वं ब्रह्मेति संस्मर । यदि ते मोक्षजिज्ञासा प्रणवं स्मर निर्भयम् ॥ ३ ॥ यदि ते सिद्धिजिज्ञासा सिद्धं वस्तु सदा स्मर । यदि ते त्यागजिज्ञासा विश्वं नास्तीति संस्मर ॥ ४ ॥ यदि ते भोगजिज्ञासा सफलं कर्म संस्मर । यदि ते योगजिज्ञासा निरालम्बं मनः कुरु ॥ ५ ॥ यदि ते सुखजिज्ञासा चिन्तां त्यज

---

१ अद्वैतसिद्धान्ते ज्ञानमधिकारश्च प्रधानमेतदत्र पाषण्डमिति नेतरेषां श्रुतिसंमतत्वम्.

महामते । यदि कैवल्यजिज्ञासा मन एतन्नमः कुरु ॥ ६ ॥ तदा सिद्धपदं लब्धं यदोमिति वचः श्रुतेः ॥ ७ ॥

अत्रेयं मङ्गलगीतिः—

सगुणोपासका लोके सन्तीतीश्वरसत्यता । गुरुप्रसादपात्राणि सन्तीति ब्रह्मसत्यता ॥ १ ॥ समदर्शी कोऽपि लोके तेन मोक्षस्य सत्यता । अद्यापि वेदो लोकेषु तेन ज्ञानस्य सत्यता ॥ २ ॥ ईश्वरः श्रूयते लोके तेन वेदस्य सत्यता । सत्यं च श्रूयते लोके तेन वाचोऽपि सत्यता ॥ ३ ॥ नीतिश्च श्रूयते लोके तेन धर्मस्य सत्यता । वृद्धत्वं श्रूयते लोके तेन नीतेश्च सत्यता ॥ ४ ॥ अज्ञानं श्रूयते लोके तेन विश्वस्य सत्यता । ज्ञानं च श्रूयते लोके तेनाखण्डस्य सत्यता ॥ ५ ॥ जगता विजितो लोके जगत्सत्यं प्रवक्ति हि । जगज्जितं येन पुंसा स तुच्छं वक्ति मायिकम् ॥ ६ ॥ इयं च षट्पदी नित्यं श्रीमद्वैदिकपद्धतौ । पुञ्जे पुञ्जे द्विजानां तु मञ्जु गुञ्जतु रञ्जितम् ॥ ७ ॥ कैवल्यनाथसेवार्थं भव वैदिकपद्धते । तेन तुष्यतु सर्वासां श्रीगुरुः करुणाकरः ॥ ८ ॥ मङ्गलं भगवन्विष्णो मङ्गलं गरुडध्वज । मङ्गलं पुण्डरीकाक्ष त्रैलोक्यं मङ्गलं कुरु ॥ ९ ॥

इदं फलं—

एतां वैदिकपद्धतिं श्रुतिमतां संपाठयेद्वा पठेत्
ब्रूयाद्वा सदसि प्रगल्भविदुषां मानं यशश्चाप्नुयात् ।
गेहाद्याति दरिद्रतापि तमसा सार्धं श्रुतिः सुन्दरी
दर्शं दर्शमुपाददीत पुरुषं श्रेयस्करी सत्कुलम् ॥ १ ॥

इयमत्र प्रशस्तिः—

धन्यः श्रीमान् द्विजकुलवरः शङ्करः शर्वरीश-
श्लाघ्यश्लोकः सकलजगतां वन्द्यपादाब्जरेणुः ।
आचार्यत्वं जगति विदितं यस्य वाणी श्रुतीनां
चूडाभूषा कलुषहरणी दृष्टमात्रैव पुंसाम् ॥ १ ॥

यत्पाण्डित्यसुधाम्बुधौ कृतमतिर्बालाभिधः शास्त्रवित्
पारावारविहारमाचरदहो अन्येपि तीरस्थिताः ।
नानाशास्त्रविचारकोटिनिभृता राजेन्द्रसंमानिता-
राजारामयतीश्वरो विजयते श्रीकाशिकीर्तिध्वजः ॥ २ ॥
यस्य गेहं तमःपारे सच्चिदानन्दनामभृत् ।
श्रीदेशिकेन्द्रः करुणापारावारः स राजते ॥ ३ ॥
दुस्तर्ककण्टकक्लिष्टद्विजेष्टगतिदायिनी ।
कृष्णानन्दसरस्वत्या कृता वैदिकपद्धतिः ॥ ४ ॥
यत्प्रेरितं भगवता हृदयस्थितेन
यद्बोधितं च गुरुणा करुणार्णवेन ।
तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्म-
सद्मोत्थमोदमकरन्दरसाभिलाषी ॥ ५ ॥
रामचन्द्रवसुक्ष्माब्दे शालिवाहमहीपतेः[1] ।
मोहमय्यां तपःशुक्लपूर्णायां पूर्णतामगात् ॥ ६ ॥

इति श्रीमद्वाराणसीविराजमानब्रह्मघट्टप्रतिष्ठापितश्रीकैवल्यधामनिवासिश्री-मत्परमहंसपरिव्राजकाचार्यपूज्यपादश्रीसच्चिदानन्दसरस्वतीकरकम-लसंजातश्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वती-विरचिता सपरिकरा वैदिकपद्धतिः समाप्ता ॥ ब्रह्मा-ण्डराज्याभिमानिने श्रीपरमेश्वरायार्पिता वैदि-कवृन्दे विराजताम् ॥

---

कविता वक्तृवर्गस्य प्रतिबिम्ब इति स्थितिः ।
सत्या तेनैव मानेन ज्ञायते कीदृशः कविः ॥ १ ॥
विद्वद्वर्गस्य नैपुण्यं प्रतिबिम्ब इति स्थितिः ।
सत्या तेनैव मानेन विद्वान्विज्ञायते जनैः ॥ २ ॥

---

१ वाहनभूपतेः.

सुनीती राजवर्गस्य प्रतिम्बिब इति स्थितिः ।
सत्या तेनैव मानेन ज्ञायते कीदृशः प्रभुः ॥ ३ ॥
यत्र कुत्रापि भोजोऽस्तु कालिदासोऽपि कुत्र वा ।
सारस्वतरसास्वादलम्पटस्तत्र नन्दतु ॥ ४ ॥
यत्र कुत्रापि देवोऽस्तु तद्गुणाः सन्तु मे हृदि ।
हृद्यगन्धे समालब्धे किं पुष्पं दूरमुच्यते ॥ ५ ॥
आन्दोलयन्ति महतां शिरांसि श्रुतिगोचराः ।
श्रूयन्ते ते गुणा नूनं कयाचिद्भाग्यसंपदा ॥ ६ ॥
जय सच्चिदानन्द ॥

श्रीमत्परमहंसकृष्णानन्दस्वामिविरचितः

# वैदिकपद्धत्युपोद्घातः ॥ २ ॥

जय सच्चिदानन्द ।

ॐ सहस्रमूर्धा सर्वात्मा सहस्राक्षः सहस्रपात् । दृष्टिं ददातु भगवाञ्छास्त्रतर्कविनिर्णये ॥ १ ॥ श्रीशङ्कराचार्यगुरोः प्रसादाच्छ्रीकाशिकेन्द्रस्य गुरोः प्रसादात् । श्रीसच्चिदान्दगुरोः प्रसादात्करोमि सेतुं कलिपारगत्यै ॥ २ ॥ अपि सेतुः पुराणोऽयं पुनराविर्बुभूषति । आश्रित्य पण्डितस्तम्भान्दृढः स्थास्यति निश्चलः ॥ ३ ॥ सति सेतौ यत्नशतं कः कुर्वाणो महामतिः । गर्हयन्नपि को विद्वांस्तस्मात्सेतुं समाश्रयेत् ॥ ४ ॥ किंच । परोक्षार्णवमीनैस्तु ब्रह्मविद्भिर्महर्षिभिः । समर्पितानि रत्नानि धारयन्ति महाधियः ॥ ५ ॥ यथाह संजयः—'यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्ममे'ति । योगा[1] अनादिसिद्धा वेदवादाः । धनुर्धरस्तत्पालयिता सिंहासनेश्वरः । ताभ्यां धर्मज्ञानमर्यादासेतुः पाल्यत इति तत्तात्पर्यम् ॥

1 दृश्यन्तेऽष्टादश योगा गीतायामतो योगशास्त्रमुपनिषच्च साऽतो नानुपनीतानामधिकारः.

अथ नूनं करिष्यामि सूत्रपातं तु वैदिकम् ।
संसिद्धौ सेतुवन्धस्य वक्रताया निवृत्तये ॥ १ ॥

अथ सन्ध्यां व्याख्यास्याम आचमनाच्छुद्धाप्रवेशः प्राणायामाद्वीर्यस्मृतिलाभो मार्जनाच्छौचसिद्धिः पीडानिवृत्तिश्चाघमर्षणात्पापनिवृत्तिस्तेन कर्तव्यकर्मप्रतिबन्धनिवृत्तिरर्घ्यप्रदानादीश्वरानुसंधानसमर्पणे जपात्तेनैक्यानुसंधानमुपस्थानात्कृतस्य कर्मणः स्वस्य च रक्षणमभिवन्दनात्संप्रदायशुद्धिरीश्वरार्पणात्कर्मसमृद्धिः ॥ इति प्रथमः खण्डः ॥ १ ॥

परमेश्वरः प्रपञ्चस्याभिन्ननिमित्तोपादानमिति गायत्रीसगुणध्यानं स्त्रीरूपेण व्यक्तं तत्स्त्रीपूत्तरोत्तरं पारमार्थिकं रूपं तत्त्वार्थवर्णात्मत्वं सा संधिकालोपास्यत्वात्संध्या देवतारूपा क्रियारूपा च गायत्रीछन्दस्कमन्त्रप्रतिपाद्यत्वाद्गायत्री तथा देवताभिधानो मन्त्रोपि गायत्री शब्दा एवार्था अर्था एव शब्दाः सृष्ट्ये स्त्रीरूपा मोक्षायात्मरूपा सर्वज्ञत्वाय पञ्चमुखा त्रिनेत्रा च तस्याः कालासताख्यातये ध्यानभेदस्तामुपास्य लोकवन्द्या भवन्ति भवन्ति । इति द्वितीयः खण्डः ॥ २ ॥

अथ सामीप्यं व्याख्यास्यामो निशीथस्योदयः समीपे तस्य मध्याह्नः समीपे मध्याह्नस्यास्तमयः समीपेऽस्तमयस्य निशीथः समीपे तत्सर्वं परमात्मनः समीपे परमात्मा तपसः समीपे तपः शास्त्रस्य समीपे शास्त्रं श्रद्धायाः समीपे श्रद्धा बुद्धेः समीपे बुद्धिः शान्तेः समीपे शान्तिर्विवेकस्य समीपे विवेको दीक्षितयोः पित्रोः समीपे तौ च पितरौ गुरुसमीपे गुरुरीश्वरस्य समीप ईश्वरो जीवस्य समीपे जीव आनन्दस्य समीपे आनन्दः कैवल्यस्य समीपे नमः परसत्रूपिभ्यः ॥ इति तृतीयः खण्डः ॥ ३ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीनिगदितं मूलसूत्रं नाम सेतुसूत्रपातः ॥

---

अथ लोकवेदविदो वदन्ति। कस्यचिदेकं नाम कस्यचिद्द्वित्रीणि चत्वारि पञ्चेत्यादि तैर्नामभिस्ते प्रतिबुध्यन्ते ततस्तानि तेषां नामानीत्युच्यन्ते। इत्थं शिवविष्णुदुर्गादीनां सहस्रान्तानि नामानि तैर्नामभिस्ते प्रतिबुध्यन्ते। यदि कश्चित्सर्वैर्नामभिः प्रतिबुध्येत स सर्वात्मा भवितुमर्हतीति न्याय्यम्। तथा नास्ति कश्चिदिति न वक्तुं शक्येतासर्वज्ञैः। अतएव 'विश्वतश्चक्षुरि'ति श्रुतिः स्वार्थपर्यवसन्ना। एतेन सर्वाणि सहस्रनामानि व्याख्यातानि। अतएव सहस्रमनन्तं विश्वतश्चक्षुरित्येकवाक्यात्। युगपदेव यज्वादिपृथग्जनान्तसमर्पितानुपचारात् गृह्णाति तस्मादुच्यते सहस्रशीर्षेत्यादिर्विश्वतश्चक्षुरित्यादिश्च। अतएव सर्वान्नः सर्वरसः सर्वगन्ध इत्यादिश्च। अतएवोपपद्यते जगज्जन्मादिकारणत्वम्। तथा जानन्त्यप्यास्तिकास्तस्मादास्तिकैकवेद्यो वेदः। आस्तिकत्वं नाम विचारसिद्धे वस्तुनि दार्ढ्यम्। विचारश्च प्रमाणमूलः। प्रमाणं नाम संशयप्रसङ्गे बोधनिदानम्। उत्तिष्ठत्येव संशयो व्यवहारगोचरे किमिदं कस्मादित्यादिः। यत्र पल्लवस्तर्काः। तथा प्रसङ्गे वेदयति तस्माद्वेदः प्रमाणमूर्धन्योऽनादिश्च। प्रमातॄणामनादित्वात्। यः कोपि महर्षिः स्वमतं लिलेख सोपि संशयापन्नोतस्तर्कयाञ्चक्रे नोवाच 'एतस्मादात्मन आकाशः संभूत' इत्यादिश्रुतिं तस्मात्प्रमाणसरणिच्युतः। किञ्च सावयवानां निरवयवाः कारणानि ते च नित्याः प्रागभावप्रध्वंसाभावयोः सावयवव्याप्यत्वात् ते च परमाणव उच्यन्तेऽणुपरिमाणास्तथाकाशो नित्यो निरवयवो विभुरित्याह। तत्रेयं जिज्ञासा निरवयवत्वे तुल्येऽणुत्वविभुत्वभेदः कस्मादुत्थितो विपरीतं वा कस्मान्नेति। नाणुत्वं विभुत्वविरोधि। 'अणोरणीयान्महतो महीयानि'ति सामानाधिकरण्यदर्शनात्[1]। आका-

---

१ एतेन 'जीवोऽणोरणीयान् परमेश्वरस्तु महतो महीयान्' इति वैयधिकरण्येन श्रुतेर्व्याख्याता निरस्तः।

त्वानित्यत्वे तु स्वमतिरेव मानम् । अतएव श्रुतिराह 'नैषा तर्केण मतिरापनेये'ति । कस्मात् । 'आराममस्य पश्यति न तं पश्यति कश्चने'ति नित्यपरोक्षत्वम् । तं सर्वनिर्मातारं विश्वतश्चक्षुषमनन्तम् ॥ ननु कस्मादारामं पश्यन्ति तं च न पश्यन्ति तत्राह स्वयं वेदः 'प्रत्यङ्जनांस्तिष्ठति विश्वतोमुख' इति । तर्कयितुः प्रत्यग्रूपत्वात्तस्य । अतएव शास्त्रयोनित्वादिति वैयासिकमधिकरणम् । कथं पश्येत्प्रत्यग्ध्वं शास्त्रविधुरः। सर्वजनप्रत्यक्त्वेन सर्वनामप्रबोधनं सर्वात्मत्वं सर्वज्ञत्वं सर्वकर्तृत्वं परमेश्वरस्य व्याख्यातम् तेनोक्तं यथा तथैतद्विश्वमिति ॥ ननु कथमेतत् । यत्साक्षादपरोक्षादिति नित्यापरोक्षे परोक्षत्वसंभव इति चेदाराममदर्शनमात्रप्रतिबन्धादतएव शास्त्रप्रवृत्तिः प्रतिबन्धनिवृत्तये । तस्माद्विश्वदर्शनं शास्त्राधीनं तद्दर्शनं च । एतेन गलिताः सर्वे तर्काः ॥

इति सेतुबन्धे कृष्णानन्दसरस्वतीये वैदिकपद्धतेरुपोद्घातो नाम
प्रथम उपन्यासः ।

---

# वैदिकमतभेदपर्वः ॥ ३ ॥

सच्चिदानन्दमुनये गुरवे चरमाय मे । नतयः सन्तु भूयोपि येन पीतो भवार्णवः ॥ १ ॥ एवकारेवकारौ द्वौ निर्णयाय प्रभू मतौ । लोके वेदे च वाचालवाचां बन्धनवागुरा ॥ २ ॥ एकमेवाद्वितीयेति यत्र द्वैतमिवेति च । सामगैः पठ्यते तेन निर्णीतः श्रुतिसंग्रहः ॥ ३ ॥ संख्यान्वितैवकारेण संख्यान्तरनिषेधनम् । नञोऽद्वितीययोगेन संख्येयस्य निषेधनम् ॥ ४ ॥ इवशब्दबलेनैव सृष्टिपुष्टिहरेण हि । क्रियते निर्विशङ्कं तु तत्त्वमित्युपदेशनम् ॥ ५ ॥ संख्येयमथ संख्यां च यत्र द्वैतमिवेति गीः । प्रोत्सारणार्हं वक्तीति नेह नानेति वागपि ॥ ६ ॥ समर्था तन्निषेधाय तस्मादेकत्वमेव हि । तत्त्वस्य सिध्यति तदा संख्यासंख्येयवर्जितम् ॥ ७ ॥ भूमा

स एव संप्रोक्तो यं लब्ध्वा कृतकृत्यता । तदाध्ययनविश्रामः साधकः सिद्धिमागतः ॥८॥ पदवाक्यप्रमाणाख्यपारावारात्परंगतः । नास्याव्युत्थानशङ्कापि समाधेस्तस्य योगिनः ॥ ९ ॥ निरोधजसमाधौ तु व्युत्थानं वर्तते क्वचित् । निर्विकल्पसमाधिस्तु सम एव द्वयोरपि ॥ १० ॥ अतएवार्जुनायाह श्रीकृष्णो ज्ञानयोगदृक् । एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ११ ॥ निर्विकल्पगतिस्त्वेका द्वयोरपि च योगिनोः । व्युत्थानशङ्का योगेस्ति न ज्ञान इति चाह हि ॥ १२ ॥ यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते । व्युत्थानशङ्का तत्रास्तीत्यपिशब्देन सूच्यते ॥ १३ ॥ सांख्यं प्रमाणसंभूतं योगस्तु कृतिसंभवः । सान्तं कृतिबलं प्रोक्तं प्रमाणबलमन्यथा ॥ १४ ॥ लब्धव्यं तु तदेवास्ति निर्विकल्पं द्वयोरपि । सिद्धान्त एव भेदोऽस्ति विकल्पापोहभेदतः ॥ १५ ॥ विकल्पोस्ति न पश्यामीत्याह योगी निरोधदृक् । नैवास्ति नैव पश्यामीत्याह ज्ञानी विकल्पितम् ॥ १६ ॥ न विचारयते योगी निर्विकल्पं गतोपि च । प्रामाणिकः समाधिर्मे व्युत्थानमथवा किमु ॥ १७ ॥ प्रामाणिकः समाधिश्च व्युत्थानं विभ्रमो भवेत् । प्रामाणिकं चेद्व्युत्थानं समाधिर्विभ्रमो भवेत् ॥ १८ ॥ द्वयं प्रामाणिकं चेत्ते विरोधादन्यथा न किम् । अतएव श्रुतिः प्राह ध्यायतीवेति सामनि ॥ १९ ॥ निरोधजसमाधिस्तु मोहकोटौ निवेशितः । एतेन योगः प्रत्युक्त इति व्यासोऽब्रवीत्स्वयम् ॥ २० ॥ सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ २१ ॥ इत्याह भगवान्साक्षाद्वस्तुनिर्णयपण्डितः । तदेव वस्तु निर्दिष्टं निर्विकल्पं परात्परम् ॥ २२ ॥ साक्षिणौ तत्र निर्दिष्टौ प्रसिद्धौ ज्ञानियोगिनौ । सिद्धौ द्वावपि तत्रास्ति न विशेषोस्ति कश्चन ॥ २३ ॥ इयानेव विशेषोस्ति जगदस्ति च नास्ति च । इति वादस्तत्र वेदो ब्रूते ज्ञानी सुपण्डितः

॥ २४ ॥ योगी मोहान्तमापन्नो निर्विकल्पपदक्रमात् । तदेव सत्यमित्याह ज्ञानी योगीश्वरं प्रति ॥ २५ ॥ योगीश्वरोपि तत्सत्यं मत्वा सफलजन्मवान् । यत्साफल्यमेवात्र जन्मसाफल्यमुच्यते ॥ २६ ॥ ये गृहीता मया पूर्वं विषयास्ते क वाधुना । व्युत्थानं दुर्घटं मन्ये सहजं निर्विकल्पकम् ॥ २७ ॥ इति वेदविदः प्राहुर्निपुणं तन्निबोधत । मतभेदस्तेन शान्तिमुपैति प्रत्यहं शनैः ॥ २८ ॥ लीलामाह क्रियां सर्वां कैवल्यं सत्यमित्यथ । तस्य श्रीव्यासदेवस्य द्वावेतौ शिष्यतां गतौ ॥ २९ ॥ मतभेदपविर्नाम कृष्णानन्देन भिक्षुणा । व्यरचि श्रीकाशिकायां श्रीविश्वेश्वरतुष्टये ॥ ३० ॥ इदन्ता यदा लीयतेऽहन्तयापि तदाकुत्र विश्वं कभोगः करागः । गते मोहजाले गुरोर्दृष्टिपातात्तदा ब्रूत विप्राः क कोशः कः पाशः ॥३१॥ खनेत्रगजचन्द्राब्दे शालिवाहमहीपतेः । अभूत्पविः काशिकायां काशीनाथकृदो मुदे ॥ ३२ ॥ यत्प्रेरितं भगवता हृदयस्थितेन यद्बोधितं च गुरुणा करुणार्णवेन । तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्मसद्मोत्थमोदमकरन्दरसाभिलाषी ॥ ३३ ॥

इति श्रीकैवल्यधामनिवासिश्रीकृष्णानन्दसरस्वतीविरचितो वैदिकमतभेदपविः ॥

---

# योगानुशासनम् ॥ ४ ॥

## जय सच्चिदानन्द ॥

अथ योगानुशासनम् ॥ १ ॥ योगः प्रमातुः प्रमाणेन सह सङ्गमः ॥२॥ न यत्र बाधोल्लेखस्तत्प्रमाणम् ॥३॥ विश्वं दर्शयन्न प्रमाणं पूर्वोत्तरक्षणबाधादविश्रान्तत्वाद्वृद्धिह्रासयोः प्रतिवस्तु ॥ ४ ॥ प्रत्यभिज्ञा तु लौकिकी साजात्यावलम्बा ॥ ५ ॥ निरोधः प्रमातृशुद्धिविधिरङ्गम् ॥ ६ ॥ न निरोधजः साक्षात्कारः प्रमा चाक्षुषवत् ॥ ७ ॥ न तज्जा सिद्धिः फलं मृगजलवत् ॥ ८ ॥ संप्रतिपन्ने

शब्दे प्रमाणमितिचेन्न शब्दप्रामाण्यात् ॥ ९ ॥ नेहनानेति शब्दः ॥ १० ॥ तत्त्वमसीति च ॥ ११ ॥ स च प्रमाणमबाधात् ॥ १२ ॥ द्वैतप्रतिपत्तिर्न बाधस्तस्या एव बाधदृष्टान्तात् ॥ १३ ॥ त्रय आवसथास्त्रयः स्वप्ना इति शब्दाच्च ॥ १४ ॥ अन्धो मणिमविन्दतेति च ॥ १५ ॥ ईश्वरः कृष्णस्तु दुःखसंयोगवियोगो योग इति ॥ १६ ॥ दुःखं जगत् ॥ १७ ॥ संयोगोऽभिमानः ॥ १८ ॥ वियोगोऽभिमानक्षयः ॥ १९ ॥ स च शाब्दनिश्चयात् ॥ २० ॥ एतदधीतिफलम् ॥ २१ ॥ तत्फलं मनननिदिध्यासौ ॥ २२ ॥ तत्फलं साक्षात्कारः ॥ २३ ॥ एषोऽस्पर्शयोग इत्याचार्याः ॥ २४ ॥ निरालम्ब इत्यपरे ॥ २५ ॥ अचिन्त्यमिति श्रुतिः ॥ २६ ॥ न किंचिच्चिन्तयेदिति पार्थसारथिः ॥ २७ ॥ एप एव ब्रह्मीभाव इति गुरवः ॥ २८ ॥ एतदभयमिति याज्ञवल्क्यः ॥ २९ ॥ यावत् ध्यानं तावन्न ज्ञानम् ॥ ३० ॥ त्रिपुटीबीजविलयो ज्ञानम् ॥ ३१ ॥ स च लयो न ध्यानशतैः ॥ ३२ ॥ तस्मात्प्रमातुः प्रमाणेन सह सङ्क्रमो योग इति योग इति ॥ ३३ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीप्रणीतं योगानुशासनम् ॥

---

# श्रीमच्छङ्कराचार्यचरितम् ॥ ५ ॥

काशि त्वां परिचिन्वन्ति केपि केपि महर्षयः । तत्रास्माकं मतिः केव त्वयि कैवल्यधाम सत् ॥ १ ॥ गुरुता तूद्धृतिमूलैवोद्धृतिरपि च बोधमूलैव । बोधस्तु शब्दमूलः शब्दोऽनादिस्तु गुरुमुखारूढः ॥ २ ॥ बोधस्तु शाब्दबोधस्तत्रापि च तत्त्वमस्यहं ब्रह्म । इति वाक्यद्वयबोधो बोधान्तरमत्ति तृप्यति स्वैरम् ॥ ३ ॥ स च बोधो गुरुकरुणासुधाम्बुधौ क्रीडति स्वैरम् । यदि तत्प्रवाहपातस्तर्हि स लभ्येत सार्वभौम इव ॥ ४ ॥ तस्मिंल्लब्धे सर्वं दारिद्र्यं हतमहो महाभाग्यैः । तृष्यालिङ्गितगात्रः पुत्रः कस्यापि जयति कृत-

कुलः ॥ ५ ॥ श्रीशङ्करगुरुणायं लब्धः श्रीगुरुकृपाम्बुधौ खेलन् । दत्तं तेन गुरुत्वं जगतः सर्वस्य वालकायापि ॥ ६ ॥ अतएव वेदमार्गः स्थापित इह जनान्समुद्धर्तुम् । वेदे व्युत्पन्नानामुद्धारः सहज इति च तत्तन्त्रम् ॥७॥ वेदो वेदयते वत कर्मफलं कर्मदेहविद्यां च । उभयं प्रमाणमेतत्स्वार्थे चरितार्थता यस्मात् ॥८॥ विहितं वाऽविहितं वा कर्म तु कालात्फलं ददातीति । अभिमतमिहास्ति सर्वैर्विद्वद्भिस्तत्र तस्य निर्बन्धः ॥ ९ ॥ अङ्गीकृतो यथैतद्विश्वं मार्गेण सुखपदं गच्छेत् । अभ्युदये श्रेयस्यपि मार्गः श्रीशङ्करेण निर्दिष्टः ॥ १० ॥

इति श्रीशङ्कराचार्यचरित्रं श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकथिते करिष्यमाणसेतुबन्धे चरम उपन्यासः ॥

---

वैदिकपद्धतिपरिशिष्टम् ।

# अवलावलम् ॥ ६ ॥

पतिव्रता जगद्वन्द्याः पुण्यश्लोकाः स्मृताः स्वयं ।
यासां श्रीमहिमानं तु वेदो वेद न चेतरः ॥ १ ॥
विवाहतत्त्ववेत्तैव वेद तत्त्वं हि तत्त्वमोः ।
अत्र साक्षी शिवः साक्षाद्ब्रह्मनिष्ठः पुरातनः ॥ २ ॥
विधवानां सुखोपाय ईश्वरैश्चिन्तितो न वा ।
इति जिज्ञासमानानां समाधानमथोच्यते ॥ ३ ॥
विवाहाधिकृतिं शिष्ये परीक्षयितुमग्रतः ।
आचार्याय प्रियं दत्त्वेत्याह श्रुतिरुदारधीः ॥ ४ ॥

'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी'रिति प्रजातन्तवे सति विवाहे तन्मूलानीति मन्यन्ते विधवायास्त्रीणि दुःखानि । पतिपुत्रान्यतरानाश्रयत्वं निर्धनत्वं कामपीडा चेति स्पष्टं दृश्यन्ते । तत्र प्रजाद्रविणदुःखावकाशो नास्तीति श्रुतिराह ।

यथा तैत्तिरीयारण्यके षष्ठाध्याये मन्त्रौ सहगमनप्रकरणे और्ध्व-देहिककर्मकर्तृदेवरशिष्यजरद्दासान्यतमवक्तव्यौ 'इयं नारी पति-लोकं वृणाना निपद्यत उप त्वा मर्त्य प्रेतम्। विश्वं पुराणमनुपाल-यन्ती तस्यै प्रजां द्रविणं चेह धेहि ॥ १ ॥ उदीर्ष्व नार्यभिजीव लोकमितासुमेतमुपशेष एहि। हस्तग्राभस्य दिधिषोस्त्वमेतत्पत्युर्ज-नित्वमभिसंबभूव ॥ २ ॥' विवृतिः—इयं त्वया सह जिगमिषन्ती नारी नरस्य धर्म्या विवाहप्राप्तधर्मेभ्योऽनपेताऽतएव पतिलोकं वृणाना पत्या कर्मयोगिना संपादितं लोकं लब्धुकामा हे मर्त्य मरणधर्मन्, प्रेतं परलोकं गच्छन्तं त्वा त्वां उप अनु निपद्यते म्रियते समीपं गतेति वा। तत्र हेतुः। विश्वं संपूर्णं पुराणं पुरातनं विवाहप्राप्तं धर्ममिडूर्जायस्पोषमायोभव्यप्रजाऋतुसख्येति सप्तविधं साप्तपदीनं धर्ममनु त्वां परम्परां चानुसृत्य पालयन्ती अनुव्रतत्वादत-स्त्वामनु निपद्यत इत्यभिप्रायः। तस्यै नारीत्वात्पतिलोककामायै प्रजां त्वत्संपादितां द्रविणं च तथाविधमिहास्मिन्नेव लोके धेहि देह्ययमेवावकाशः प्रजाधिपत्यरायस्पोषयोः प्रतिज्ञातयोर्वि-वाहे साफल्यस्य। अस्मिन्नेव लोके पतिसंपादितप्रजाद्रवि-णलाभे पतिलोकः संपादित एवेत्यभिप्रायः। तदस्य धर्म्यमित्यधि-कारे 'ऋतोऽञि'ति सूत्रे वार्तिकं 'नराच्चेति वक्तव्यमि'ति तत्रो-दाहृतं नरस्य धर्म्या नारीति ॥ १ ॥ इत्थं पत्नीं प्रशंसापूर्वकं पत्युरनुज्ञया प्रजाधने भुञ्जानायाः पतिलोकवास एवेति प्रति-लोभ्य पतिप्रेतसमीपसुप्तां तामाह्वयति उदीर्ष्वेति। हे नारि नर-धर्म्ये, इतासुं गतासुमेतं पतिमुपशेषे पाणिग्रहणसंप्रतिपन्नमैक्यं स्मरन्ती अतः परमुदीर्ष्व उत्तिष्ठोत्थापनाय प्रेरय वा अभिजीव माम्रियस्व लोकं पतिसंपादितमेवेममेहि त्वां पालयिष्यामि जीव-नसामग्रीमतीमित्यभिप्रायः। परावर्तने हेतुः। त्वं परावृत्य सहगमनाज्जीवन्त्यपि हस्तग्राभस्य गृहीतहस्तस्य दिधिषोः पालयितु-

गिच्छोः पत्युरेवासि न पतिमृतिः स्वत्वनिवृत्तिहेतुः पिपालयिषाया अनिवृत्तेरिति । तत्र हेतुमाह । एतत्ते जनित्वं जन्मजनिरेव जनित्वं देवताजनतादिवत् । पत्युः अभि सर्वप्रकारैः संबभूव विवाहकाल एव । 'न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते' 'यो भर्ता सा स्मृताऽङ्गने'ति च स्मृतेः । मरणमपि विसर्गसदृशम् । पत्या सहाभेदमापन्नायास्ते जीवनं पत्युरेव रूपान्तरमापन्नस्य । अतस्तवात्र निवासो न परलोकविच्छेदहेतुः यतः पत्युः तत्र निवसतोऽप्यत्र वासः तवात्र निवसन्त्या अपि तत्रैव वास उभाभ्यां रूपाभ्यां लोकद्वयसंपादितमयमपि परोपि लोकः पत्युरेव यदि ते जीवितेच्छा तर्हि जीवेत्यभिप्रायः। अथवा जनित्वं पत्नीत्वं एतत् तद्वितीर्णप्रजाधनादिभोगरूपं संपन्नं बभूव । अथवा एतत् अत्र शयनान्तं कर्म यत्ते पत्नीत्वसमभिसंबभूवेति ते जीवनं न पत्नीत्वविरोधीत्यभिप्रायः । न रूढ्यर्थस्य दिधिषोरत्रोपस्थितिस्तदानीमेतस्या दिधिषूत्वाभावात् । भाविवृत्त्याश्रयणे मानाभावाच्च । सहगमनान्यथानुपपत्त्या कामपरीक्षाविनियुक्तयोर्मन्त्रयोर्नोत्थापनविधिपरत्वम् । अतएव न पुनर्विवाहपरता । अतएव दिधिषोरपाङ्क्तत्वमिति दिक् ।

ननूदीर्ष्वेति लोटोत्थापनं विधीयत इति चेदनुत्थापनफललेखवैयर्थ्यापत्तेः । अनुज्ञा तु व्यज्यते । नारीति संबोधनान्नरस्योपस्थितस्य पत्युर्धर्म्येति व्युत्पत्तेर्नानुपस्थितदिधिषो रूढार्थस्य स्वत्वं युक्तं रागप्राप्तत्वादनधिकाराच्च । प्रथमोपस्थितनारीशब्दगर्भेण बलीयसा दिधिषुशब्दगर्भो रूढ्यर्थो विसंसितः । नच दिधिषुशब्दानुरोधेन नारीशब्दे लक्षणा वक्तुं शक्या । शब्दशक्त्या रूढ्या वानुरुध्यमानस्य दिधिषोरप्रवेशान्नारीशब्दे धर्म्यांशत्यागे मानाभावात् । पुंयोगप्रत्यये तु नरीत्येव । जातिवाचकत्वे प्रजाद्रविणप्रार्थनायां न बलम् । तस्मान्नरस्य धर्मेत्येवार्थोत्र मन्त्रयोः । 'डुधाञ् धारणपोषणयो'रित्यस्मादिच्छायामेव सन् । अतएव 'नोद्वाहिकेषु

मन्त्रेषु नियोगः कीर्त्यते क्वचित्। न विवाहविधावुक्तं विधवावेदनं पुनरि'ति मनुः। तस्माद्दिधिषुशब्दबलात्पुनर्विवाहकल्पना निरस्तेति दिक्।

नन्वयमर्थोऽस्तु मनुसंमतः पुनःपतिविधानवक्तुः पराशरस्य तु न संमतस्तस्मान्मन्त्रद्वयं दिधिषुत्वविधायकमेवेति चेन्न। असंभवार्थापत्तेः। नहि सहगमनसमये तस्या दिधिषुत्वसंभवः। नच दिधिषुरेवानेन विधीयत इति वाच्यम्। मृते भर्तरि दिधिषुविधानेऽपि नष्टे प्रव्रजिते क्लीवे पतिते च पत्यौ दिधिषुविधानादर्शनात्स्वयं विधातुमशक्यत्वादिदं वचनं काल्पनिकमित्येव युक्तम्। 'यद्वै मनुरवदत्तद् भेषजमि'ति श्रुतिं जानन् पराशरः सर्वज्ञो भूत्वा धर्मं कथयन् श्रुतेरसंभवार्थं स्मृत्यन्तरविरुद्धं कथं ब्रूयादिति विचार्यम्॥ ननु स्वतन्त्रा ऋषय इति चेत्स्वतःप्रामाण्यापत्तेः। तस्मान्मनुवच्छ्रुतिमनुसरता पराशरेण वक्तव्ये कथं प्रसिद्धदिधिषुपरता। अनयैव श्रुत्या पिपालयिषौ शक्तो द्वितीयपतौ निरूढो दिधिषुशब्द इति विज्ञेयम्। नष्टे मृते इत्यादिकारिकाभिनिवेशे सत्यपि 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजो विन्देत देवरः' इति मनूक्तिमनुसृत्य व्याख्येया। नष्टे मृत इत्यत्र पतिशब्दो वाचाङ्गीकृतपरो विज्ञेयः। तस्मान्न पुनर्विवाहगन्धोपीत्यलं विपश्चितस्तुष्यन्तु॥

ननु प्रथमविवाहसंकल्पसिद्ध्यर्थं पुनर्विवाहस्तत्रास्यां जनिष्यमाणसंततेः कुलोद्धारकत्वब्रह्मलोकहेतुत्वोल्लेखात्सन्तत्युत्पादनार्थं पुनर्विवाहस्तेन निर्दिष्टफलद्वयसिद्धिरिति चेत्तस्मिन्नेव कन्यादानसंकल्पेऽस्यां जनिष्यमाणसन्तत्येति यथोहस्तथास्मादित्यप्यूहो वेद्यः। अतएव तुभ्यमहं संप्रदद इति संकल्प्यते नहि कस्मैचिद्वरायेति। एतेनास्मात्संकल्पात्कन्याया वन्ध्यात्वे निःसन्ततिविधवात्वे वा दातुस्तुल्यं फलम्। यस्मात्पत्युराज्ञायां वा दत्तकपुत्रग्रहणाधिकारो

निर्बाधः पुत्रग्रहणाधिकारः पत्युरपि विवाहमूलः॥ ननु श्रुतौ दिधिपुशब्दो व्यर्थ इति चेद्भवन्मते नारीशब्दो व्यर्थस्तस्माद्दिधिपुशब्दस्य पोष्यपतिपरत्वेन कृतार्थत्वान्नारीशब्दस्य नरधर्म्यपरत्वं युक्तम्॥ननु न सामान्यायाः सहगमनं युक्तं सामान्यात्वात्तस्माद्धर्म्यायामेव दिधिपुविधानं मन्त्रार्थ इति चेदुच्यतां किमनेन सामान्यात्वं विधीयते धर्म्याया अपि। यदि विधीयत इति ते मतं तदा दिधिपूत्वमनङ्गीकुर्वाणायाः किं प्रायश्चित्तं शास्त्रदृष्टम्। विवाहे तादात्म्यपादनसंपादितं नारीत्वं संपादयिष्यमाणं रागप्राप्तं दुर्बलं दिधिपूत्वं बाधेत न वा। तस्मात्तादात्म्येनोढा नारी यथाकथंचिदूढा नरीति व्यवस्थितम्।

जातिवाचकस्तूढानूढसाधारणोऽत्र मन्त्रेऽप्रयोजकः । वैदिकानामेष विवाहक्रमः सप्तपद्यधिकारदानाधिकारसिद्ध्यर्थं तादात्म्यापादनमृक्सामवत्, इतरेषां विवाहस्तु सप्तपदीरहितस्ततोऽधिकाररहितस्तादात्म्याभावादतस्तेषु पुनर्विवाहो युक्तः। अवैदिका अपि केचिच्छिष्टा विवाहो नाम तादात्म्यापादनं पतिरेव परायणमिति जानन्तो न संमन्वते पुनर्विवाहम्। येषां दिधिपूत्वं संमतं तेपि विवाहमण्डपे न प्रवेशयन्ति ताम्। तद्बीजं त एव वर्णयन्ति नानुव्रतेयमिति। यैरनुव्रतोच्यते तैः प्रतिज्ञायते धर्मे चार्थे च कामे च नातिचरामीति तां प्रतिज्ञां वलभावे स्थापयित्वाऽनुव्रता भवति पिण्डस्य छायेव तं पिण्डं कथमुत्सृजेत्। धर्मे वैधेऽर्थे दाये कामे प्रजायाम्। यद्येतेषामतिचारः किं विवाहेनातो मृतोपि प्रार्थ्यतेऽस्या एतावानधिकार इति। अत्र प्रजां द्रविणं च धेहि परलोकं चागमिष्यति कालेन यतोनुव्रता। पतिकर्तव्यमेतावदेव पत्नीविषये पश्चादपि प्रजाद्रविणवती यावता स्यादिति तदेव पतित्वम्। अतएव सूत्रे 'बुद्धिमते कन्यां प्रयच्छेदि'ति पठ्यते। अनिष्टपरिहारकुशलता बुद्धिः। ये तु विधवानां प्रजाद्रविणाधिकारो नास्तीति

वदन्ति तैरबला वञ्चिता न वेति प्रष्टव्या याज्ञिकाः। अतएव भ्रातृमतीमुपयच्छेत्। भ्राता हि दायप्रतिबन्धनिवृत्तिहेतुः। विवाहसमये निर्बन्धः कः परिणामे सिद्धान्तः कः। उपक्रमोपसंहारान्वितं शास्त्रं भवति। पत्नीं दायादिनीं मत्वैव द्वितीयविवाहसमयेऽनुज्ञा प्रार्थ्यते लोके तदभावे तदभावः। सप्तपद्यानुव्रतत्वं विधीयते। यथा 'इष एकपद्यूर्जे द्विपदी रायस्पोषाय त्रिपदी मायोभव्याय चतुष्पदी प्रजाभ्यः पञ्चपदृतुभ्यः षट्पदी सखा सप्तपदी भव सा मामनुव्रता भव। पुत्रान्विन्दावहै बहूंस्ते सन्तु जरदष्टयः' इति। इडन्नमूर्ग्बलं रैर्धनं मायोभव्यमारोग्यं प्रजा यथाशास्त्रमुत्पादिताः सुता ऋतवस्तत्तत्कालप्राप्तकर्माणि ऋतव इति यावत्। सखा कथनमनपेक्ष्य हितकर्ता सर्वान्तरङ्गः। एते सप्ताधिकारास्तव यदि मामनुव्रता तस्मात्तथा भवेति विधिः। तस्याऽनुव्रतत्वस्य फलं पुत्रान्विन्दावहा इत्याह। पुत्रो नाम सशास्त्रः सन्कुलोद्धर्ता। 'पुंनाम्नो नरकात्त्राता पुत्र इत्यभिधीयत' इति स्मृतेः। इदं मुख्यं प्रयोजनं विवाहस्य। तत्र माशङ्किष्टा इत्याह ते सन्तु जरदष्टय इति। जरन्त्योऽष्टयः शरीरसंघाताः। 'अशू संघाते'। अनयाशिषैतद्व्यज्यते पुत्रसंपादनं विवाहफलं यथाशक्ति यतेहं मत्पश्चादपि जरदष्टिरपि पुत्रं संपादय दत्तकादिना। अतएव प्रजाधिकारः सफल इत्याशीरर्थः। अत एवानुसूयाऽत्रेः परोक्षमपि पुत्रीकृत्य त्रीनपि दत्तदूर्वासश्चन्द्रान्नापराधं भेजे तादर्थ्यविज्ञानादात्मनः। वन्ध्यात्वं च निवृत्तं तस्याः। गोत्रप्रवरान्वितः पुत्रः कुलमुद्धरति तस्मादुपदिष्टं गुरुभिः प्रजातन्तुं मा व्यवच्छेत्सीरिति। तदुपदेशसिद्धं मदभिन्ना मद्गोत्रप्रवरान्वितपुत्रसंकल्पं पालय तेन मम तवापि कुलमुद्धृतं भवेदिति विवाहसमय एव निर्बन्धाद्दिधिषुर्दुर्बलो गच्छतु शूद्रादिषु श्राद्धरहितेषु। श्राद्धं हि कुलगोत्रान्वितेषु तत्रैव श्रद्धानिवासाच्छास्त्रनिवासस्तत्रैव कुलगोत्रश्रद्धा-

न्विताः पुत्रा भवन्ति। ते च श्राद्धमाचरन्ति काले गयादिषु च तेनो- द्धरन्ति पितृन् ज्ञानवलेन वा।

ननु श्राद्धं कस्मात्। दत्तमुत्तरं श्राद्धमित्येव। श्रद्धया निर्वृत्तं कर्म श्राद्धं। श्रद्धा कुलस्वभावस्तेन पालितं श्राद्धं। शास्त्रं च तेनोच्यते धूमादिमार्गेण कृतकर्माणो गच्छन्ति चान्द्रमसं लोकमिति तत्प्री- तये कृतं कर्म श्राद्धं तस्मात्प्रश्नोऽनुपपन्नः श्रद्धानन्वितस्य॥ ननु लोकान्तरे निवसतां पितृणां कथं श्राद्धेन तृप्तिरिति चेत्कर्मवलेन यथा लोकान्तरं गच्छन्ति तथाऽऽगच्छन्त्यपि कर्मकाले॥ ननु चित्रमेतद्यन्मृतानां गमनागमनं नाम। दृश्यते तेषां भस्मीभाव उच्यते च लोकान्तरगमनं श्राद्धतृप्तिश्च। अन्यश्च गयाशिलायां उद्धारकत्वं चेदिदमपि चित्रं यद्भस्मीभूतान्पितृन्मन्यसे न पितरो भस्मीभूताः किंतु पितृत्वप्रयोजकानि वपूंषि। पितृत्वभोक्तारस्तु गच्छन्त्यागच्छन्ति च जीवाः। यैरेव निर्वाह्यते वपुष्षु सर्वा क्रिया। किं कर्तारो जीवाः। सत्यमुच्यते कर्तार इति। अतएव भोक्तारः। नहि जीवविनिर्मुक्तस्य कर्तृत्वं भोक्तृत्वं वा दृष्टम्॥ ननु संघाता एव कर्तारो भोक्तारश्चेति चेत्संघाते स्वातन्त्र्यं प्रदर्श- यितुरपलापस्तव लपनं म्लाययति। दृश्यते प्रतिदेहं स्वतन्त्रः॥ ननु स मदशक्तिवदुत्पद्यते स्वतन्त्रो नामेति चेदुपहासोयं स्वतन्त्र उत्पद्यते म्रियते चेति। यो ह्युत्पद्यते म्रियते च स नित्यः। ज्ञातं त्वया जीवरूपम्। यथा श्रुतिः 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिध- र्मे'ति। अतएव तया तया क्रियया तत्तत्फलं भुङ्क्ते अतएव विषये- च्छाभिवर्धते। स्वास्तित्वाभिमानमूला विषयाशा। न कदाचिद्दृष्टः स्वाभावः। दृष्टस्तु देहाभावो वाल्यादिपरिवर्तनैः। अवस्थापरिवर्तनं नाशः। तस्मात्कर्ता भोक्ता नित्यस्तदर्थं श्राद्धम्। तृप्तिस्तु तदेकवेद्या तत्र तृप्तिवत्। इदं तृप्तिनिदर्शनं श्राद्धभोक्तारो ब्राह्मणास्तु वदन्ति चित्तमद्यास्वस्थमिति। तस्मात्पितृनिष्ठं स्वास्थ्यमनुमितं भवति।

कथमन्यभोजनेनान्येषां तृप्तिरिति मा शङ्किष्टाः। सन्ति तादृशा अपि भोक्तारोऽन्यभोजनतृप्तास्तादात्म्यापन्नाः। पत्यौ पुत्रे वा भुक्तिमाचरति सति पत्नी माता वा, यथा वा गर्भिण्यां गर्भः। नानाविधानि सुखानि जीवानां तैर्भोगस्तृप्तिश्च तादात्म्यमापादयन्ति ब्राह्मणेषु पितॄणाम्। वयं पितर इत्यभिमानश्चोत्पद्यते। गयाशिलाया उद्धारकत्वं तूद्धृतत्वाद्विष्णुपादेन। उद्धृता एवोद्धरन्तीति न्याय्यम्। कथं विष्णुपादेनोद्धृता शिलेति चेदेष महिमा विष्णुपादस्य। यथा कस्यचित्पादो यत्र पतति तत्र शं तनोति कस्यचिद्विपरीतम्। तथा सर्वोत्तीर्णस्य महापुरुषस्य भगवतः पादो यत्र पतति तमुद्धरति स्वगुणाधानं करोति तत्र साक्षिणो बहवः। उद्धृतगयसंबन्धात्पितॄणामुद्धार एष महिमा भगवत्पादस्य॥

ननु पितरि मुक्ते श्राद्धमाचरितव्यं न वा कस्मात्। अभोक्तृत्वरूपत्वान्मुक्तेः। शृणु। अभोक्तैव सर्वं भुनक्ति। यथा श्रुतिः 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स' इति सर्वभोक्तृत्वमाह। द्वासुपर्णेति श्रुत्यानशनत्वेपि प्रथिते। तस्मान्मुक्तोपि पिता भुनक्ति श्राद्धं सर्वात्मत्वात्। अतएव मुक्ततमो वामदेवोप्याह स्वानुभूतं सर्वात्मत्व'महं मनुरभवं सूर्यश्चे'ति। अतएव ब्रह्मीभूतो मुक्तः। अन्यच्च। पितरि मुक्तेपि पितृत्वं न मुक्तं पुत्रत्वस्यानिर्मोक्षात्। यदा पुत्रत्वं मुक्तं तदा पितृत्वं मुक्तं स्यात्तस्मात्कर्तुरामुक्ति श्राद्धमिति सिद्धम्। एतेन जन्मान्तरमापन्नोपि पिता समाहितः। धूरिलोचनादीनां तद्दिने तादात्म्यापादनेन ते प्रापयन्ति तत्तज्जन्मस्थेषु। तस्येदं निदर्शनमहेतुका तृप्तिरिति। तदभावे तदभावः 'उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतमि'त्यपि समाहितम्। भेदवादिनां यतिश्राद्धादौ ब्रह्मीभूतेति नोहः किंतु दास इति तेषां मुक्तविषये पूर्वपक्षानुत्थानमिति दिक्।

श्राद्धेनैव तर्पणहोमौ व्याख्यातौ । तस्माच्छ्राद्धादिना कुलोद्धारकं पुत्रं संपादयामीति कुलतत्त्वज्ञस्य पत्युः संकल्पपूर्तये विधवया दत्तको ग्राह्यः । पत्युराज्ञायां सत्यां पुत्रो ग्राह्य इति तु विवाहस्य सप्तपदीसहितत्वेऽनुवादकं तद्राहित्ये विधायकम् । विचारप्रसङ्गे विवाहो विचार्यः सप्तपदीसहितो रहितो वेति । पत्नी भिन्ना भार्या भिन्नेति लोकवेदसंप्रदायः । वैधोऽयं पुत्रः सशास्त्रकुलः । यथा दर्शपूर्णमासादियागे समारब्धे मध्ये पत्यौ विपन्ने यागं समाप्योत्तरं कार्यमाचरन्ति तथा प्रजोत्पादनकर्मणि प्रवृत्ते पत्यौ विपन्ने दत्तकपुत्रं विधायोत्तरं कार्यमाचरितव्यम् । असंभवे कालान्तरे समानगोत्रजो ग्राह्यो मातुर्गोत्रदानानधिकारात् । अथवा गोत्रजैर्गोत्रं देयमुपदेशेन गायत्र्याः । अतएव सहगत्रीविषये 'प्रजां द्रविणं चेह धेही'ति मन्त्रभागः । तादर्थ्यादेव पत्न्याः मृतस्यापि पत्युः स्वत्वं न निवृत्तमिति गम्यते प्रजाद्रविणप्रार्थनालिङ्गात् । येन विज्ञातं विवाहकाले स्वसंमत्या प्रजाद्रविणाधिकारो दत्त इति तत्सामर्थ्ये विधौ लोट् । अन्यत्रानुज्ञायाम् । अधिकारमनुसृत्यार्थो वाक्यानां समे यजेतेतिवत् । अतएव सहगत्रीविषये मन्त्रद्वयं प्रलोभनपरमगत्रीविषयेऽनुज्ञापरम् । एतेन सहगमनमभ्युदयो न विधितन्त्रः प्रयागमरणवत् । सहगमने फलमुक्तम्–'तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानुषे । तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छती'ति । कर्मयोगबलं यथा–'व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । एवं स्त्री पतिमुद्धृत्य तेनैव सह मोदते' इति । इत्थं फलं बलं च प्रदर्शयित्रा महर्षिणा न विधिरुक्तः । तस्माद्रागप्राप्तमिदमिति गम्यते । तस्मात्पुत्रमाश्रित्य विधवया

१ सहगमनस्य विधिबोधितत्वे एवास्यार्थवादस्य योग्या व्यवस्थेति सहगमनं प्रथमः कल्पः । पुत्रमसमर्थं रक्षन्त्या गृहे पतिव्रताया अवस्थानं द्वितीयः कल्पः.

कालयापनं कर्तव्यमिति शास्त्रसंमतो मार्गः सुखाय विधवानाम्। नान्या काचिद्युक्तिः।

कथं प्रवृत्ता कुलीनानां मतिः पुनर्विवाह इति विचार्यते। संप्रति त्वेवं भाति संसर्गफलमेतदिति। यैः पत्नीत्वं न विज्ञातं भार्यात्वं कथंचिद्विज्ञातम्। किमेते ब्राह्मणब्रुवा बुभूषन्ति। किं बहु वक्तव्यम्। उदाहृतमन्त्रयोर्लोट्समन्वयः प्रजाद्रविणाभ्यां न दिधिषुणा। यथा प्रजाधिकारस्तथा द्रविणाधिकारश्च। अतएव दायक्रमः 'पत्नी दुहितरश्चैवे'त्यादि पत्नीमारभ्य रायस्पोषस्य दत्तत्वाद्विवाहे। पोषशब्दस्वारस्याच्च यथेच्छविनियोगाधिकारः। इतरेषां संबन्धानुरूपो दाय इति तत्तात्पर्यम्। सति पुत्रे गोत्रारूढे पुत्रो दायभाक् तदाश्रितत्वाद्विधवायाः। असति तदन्तम् स्त्रीणामुदरंभरितासिद्धान्तः चिन्त्यस्तासामपि स्वामित्वावगमाद्गोत्रारूढानाम्। इदमेव गोत्रारूढत्वम्। अन्यथा सप्तपदीमन्त्रस्य प्रजां द्रविणं चेह धेहीति मन्त्रभागस्य कुत्र चारितार्थ्यम्। अनयोरेकवाक्यता च गम्यते स्मृत्या सहापि। अन्यथा पत्नीग्रहणं प्रथममनुपपन्नं तस्मात् पत्नीद्वारकं दुहितापुत्रयोः स्वामित्वम्। 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुता गोत्रजा बन्धुशिष्यसब्रह्मचारिणः॥ एषामभावे पूर्वस्य धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः' इति। अत्र क्रमो विवक्षितः। पत्नी गोत्रारूढा। पूर्वस्याभावे दाये बाधिते। अपुत्रस्य गोत्रारूढपुत्ररहितस्य। वृण्वन्ति सप्तपद्या पत्नीमिति वर्णाः। धनस्य यज्ञियत्वाद्गोत्रविशेषणम्। दुहितरोऽनूढाः। अनूढानां कन्यानामनुपनीतानां कुमाराणां च तुल्यं स्वामित्वमिति द्योतनाय दुहितृशब्दोपात्तं चशब्देन व्यञ्जयति। उपनीताय दायो दातव्य इति तात्पर्यम्। परिशिष्टा पत्नी व्यवस्थां कुर्यात् पत्युः कर्म तत्। 'अर्धो वा एष आत्मनः। यत्पत्नी'तिश्रुतेः एवकार ऊढानां कन्यानां दायं व्यावर्तयति। तस्मादूढानां पति-

द्रविणस्वामित्वं मातृवत् । गोत्रारूढे समर्थे पुत्रे पूर्णं स्वामित्वं पितृवत् । गोत्रमेव मुख्यं दायप्रयोजकम् । इत्थं प्रजाद्रविणधर्माः गुरुोपाया विश्वस्तानामक्षारलवणाशित्वं च । पतिसंकल्पपालनं पातिव्रत्यम् । स च संकल्पः प्रकाश्यते विवाहे । तस्मादवीरात्वं निषिद्धं कस्मादङ्गीक्रियेत श्रौतैर्दायश्च कथं छिद्येत न्यायविद्भिः ॥

केचिदाधुनिका आहुः । कन्यानां पातिव्रत्यादिज्ञानसिद्धये वयोवृद्धिरपेक्षितेति । तत्रापरेऽप्याहुः परलोकान्तज्ञानसिद्धये कुमाराणामप्यावश्यकीति । उभयेऽपि मूढाः, यतो दीक्षयितुर्ज्ञानं दीक्षणीये संक्रामति तदुभयज्ञानं दीक्षयितुरपेक्षितं तस्मादष्टमे वर्षे विवाहाय दानं कन्यानामध्ययनायोपनयनं वटूनाम् । ये तु वदन्ति विधवया दत्तको न ग्राह्य इति तान् समाधास्यति श्रुतिद्वयं 'प्रजातन्तुं मा व्यवच्छेत्सी'रिति 'मामनुव्रता भवे'ति च । अतएव 'न स्त्री स्वातन्त्र्यमर्हती'ति चरितार्थं दत्तकं न गृह्णामीति वक्तुमनवकाशात् । दम्पत्योर्योगक्षेमरूपत्वात् गार्हस्थ्यं नामैतत् । अतएव पत्नीमुपक्रम्यामनन्ति तैत्तिरीया 'अर्धो वा एष आत्मनः । यत्पत्नी यथा गृहेषु निधत्ते ।

१ कन्यां वरो वा संभोगक्षमावस्थो भूत्वा निजमनोऽनुकूलां ललितालापलावण्यादिशालिनीं पत्नीत्वेनात्मसात्कुर्याद्वरं कन्यैव वा तथाविधावस्था भूत्वा तथाविधं पतित्वेनाङ्गीकुर्याद्वा द्वयोः प्रेमोत्तरोत्तरं वर्धेत सुखं च दाम्पत्यसंभवं न विच्छित्तिमासादयेदित्येवं बहुश्रवणरमणीयं रणन्तो निर्मर्यादा नवीनैकदेशिनो मूढाः इति रहस्यम् । यतः कन्या हि देयं वस्तु नाधिकरोति संप्रदानस्य परीक्षणे परीक्षायाः संप्रदातृमात्रायत्तत्वात् । तुष्यतु दुर्जन इति देयस्यैव दातृत्वपरीक्षकत्वाङ्गीकारेऽपि न शक्नोति कन्या पितृवद्यथावत्परीक्षितुं वरं परीक्षणीयानां कुलवित्त–श्रुत–पुंस्त्वादीनां परिज्ञाने कन्याया अयोग्यत्वात् रूपयौवनमात्रलम्पटयोर्दम्पत्योरिव वधूवरयोरविचार्यारोपितं प्रेमापि प्रेम तच्चाप्युत्तरोत्तरं वर्धिष्णवति मन्तव्यमपि मोहविलसितम् । नवीनानुसृतरीत्या पुंस्त्वपरीक्षणमेतद्देशीयानामत्यन्तमननुकूलम् । पाश्चात्यपरिशीलितरीत्या संबन्धस्वीकारे दरिद्राणां कुरूपाणां च विवाहो दुर्लभप्रायः स्यात् । वर्णनियमोऽपि नश्येत्,

तादृगेव तत्' इति । यथा पतिः प्रजां द्रविणं च निधत्ते तथा पत्नी। इदं कस्मात्। तादृगेव तत्। पत्युरपरा मूर्तिरित्यर्थः। योगक्षेमाख्यौ हि दम्पती। पतिर्योगः, पत्नी क्षेमः। ते उभे ईश्वरस्य मूर्ती। अतएव विवाहसमये (लक्ष्मी)नारायणरूपिणे वराय लक्ष्मीरूपिणीं कन्यां संप्रदद इति संकल्प्यते। विष्णुरप्राप्तप्राप्तिरूपो योगः, व्यवस्थापनरूपा लक्ष्मीः क्षेमः। अतएव स्वयं भगवतोक्तम् 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमि'ति। अनन्या नास्ति मदृते योगक्षेमनिर्वोढेति जानन्तो मां योगक्षेमनिर्वोढारं चिन्तयन्तो येऽधिकारिणो जना वर्णाश्रमविभक्ता मानुषाः पर्युपासते मर्यादां नोल्लङ्घयन्ति तेषां नित्याभियुक्तानां मर्यादामनुलङ्घयतां योगक्षेमं गार्हस्थ्यपरमार्थमहं वहामि। अतएवाद्यापि वंशकुलगोत्रशाखाद्यनुवृत्तिः। अत्र वचने जनपदेन स्मारिता तैत्तिरीयश्रुतिः 'ब्रह्मवादिनो वदन्ति कस्मात्सत्यात् त्रयः पशूनाᳪहस्तादाना इति यत्त्रिरुपाᳪशुᳪ हस्तेन विगृह्णाति तस्मात्त्रयः पशूनां हस्तादानाः पुरुषो हस्ती-मर्कट' इति। हस्तादानत्वेऽपि पशुत्वं विधत्ते। हस्तादानत्वे सत्यपि पशुत्वं मर्यादानभिज्ञानैक्यात्। सति शास्त्रमर्यादाज्ञाने जनत्वम्। अतएव जन्मवन्त इत्यर्थः श्रुतिस्मृत्योः। मां विस्मृत्य ये केचिदात्मकर्तृकौ योगक्षेमाविति मन्यन्ते न तेषां तौ। पतिरपि कीदृक् भार्यापि कीदृक् तनुजोपि कीदृक् सर्वमनन्वितम्। किं सर्पेण संपादितं वित्तं वित्तम्। किं पशूनां पुत्राः पुत्राः भार्या वा भार्या। अन्यदेव तद्गार्हस्थ्यं तादृगेव तत्। अतएव युज्यते 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' इति। गुणः शास्त्रसंप्रदायप्रवृत्तिः कर्म पत्यैतत्कर्तव्यं पत्न्यैतत्पित्रैतन्मात्रैतत्पुत्रेणैतत्पुत्र्यैतद्गुरुणैतच्छिष्येणैतदित्यादिविभागशो व्यवस्थायां चातुर्वर्ण्यं चातुराश्रम्योपलक्षणं, मया नान्येन केनचित्। अतएव भाग्यलभ्यमिति तादृ-

नेव तत् । अत्रैवान्तर्भूता गीतोक्ता गुणकर्मविभागाः । किं बहुना । 'गार्हस्थ्ये रक्षिते यत्नाद्रक्षिता आश्रमाः समे । सिक्ते मूले न शाखानां सेकाय यतते जनः ॥ १ ॥ श्वशुरगृहनिवासः श्रेयसे कामिनीनां गुरुकुलवसतिस्तु श्रेयसे पूरुषाणाम् । तदुभयविधृतोयं वर्णिनां गेहसारः समजगणपुरस्ताद्वर्णनं कर्णघातः ॥ २ ॥ अनुव्रतत्वशिक्षार्थं बालोढव्या मनीषिणा । यूना प्रजैककामेन कर्मतत्त्वविजानता ॥ ३ ॥ पत्युस्तु प्रतिमा पत्नी पित्रोस्तु प्रतिमा सुतः । गुरोस्तु प्रतिमा शिष्यो हरेस्तु प्रतिमा नृपः ॥ ४ ॥ पत्युः कर्म वहेत्पत्नी पित्रोः कर्म वहेत्सुतः । गुरोः कर्म वहेच्छिष्यो हरेः कर्म वहेन्नृपः ॥५॥ उद्घाटित उपायोयं श्रौत ईश्वरचिन्तितः । विधवापि सुखं यातु धर्मेण मतिशालिनी ॥ ६ ॥ येषां क्रियावलिः सर्वा भवत्येव मखावलिः । नमस्तेभ्यो महर्षिभ्यो धर्मविद्भ्यो यथावन्मम् ॥ ७ ॥ राजारामो वेद धर्मं नात्र वादोस्ति कस्यचित् । नमस्कुरुत तं नित्यं सुखमार्गः प्रसीदति ॥ ८ ॥ लोलार्ककेशवौ कोटी गङ्गा ज्या नगरं धनुः । कलिर्लक्ष्यं शरो विष्णुः शिवो धन्वी पुनातु माम् ॥ ९ ॥ अष्टादशभुजा लक्ष्मीः स्थिताष्टादशसद्मसु । शकाख्या श्रीः शालिवाहनृपस्य जयतादियम् ॥ १० ॥ श्रीगङ्गाप्रेरितं यत्र लिखितं तत्र तत्तटे । प्रीणात्वनेन लेखेन लेखेश्वरजटास्पदा ॥ ११ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीविरचितमबलाबलं वैदिकपद्धतिपरिशिष्टं संपूर्णम् ।

धर्मसेतौ शिला एता विन्यस्ताः कृष्णभिक्षुणा ।
गुरुनामाङ्किताः सर्वास्तारयन्त्येव मानुषान् ॥ १ ॥
धर्मसेतुं खण्डयन्तः पतन्तीति न चाद्भुतम् ।
मण्डयन्तो मण्डयन्ति दिवं भुवमथो भवम् ॥ २ ॥

---

# ब्राह्मणसर्वस्वम् ॥ ७ ॥

श्रीशङ्करो राजराजो यद्राज्यमधुनापि हि । वर्णाश्रमव्यवस्थायां दृश्यते सकलैर्जनैः ॥ १ ॥ धृष्टहृष्टौ हंसडिम्भौ जघान यतिमन्तुना । सः स्मर्यते धर्मगोप्ता श्रीकृष्णः खलशासनः ॥ २ ॥ न ब्राह्मणापमानेषु श्रेयः पश्यन्ति साधवः । तथापि चापमानाय स्पृहा चेच्छमयन्त्यपि ॥ ३ ॥ पूर्वोत्तरविरोधेन स्वयं यद्व्याहतं वचः । न तस्य खण्डनैः कार्यं व्याहतिं तु प्रदर्शयेत् ॥ ४ ॥ मुद्रितायां तुरीयमीमांसायां मुखपृष्ठे भाषाभेदेनाभिप्रायनिवेदनं तेभ्यस्तेभ्यः संन्यासाधिकारो दत्त इति ध्वननाय । उचितमेतदिति ।

अथ श्रीमन्महामहोपाध्यायसत्संप्रदायाचार्यसर्वतन्त्रस्वतन्त्रपण्डितस्वामिराममिश्रशास्त्रिप्रणीततुरीयाश्रममीमांसानिबन्धो बहुभिरनेकदेशस्थैः पण्डितैः परिशीलितः स्यादुत्तराण्यपि दत्तानि स्युः । वयमधुना तं निबन्धमत्यादराद्वितरितं परामृश्य स्थालीपुलाकन्यायेन व्याहतिं प्रदर्शयामो येनाचार्यसरणिः स्थापिता स्यात् । प्रथमं बिरुदावल्यां सत्संप्रदायाचार्येति । स्वसंमतसत्संप्रदायाचार्यत्वं रामानुजाख्ये प्रथमपुरुषे प्रसिद्धमतस्तदाचार्यत्वमत्र व्याहतं । सर्वतन्त्रस्वतन्त्रेति । स चेशधर्मो जीवे व्याहतः । यद्यव्याहतस्तदा जितमस्माभिर्भेदवादविदलनात् । एकतन्त्रस्वतन्त्रोपि पाणिन्यादिर्न किंकरः । सर्वतन्त्रस्वतन्त्रोपि किंकरोपीत्यसांप्रतम् । इदं च त्वन्मतमेव । पण्डितस्वामीति । नहि पण्डितैः स्वामित्वं दत्तं यथा जगन्नाथरायाय पण्डितराजत्वं दत्तं ततस्तत्स्वामित्वं व्याहतं । रामेति मातृदत्तं नाम । मिश्रेति । उपपन्नं मिश्रत्वं गार्हस्थ्यसंन्यासोभयलक्षणाङ्गीकारात् । शास्त्रीति । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति । ब्राह्मणाः प्रव्रजन्ति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह । ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति' । 'न

कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः' । एके मुख्या वर्णेषु ब्राह्मणाः । उपन्यस्तवाक्यैकवाक्यात् । एवंविधशास्त्रसंघेऽत्स्यपि क्षत्रियवैश्ययोः संन्यासाधिकारदातुः शास्त्रित्वं व्याहतं ब्राह्मणत्वं च तथा । जातिसंरम्भोऽन्य एव सः । किमु वक्तव्यं सति शास्त्रबले । न ब्राह्मणसमत्वसभ्येति वर्णान्तरमिति श्रुतीनामर्थः । इति विरुदावलीव्याघातः प्रथमः पुलाकः ॥ १ ॥

अत्र ग्रन्थे मङ्गलाचरणे तृतीयः श्लोकः । त्रिदण्डिनो महात्मानो यदि नन्वेकदण्डिनः । तेभ्यो यतिभ्यः सर्वेभ्यो गृहिणो मे नतिः सदेति । स्वस्य ब्राह्मणस्य सतः क्षत्रिया वैश्याश्चैकदण्डत्रिदण्डाधिकारिणो निर्णीताः स्वकृतनमस्काराहीं इत्यङ्गीकृतमतएव सर्वेभ्य इत्युक्तम् । ये केचन शास्त्रसंमता अधिकारिणो नमस्कारेण तुष्टाः शान्तिमाप्नुवन्तु भीष्मे परशुराम इवार्जुने द्रोण इवेति । ये केचित्स्वयं निर्णीता अधिकारिणस्तेऽसौ ब्राह्मणः सन्नपि नमस्कृत्य ब्राह्मणत्वं संन्यासाधिकारं च ददाति तस्मादस्मै यथेच्छं पारितोषिकं देयमिति संकल्पयन्त्विति गूढाकूतम् । कोऽन्यथेत्थं नमस्कुर्यात् । किमिदं ब्राह्मण्यं जातितो गुणतो वा यत्क्षत्रियवैश्यपादयोः शिरोऽर्पयति जातिमिथ्यावादित्वं व्यञ्जयति प्रकृतप्राकृतजनतोषाय । किमेष सत्संप्रदायः । क्कुत्र क्षत्रियवैश्यौ क्कुत्र ब्राह्मण एतद्विचारणीयं । विदितो भवेत्सत्संप्रदायः ॥ ननु क्षत्रियवैश्यौ न नमस्करोमि किंतु ब्राह्मणानेव संन्यासिन इति चेज्जितमस्माभिः किं कृतमनेन निवन्धयत्नेन । तावप्यधिकारिणौ नमस्करोमि को दोष इति चेद्विस्मृतं शास्त्रं 'वर्णानां ब्राह्मणो गुरु'रिति ।

ननु नास्ति संन्यासिषु वर्ण इतिचेन्मास्तु त्वयि तु वर्तते । उपाधिधर्मोऽयं योनिनिमित्तो यावच्छरीरं वर्ततेऽभिमानस्तु नास्ति क्कचित् । तस्मादर्णी स्मृत्वा नमस्कारः कर्तव्यः । इति मङ्गलाच-

रणे वादिविजयपटहभेदः। अलमस्मै एकएव दण्डः। इति द्वितीयः पुलाकः॥ २॥

प्रथितक्षत्रियो जनको न प्रवव्राज कस्मात्। याज्ञवल्क्यः प्रवव्राज कस्मात्। ब्राह्मणत्वादितिचेत्तदमुत्तरं सर्वस्य ग्रन्थस्य। अन्यत्र किंचित्तारतम्यम्। वैश्यो न कोऽप्युदाहृतः संन्यासी। येन तदधिकारे बलसिद्धिः। अनुन्मत्ता उन्मत्तवदाचरन्त इति श्रुतिविषयं सिद्धतमं दुर्वाससं परमहंसं पुरस्कृत्य परमहंसेषु त्रिदण्डनिर्णय उन्मत्ताचारान्नातिरिच्यते। तथा जडभरतं प्रकृत्य परमहंसेषु शिखासूत्रनिर्णयो जडत्वान्नातिरिच्यते। चित्रमेतत्सर्वं। क्वोन्मत्ताचारः सर्वतन्त्रस्वतन्त्राणां क्व दण्डनिर्णयः। तन्निकट एकएव दण्ड आसीच्छापो नाम। सर्वतन्त्रस्वतन्त्रा अकिंकरा भवन्ति। कदाचित्कथंचिदाचरन्ति नाश्रमसंप्रदायं नियमयन्ति। अतएव 'उत्तमानां वचः सत्यं चरित्रं तु क्वचित्क्वचिदि'ति वचनस्योदाहरणमिदम्। त्वयि शास्तरि सत्यपि खलाः खलत्वं न मुञ्चन्तीति श्रीकृष्णं प्रति हंसडिम्भखलत्वनिवेदनायेदं चरित्रं दुर्वाससः। संन्यासिषु कुचोद्यमाचरन्तो हंसायन्ते डिम्भायन्ते वेति हरिवंशकथातात्पर्यम्। जनकं पुरस्कृत्यैकाश्रम्यं स्थापितं, सुलभां पुरस्कृत्य सलिङ्गसंन्यासः स्त्रीणां स्थापितः। तथैव द्रौपदीं पुरस्कृत्य पञ्च पत्योपि स्थापिताः स्युः। यथा दृष्टान्तस्तथा शास्त्रमिति तव मतं। सकलविधदृष्टान्तदर्शनात्सर्वतन्त्रस्वतन्त्रत्वमव्याहतमेवेति तवाभिप्रायो दृष्टान्ताधीनो न शास्त्राधीनः। मतेः शास्त्राधीनत्वं पाण्डित्यम्। शास्त्रं च "ब्राह्मणाः प्रव्रजन्ति। क्षत्रियस्य त्रय आश्रमा" इति। व्याहृतिभिः संन्यासः। न स्त्रीणां व्याहृतिप्राप्तिस्तस्या गायत्र्या सह कृतत्वात्। न स्त्रीणां गायत्री। तत्सत्वे पतिगोत्रप्रवेशानापत्तेः पितृगोत्रेण प्रतिबद्धत्वादुपनयननिमित्तेन। तस्मात्पतिगोत्रेण गोत्रवत्याः पतिसंन्या-

सेन संन्यासः । पत्युः सलिङ्गत्वे लिङ्गवती तैरेव लिङ्गैः । अलिङ्गो याज्ञवल्क्यसंन्यासः । तस्मात्सुलभा लिङ्गरहितसंन्यासिनी सौभाग्यवत्यपि तथैव मैत्रेयी तुल्यन्यायात् । एका वैराग्यशीलाऽपरा स्त्रीस्वभावा संन्यासः सम उभयोरभिदाहः प्रैषानधिकारात् । तस्माच्छास्त्रबाह्यः स्त्रीसंन्यासः । "चत्वारो ब्राह्मणस्योक्ता आश्रमाः श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ।" अत्र वचने पुंस्त्वं विवक्षितं । 'अष्टमे वर्षे ब्राह्मणमुपनयीते'तिवत् । स्त्रीणां पत्युरङ्गत्वेनाश्रमधर्मा न स्वतन्त्राः । क्षत्रियवैश्ययोस्त्रिष्टुब्जगत्यधिकारिणोर्व्याहृत्यभावान्न संन्यासः । गायत्र्यधिकारपक्षेपि त्रयो द्वाविति नियमेन बद्धः । एतेन ऋभुनिदाघादयो भवदुदाहृतास्त्यागिनो विरक्ता वानप्रस्थाः संन्यासिसदृशाः पाशुपताः न संन्यासिन इति सिद्धम् । शास्त्रबाधापेक्षयाऽश्रमभ्रमबाधस्यौचित्यात् ।

ननु अस्ति तेषां ब्राह्मणशब्दः । 'यो यज्ञायते स ब्राह्मणस्तस्माद्राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयाद्यो यज्ञायते स ब्राह्मण' इति शतपथश्रुतेरिति चेदनया श्रुत्या वर्णद्वयमेव सिद्धं । वर्णत्रयं मेलयित्वा ब्राह्मण इत्येको राशिः । शूद्र इत्येको राशिः । यौ क्षत्रियवैश्यावनूद्य ब्राह्मणत्वं विधत्से तौ क यदि क्षत्रियवैश्यावुच्येते तदा ब्राह्मण इत्येव ब्रूयादिति नियमविरोधः । क्षत्रियं वैश्यं न ब्रूयादिति नियमफलात् । यदि ब्रूषे क्षत्रियं वैश्यं तदा स्वसतच्युतिरुद्देश्यविरुद्धविधेयासिद्धेः । उत्पत्तिमात्रेण ब्रह्मत्वं चेच्छूद्रेणापि जितं । व्यवस्थार्थं ब्राह्मणयोनावितिश्रुतिशेषस्वीकारे जितमस्माभिः । आपदा क्षत्रियादिवृत्तिमाश्रितो ब्राह्मणो ब्राह्मण एव तं राजन्यं वैश्यं च न ब्रूयादिति श्रुतिसमन्वयः । वर्णाश्रमव्यवस्था च । अतएवोपनयनसमये लिङ्गभेदो दर्शितः । 'काषायं ब्राह्मणस्य माञ्जिष्ठं क्षत्रियस्य हारिद्रं वैश्यस्ये'ति गृह्यसूत्रे । अत्र पुंस्त्वं विव-

क्षितं । यदि काषायादिलिङ्गव्यवस्थार्थं वर्णभेदाङ्गीकारस्तदा निरस्तं ब्राह्मणशब्दवाच्यत्वं क्षत्रियवैश्ययोर्भवता । स्वनिरस्तं ब्राह्मणत्वं स्वयं विधत्ते चित्रं । वर्णसंप्रदायमूलं वचनं 'काषायमात्रसारोऽपि यतिः पूज्यो युधिष्ठिरे'ति भीष्मस्य । काषायसारत्वं ब्राह्मणानामितरेषां नाधिकारः । अतएव श्वेताम्बराः पीताम्बरा दिगम्बरा इति ब्राह्मणेतरसंन्यासिषु प्रसिद्धानि लिङ्गानि । तस्माद्ब्राह्मणानामेवाधिकारो वैदिककाषायादिलिङ्गधारणे । त्रिदण्ड एकदण्डो वाऽस्तु ब्राह्मणानां क्षत्रियाणां च लिङ्गभेदो दर्शितः । 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः'इति । एष क्षत्रियसंन्यासो यद्रणेऽभिमुखमरणं तस्य लिङ्गं शस्त्रं न वैणवो दण्डः । परिव्राजो योगयुक्तालिङ्गं । न दण्डादण्डो वा । यथाह भगवान्—'मौनानीहानिलायामा दण्डा वाग्देहचेतसाम् । नह्येते यस्य सन्त्यङ्ग वेणुभिर्न भवेद्यति'रिति दण्डानां न यतिलक्षणप्रवेश इत्येकादशस्कन्धे । एतेन 'सर्वे चैव त्रिदण्डिन' इति स्मृतिरान्तरदण्डविषयेति भगवदभिप्रायो वेदितव्यः । वेणूनां मौनादिसहितानामेव लक्षणप्रवेश इति चेन्न । 'न लिङ्गं धर्मकारणमि'ति तत्रैव वचनान्तरात् । 'योगारूढस्य न दण्डं न कमण्डलुमि'त्यादिनिषेधवाक्यैकवाक्याच्च । तथाच गीतायां 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' । नैष्कर्म्यसिद्धिमिति । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतादि'ति ब्रह्मलक्षणाम् । परमां ब्रह्मीभावरूपाम् । इत्थं संन्यासफलमभिदधता संन्यासलक्षणमुक्तं—'यं संन्यासमिति प्राहुर्योगं त विद्धि पाण्डव । नह्यसंन्यस्तसंकल्पो योगी भवति कश्चने'ति । संकल्पमूलैषणात्यागः समन्त्रको व्याहृतिपूर्वः ससाक्षिकः संन्यासो ब्रह्मीभावप्रद इति श्लोकद्वयस्यार्थः । एवमुक्तलक्षणसंन्यासे सति । 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ।' इति

तस्य मुनेः संन्यासिनोऽपि लिङ्गधारणकालमर्यादोक्ता योगारोहणान्तं । तदनन्तरं योगारोहकर्मणि प्रयुक्तानि श्रवणमननादीनि नापेक्ष्यन्ते कुतस्तरां दण्डादयः कृतकार्यत्वात् एष चतुर्थीं भूमिमभिरूढः । 'बुधो बालकवत्क्रीडेत्कुशलो जडवच्चरेत् । वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत्' इति स्थितिविषयो भवति । अतएव 'न दण्डं न कमण्डलुमि'त्यादिनिषेधचारितार्थ्यं । योगारोहो नाम ब्रह्मीभावः स च सिद्ध्यति संन्यासात् कस्मात् । अहो बत जीवस्यैषणात्रयमब्रह्मत्वं तत्त्यागो ब्रह्मत्वम् । एष योगो यदा सिध्येत्तदा न कर्मापेक्षाऽतो न शिखासूत्रापेक्षा ततो मुण्डनं प्राप्तं कर्मणामेषणामूलत्वात् । एषणाव्युत्थानकर्मणि विनियुक्तः प्रैषमन्त्रो ब्रह्मीभावप्रदो यदुच्चारेण संन्यासीत्युच्यते । एषणात्रयत्यागः समन्त्रकः संन्यासशब्दार्थः । ततएव तेषां ब्रह्मीभूतानामिति संकल्पः । यत्र संन्यासाभासस्त्रिदण्डो नामानेकाश्रमसंकीर्णलिङ्गः काम्यकर्मत्यागाधिकारी स गायत्रस्तस्य न ब्रह्मीभूतस्येति संकल्पः । एषणात्यागे यतमानत्वेन नैष्कर्म्यसिद्धेरभावात् । अत उभयं लिङ्गं शिखासूत्रे दण्डश्चेति । एष प्रथमभूमिमारूढः । आश्रमत्रयसंकीर्णत्वात्त्रयो दण्डाः । श्रवणाधिकारी । ततोऽस्य यथाधिकारं लिङ्गप्राप्तिर्द्वैविध्ये चाधिकारद्योतकं शिखासूत्रमेषणात्यागयत्नद्योतकं त्रिदण्डं । एषणात्यागे कर्मानधिकारान्मुण्डनमेकदण्डश्च । 'गायत्रो वा पालाश' इति श्रुत्या यथा पालाशदण्डो ब्रह्मचारिण एषणाप्रविष्टस्य तथा निर्जिगमिषोस्त्रिदण्डं गायत्रं वैणवं समावृत्तत्वात् । अतएव कर्माधिकारः । कर्मानधिकारान्मुण्डनं यथा तथा ब्राह्मण एव ब्रह्मीभावायाचार्यत्वाय च कल्पते नान्य इति ख्यापनायैकदण्डः प्रणवाङ्कः । 'मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते' इति स्मृत्याचार्यलिङ्गं ब्राह्मणानामेवेति नियमेन क्षत्रियवैश्ययोर्निषिद्धं ।

यद्येतयोस्त्यागो दृश्येत तथापि संन्यासशब्दं नार्हतः। 'यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयत' इति संन्यासशब्दो बाध्यते त्यागिशब्दविधानात्। ननु त्यागसंन्यासशब्दौ पर्यायौ 'भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित्' इति त्यागसंन्यासशब्दयोरेकार्थाभिधानादितिचेद्युक्तमुक्तं त्यागव्याप्यो हि संन्यासस्त्यागशब्देनाभिधीयेत। तथापि प्रैषमन्त्रोच्चाराधिकारानधिकारभेदेन व्यवस्थापनीयौ। अतएव व्यवच्छिनत्ति 'नतु संन्यासिनां क्वचिदि'ति। तस्मादितरेषां त्यागिनां प्रेत्य फलं भवतीति संभाव्यते। अतएव त्यागी भरतो जन्मान्तरं भेजे। यौ स्वपुत्राचार्यत्वमेव ब्राह्मणाय दत्तस्तयोः पुरोहितगोत्रेण गोत्रवतोः कथं जगद्गुरुलिङ्गधारणाधिकारः। गुरुत्वाभावान्त्रिकर्माधिकारः। लिङ्गबाधाल्लिङ्गान्तराविधानात्क्षत्रियादीनां न संन्यास इति जनको भीष्मश्च न प्रवव्राज। एतेन निदावाद्यस्त्यागिनो न संन्यासिन इति सिद्धम्। अतएव क्षत्रियेण सता सर्वज्ञेनापि कृष्णेन गुरुत्वं ब्राह्मणेभ्यो दत्तं। 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति। ते प्रसिद्धा ब्राह्मणास्तत्त्वदर्शिनो ज्ञानिनः शाब्दे परे च निष्णातास्ते तव ब्राह्मणजन्मनि। अथवाऽर्जुनस्य विशेषणं ज्ञानिन इति। मदुपदेशात्परोक्षज्ञानिनस्तव ब्राह्मणजन्मनि तत्त्वदर्शितोदेष्यतीत्यर्थः। औपनिषदज्ञाने ब्राह्मणानामेवाधिकार इति गम्यते। एतेन जनकयाज्ञवल्क्यौ व्याख्यातौ। अतएव 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचने'त्यधिकारनिर्देशः। ते तव क्षत्रियत्वात्। स्वस्य ज्ञानितमस्यापि। तमेवाधिकारमाह। 'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्। संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः' इति। अतएव क्षत्रियस्य त्रय आश्रमा नैष्कर्म्याधिकाराभावात्। वैश्यस्य द्वौ शूद्रस्यैकः इति चत्वारोऽप्याश्रमिणो न व्रात्याः। शूद्रः प्रसिद्ध एकाश्रमी सर्वेषां धर्माणामेकाश्रमे संग्रहात्। इदमैकाश्रम्यं किं

तव संमतं । उत्ताश्रमान्तरासंकीर्णलिङ्गः परमहंस एकाश्रमी पूज्यतमः प्रसिद्धतमश्चाश्रमान्तरानधिकारीति । इदमैकाश्रम्यमित्याचार्या इति धर्मसूत्रस्याकूतमाश्रमान्तरस्य पारमहंस्यान्तत्वात्तदङ्गत्वादेक एवाश्रम इति । 'ब्रह्मचर्यात्समुत्पन्नस्याश्रमयज्ञस्य संन्यासेऽवभृथः । अतएव ब्रह्मचर्यादेव वा प्रव्रजे'दिति श्रुतिः सङ्गता पूर्णाहुतिन्यायात् ।

ननु प्रत्यक्षविधानाद्गार्हस्थ्यस्येति तदन्ता आश्रमा इति चेन्न तदन्ततासिद्धिः कर्मणि भावप्रत्ययात् भावकर्मणोः प्रत्यक्षता विधीयते । तथैकाश्रम्यमित्यत्रापि । एकाश्रमकर्मणा भावेनाऽसंकीर्णलिङ्गस्तिष्ठेत् गृही च संन्यासी चेति न तिष्ठेदित्यर्थात् । गृहिणां प्रैषमन्त्राभ्यासो निषिध्यते । समावृत्तस्य गृह्याग्निं समारोप्य संन्यासविधानाच्च नाश्रमे संकीर्णत्वम् । वर्णाश्रमसांकर्यवचनमाचार्यत्वविरुद्धं । ब्राह्मणशब्द एव व्याकरोत्यधिकारं ब्रह्मशब्दात् 'तस्येद'मित्यणि ब्राह्मणशब्दः । तस्माद्योनिविशेषो ब्रह्म तस्यायं योनिमहिम्ना शाक्रयोनेर्ब्रह्मणः संबन्धः । तपःश्रुताभ्यां तदधिगमस्तदा ब्राह्मण्यं च सफलं । तपःश्रुताभावे जातिब्राह्मण एव नान्यस्तपःश्रुताधिकारानपगमात् । तस्मात्तं ब्राह्मण इत्येव ब्रूयान्नान्यं राजन्यं वा वैश्यं वा किंबहुना । इतरयोनेर्ब्रह्मसंबन्धकारकत्वाभावात्तदुत्पन्नो ब्राह्मीं दीक्षां संन्यासं नार्हतीति । गुणतो वर्णाङ्गीकारे सापिण्ड्योच्छेदप्रसङ्गो यदेकजातानामपि स्वभावा अनेकविधास्तद्भेदाद्वर्णभेदे सापिण्ड्यादर्शनाच्चत्वारोऽपि भ्रातरोऽसपिण्डास्ततो मृताशौचाद्यव्यवस्थापत्तिःयोनित एव वर्णाङ्गीकारे जातिधर्मव्यवस्थासिद्धिः । तत्सिद्ध्ये क्षत्रियत्ववै-

१ किंचैकस्यापि कालभेदेन स्वभावभेददर्शनादाजन्मैकजातिव्यवहार्यत्वं न स्यादिति विवाहादावव्यवस्थैव स्यात्संस्कारा अपि शोचनीया भवेयुः । यौवनमददुर्ललितस्य पुत्रस्योपनयनादौ वार्धक्यशिथिलेन्द्रियग्रामो जनकः किं संकल्पे ब्राह्मणोऽहं शूद्रस्य पुत्रस्योपनयनं कर्तुमिति क्वापि पठति ?

त्र्यत्वाङ्गीकारे वृथाप्रयासो ब्राह्मणशब्ददाने। परंतु दुःसहं ब्राह्मणशब्दं न सहेयातां सापिण्ड्योच्छेदभिया। यदि नोच्छिद्येत तदा क्षत्रियत्वं च न लुप्येत। तस्माज्जातिब्राह्मण एव ब्राह्मणशब्दार्थः। एषणात्यागो व्याहृतिपूर्व एव संन्यासस्तेन सिध्यति मोक्षो नाम ब्राह्मीभावो ब्राह्मणानां तच्चिह्नमेकदण्डः पूर्णब्राह्मण्यद्योतकः। ब्राह्मीभावस्याप्रतिबद्धत्वात्। सति चिह्ने मुण्डनमेकदण्डोऽकर्मिताऽद्वितीयसिद्धान्तप्रतिपादको ब्राह्मणस्यैव पूज्यतमस्य पूज्यतमं लिङ्गं। अपूज्यवर्णोत्पन्नौ क्षत्रियवैश्यौ कथमर्हतः। येन वर्णसांकर्यभ्रमो न स्यात्तथा चरन्ति शिष्टाः। ननु व्यासस्यान्ययोनिसमुत्पन्नस्य ब्राह्मणत्वं दृष्टमिति चेद्युक्तं योनिदोषाभावादाकालिकसमुत्पत्तौ बीजगुणाद् ब्राह्मणत्वम्। एतेन शुको व्याख्यातः। अरण्यामाकस्मिकत्वात्। पराशरोत्पत्तियोन्या द्वयोर्ब्राह्मण्यं चरितार्थं। इति तृतीयः पुलाकः॥ ३॥

ननु नैकदण्डपक्षः श्रेयान्किंतु त्रिदण्डपक्ष इति चेदस्तु गौणत्वात्क्षत्रियवैश्यान्धपङ्ग्वादिभ्यः समर्पितः। त्रिदण्डपक्षो मुख्यतमोपि स्वसंमतविशिष्टाधिकारिषु स्त्रीषु क्षत्रियेषु च समर्पितः। न ब्राह्मणायासाधारणं लिङ्गं परिशिष्टं। अस्तु यत्क्षत्रियवैश्यस्त्रियो ब्राह्मीदीक्षां नार्हन्ति कुतो लिङ्गम्। अन्धपङ्ग्वादिलक्षणानि स्वयमुपन्यस्तानि स्मार्तानि। अजिह्वः षण्डकः पङ्गुरन्धो बधिर एव च। मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः॥ १॥ इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जति। हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते॥२॥सद्योजातां यथा नारीं तथा षोडशवार्षिकीम्। शतवर्षां च यो दृष्ट्वा निर्विकारः स षण्डकः॥ ३॥ भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च। योजनान्न परं याति सर्वथा पङ्गुरेव सः॥ ४॥ तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम्। चतुर्युगद्वयं त्यक्त्वा परिव्राट् सोन्ध उच्यते॥ ५॥ हिताहितं मनोरामं वचः शोकावहं

यतिः । श्रुत्वा यो न शृणोतीव बधिरः स प्रकीर्तितः ॥ ६ ॥ सान्निध्ये विषयाणां यः समर्थो विकलेन्द्रियः । सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ ७ ॥ ईदृशलक्षणसंपन्ना यद्येकदण्डाधिकारिणस्तदा त्रिदण्डपक्ष उक्तलक्षणहीनेषु योजितः कथं मुख्यतामापद्येत । एतेन 'इन्द्रस्य वज्रोसीति त्रिदण्डं विभृयाद्यद्येकदण्डं सशिखं वपनं कृत्वा शिखां सूत्रं चाप्सु जुहुयाद्भूमौ वा क्षिपे'दिति सूत्रव्याख्यानप्रसङ्गे त्रिदण्डप्रतिष्ठाप्रख्यापनं कुत्र पर्यवसितम् । अतएवार्जुनादिभिर्वेषे योजितस्त्रिदण्डपक्षः । वस्तुतस्तु कलौ त्रिदण्डपक्षो निषिद्धः । 'चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च । कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः । संन्यासश्च न कर्तव्यो ब्राह्मणेन विजानते'ति त्रिदण्डो निषिद्धः । सर्वाधानेन सह गृह्यश्रौताग्न्योः सांकर्यं सर्वाधानं गार्हस्थ्यसंन्याससांकर्यं त्रिदण्डः संदिग्धत्वान्निषिध्यते असंकीर्णं द्वयं पुनर्विधीयते । 'यावद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते । संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे'इति । कस्मादेतदसंदिग्धमिति चेत्रिदण्डस्यार्जुनेन संदेहे पातनात् । यच्च शिखैकदेशत्यागः सूत्रेष्वेकसूत्रत्याग इति पक्षः स्वीकृतः स किं प्रत्यहमुतैकाहम् । आद्येऽल्पैरेव दिनैः शिखाभावप्रसङ्गः । द्वितीयेऽपि याभ्यां शिखासूत्राभ्यां कर्माधिकारो दत्तस्तत्त्यागे कर्माधिकारः स्वयं त्यक्तः । तदा किं परिशिष्टशिखासूत्रैः । यदि कर्माधिकारो न त्यक्तः । किं तेन शिखासूत्रत्यागेन । कर्माधिकारमूलोपनयनाधिकारसिध्यर्थे शिखा । ततःप्रभृति अवैदिककर्माधिकारसिद्धिः । उपनयनोत्तरं श्रौतस्मार्तकर्मानुष्ठानसिध्यर्थे यज्ञोपवीतधारणं करिष्ये इति यज्ञोपवीतधारणसंकल्पः प्रसिद्धतमः सच बाधितो यज्ञोपवीतत्यागेन । तदा मुण्डनं प्राप्तं तदेवाकर्मित्वम् । ननु कुर्वन्ति कर्माणि यथेष्टं कथमकर्मिता । किं न जानीषे ब्राह्मं मार्गं । संन्यासो

नाम ब्राह्मी दीक्षा योगस्तमभिप्रेत्य 'कर्माऽशुक्लकृष्णं योगिनस्त्रिविधमितरेषामि'तिसूत्रयामास पतञ्जलिर्वैदिकमार्गपण्डितः । भगवानपि गीतायां 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचिदि'ति । ननु चित्रमेतत् । क्वायं वेषात्मा संन्यासः कुत्र मोक्षो न यत्र फलसंबन्धः । न चित्रं तत् । एष संस्कारमहिमा । अतएव शास्त्रं सफलं । किं न जानीषे वैयासिकं सूत्रं 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशावि'ति । संन्यास एव तदधिगमः प्रतिबन्धक्षयात् । अतएव 'उद्धरेत्सप्त गोत्राणि कुलमेकोत्तरं शतमि'ति संन्यासफलम् । 'यत्करोषी'ति गीताश्लोकोच्चारस्तु न संन्यासस्तत्रैव कर्माधिकारप्रतिपादनात् । इति चतुर्थः पुलाकः ॥ ४ ॥

सर्वेषु सर्वे वर्णाः सर्वेषु सर्वेप्याश्रमा गुणप्राधान्यादित्यङ्गीकुर्वता वर्णसंकरं विना किं सिद्धान्तितमस्यां तुरीयमीमांसायां । गृहस्थानामेषणात्रयमग्नानां प्रैषमन्त्रोच्चाराङ्गीकार एषणात्रयत्यागकर्मणि विनियुक्तो यः । महत्साहसमेतत् । येन कर्मणा सर्वेप्याश्रमा लुण्ठिताः । अत्यल्पेनैव कालेन 'विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठमि'ति श्लोकमवलम्ब्य श्राद्धे श्वपचं नियुञ्जाना अपि जना दृश्येरन् । एतत्समयचरित्रं । याच निन्दा संन्यासिनां सा संमताऽस्माकं कालोपहतत्वाद्धर्माणां गार्हस्थ्यवन्निन्दास्तुत्योरधिकाराधीनत्वात् । 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तोवाऽनपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचर' इति, 'जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते' इति च भगवतः शिक्षां नाटयन्ति बहवः । यदि भक्त एव विधिनिषेधागोचरस्तदा किमु वक्तव्यं ज्ञाननिष्ठो विधिनिषेधागोचर इति । तत्तन्निष्ठत्वं तत्तद्दीक्षयावगन्तव्यं । यत्र ब्राह्मणकुले समुत्पन्नस्तद्ब्राह्मण्यमेव न विजानाति परमहंसधर्मं विवृणोति चित्रम् । वृश्चिकमन्त्रमविजानन् सर्पबिले

हस्तं क्षिपति । रागद्वेषाभ्यां न धर्मनिर्णयः पारयितुं शक्यते इति सत्यं विज्ञेयं । 'हंसः श्वेतो वकः श्वेतः को भेदो वकहंसयोः । नीरक्षीरविवेके तु हंसो हंसो वको वकः ।' भीष्मः क्षत्रियः सन्नेव विष्णुसहस्रनामफलकथनप्रसङ्गे ब्राह्मणेतरस्य मोक्षाधिकारमुपनिषदधिकारं च वाधते । यथा 'वेदान्तगो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् । वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयादि'त्यधिकारभेदेन फलभेददर्शनम् । अतएव स्वयं न संन्यस्तवान् । मोक्षाश्रमानधिकारात् भगवतापि तारतम्यं दर्शितं । 'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः । स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् । किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथे'ति किंपुनरिति काकुः । ब्राह्मणा ब्रह्मसंवद्धाः परां ब्राह्मीभावं यान्तीति न चित्रमिति । अतएव पुण्या इति विशेषणं । योनिमहिम्ना पुण्यत्वं । राजर्षीणां च भक्ता इति विशेषणं । तदेवेतरेषामपि प्राप्तं क्रमेण तेऽधिकारिजन्मसमासाद्य मुच्यन्त इत्यपि शब्दार्थः । अनधिकारिजन्मापादिका योनिः पापयोनिः । विजिगीषा क्षत्रियस्य स्वभावः । विविदिषा ब्राह्मणस्य । जिघृक्षा वैश्यस्य । दास्यं शूद्रस्येति भीष्मवाक्यस्यार्थः । अयं क्षीरनीरविवेकः गोकुले निवसन् भगवानपि गोपकन्या यथेच्छमङ्गीचकार यज्ञपत्नीश्च नमश्चकार । अस्यां ब्राह्मणयोनौ शास्त्रमूलेऽहमेव भवामि भूतश्च । 'अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुरि'ति प्रतिज्ञानात् । यथाऽजामिलो वाल्मीकिर्वसिष्ठो वा । योनिमहिम्ना ब्राह्मणत्वं सिद्धं तपःश्रुताभ्यां विजानाति तदाऽहं ब्रह्मासीति वदेदेष योनिमहिमा । तत उक्तं व्यासेन 'शास्त्रयोनित्वा'दिति । तदहमस्मि शास्त्रयोनिः तस्मादेतच्छास्त्रं या ब्राह्मीयोनिः या क्षात्री सा शस्त्रं । या वैशी सा तुला । या शौद्री सा दासी । तस्मात्ता गोपकन्यका अङ्गीचकार ब्राह्मणीर्नमश्चकार मोक्षभूमीः । तस्मात्क्षत्रियजातौ मोक्षस्याशापि

नास्ति। तस्मात्सति वैराग्ये ब्राह्मणः संन्यसेत्क्षत्रियः शस्त्रं बिभृयात्। अतएव ज्ञानिवर्यो भीष्मो वसुष्वलीयत शस्त्रकरः। जडभरतोऽपि तृतीये जन्मनि ब्राह्मणस्तत्र मुक्तो बभूव। अतएव भगवतोक्तं। 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते। अथवा योगिनामेव कुले भवति धीमताम्। एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्। तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्। यतते च ततो भूयः संसिद्धौ कुरुनन्दने'ति। यतमानो भरतो हरिणसङ्गेन भ्रष्टस्तृतीये जन्मनि शुचीनां 'शुचिर्विप्रः शुचिः कविरि'ति श्रुतेः। श्रीमतां 'ऋचः सामानि यजूंषि। सा हि श्रीरमृता सतामि'ति श्रुतेर्विद्यावतां गृहे जजानाथवाऽत्मारामाणामेव वेदरहस्यविदां गृहे। तत्फलं निरूपितं एतद्धीत्यादिना। श्रुतिश्च 'नास्याऽब्रह्मवित्कुले भवती'ति तस्मात् 'सर्वापेक्षा च यज्ञादेरश्ववदि'ति वैयासिकं सूत्रं ब्राह्मणेष्वेव संगच्छते सामग्र्या अन्यूनत्वात्। क्षत्रियादिर्विरक्त उभयभ्रष्टो भवति न शस्त्रं शास्त्रमिति। तस्माद्गीता समन्विता भरते। एतेन क्षत्रियत्यागिनां गतिश्चिन्त्या। संन्यासाभावात्। तस्मान्न तेषां ब्रह्मीभूतानामिति संकल्पः। ब्रह्मीभावस्य योन्यधीनत्वात्संस्काराधीनत्वाच्च। पूर्वं ब्राह्मणजन्म संपाद्य ब्रह्मीभूतस्येति संकल्पं संपादयिष्यन्तीति निर्विवादः पक्षो भरतोदाहरणेन समन्वितो भगवदुक्त उदाहृतक्षत्रियादिषु योज्यः। तस्माद्योनिब्राह्मणानामेवाधिकारः संन्यासे लिङ्गधारणे च। यज्जातौ योगभ्रष्टा जनिष्यन्ति तज्जातेरुद्धारे कः संशयः।

ननु कथमेते निदाघादयः क्षत्रियाः। तस्मादेवालिङ्गाः। पुनर्युद्धार्हाः पाशुपता भवदुपन्यस्तपृथुपौत्रसुशीलवत्। पाशुपती हि दीक्षोपासनाङ्गं सिद्धिमार्गः संन्यासदृशः प्रैषमन्त्रवर्जनात्। तेषां मुक्तौ न प्रमाणम्। अतएव 'जन्मान्तरे भवप्रत्ययो विदेहप्रकृतिलयानामि'ति योगसूत्रा 'त्तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा

चे'ति श्रुतेः सामग्रीसंयोजकब्राह्मणकुले जन्म संपाद्य ब्रह्मीभवन्ति । ननु कथं विश्वामित्रे ब्राह्मणशब्दस्तस्माद्गुणतो वर्णाङ्गीकार आवश्यक उभयोस्तदा सर्वोयं तुरीयमीमांसानिबन्धः सुसंबद्ध इति चेदुपकृतं विश्वामित्रेण त्रिशङ्काविव । महता तपसा ब्राह्मणशब्दं संपादितवान्वसिष्ठात् । राजन्यं वा वैश्यं वेति श्रुत्यनुग्रहाभावात् । यथाऽधुना राजादिपदवी तथायं ब्राह्मणशब्दः । क्रोशमात्रेप्याज्ञा यस्य नास्ति सोपि राजेत्युच्यते । नैतावता ब्राह्मणजातिप्रवेशः सापिण्ड्यव्यवस्थानुपपत्तेः । 'प्रजातन्तुं मा व्यवच्छेत्सी'रिति सापिण्ड्योच्छेदो निषिद्धोऽङ्गीकृतः स्यात् । नान्यथा जात्यन्तरप्रवेशः । यत्र जातौ प्रविष्टस्तत्राप्यभिनवस्य सापिण्ड्यं निरुद्धं केनाप्यसंबन्धात् । तस्माद्गोत्रप्रवर्तको विश्वामित्रो जातिब्राह्मण एव यं गायत्र्या ऋषिं सस्माराभिनवो विश्वामित्रनामा ब्राह्मणः । तस्य ब्राह्मणशब्दलाभात्पूर्वं यद्गोत्रं तदेवानुवृत्तं सापिण्ड्यं च । अन्यथोभयभ्रष्टत्वापत्तेरिति दिक् । अतएव 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यत' इति भगवान् । श्रेयो मोक्षस्तत्साधनं च । अतएव 'यदहंकारमाश्रित्य न योत्स्य इति मन्यसे । मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यती'ति वचनेन पाशुपतास्त्रलाभसमये शिवेन सह युद्धं स्मारितं । प्रकृतिः क्षात्रयोनिः तस्मा'त्सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे'ति वाक्यस्य प्रवाहप्राप्तयुद्धेतरधर्मानिति बोधप्रसङ्गेऽर्जुनेन 'करिष्ये वचनं तवे'त्युक्तं । तस्माद्विश्वामित्रेण ब्राह्मणशब्दे लब्धेऽपि न संन्यासाधिकारो लब्धः स च जातिनिबद्धः । न तादृशं भाग्यं सर्वासां मातृणां याः पुत्रब्रह्मीभावेनोद्धृताः स्युः । इदमत्र रहस्यं । श्रीकाशीव ब्राह्मणयोनिर्ब्रह्मत्वं दत्वा पुत्राय कृतार्था भवति । यथा वाल्मीकये । अतएव द्रोणो योगान्तः सिंहीव क्षात्रयोनिर्योधयित्वा पुत्रान् । अतएव भीष्मो रणान्तः । कूर्मीव वैश्ययो-

निर्गोपनं । अश्विनीव शूद्रयोनिर्दोषं । सत्येवं क्षत्रियादीनां संन्यासाधिकारदानपरिश्रमः कस्मात् । यदि ग्रहीतुमुद्यताः सर्वे परीक्षिताः क्षत्रियादयः । अतएव मदालसापुत्रा अवधूतदशां प्राप्ता अपि निजेन बन्धुनाऽलर्केण युयुधुः । स्पष्टं चैतत्पुराणेषु । युद्धेनैव भुजकण्डूतिः शाम्यति क्षत्रियाणां ब्रह्मीभावेनैव ब्राह्मणानां । धनेनैव वैश्यानां यशसैव शूद्राणां त्रिदण्डो मुमुक्षुलक्षणमेकदण्डो मुक्तलक्षणमुभयं ब्राह्मण एव पारयितुं शक्नोति । त्रिदण्ड आत्मदमनार्थं एकदण्डो जगद्दमनार्थोऽतएव परमहंसपरिव्राजकाचार्यपदवी स्वामिपदवी चैकदण्डिनाम् ।

ननु चित्रं सर्वत्यागः कुत्र स्वामित्वं च कुत्र । न चित्रं यत्र सर्वत्यागस्तत्रैव स्वामित्वमव्याहतं । यथा नारायणशिवदत्तात्रेयादयस्त्यागिनोपि स्वामिनोऽपि । तृप्तत्वात्त्यागिनः शासकत्वात्स्वामिनः । शास्त्रो वक्ति शास्तारं स्वामीति । इदं महदैश्वर्यं यस्य सर्वे वर्णाः सर्वेऽप्याश्रमिणः शास्यपदे स्थिताः । 'स्वामिन्नैश्वर्य' इति धातुर्न धनं ब्रूते किंतु प्रभुत्वं । तस्मात्स्वामिशब्दं प्रयुंजाना एकदंडिनि ब्राह्मणतमे प्रभुत्वमङ्गीकुर्वन्त्यनुद्धताः । उद्धतास्तु यथेच्छं ब्रुवते । 'मातृमान्पितृमानाचार्यवान्वेदे'ति वेदो ब्रूते स्वरहस्यम् । अतएवोद्धतरवशान्तौ विश्वामित्र उवाच । 'धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलमि'ति । ब्रह्मतेजसो लक्षण एकदण्डे वेदसिद्धान्तप्रतिपादिनि स्वामित्वमाचार्यत्वं च निबद्धं । तस्मादन्येषु स्वामिशब्द आचार्यशब्दश्च प्रामादिकः । तेषु सत्यपि ब्राह्मणत्वे शास्यकोटिनिविष्टा एकदण्डिनां । तत्पूर्णं ब्राह्मण्यं यदेषणात्रयत्यागे सत्याचार्यलक्षणसंपन्नत्वं । यस्मान्न लोभसमानाधिकरणं ब्राह्मण्यं कुत आचार्यत्वं प्रभुत्वरूपं लोभो हि श्ववृत्तिं कारयति । 'असंतुष्टा द्विजा नष्टा' इति प्रवादः । श्ववृत्तिरप्याचार्योपीत्युपहासः 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभा-

वजम् । शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् । कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् । परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजमि'ति । वर्णलक्षणानि भगवदुक्तानि । व्यत्यस्तानीमानि न फलाय भवन्तीत्याह । 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः' इति । योनिनिमित्तेयं व्यवस्थेत्याह स्वभावजमिति । भवत्यस्मिन्निति भावोऽधिकरणे घञ् । स्वस्य भाव उत्पत्तिस्थानं तज्जं । अतएव गौडपादाचार्या व्यवस्थापयामासुः संन्यासं 'विप्राणां विनयो ह्येष शमः प्राकृत उच्यते । दमः प्रकृतिदान्तत्वाद्विद्वानेवं शमं व्रजेदि'ति । एषा संपत्तिर्ब्राह्मणानां योनिमूला एते चत्वारोऽपि योनिधर्मा न गुणधर्माः । अतएव तद्व्यत्यासं दृष्ट्वा शूद्रं तपश्चरन्तं मारयामास रामचंद्र इति रामायणोत्तरकाण्डे प्रसिद्धं । किंच भवत्संमते ब्राह्मणत्वे सिद्धे तपः किमर्थं चचार । तप्तेतितपसि योनिव्यत्यासासंभवात् ब्राह्मणशब्द एव लब्धः प्रवृत्तिनिमित्तहीनस्तस्मान्न विश्वामित्रस्यापि संन्यासाधिकारः । अतएव स्वस्य दीक्षासमये युद्धाधिकाराभावं निमित्तीकृत्य दशरथं श्रीरामचन्द्रो याचितः क्षत्रियत्वाभावो न निमित्तीकृतः । इच्छा चेद्बिभर्तु त्रिदण्डमर्जुनवत् ॥

ननु ब्राह्मणशब्दः संन्यासायोपयुज्येत चेत्किं दत्तं वसिष्ठेन । न तदा विश्वामित्रस्य संन्यासप्रसङ्गः जात्यन्तराङ्गीकारो योनिदूषणं । तस्माद्ब्रह्मीभावाधिकारिणामेकदण्डिनां ब्राह्मणतमानामकिंकराणां श्रीजगद्गुरुभगवत्पादश्रीशंकराचार्यकिंकराणां स्वामित्वमा-

१ लक्षणशब्दोऽत्र फलपरोऽतएव व्यत्याससंभवोऽतएव च स्वेस्वे कर्मणीति च संगच्छते. २ 'शब्दोन' इति भाति. ३ अत्र किङ्करशब्दप्रयोगश्शंकराचार्यस्यादरातिशयद्योतनाय । श्रीशंकराचार्यकिंकरत्वस्यापि स्वामित्वाचार्यत्वप्रयोजकत्वे तु गोविन्दपादगौडपादादीनां शंकराचार्यगुरुपरमगुरुप्रभृतीनां स्वामित्वमाचार्यत्वं चासङ्गतं स्यात्.

चार्यत्वमव्याहतमिति विजयभेरीघोषः। सिंहशिशुः सिंह एव भवतीति न्यायात्। तस्मान्न क्षत्रियाणामुपनिषदध्ययनाधिकारः। श्रवणाधिकारोऽपि नास्ति। संन्यस्य श्रवणं कुर्यादित्युपनिषत्सु श्रौतनियमात् भवद्गीताध्ययनाधिकारोऽवश्यं तदर्थत्वादुपनिषत्त्वेपि। स्त्रीशूद्रवैश्यानां न गीताध्ययनाऽधिकारोऽतदर्थत्वात्। अलमति परीक्षायै। इति पञ्चमः पुलाकः॥ ५॥

यदि क्षत्रियवैश्ययोर्ब्राह्मणत्वेन संन्यासाधिकारेण तुष्टिः स्यात्तदाङ्गीकृतं दारिद्र्यम्। यदेव केषांचिन्मङ्गलं तदेवेतरेषाममङ्गलं। यथा श्मश्रूणि पुरुषाणां मङ्गलं स्त्रीणाममङ्गलं एषा तुरीयमीमांसा केनचित्क्षत्रियेण वैश्येन वा विरुदावलीं दत्त्वा कारितेति व्यज्यते। अभिनिवेशलिङ्गात्। फलध्वनिस्तु क्षत्रियाणां वैश्यानामितरगृहस्थानां चैषणात्यागपुरःसरं स्थातव्यमित्यनुज्ञानम्। समयवैचित्र्येणेष्यमाणस्य दौर्लभ्यादिति। किमेते दरिद्रेषु गण्येरन्नुत संन्यासिषु। सर्वेऽपि प्रैषमन्त्रमुच्चरन्तो 'ऽभयं सर्वभूतेभ्य' इत्यभयं ददाना 'नाहं कस्यचिन्न मे कश्चिदि'ति संन्यासस्वरूपं जानन्तो निष्परिग्रहा ऐकाश्रम्यमङ्गीकुर्वन्तः कथं निर्वाहयिष्यन्ति गार्हस्थ्यं संन्यासं वेति प्रैषमन्त्रोच्चारसमानाधिकरणं गार्हस्थ्यं दारिद्र्यमिति फलनिर्देशः। तेन यथाकथंचिद्धनादिस्वामित्वमप्यपहारितं कुतो निरुपपदस्वामिशब्दवाच्यत्वमित्युत्तरितः कथं संन्यासिनां स्वामिशब्द इत्युपहासः। एतेनैकाश्रम्येण सर्वं सर्वात्मकं जगदिति सिद्धान्तः प्रतिपादितः। सर्वे गृहस्थाः वानप्रस्था ब्रह्मचारिणः

---

१ संन्यासप्रधानत्वादुपनिषदां संन्यासस्य च क्षत्रियशरीराधर्मत्वेन निष्फलत्वान्नोपनिषदध्ययने क्षत्रियाधिकार इति भावः। वस्तुतस्तु संन्यस्य श्रवणं कुर्यादित्यत्र संन्यस्येत्यस्य मनसासंन्यस्येत्यर्थो लिङ्गसंन्यासस्यैव क्षत्रियाद्यधर्मत्वात् सत्युपनयने क्षत्रियवैश्ययोरध्ययनाधिकारो ब्राह्मणस्येवाव्याहतोऽध्यापनेऽधिकारस्त्वसति संकटे ब्राह्मणस्यैव यद्वा संन्यस्य वैखानसो भूत्वेत्यर्थः.

संन्यासिनश्चेति । किंच दण्डादिव्यवस्थाङ्गीकार ऐकाश्रम्यं व्याहतं तदङ्गीकारे दण्डादिव्यवस्था व्याहताऽत ऐकाश्रम्यमित्याचार्या" इति सूत्रस्याऽश्रमसांकर्यं न कुर्यादेकाश्रमे व्यक्तलिङ्गस्तिष्ठेदितिवाक्यार्थः संपन्नः । तत्र दृष्टान्तः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति । गार्हस्थ्यस्य श्रौतस्मार्तादिचिह्नैः प्रत्यक्षताविधानात्तथेतराश्रमेऽपीति सूत्रार्थोऽन्यथा महर्षेरज्ञत्वकल्पनापत्तिः ।

ननु क्षत्रियाणां त्रय आश्रमा इति पक्षे पृथुपौत्रस्य सुशीलस्य गृहस्थाश्रमनिष्ठस्य श्वेताश्वतरनामा मुनिः । 'सांन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः । ददौ तदैश्वरं ज्ञानं स्वशाखाविहितं व्रतम् । अशेषवेदसारं तत्पशुपाशविमोचनम् । अत्याश्रम इति ख्यातं ब्रह्मादिभिरनुष्ठितम् ।' इति संन्यासं दत्तवान् । तस्माद्भवन्मते गार्हस्थ्यसमानाधिकरणः संन्यासः सिद्धस्तस्मादैकाश्रम्यं युक्तम् । न चेच्चत्वार आश्रमाः क्षत्रियस्य सिद्धा इति चेत् । न । 'मज्जेत्त्रयी दण्डनीतौ हतायां सर्वे धर्माः प्रक्षयेयुर्विबुद्धाः । सर्वे धर्माश्चाश्रमाणां हताः स्युः क्षात्रे त्यक्ते राजधर्मे पुराणे' इति भवदुपन्यस्तवचनेन क्षात्रत्यागनिषेधात्तत्त्यागं विना संन्यासानधिकारात् । अतएवास्य व्रतस्यात्याश्रम इति नाम । आश्रमानतिक्रम्य वर्तत इति तद्व्युत्पत्तेर्नेदं व्रतं संन्यासाश्रमः किंतु संन्याससदृशम् । धैर्यवैराग्यदार्ढ्यदायकं रावणवधप्रसङ्गेऽगस्त्याद्रामचन्द्रो लेभे । उपमन्योश्च श्रीकृष्णः मज्जेत्त्रयीतिश्लोको घट्टकुट्यां प्रभातमिति न्यायमावेदयति । अतएवेदं तारतम्यं संगच्छते । 'प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः । निर्वासं कारयेद्विप्रं दास्यं क्षत्रियवैश्ययो'रिति ब्राह्मणत्वक्षत्रियत्ववैश्यत्वानामनपगमादेष पन्थाः । प्रव्रज्याशब्दो वानप्रस्थसंन्यासान्यतरपरः । अधिकारभेदेन फलभेदनिर्देशादिदं सर्वाश्रमाणामुपलक्षणं । यदि क्षत्रियवैश्ययोर्ब्राह्मणत्वं

तदा निर्वासनविषयता। यदि न ब्राह्मणत्वं तदा जितमस्माभिः। तस्मात् श्वेताश्वतरदत्ता दीक्षा शांभवी षडध्वशोधनसंस्कारेण पशुपाशविमोचनी। पाशविमोकेपि नाश्रमविमोकस्तस्मात्रिष्वप्या-श्रमेषु संभवत्येषा दीक्षा भस्मरुद्राक्षधारणशिवपूजाषडक्षरज-पप्रधाना। नास्यां दीक्षायामग्निसमारोपस्ततो नाश्रमविमोको नाश्र-मान्तरसंपादनम्। तस्मान्नैकाश्रम्यं क्षत्रियाणां न संन्यासः सिद्धः। इति षष्ठः पुलाकः॥ ६॥

ननु 'ऋणत्रयमपाकृत्य निर्ममो निरहंकृतिः। ब्राह्मणः क्षत्रियो वाऽथ वैश्यो वा प्रव्रजेद्गृहात्। अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेत्।' इति प्रव्रज्याविधानादिति चेत् 'धर्म्याद्धि युद्धाच्छ्रे-योऽन्यत्क्षत्रियस्य न विद्यते' इति भगवद्वचनमनुसृत्य युद्धाधि-कारमनपहाय प्रव्रजेत्क्षत्रिय इति सिद्धे 'अग्नीनात्मनि संस्थाप्य द्विजः प्रव्रजितो भवेदि'त्यादिवचनस्थद्विजशब्दो ब्राह्मण एव श्रेय-स्करः। तस्मात्क्षत्रवैश्यौ वनं गच्छेतां ब्राह्मणः संन्यसेदिति विशिष्टवाक्यार्थः। इच्छा चेद्ब्राह्मणोऽपि वनं गच्छेत्संन्यसेद्वा। वनंगतानां व्यवस्थामाह 'योगाभ्यासरतः शान्तो ब्रह्मविद्याप-रायणः। एवं वनाश्रमे तिष्ठंस्तपसा दग्धकिल्बिषः। चतुर्थमाश्रमं गच्छेत्संन्यस्य विधिना द्विजः। ब्रह्मविद्या ब्राह्मणानामुपनिषत्, क्षत्रियाणां गीता। तदभ्यासात्पक्वकषायो ब्राह्मणश्चतुर्थमाश्रमं गच्छेत्तस्मिन्नेव जन्मनि। क्षत्रियो जन्मांतरे ततः प्रणाड्य वैश्यः। ब्राह्मणो ब्रह्मविद्यां ज्ञानशास्त्रमुपनिषदमधीयीत क्षत्रियो गीतां योगशास्त्रं वैश्यः शान्तो भवेद्ब्रह्मविद्यानधिकारात्। पुराणं वा शृणुयात्। अतो वैश्यस्य द्वौ फलदौ। वैश्यो वनं गतोऽपि न वानप्रस्थः। अनधिकाराद्वैराग्यमात्रपालनं नाश्रमान्तरम्। वाक्या-र्थज्ञाने योग्यताज्ञानस्य कारणत्वात्। तस्माद्ब्राह्मणे विधिः। क्ष-त्रियादौ संभावना लिङर्थः।

ननु सवर्णसाधारणोऽयं द्विजशब्दः यथा वाक्यान्तरं । 'न जातिर्न कुलं राजन्न स्वाध्यायः श्रुतं न च । कारणानि द्विजत्वस्य वृत्तमेव हि कारणमि'ति वृत्तमूलं द्विजत्वमुपयुज्येत संन्यासे क्षत्रियादौ । अतएवाग्रे चतुर्वेदोपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः । तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणमि'ति । युक्तमुपन्यस्तं । एतदेव वचनं पुरस्कृत्य रामावतारसमये एकः शूद्रस्तपश्चचार तेनापराधेन कस्यचिद्ब्राह्मणस्य पुत्रो मृतः । अधुना तु तादृशा ब्राह्मणा बहवो जातास्तस्मादेवैष मृत्यूत्पातः प्लेगनामा । किंच किमनेन वचनेन दुर्वृत्तत्वं निषिध्यतेऽथवा जातिस्वाध्यायश्रुतानि पर्युदस्य वृत्तमभिलक्ष्य ब्राह्मणत्वं विधीयते । आद्ये जातिस्वाध्यायश्रुतसमानाधिकरणं सद्वृत्तमपेक्ष्यते ब्राह्मणत्वायेति न तव मनोरथसिद्धिः । द्वितीये जात्यादिव्यधिकरणं वृत्तं वर्णसंकरेपि तस्य ब्राह्मणत्वापत्तिः यद्यभीष्टं तदा परीक्षितं तवैव ब्राह्मणत्वं । श्रीरामचन्द्रेण भवत्संमतशूद्रब्राह्मणो हतो वृत्तसंपन्नोपि । दुर्वृत्तो जातिब्राह्मणोपि रावणो हतः । किमत्र न्याय्यं । 'वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते । बहुना किमधीतेन नटस्येव दुरात्मनः ।' रक्षसा दुर्वृत्तेन पठितं वधाय न परिपन्थि । शूद्रेणाधीतं तपश्चरितं च तथा न प्रतिबन्धुमीष्टे वधं । कस्मात् । तेनाधीतं

---

१ सद्वृत्तत्वस्यैव द्विजत्वप्रयोजकत्वे तद्विपरीतस्यासद्वृत्तत्वस्य शूद्रत्वप्रयोजकतया दुर्वृत्तश्शूद्रः स एव शूद्रादल्पतरः इति बोधः स्यात् सच नचेष्टो विरोधात् शूद्रादल्पतरत्वे हेतोरनुपन्यासाच्च दुर्वृत्तत्वस्य शूद्रत्वमात्रसंपादनेनोपक्षीणत्वात् । तस्मादनेनान्यैर्नैवंविधेन वाक्येन वा विभीषिकाप्रदर्शनद्वारा वृत्तं प्रशस्यते तेन विना चतुर्वेदत्वादेः षण्ढत्वं च ध्वन्यते । एतत्सर्वं राममिश्रोप्यजानीत परन्तु रामानुजस्य तस्य संप्रदायेऽपि सूरिपदे स्वामिपदे आचार्यपदे च केचन शूद्राः सद्वृत्ता निरवसिताश्चाधिष्ठिताः तेषां पादोदकसेवनेन ततः श्रुत्यर्थश्रवणेन तदवशिष्टप्रसादादरेण च प्रायश्चित्तमर्हन्ति तत्संप्रदायप्रेमाणो ब्राह्मणादय इति कलङ्ककवलीकरणाय तस्यायं महायासः प्रयासः. ... . .

श्रुतं वापि यः क्रियामनुतिष्ठतीति द्वयोर्बंधहेतुरुपन्यस्तः। यस्माक्रिया वर्णाश्रमनिबद्धास्तस्मादेकाश्रमिणो नटशूद्रस्याश्रमान्तराभिनयोऽपराधः। जातिब्राह्मणस्यापि रावणस्य परस्त्रीकामनाद्यपराधः। तस्माद्द्वावपि दुर्वृत्तौ। अतएव 'कपालस्थं यथा तोयं श्वदृतौ च यथा पयः। दूष्यं स्यात्स्थानदोषेण वृत्तहीनं तथा श्रुतम्।' जातिशूद्रत्वमतिकामित्वं क्रूरत्वं च स्थानदोषः। इति न्याय्यम्। इतो बहिर्धावनं सर्वतन्त्रस्वतन्त्रत्वं। शास्त्रपराधीनत्वं येषां विरुद्धं। तस्माज्जातिब्राह्मण एव ब्राह्मणशब्दार्थः। गुणतः संन्याससमर्पणं श्वदृतौ गोक्षीरसमर्पणमिति विदांकुर्वन्तु महामहोपाध्यायाः। तस्मात्। 'सत्यं ज्ञानं क्षमाशीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृत'इति युधिष्ठिरवचनं जातिब्राह्मणस्य लक्षणमावेदयति न लक्षणप्राधान्येन ब्राह्मण्यं विधत्तेऽनुपदमुपन्यस्तदृष्टान्तावष्टंभात्। अग्निपुराणं भवदुपन्यस्तं महावष्टंभः।

ननु सुरेश्वराचार्योऽमन्यत त्रैवर्णिकानां संन्यासं। यथा। ब्राह्मणग्रहणं चात्र द्विजानामुपलक्षणं। 'अविशिष्टाधिकारित्वात्सर्वेषामात्मबोधने। त्रयाणामविशेषेण संन्यासः श्रूयते श्रुतौ। यदोपलक्षणार्थं स्यात् ब्राह्मणग्रहणं तदे'ति त्रैवर्णिकसंन्यासोपष्टम्भ इति चेन्नायमुपष्टम्भः किंत्ववष्टम्भः। कुत्र श्रुतौ क्षत्रियवैश्यावुद्दिश्य संन्यासो विहितो यथा ब्राह्मणाः प्रव्रजन्तीति। न कुत्रचिच्छ्रुते[1] क्षत्रियाः प्रव्रजन्तीति वैश्याः प्रजन्तीति। तस्माद्द्विजानामुपलक्षणमित्यस्यानुपनीतानां सत्यपि जातिब्राह्मणत्वे न संन्यासाधिकार इत्यर्थः। उपनीतानां त्रयाणां ब्रह्मचारिगृहस्थवानप्रस्थानामविशेषेण गृहाद्वनाद्वा प्रव्रजेत्[2]।

---

१ मन्ये आश्रमधर्मध्वंसिनां मद्यमांसाशिनां गिरिपुरीपर्वतादिशूद्रसंकरसंन्यासिनां समुद्भवे निमित्तमिदमेवोपलक्षणव्याख्यानम्. २ अन्यतमो विरक्त इति शेषः.

ब्रह्मचर्यादेव वेति संन्यासाधिकारबोधनात् । न तत्र 'द्वितीयमायुषो भागमुषित्वा तु गृहे द्विजः । तृतीयमायुषो भागं गृहमेधी वने वसेत् । उत्पाद्य धर्मतः पुत्रानिष्ट्वा यज्ञैश्च शक्तितः । दृष्ट्वाऽपत्यस्य चापत्यं ब्राह्मणोऽरण्यमाविशेत् ।' इति यमस्मृतिः प्रतिबन्धिका । 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति श्रुतेर्बलवत्त्वात् । तस्मात्संन्यास उपनयनमपेक्षते न गार्हस्थ्यं वानप्रस्थ्यं वेति वार्तिकार्थो वेदितव्यः । तस्मात्क्षत्रियसंन्यासवाक्यानि निर्मूलानि । मूलश्रुतेरनुपलम्भान्निषेधोपलम्भाच्च । 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इति वचनं विदितं मण्डनमिश्रैरपि । एतेन मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् । बाहुजातोरुजातानां नायं धर्मो विधीयते' इति निषेधशास्त्रमङ्गीकुर्वाणैरनुग्रहः कृतो लिङ्गधारणं विना क्षत्रविशोस्त्यागाधिकारो दत्तो लिङ्गस्याश्रमनिमित्तत्वात् । सत्यपि त्यागाधिकारे न संन्यासाश्रमाधिकार इति तात्पर्यात् । तथाच भगवानाह क्षत्रियं । 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।' अकर्मणि संन्यासे सङ्गो मास्तु कर्मफलेच्छा च मास्तु । यस्मात्ते क्षत्रियस्य कर्मण्येवाधिकारः तत्फले नाधिकारो विरक्तत्वात्तव । एष एव क्षत्रियाणां संन्यासः । 'यदहरेव विरजेत्तदहरेव प्रव्रजेदि'ति

---

१ इयं स्मृतिराश्रमक्रमबोधिका मनुरपि क्रमत्यागे दोषमस्मरत् "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः" ॥ इति. २ इयं श्रुतिरसाधारणविरक्तब्राह्मणविषया ईदृशविरक्तश्च कश्चिदेव जन्मान्तरपक्वकषायः । यथा श्रीशङ्कराचार्यः । कश्च तादृशो विरक्त इत्यत्र प्रमाणन्तु सामग्रीनिरपेक्षा विरक्तस्य लोकोत्तरानुभूतिः. ३ नच त्यागसंन्यासयोः समनियततेति भ्रमितव्यम् । एतयोर्भेदस्यापि "संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् । त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः । सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" इति प्रश्नोत्तराभ्यां स्पष्टमुपलभ्यमानत्वात्.

तु ब्राह्मणजातिविषया श्रुतिः। ब्राह्मणाः प्रव्रजन्तीतिवाक्यशेषात्। तस्माद्गीतायां फलत्यागपराणि वचनानि क्षत्रियविषयाणि। तस्मात् 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमि'ति कर्माधिकारित्वात्तव मयि कर्मसमृद्धये कर्मार्पणं युक्तं 'क्षेत्रे व्युप्तमनन्तं भवती'ति न्यायेन तद्भोगाय जन्मान्तराण्यङ्गीकृतानि गुरुशिष्याभ्यामवश्यम्। तस्मात्संन्यास एव मोक्षहेतुर्न फलार्पणं कर्मार्पणं वा। तं च जातिब्राह्मण एवाऽधिकरोति त्रिदण्डमेकदण्डं वा। ननु काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुरि'ति काम्यकर्मत्यागी क्षत्रियादिः संन्यासशब्दमर्हतीति चेन्न्यासे संन्यासशब्द औपचारिक इति समोऽर्थः। किंच काम्यकर्मणामस्त्रप्रयोगाणां त्यागे क्षात्रं त्यक्तम्। तच्च निषिद्धम्। अस्यापि संन्यासशब्दस्य ब्राह्मण एव विषयः। कर्ममात्रस्य काममूलत्वात्। 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते' इति श्रुत्यान्यत्रापाकरणसामग्रीन्यूनतेति ध्वनितम्। विरक्तमपि क्षत्रियं योधयेदिति गीतार्थे प्रस्फुटे सत्यपि संन्यासयेदिति कैषा वाचोयुक्तिः। संन्यासः क्षत्रियाणां क्लैब्यं ब्राह्मणानां पुमर्थहेतुः। रणमरणं क्षत्रियाणां संन्यासो ब्राह्मणानामापद्धर्म इति शास्त्रपरिशुद्धिरित्यलम्। विट् तु तिष्ठतु बहिःकोणे ब्राह्मणानां। क्षत्रियान्तरितत्वात् अस्तु गुणतो वर्णव्यवस्था। न जगद्गुरोः शंकरस्य हानिस्तेषामपि वर्णानां तच्छास्यत्वाव्यभिचारात्। परंतु जातिब्राह्मणानां भृतकजीविनां सत्यशूद्रत्वमापद्येत तथा माभूदिति शिवम्। 'स्थितस्य गतिश्चिन्तनीये'ति मिश्रैः क्षत्रियाणां संन्यासो गतिश्चिन्तितः क्षात्रत्यागनिषेधश्चाङ्गीकृत इति मिथो व्याहतिः। कं पक्षमङ्गीकुर्वन्ति क्षत्रियाः पश्यन्तु मिश्राः। इति सप्तमः पुलाकः॥ ७॥

गीताशास्त्रमधीयानो वर्णसंकरकारणम्। इति चित्रं हरौ गीतां

व्यवस्थार्थं ब्रुवत्यपि ॥ १ ॥ नैकः पुलाको यत्रास्ति रसपाकसमन्वितः । सा स्थाली तुर्यमीमांसा कीर्तिमृद्धिं कथं दिशेत् ॥ २ ॥ यस्मै यस्मै ददासि त्वमधिकारमसांप्रतम् । तस्य तस्य पदे नूनं भूदेवोऽपि नमस्यति॥३॥ चत्वारोऽपि च रत्नानि वर्णा इति जनेषु ये । न सांकर्यं तत्र योग्यं रत्नत्वं व्याहतं भवेत् ॥ ४ ॥ ब्राह्मणानर्हयेत्काले क्षत्रियान्योधयेदपि । व्यापारयेच्च वणिजो दासयेच्छूद्रनायकान् ॥ ५ ॥ संप्रदायाचार्यचित्ताभिप्रायः पण्डितेन चेत् । विज्ञातः स्यात्तदा लेखमन्यमेव करिष्यति ॥ ६ ॥ शास्त्रं व्यवस्थासंसिध्यै नोत्पातायेति सांप्रतम् । अन्यथा शास्त्रतातस्य कथं ज्ञेयं विचार्यताम् ॥ ७ ॥ ज्ञातव्यमधुना सम्यग्वर्णानां ब्राह्मणो गुरुः । गुरुस्तस्य तु संन्यासी स एव तु जगद्गुरुः ॥ ८ ॥ व्रीहयो गुणहीनाश्चेद्गोधूमा गुणशालिनः । अवघाताख्यसंस्कारे गोधूमानां ग्रहो नहि ॥९॥ किं बहुना । 'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत । सर्वभूतानि संमोहं सर्गे यान्ति परंतप'ति भगवद्वचः सत्यं । तस्मात् । ननु कृष्णो भोगी शुकस्त्यागी नृपौ जनकराघवौ । वसिष्ठः कर्मकर्ता च पञ्चैते ज्ञानिनः समाः[1] इति न संन्यासावश्यकतेति चेद्वक्तव्यं किमेषां समा प्रतिष्ठोत तारतम्येन । यदि तारतम्यं तदा जितं शुकेनात्र परिक्षितसभा साक्षिणी । कस्तुष्टः किं दद्यादिति यदि चेतसि तदेव तस्य वचः । मन्यंते स्वे च परे स्वामित्वं तस्य मार्गतः प्राप्तं ॥ १० ॥ इदं ब्राह्मणसर्वस्वं कृष्णानन्देन निर्मितम् । येन वर्णाः स्वस्वमार्गे तिष्ठन्त्वास्थावशंवदाः ॥ ११ ॥ यः शंकरः सकलवेदरहस्यवक्ता बुद्धादिबुद्धितमसां खलु चण्डभानुः । अभ्युद्धधार विगलच्छ्रुतिमार्गमद्धा भूमण्डले विजयते यतिसार्वभौमः ॥ १२ ॥

---

१ कृष्णरामौ मायातीतौ शुको जन्मान्तरपक्वकषायः । वसिष्ठजनकौ विद्वांसौ बोधे पञ्चापि पर्यन्ते समाः ।

क्षत्रियाणां पण्डितानां परीक्षार्थं कृता किमु । मिश्रेण तुर्यमीमांसा स्वस्त्यस्तु विदुषेसदा ॥ १३ ॥

इति श्रीकैवल्यनाथचरणपरायणश्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वती-कृतं ब्राह्मणसर्वस्वं नाम तुर्यमीमांसास्थालीपुलाकपरामर्शः ॥

---

# जातिनिर्णयप्रकारपरामर्शः ॥ ८ ॥

नत्वा बदरिकावासौ नरनारायणावृषी । जातिनिर्णयनिर्बन्धमाविष्कुर्वे यथाबलम् ॥ १ ॥ पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिं । इति वक्तारमीशानं स्मरेत्क्रमनिबन्धनम् ॥ २ ॥ धर्मेण बद्धः संसारो यजमानैः पुरोहितैः । तत्क्रमोच्छेद एवाभूद्धर्मोच्छेदाभिधः कलिः ॥ ३ ॥ येषां पुरोहिता येषां यां जातिं प्रवदन्ति हि । तेषां सैव तु जातिः स्यान्निर्णयोऽन्यकृतो वृथा ॥ ४ ॥ पुरोहिताः कुलायत्ताः साक्षिणस्तत्कुलक्रमे । जातौ च कर्मणि तथा निर्णयोऽन्यकृतो वृथा ॥ ५ ॥ पुरोहितस्य तत्कर्म पालनं जातिकर्मणोः । यजमानस्य यत्तेन पुरोहित इति श्रुतः ॥ ६ ॥ पुरोधाः शणवाहानां प्रसिद्धः करकीकसः । ऊर्ध्वबाहुर्विरौम्येष नच कश्चिच्छृणोत्यहो ॥ ७ ॥ द्विजोऽपि शणवाहोऽसौ त्रिकर्माधिकृतो बत । षट्कर्मेत्युररीचक्रुः पण्डिता अप्यखण्डिताः ॥ ८ ॥ किमेषोऽनुग्रहस्तेषु शणवाहेषु वान्यथा । स्वधर्मे निधनं श्रेय इत्याह भगवान्स्वयम् ॥ ९ ॥ मत्स्यमारणसूत्रं तु शणसूत्रमिति स्मृतम् । तद्वहन्ति द्विजा भूत्वा शणवाहा इति स्मृताः ॥ १० ॥ ताच्छील्ये णिनिसंप्राप्तौ त एव शणवाहिनः । शणवाहिपुरोधस्त्वादुपाध्यायः कराश्थिकः ॥ ११ ॥ इति नाम प्रपेदेऽसौ सङ्गस्य फलमीदृशम् । मत्स्यास्थिभूयसी जातिर्यजमानस्य चेद्भवेत् ॥ १२ ॥ पुरोहितकरे लाभः स एवेति विनिर्णयः । एतज्जातिद्वयं शाखामेकामालंबते परम् ॥ १३ ॥ न काचिज्जातिरस्तीह शाखैकत्वावलम्बिनी । तस्मा-

त्साकेतिकावेतौ यजमानपुरोधसौ ॥ १४ ॥ आस्तामेषा हेतुवार्ता तौ मिथः साक्षिणौ मतौ । पारम्पर्यक्रमज्ञानं परस्परमिहेष्यते ॥ १५ ॥ तज्ज्ञानविधुराणां तु जातु जातिविनिर्णये । नाधिकारः पण्डितानां पाण्डित्यं नात्र युज्यते ॥ १६ ॥ कुलाचार्यं त्यजन्त्येके कुलक्रमविनाशकाः । जगद्गुरोः प्रतिनिधिः कुलाचार्य इति स्थितिः ॥ १७ ॥ उभयोरेककर्मत्वाद्व्याप्यव्यापकभावतः । जगद्गुरौ समावेश उपाध्यायकुलस्य च ॥ १८ ॥ जगद्गुरोः समावेश उपाध्यायकुलेऽपि च । अतस्तद्वचनं मान्यमितरे तदधःस्थिताः ॥ १९ ॥ ब्राह्मणा बद्धमर्यादां पालयन्ताविमौ भुवि । तत्त्यागे का गतिर्लोके दृश्यतेति विचार्यताम् ॥ २० ॥ शणवाही त्रिकर्मा तु पुरोधाः कर्मपद्धतियुक् । इति निर्णीतमधुना कायस्थाननुसंचरेत् ॥ २१ ॥ गौडेषु सत्सु कायस्थजातिसाक्षिषु किं पुनः । पण्डितः शक्नुयात्कर्तुं साक्षिहीनं विनिर्णयम् ॥ २२ ॥ गौडा वन्दत्युपाध्यायाः कायस्था न द्विजातयः । इति तत्रान्यथा वाणी कस्य शोभामवाप्नुयात् ॥ २३ ॥ यजमानः पुरोधाश्च साक्षिणौ यत्र तत्र किम् । जातिनिर्णयशङ्का स्याद्देषा देशव्यवस्थितिः ॥ २४ ॥ जगद्गुरुः कुलगुरुः कुलदेशव्यवस्थितौ । योजितावीश्वरेणैव पण्डितोऽत्र सुसारथिः ॥ २५ ॥ तथा शास्त्रार्थनेता स्याद्यथैतौ पालितौ क्रमे । गुरुत्यागे च पातित्यमिति शास्त्रार्थनिर्णयः ॥ २६ ॥ ननु शणवाहिषु संन्यासो दृश्यते तेनानुमीयते ब्राह्मण्यमेतेषामिति चेत्सत्यं, ब्राह्मणानामेव संन्यासाधिकार इति भगवतः कृष्णस्य श्रीशंकरस्य चाभिमतं तथापि विद्यारण्यस्वामिभिराचण्डालं संन्यासाधिकारो वै-

---

१ अत्र संन्यासशब्दार्थस्त्यागः । संन्यासशब्दस्त्यागे भाक्तो बहुधा प्रयुक्तश्चास्य पुष्टिर्गीतायां तत्रापि स्फुटतरमष्टादशाध्याये द्रष्टव्या । आनिन्द्ययोन्यत्राधिक्रियते सर्वेषामविशेषादित्यत्रानुवृत्ता भक्तिरपि प्रेमरूपा भाक्तैव भेदवादिनामविदुषाम्.

राग्यस्य निरोद्धुमशक्यत्वादित्युक्तं जीवन्मुक्तिप्रकरणे। लिङ्गधारणं तु ब्राह्मणानामेवेति च। को विभृयात्तल्लिङ्गं ब्राह्मणं विना यल्लोकपूज्यम्। अब्राह्मणकृतः संन्यासो नाश्रमसंस्काररूपोऽतो नाश्रमलिङ्गधारणाधिकार इति तत्तात्पर्यम्। अलिङ्गत्वेऽपि तज्ज्ञातौ पूज्य एव सत्यागस्य परमधर्मत्वात्। ननु गणवाहानां शास्त्रेण सिध्यति ब्राह्मणत्वमिति चेदस्तु यद्यङ्गीकुर्यात्पुरोहितः शास्त्रम्। यदि नाङ्गीकुर्यात्तदशास्त्रं काल्पनिकमेतावत्पर्यन्तमप्रवृत्तत्वात्। तस्मात्तत्र तत्र देशे कुलपुरोहितद्वारा यजमानजातिनिर्णयो यजमानद्वारा पुरोहितजातिनिर्णयः। उभयोः कुलमुभयविदितं यस्मात्। सर्वाणि कुलानि जगद्गुरुविदितानि। तस्मात्समुचितः सृष्टिक्रमो यजमानपुरोहितजगद्गुरुनिबद्धो येन वर्णाश्रमसंकरप्रतिबन्धः संपन्नः। अधुना केचित्कर्मणा वयं ब्राह्मणाः। ज्ञानेन वयं ब्राह्मणा इति केचित्। जात्या वयं ब्राह्मणा इति बहवः। वदन्ति वदन्तु। श्रोतव्यमस्योत्तरमहो कृत्रिममात्रेणाकृत्रिममात्रसौभाग्यं लब्धं बतेति। शास्त्रार्था बहवो लोके स्थिताः कुलगुरौ तथा। जगद्गुरौ च तेनेयं मेदिनी धर्मसाधनी॥१॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतो जातिनिर्णयप्रकारपरामर्शः॥

---

# मुण्डनानुशासनम्॥ ९॥

जीर्णोद्धारपरां श्रीमच्छङ्कराचार्यसंततिम्।
नत्वा करोमि विश्वस्य मण्डनं मुण्डनाभिधम्॥ १॥

अथ मुण्डनानुशासनम्। एष पुरतः परिदृश्यमानः संसारवृक्षः सनातनोऽश्वत्थश्चतुर्विधप्राणिनिकायमण्डितस्तत्र मनुष्या ऊर्ध्वमूलान्वेषणाधिकारिणः स्पष्टं परिदृश्यन्ते सर्वसंमतोर्ध्वमूललिङ्गात्। मस्तकं मूलं सर्वेषां तत्र केचित्तिर्यङ्मस्तकाः केचिदूर्ध्वमस्तकास्ते च मनुष्यास्ते तु जातानां बालानां मनुष्यसङ्गान्मनुष्यत्वे प्रतिबो-

वमुखे केशसंस्कारानाचरन्ति शिखान्तं क्रमेण । सा च शिखा मानुषत्वहेतुकोर्ध्वमूलान्वेषणाङ्ककर्माङ्कतामापद्यते ततो वपननियमः येनान्वेषणमार्गः शुद्ध्येत् । तत्र पुरुषेपूर्ध्वमूलान्वेषणमात्रकृतार्थेषु गौणप्रवृत्तिषु शिखामात्रस्थापनम् । संसारप्रवृत्तिमात्रकृतार्थासु योषित्सु सकलकेशस्थापनम् । अतएव श्रुतौ विद्यार्थिनं स्वगृहं जिगमिषुमुपदिशति 'प्रजातन्तुं मा व्यवच्छेत्सी'रिति न तथोपदेशो योषितां, तासां प्रजार्थत्वादेवोत्पत्तेः । न पुरुषः प्रजामात्रार्थो मोक्षार्थोऽपि तत एव श्रुतिरुपदिशति 'यदहरेव विरजेत् तदहरेव प्रव्रजेत् न विलम्बं कुर्यादि'ति पुरुषं; श्रुत्वा तमुपदेशं कश्चिन्महाभाग्यो विरक्तः सन् वासनारूपान्केशान्वपति वापयति सर्वान् । छिन्नेषु मूलेषु संसारे वृक्षः प्ररोहति कः । तस्मात् सर्वमुण्डनं यतीनां सर्वकेशस्थापनं योषिताम् । तासां संसारप्रवाहमूलत्वं पतिसमवेतानाम् । सच पतिर्द्विविधो विवाहितोऽविवाहितश्च । विवाहितो गोत्रप्रवरान्वितं पुत्रमुत्पादयति द्वितीयस्तदनन्वितं तयोः स्त्रीपुंसोरनन्वितसंबन्धात् पशुवत् । पत्नीं सगोत्रीकृत्य सगोत्रपुत्रोत्पादके पत्यौ मृते सहधर्मिण्या निःशेषवपनं कार्यं व्यर्थत्वात्संसारमूलत्वद्योतककेशानां नातः परमेषा सगोत्रपुत्रोत्पादनाधिकारिणीति वृद्धैर्वापयितव्या । सगोत्रपुत्रोत्पादनाधिकारो हि स्त्रीणां सौभाग्यम् । गोत्रप्रवरान्वितत्वं प्रजायास्तन्तुत्वं तदेव पुत्रत्वम् ॥

ननु 'देवराच्च सुतोत्पत्तिं कलौ पञ्च विवर्जये'दिति निषेधलिङ्गेन देवरान्तं सौभाग्यमिति चेदासीत्तथा वंशोच्छेदप्रसङ्गे वंशोत्पत्त्यन्तं तदङ्गीकारो यावत्सकृद्गमनमात्रेण वंशोत्पादनसामर्थ्यं पुरुषेषु पारलौकिकचतुरेषु । ततः कलावनिग्रहप्रधाने निषेध उपपद्यते ततो मुण्डनं च । अन्यथा जातस्य जारजत्वापत्तेस्तयोरुभयोर्व्यभिचारापत्तेश्च । देवरात्सकृद्गमनमात्रेणोत्पादितः सुत उभयोः पुत्रस्तु तस्यैव यस्य क्षेत्रम् । जाते च पुत्रे पुनः पुत्रोत्पादनानधि-

कारात्पतिकर्तव्यसंपादनात्सौभाग्यपरित्यागोऽवश्यः। दिधिष्वाः सुतस्तु न सगोत्रो न पुत्रः। दिधिपूत्वस्यावैदिकत्वात्। नैकेनात्मसात्कृता परेणात्मसात्कर्तुं शक्येत स्वभावभेदापत्तेरात्मभेदात्। तस्माद्दिधिषूपुत्रो जातिबाह्यो गोत्रहीनश्च ॥

ननु नास्ति जातिरिति चेदलम्। अश्वा अपि मन्यन्ते जातिं गर्दभा अपि विवदत्यश्वतरस्तत्र विवादमूलं त्वश्वगर्दभयोः प्रमादः कृतः कारितो वा। जातिमतां मनुष्याणां प्रसिद्धैषा रीतिर्यद्गोत्रप्रवरान्वितपुत्रजननम्। यद्यपि प्रवृत्तिधर्मार्थो योषितस्तथापि प्रवृत्तिमार्गे निरुद्धे निवृत्तिधर्मोप्यवलम्ब्योऽनुरुध्यप्रवृत्तिधर्मम्। अतएव प्राप्ते प्राप्ते कर्मणि विधवाया धर्मसिद्ध्यर्थं इति संकल्पः। सधवायास्तु धर्मार्थकामसिद्ध्यर्थं इति। गृहस्थानां चतुर्विधपुरुपार्थसिद्ध्यर्थं इति। यतीनां मोक्षार्थं इति। सर्वथैवाधिकार एव संकल्पहेतुः। एतेन विधवावपनं कस्मादिति बहूनां नवीनानां प्रश्न उत्तरितस्तस्याः केशधारणानधिकारात्। तथैव न्यासिनामपि स्वयं त्यक्तप्रवृत्तिमार्गाणां वपनम् ॥

यथा पतिमरणेन स्त्रीणां प्रवृत्तिमार्गो निरुध्यते न तथा पत्नीमरणेन पुरुषाणाम्। तस्मात्सन्तत्युत्पादनार्थं पुनः पुनर्विवाहाः। सत्यां यथेच्छं संतत्यां पुनर्विवाहो न प्रशस्तः फलस्य सिद्धत्वात्। रागतः प्राप्ते विवाहे विधिनैवोढव्या योषित्सगोत्रपुत्रार्थिनी पुंसो रागप्राप्तेपि तस्या विधिप्राप्तत्वात्। ननु 'प्रजातन्तुं मा व्यवच्छेत्सी'रिति यथोपदेशः पुरुषं प्रति न तथा योषितं प्रति तदा विवाहविधिः कस्माद्योषितामितिचेत्सत्यं तथापि 'अलंकृत्य कन्यामुदकपूर्वं दद्यादि'ति विधिः पितरमनुशास्ति, तत्रच संकल्पो'ऽस्यां जनि-

---

१ विधवावपनमनाचार इति कस्यचिद्दुसदुराचारप्रचारकस्य प्रलापः। विधवामण्डनसमर्थनं पूर्वरूपं विधवावैक्लव्यस्य।

च्यमाणसंतत्या द्वादशावरान् द्वादशपरानि'त्यादिस्तत्र पात्रं स्नातकः सन्त्समुपस्थितो वरो न तथा स्त्रीणां स्नातकत्वं समुपस्थानं वा येन प्रजातन्तुं मा व्यवच्छेत्सीरित्युपदेश उपपद्येत । ननु 'पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते' इति स्मृत्युपलम्भात्सत्युपनयने स्नातकत्वाऽव्यभिचारात् प्रजातन्तुं मा व्यवच्छेत्सीरित्युपदेशोऽप्यव्यभिचरितस्तेनैव पुरुषन्यायेन बहुपतित्वं प्राप्तमिति-चेदाह । किं स्नातिकायै वरो देय उत स्नातकाय कन्या, उभयोरपि स्नातकत्वाविशेषात् । न तथा विधिरुपलभ्यते यथोपलभ्यते स्नातकायोपस्थिताय वराय कन्यां प्रयच्छेदिति । ननु मौञ्जीबन्धनविधिबलात्कल्प्यते स्नातिकाया उपस्थितायै योषिते वरो देय इति विधिरिति चेन्न । यतो नारीणां मौञ्जीबन्धनमिष्यत इतीष्टिरुक्ता न विधिः । अङ्गीकृतेपि मौञ्जीबन्धने न तासां समावर्तनं यतो विवाह एव मौञ्जीबन्धनं, श्वशुरगृहवास एव गुरुकुलवासः, तस्मान्न परावर्तनसंभवो दानविषयत्वात्तासाम् । यावन्तस्तत्कर्मोपयोगास्तावन्त एव मन्त्रा अध्यापयितव्याः सर्वोपि वेदोऽध्यापयितव्य इति मतभेदस्तथा संस्कृताभिरपि न श्रोतव्यो वेदः श्रोतव्यो वेद इत्यपि मतभेदः । परंतु गोधा घोषा विश्ववारेत्यादिब्रह्मवादिन्यो बह्व्यः श्रुतिसंमतास्तथा गार्गी वाचक्नवी वडवा प्रातीथेयी सुलभा मैत्रेयीत्याचार्या अपि श्रूयन्ते । तथा ऋक्संहितायां गर्भवर्णनप्रसङ्गे 'अपसर्पन्तु गर्भिण्यः' समाप्ते प्रसङ्गे 'यथास्थानं गर्भिण्यः' इति पठ्यते । तस्माद्वेदाध्ययनश्रवणाधिकारो गम्यते स्त्रीणाम् । अधिकारिपुरुषतादात्म्यात्तासामधिकारसिद्धिः । एतदेव मौञ्जीबन्धनं यत्तथा संस्कृतेन तादात्म्यम् । तत्तासामध्ययनं यत्तस्याध्ययनम् । 'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरे'त्यत्र स्त्रीशब्दः संस्कारविधुरपरः । अतएव गृहेष्वधीयन्ते वेदान् द्विजाः । प्रजनार्थानां तासां वेदाध्ययननिरोधो युक्ततरोऽन्यार्थानां पदार्था-

नामन्यार्थविनियोगे फलद्वयाभावप्रसङ्गात्। अध्ययनयोजितासु तासु व्यभिचारप्रसङ्गाच्च। ननु कथमुदाहृता गोधाघोषादयो गार्ग्यादयश्च। शृणु किं जनको ब्रह्मनिष्ठ इति सर्वे क्षत्रिया ब्रह्मनिष्ठाः। किं श्रीशंकरो लोकोत्तरोऽष्टवर्ष इति सर्वे बाला लोकोत्तरा जगद्गुरवो वा। उदाहरणतात्पर्यं तु योषा अपि ब्रह्मवादिन्य आचार्याश्चाभवन् एतदध्ययनफलमिति पुरुषधिक्कारः। तथा ब्राह्मणधिक्कारश्च क्षत्रियेणापि जनकेन ब्रह्मनिष्ठा संपादिता किं तदर्थेन ब्राह्मणेन यदि सा निष्ठा न संपादितेति। तस्मात्स्त्रीणां समावर्तनाभावेन प्रजातन्तुं मा व्यवच्छेत्सीरित्युपदेशाभावेन सन्तत्यर्थं न पुनर्यत्नस्तासाम्। एतेन शास्त्रप्रणेतृभिर्योषा वञ्चिता इति वदन्त्योपि समाहिताः। द्वितीयमुत्तरं तु विस्मृतं स्त्रीत्वं ताभिर्युष्माभिरिति। जानाति कापि स्मरति कापि या श्रीदत्तसदृशान् सूते पुत्रान् महापुरुषान्। शास्त्रे तु—'प्रजनार्थं महाभागा पूजार्हा गृहदीप्तयः। स्त्रियः श्रियश्च गेहेषु न विशेषोस्ति कश्चनेति। अन्यच्च 'विद्याः समस्तास्तव देवि भेदाः। स्त्रियः समस्ताः सकला जगत्सु। त्वयैकया पूरितमम्बयैतत् का ते स्तुतिः स्तव्यपरापरोक्ति'रिति महत्वम्। सकलास्त्वत्कलया लज्जानाम्न्या सहिताः स्पष्टं दृष्टाः। यथा कलया मुखादिपादान्तं शोभते। त्वया लज्जाबीजरूपया। ऐकया ऐरेवैका वाग्बीजाभिधया त्रिकोणरूपया वाच्यवाचकैक्यार्थं कः। अतएव सर्वा भाषा योनिसंभवा विद्याभेदाश्च ताभ्यस्तस्मात्सर्वात्मत्वं तवेति श्लोकार्थः। एकयेति पक्षेपि कः समः। एकया सपरार्धरूपया। कलया बिन्दुत्रयरूपया। रूपद्वयप्रकटितस्वरूपत्रिभङ्गी ललिततुर्यस्वरूपा इति समस्तपदरसः। इमानि तव स्पष्टरूपाणि। पुरुषा अपि तवैवास्पष्टरूपाणि। अतएव श्रुतिराह—'स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न विचेतदन्धः। कविर्यः पुत्रः सईमाचिकेत यस्ता

विजानात्स पितुष्पितासदि'ति । अतएव पूरितं त्वयेति स्तवनासन्नम् ॥

ननु कलाशब्देन सपरार्धचारिताच्यादिकयेति पदं फलमपेक्षते इति चेदुत्तरमुक्तं तथापि कलायाः सृष्टिमूलत्वेन स्त्रीपुंससाधारण्यात्सपरार्धभागस्य व्यक्ताव्यक्तभेदाङ्गीकारात्स्पष्टलिङ्गार्थमेकयेति दिक् । जायमानस्य पिण्डावस्थोत्तरं कला ततोवयवा इति क्रमः । विशेषजिज्ञासायां श्रीमत्पण्डितभास्करभगवत्कृते सेतौ द्रष्टव्यम् । अत्र बह्वोऽर्था अतिगम्भीराः पौराणिकोऽर्थस्तु प्रसिद्धः । कथमपि भद्रत्वमस्तु प्रतिबद्धे प्रवृत्तिमार्गे मुण्डनमवश्यं स्त्रीणाम् । मुण्डनाभिप्रायस्तु मोक्षान्तमनुधावति । वस्तुत आत्मसात्कृतानां पत्या सह गमनं महाफलम् । यतः पत्न्या पत्युर्गृहं लोकश्च जितस्तेन कृतश्रौतस्मार्तकर्मणा कर्मयोगिना सह धूमादिमार्गेण गन्तव्यं कृतस्य कर्मणः साफल्यहेतोः ॥

ननु नास्ति परलोक इति चेत्किं त्वमन्धोसि मूढोसि वा । प्रत्यहं पश्यसि परलोकं स्वप्ननामानं स्पष्टमसाहृश्यान्निवृत्तेन्द्रियव्रातः सवासनस्तथैव सर्वे जीवाः विस्मृतपूर्वाः संसारान्तरं पश्यन्ति निर्विवादं । तस्मादेव शास्त्रसाफल्यम् । ननु संसारो नास्तीति वदन्ति केचित्तत्कथमुपपद्यत इति चेत्तव स्वप्नवदिति वदामः । पश्यन्नेव स्वप्नं नास्तीति वदसि पश्यन्नेव वर्तमानं सत्यं वदसि । ननु क्षणिकत्वान्नास्तीति वदामि चेत्क्षणिकत्वं न नास्तित्वप्रयोजकं किं त्वनित्यत्वप्रयोजकं तच्च तुल्यं वर्तमानस्य । ये तु नास्तीति वदन्ति संसारं ते वर्तमानमपि नार्धजरतीयास्ते । तर्हि वदतु भवान् वर्तमानः संसारो नास्ति कथम् । किं तया तव चिन्तया । स्वप्नं पश्यन् परलोकमङ्गीकुरु । कथं । संसारो नास्तीति प्रश्ने मुमुक्षवोऽ-

---

१ प्रथमः कल्पोयम् अपायबहुलत्वाद्विधवाजीवनस्य, तपोव्रताद्युपदेशस्तु मध्यमकल्पे सार्थकः ।

घिकारिणः सर्वसामान्योपदेशस्तु लोकः कर्मलभ्य इत्येव येन कर्मयोगयोगिता सिध्येत्ततः श्रेयोधिगमः। सशास्त्रं प्रेयोपि श्रेय एवेति महाभिप्रायस्तत्त्वविदाम्। ननु कथमुच्यते कर्मठानां कर्मयोगित्वमिति चेन्निग्रहप्रधानत्वादिति विद्धि। निग्रहो हि योगः स च वर्तते यथेष्टाचरणात् किं मर्कटाः कर्मयोगिनः स्युः[1]। अतएव त्रिजगद्वन्द्या ब्राह्मणाः। एष योगमहिमा यावन्ति मानुषशरीरे लोमानि तावत्कोटिवर्षपर्यन्तं स्वर्वास इति। या तु न गच्छति सह पत्या सापि न दुष्यति प्रायश्चित्तादर्शनात् विधवाधर्मशासनाच्च॥

अस्त्वेतत्सर्वं सफलं सकलमनुशासनम्। ये तु प्रसिद्धा बहुविधा ब्राह्मणास्तेषु मिथः कन्यासंबन्धः कस्मान्नेति चेद्बहुविधत्वादेव। एतेन क्षत्रादयो गृहमेधिनो व्याख्याताः। अतएव कल्पसूत्रं 'कुलमग्रे परीक्षेत[2] ये मातृतः पितृतश्चेति'। मातृतः पितृतो वा यदि स्वस्वविधामुल्लङ्घ्य संबन्ध उपलब्धस्तेन सह संबन्धो न विधेय इति तत्तात्पर्यम्। सत्यपि ब्राह्मण्ये समानेऽवान्तरजातिभेदानामुल्लङ्घनमनुचितं जातिसाङ्कर्यप्रसङ्गात्। क्रमेण वर्णसङ्करप्रसङ्गः। अत्यल्पेनैव कालेन मनुष्यत्वे समाने यथेच्छं संबन्धे कः प्रतिबन्ध इत्यपिपूर्वपक्षाचार्यतामवाप्स्यसि। शृणु तस्योत्तरम्। योनिभेदो[3] हि जातिभेदहेतुः सा च योनिः पुरुषेष्वपि योषित्स्वपि प्रजननेन्द्रियमतीन्द्रियं। नाकारो योनिर्वन्ध्यात्वाभावप्रसङ्गात्। अतएव तत्र तत्र जातौ तादृशास्तादृशा एव दृश्यन्ते निर्विवादं। योनिसांकर्यात् सकलोपप्लवः सर्ववैपरीत्यादिति। इष्टापत्तिरिति चेत्तथैव त्वमिति।

---

१ अयं मध्यमः कल्पः सति पुत्रबाल्यादित्वे। २ इयं परीक्षा संकरपरिहाराय। ३ प्राणिप्रतिनियतयोनिभेद इति सादृश्ये तादृश्ये तात्पर्यम्। वस्तुतस्तु येषां देशभेदादेवाचारभेदस्तद्भेदादेव च बहुविधत्वभानेन व्यवहाराभावस्तेषां ब्राह्मणानां परस्परविवाहसंबन्धे न शास्त्रबाधः।

मनुष्येषु बहुलक्षाणीति श्रूयन्ते शास्त्रे योनयस्तद्युक्ततरं भाति भावुकानां । तस्माद्यथासंप्रदायं सशास्त्रं विवाहो मुण्डनं श्रेयः । अनारूढमार्गा निरुद्धमार्गास्त्यक्तमार्गाश्च्युतमार्गा मुण्डिन इति पर्यवसितमेकबीजत्वात् ॥

अत्रेदं तत्त्वम्—प्रवृत्तिधर्मार्थानां स्वाभाविकप्रवृत्तिधर्माविरुद्धनिवृत्तिधर्मानाचरन्तीनां पुरुषत्वं भविष्यति । प्रायः पुरुषायमाणाः पुरुषा भवन्ति योषायमाणा योषास्तदेकध्यानपराः । अतएवाह भगवान् 'यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावित' इति योषितामेष स्वभावः पतिपुत्रध्यानरतत्वं तादात्म्यात् । अतएव पुत्रे पत्यौ वा विरक्ते माता पत्नी वा पुरुषो भवति मुक्ते मुक्तेति । मिथ उद्धरन्ति केचिल्लोके पतिः पत्नीं पत्नी पतिं पुत्रो मातरं माता पुत्रं पिता पुत्रं पुत्रः पितरं तादात्म्यात् । अतएव प्रजातन्तुं मा व्यवच्छेत्सीरित्युपदेशः सफलः । तादात्म्यपालनेन प्राप्ते पुरुषत्वे शास्त्राधिकारस्ततो वेद्यवेदनाधिकारस्ततो मोक्ष इति प्रकृतोपसंहारः ॥

स्त्रीपुंसौ न समौ कस्मादिति प्रश्नः समाहितः । समौ किं धेन्वनड्वाहौ विषमौ वा विचार्यताम् ॥ १ ॥ अकुलः कुलसंप्राप्ते शास्त्रे चेद्वादमृच्छति । स्वकुलस्य परीक्षैव दत्ता तेन महात्मना ॥२॥ गर्भाधानादिसंस्कारैः शास्त्राणि स्त्रीयबालके । प्रवेशयन्ति पितरस्तत्कुलं दुष्कुलं परम् ॥३॥ मुण्डनं मण्डनं क्वापि मण्डनं क्वापि मुण्डनम् । मुण्डने मण्डने वापि प्रमाणं कुलमेव हि ॥ ४ ॥ वैधव्यं वर्धते कस्मादिति पृच्छन्ति केचन । कुलद्वयस्य दोषेण कलिदोषेण वेत्थ वा ॥ ५ ॥ एकं बिन्दुं समादाय पुनरायान्ति चेदमी । अङ्कास्तदा पुनर्जीवा बिन्दुद्वारा कुतो नहि ॥ ६ ॥ सौभाग्यं धनमिह योषितां समर्थं विद्या पुंधनमिति सर्वसंमतं च । तद्द्वन्द्वं चिरतरमस्तु भारतेऽस्मिंस्तेन स्याद्भुवनमिदं समङ्गलाढ्यम् ॥ ७ ॥ श्रीमत्काशीनाथ–

शान्तिप्रमोदं श्रीमद्राजारामशास्त्र्यंघ्रिसेवाम्। आशासानो विश्वसंस्थाविनोदं तन्वन्नास्ते काशिकायां हि कृष्णः ॥ ८ ॥ यत्प्रेरितं भगवता हृदयस्थितेन यद्बोधितं च गुरुणा करुणार्णवेन। तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्मसद्मोत्थमोदमकरन्दरसाभिलाषी ॥ ९ ॥ अष्टादशोत्तराष्टादशशाके शालिवाहभूपस्य। निरमायि कृष्णयतिना कृतिनामामोदवृद्धये शास्त्रे ॥ १० ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतं मुण्डनानुशासनं संपूर्णम् ॥

---

# आचार्यकालपरामर्शः ॥ १० ॥

स्थित्वा बदरिकापीठे भिन्दन् कलिमलं मुहुः।
तपस्यति यतिः कोऽपि तस्मै श्रीगुरवे नमः ॥ १ ॥
कृष्णामलापहानद्योः सङ्गमस्थद्विजन्मना।
कृष्णरावेण विदुषा प्रेरितोऽयं तु निर्णयः ॥ २ ॥

अथेदानींतनाः श्रीमद्भगवद्भाष्यकाराणां जन्मकालनिर्णयाय यतन्ते तएव श्रीजगद्गुरूणां कर्मणि सहायभूतं सुधन्वानं राजानमुपवर्णयन्ति 'नन्दान्तं क्षत्रियकुलमि'त्यप्यङ्गीकुर्वन्ति। तदेत्थं निर्णेतुं शक्नुमः। क्षत्रियकुलस्य नन्दान्तत्वे धनुर्विद्यायास्तत उत्तरं लोप इत्यार्थिकं नन्दात्प्रागेव सुधन्वनः संभव इत्यप्यार्थिकं सुधन्वत्वसमर्थनार्थम्। नन्दादुत्तरं सुखङ्गसंभवः। नन्दोत्पत्तिकालस्तु—'यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः। तदा क्षत्रान्तकारी तु नन्दो राजा भविष्यति' इति शुकवाक्यं परीक्षितं प्रति। तद्रा वार्ताकाले मघासु सप्तर्षयस्ततः पूर्वाषाढान्तं सहस्रवर्षमितो निरूपितः कालः। प्रतिनक्षत्रं शतवर्षाणि तिष्ठन्ति सप्तर्षयः। मघादिमूलांतं दश नक्षत्राणि। एकादशीपूर्वाषाढेति कालान्तरं तेनैव परीक्षितेन श्रीकृष्णावतारोपसंहारं दृष्ट्वा शास्तारमनवेक्ष्य प्रवृत्तः शिक्षां

प्रापितः कलिः । सच जनमेजयान्तं न प्रववृते । ततो युगप्रवृत्त्यर्थं बुद्धावतारो गयायां यद्बुद्धारक्षेत्रं पितॄणां तत्रैव नास्तिक्यमुपसंक्रामयामास भारते वर्षे । ततो वैदिकमार्गे ग्लानिमुपगते श्रीशंकरावतारप्रसङ्गः । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यह'मिति न नाशोत्तरमवतारप्रसङ्गो निष्फलत्वात् । स्याद्बुद्धशंकरयोः किंचिदन्तरं त्रिशतान्तं । परीक्षितात्त्रिशतादर्वाक् बुद्धावतारस्ततस्त्रिशतादर्वाक् शङ्करावतारः । युधिष्ठिरराज्यारम्भ एव कलियुगारम्भः इत्यभ्युपगम्य भास्करपण्डिता आहुः—'वर्षेष्वतीतेषु शतेषु षट्सु तिष्येऽवतीर्णं भुवि शङ्करार्यम् । शिष्यैश्चतुर्भिः सहितं शिवादिपारम्परीकावधिमानमाम'इति दीक्षापद्धतौ सौभाग्यचन्द्रोदयनाम्नि । युज्यते चैष लेखः । यतः परीक्षितस्य शुकसांनिध्यं शुकाचार्यस्य गौडपादसांनिध्यं गौडपादस्य गोविंदभगवत्पादसांनिध्यं गोविन्दभगवत्पादस्य भाष्यकारसांनिध्यं पतञ्जलिसांनिध्यम् च । पतञ्जलेरेव गोविन्दभगवत्पादानां व्याकरणाध्ययनस्य कथा प्रस्तुता दिग्विजये । तस्मात्पाणिनिपतञ्जलिगोविन्दभगवत्पादाः समकालाः व्यासजैमिनिशबराचार्यभट्टपादमण्डनमिश्राश्च समकालाः । मण्डनमिश्रगेहे श्राद्धनिमन्त्रितौ व्यासजैमिनी तदैव जगद्गुरुरुपतस्थे तत्र गेहे । तस्मादेतेऽपि समकालाः । शारीरके शबराचार्यखण्डनमण्डनादिदर्शनात् । भर्तृप्रपञ्चकारोऽपि तदानींतनस्तस्यापि खण्डनदर्शनात्।पाणिनिसूत्रेषु पतञ्जलिना समर्थितेषु जैमिनिसूत्रेषु शबरादिमण्डनान्तपण्डितैः समर्थितेषु परिशिष्टेषु व्याससूत्रेषु तत्समर्थनाय श्रीशङ्करोऽवततार । तत्रच प्रत्यगात्मपरतया शारीरकं भाष्यमारचय्य दिग्विजयः कृतः श्रीशङ्कराचार्यैः । सच स्थापितः सुधन्वना । मानपत्रं च दत्तं यद्द्यावधि लिखन्ति पीठस्थाः । इमानि युष्माकं कर्माणीति सुधन्वनोऽभिप्रायः । इमान्यस्माकं

कर्माणीत्यङ्गीकारोऽभिप्रायः। पीठस्थानाम्। अतएव छत्रचामरादिचिह्नानि यैरनुशासनममोघं राजवत्। 'वादेन विजिता बुद्धगया श्रीशङ्करेण तु। बुद्धैराक्रमवादं तु त्यक्त्वा क्वापि पलायितम्॥

ननु बुद्धस्य भगवदवतारत्वे कथं वेदमार्गविनिपातनमिति संदेहं माकृथाः। महर्षिगौतमादिशापानां ब्राह्मणेषु चारितार्थ्यदानायेति संभवात्। ततःप्रभृति बुद्धावतारे इति संकल्पप्रवृत्तिः कल्क्यवतारान्तं। अवतारा द्विविधाः कालप्रवर्तकाः कालशोधकाश्चेति। कालशोधकानां श्रीशङ्करप्रभृतीनां न संकल्पेपूहः। आचार्योऽनुमत्या धर्ममार्गप्रवर्तकानां शककर्तॄणामुत्पथगामिशास्तॄणां संकल्पेपूहः। एवं मनुनां। 'यद्वै मनुरवदत्तद्भेषज'मिति श्रुतेः धर्मप्रवर्तकत्वादूहः। याज्ञवल्क्यस्मृतेर्ब्रह्मयज्ञपारायणप्रवेशे मूलं न पश्यामः। उचितस्तु मनुस्मृतिप्रवेशो मनोस्तदर्थमेवाधिकारः। न याज्ञवल्क्योधिकारिषु गण्यते। अन्यासां स्मृतीनां मनुवाक्यैकवाक्यत्वे गतार्थतां भिन्नवाक्यत्वे त्वप्रामाण्यमिति श्रुतेरर्थः। अस्तु। एतादृशसंकल्पप्रवृत्तिसीमाप्रदर्शितश्चतुर्दिक्षु मठरचनाभिराचार्यैस्ततः परा भूमिर्भूस्वर्गः। न तत्र संकल्पाकाङ्क्षावैदिकत्वादिति दिक्। एवं शुकादिसांनिध्यसंभवनिर्णेतव्ये काले नानाविधवर्णनदर्शनं पुनःपुनरवतारं भूयो धर्मोपप्लवं च समर्थयति न मिथोविरोधम्। समानचरित्रेषु सोयमिति प्रत्यभिज्ञादर्शनात्। यथा विक्रमार्कभोजचालुक्यविक्रम अकबरसमयेषु रघुवंशशाकुन्तलमेघदूतनलोदयकाव्यकर्तृषु कालिदासप्रत्यभिज्ञा बुद्धविजयलिङ्गेन तत्तदवतारेषु मूलावतारप्रत्यभिज्ञा। यथोत्तमकाव्यरचनादिलिङ्गेन कालिदासप्रत्यभिज्ञा तथा बुद्धादिविजयलिङ्गेन वैदिकमार्गस्थापनलिङ्गेन च श्रीशङ्कराचार्यप्रत्यभिज्ञा। तथैव रामकृष्णादिषु दुष्टदर्पदमनलिङ्गेन भगवत्त्वप्रत्यभिज्ञा। न बुद्धावतारे भगवत्त्वव्यभिचारव्यसनं दुष्टोत्पादककालप्रवर्तकत्वेपि गौतमादिमहर्षिषु कृतामरा-

धानां निग्रह एवैषः । यदुद्धतानां घोरकाले जन्मदानं । महर्षिसंमतं च तत्कर्मेति न भगवत्त्वव्याहतिः । श्रीशङ्करभगवत्पादैः शापविद्धाविद्धविभागः कृतः । अतस्तत्सजातीये तत्त्वव्यपदेशः । तथा बुद्धसमानकर्मणि बुद्धत्वव्यपदेशः । अतो नानाविधाः कथा उपपन्नाः । जैनग्रन्थेऽन्यग्रन्थेषु वा कालभेदकथनमविरुद्धं । यज्जैनग्रन्थेषु महती प्रतिष्ठा वर्णिताऽचार्याणां तदेव यशः शत्रुमुखादुद्गीतं यत् । 'नमोस्तु शंकरार्याय वेदसंमतकर्मणे । नमोस्तु तस्मै बुद्धाय ऋषिसंमतकर्मणे । जिनविजयेऽप्यङ्गीकृताप्रत्यभिज्ञा शङ्करेऽर्थाद्बुद्धे च । 'भूमिर्नेत्रे मानवस्य कस्यास्यानां च मेलनात् । वामगत्या शुभे काले प्रमाथीवत्सरे महान् । शालिवाहनराजश्च वर्तते शक उत्तमः । मल्याख्ये माघकृष्णे च चतुर्दश्यां शुभे दिने । पिता शिवगुरुर्यस्य माता च गिरिजा सती । द्वितीयः शङ्करः साक्षाद्वदन्ति मुनयः सदा । जाते पञ्चदशे वर्षे शृङ्गिरौ गमनं कृतम् । विद्याभ्यासं नन्दवर्षे कृत्वाथाश्रममाप्तवान् । विद्यानृसिंहयतिराट् भारतीनां मठे शुभे । स्वकीये स्थापयामास विद्याशङ्करभारतीम् । ततः पञ्चदशे वर्षे जयार्थमटनं कृतम् । निर्जित्याशेषपृथिवीं वादेन स्वीयविद्यया । पश्चाद्गत्वा अकूपारे स्नानार्थं सूर्यपर्वणि । तस्मिन्देशे निर्मले च समाप्तिमगमद्गुरुः । भूमिर्नन्दो द्रुहिणस्य वदनानि च मेलनात् । 'कार्तिक्यां शुक्लपक्षे च त्रयोदश्यां शुभेदिने । विरोधिकान्यवारे च सायाह्ने कीकटे महान् । समाप्तिमगमत्साक्षाद्विद्याशङ्करभारती'ति । द्वितीयः शङ्कर इति प्रत्यभिज्ञालिङ्गम् । तथा लेखान्तरमपि जैनग्रन्थे प्रत्यभिज्ञामूलं । गतकलिः । 'ऋषिर्बाणस्तथा भूमिर्मर्त्याक्षौ वाममेलनात् । एकत्वेन भवेदङ्कस्ताम्राक्षस्तद्धि वत्सरः । विश्वजिच्च पिता यस्य विख्यातश्च चिदम्बरे । तस्य भार्याम्बिका देवी शङ्करं लोकशङ्करम् । प्रसूता सर्वलोकस्य तारणाय जगद्गुरुम् । शङ्करेण निशीथे हि स्वकीयेन च तेजसा । ग्रभ्रवत्का-

शितं सर्वं सूत्रागारं स्वलीलया। वामाशायनत्रयस्य माघे कृष्णे शुभे दिने। चतुर्दश्यां निशीथे तु पुष्पवन्तौ घटे तदा। ग्लौंवासरे प्रादुरासीद्वादक्च्छङ्करो महान्। पश्चात्पञ्चदशे वर्षे शङ्करस्य गते सति। भट्टाचार्यकुमारस्य दर्शनं कृतवान् शिवः। द्वात्रिंशद्वर्षविज्ञेया स्थितिरासीद्धिमालये। शङ्करस्य शरीरस्यावसानमभवत्तदा। नन्दो वसुर्भूमिनेत्रे मेलने शक उत्तमः। ज्ञातव्यः पाण्डुपुत्रस्य जातो वामेन वै तदा। दुर्मुखे मार्गशीर्षे च शुक्लपक्षे त्रयोदशी। सोमप्रदोषे सायाह्ने कैलासे शङ्करो गत इति। मातापित्रोर्भिन्ननामनिर्देशोऽपि प्रत्यभिज्ञालिङ्गं तां विना नान्यां गतिमिच्छति। 'ऋषिर्वसुर्वसुर्ज्ञेयः पाण्डवानां महात्मनाम्। गणनाशेषकालस्य शकस्य शिवजन्मनी'ति युधिष्ठिरशकोपि न विरुद्धः सति संभवे चतुश्चत्वारिंशदुत्तरत्रिसहस्राणि शककालः। तत्र गतशकः सप्तपञ्चाशदुत्तरैकविंशतिशतानि। सप्ताशीत्युत्तराष्टशतानि शेषशकः। यद्यानन्दगिरिमिरेत एव वर्णितास्तदापि न विरोधो विप्रतिपन्नसंमतत्वात्। एतेषां द्वात्रिंशद्वर्षात्मकमायुः। युधिष्ठिरशक एव द्वितीयावतारः। शालिवाहनशकीयावतारस्यायुःसप्ततिः ४२१ एतावति शके जन्म ४६१ एतावति शकेऽवसानमिति लेखात्। युधिष्ठिरशके षट्शतेष्वतीतेषु जातावतारस्य चिरायुः। 'मया पंचाशीतेरधिकमपनीते तु वयसी'त्यानन्दलहर्यां तदुक्तेः। सङ्क्षेपशारीरककर्तृसर्वज्ञमुनिशिष्यचिद्विलासकृतदिग्विजये तथा लेखात्। युक्तमुच्यतेऽर्वाचीनाऽवतारे तदसंभवात्। तैरेव चत्वारो मठाः कृताः। पद्मपादादयो मठक्रमेण ज्येष्ठादिक्रमेण च स्थापिता विरुदावलीसमन्वितास्तथाकर्माणः समर्थाः। एवं प्रत्यवतारं जीर्णोद्धारस्थापनक्रमः। तेषां नामानि यथापूर्वं पद्मपाद–हस्तामलक–तोटक–सुरेश्वरा-इति ज्येष्ठादिक्रमेण। द्वारकामठे ज्येष्ठे ज्येष्ठः पद्मपादस्ततो गोवर्धनमठे हस्तामलकस्ततो ज्योतिर्मठस्तत्र तोटकस्ततः शृङ्गेरीमठस्तत्र सुरेश्वर इति

व्यवस्था । द्रायश्रागमनुगृह्य निर्णयः । तत्स्थानापन्नस्तं धर्मं भजत इति न्यायात्तत्तन्नाम निर्दिष्टमाचार्यैः । 'धाता यथापूर्वमकल्पयदि'ति श्रुतेर्भगवत्पादोतनादीशत्वादवतारत्वमाचार्याणां अतो जयन्त्युत्सवे योग्या रामकृष्णादिवत् । समाचरन्ति माध्वाः शिवरात्रौ शङ्करावतारनिमित्तं जयन्त्युत्सवम् । स्मार्तास्तु शिवरात्रौ व्रतप्रतिबन्धं मत्वा वैशाखशुक्लपञ्चम्यां दशम्यां वा समाचरन्ति । स चोत्सवः प्रथमावतारे संप्रतिपन्नः । पुण्यतिथिरितरेषां पुण्यकर्मणां न्यासिनां । धर्मस्थापकानां जयन्ती तदनुवर्तिनां पुण्यतिथिरिति विभागः । प्रासूत तिष्यशरदामतियातवत्यां न्यूनाधिकैकशतकेन चतुःसहस्याम् । संवत्सरे विभवनाम्नि शुभे मुहूर्ते राधेऽसिते शिवगुरोर्गृहिणी दशम्यामि'ति श्लोकस्तु शालिवाहनीयशङ्करविषयः स्यात्कदाचित् । 'शिवधीलः कलिमलान्दलयँश्चरितामृतैः । जगाम शङ्कराचार्यश्चन्द्रचूडपदं शिव'मिति श्लोकस्तु शालिवाहनीयविषयः । आन्ध्रमुखाच्छ्रुतः श्लोकः 'शङ्करं कुंकुमाभासं मुनिं कूष्माण्डसंभवम् । भाष्यकारं स्तुमो नित्यमुद्यद्भास्करसंनिभम्' इति । आन्ध्रद्रविडदेशयोः संधौ वायुलिङ्गक्षेत्रे कालहस्तिनामके शिवालये केनचिद्ब्राह्मणेन कूष्माण्डो लब्धः स व्यापादितस्तत्र लब्धः शिशुः शङ्करालये लब्धत्वाच्छङ्करनाम्ना संस्कृतः । एषोऽवतारस्त्वयोनिसंभवः शुकवत् । मातापित्रोर्नाम तूह्यं कथानुसारात् वयं तु मन्यामहे शिवगुरुरम्बिकेति तेन कथासंगतिः स्यादिति। इयं तु कथा प्रथमावतारे संघटेतान्यावतारयोर्भिन्नप्रकारात् । सीताया भूकन्याया जनकादिवत्कूष्माण्डसंभवस्यापि । द्वारकामठाम्नायस्तु युधिष्ठिरशके २६३१ वैशाखशुक्लपञ्चम्यां श्रीमच्छङ्करावतारः २६६३ कार्तिकपूर्णिमायां कैलासगमनमिति प्रतिपादयन्नवतारान्तरमङ्गीकरोति पूर्वोक्तावताराज्जैनसंमतादस्मत्संमताच्च । संभवति जीर्णोद्धारार्थमिति । 'इत्थं कल्क्यवतारान्तं जीर्णोद्धाराय शङ्करः । अवतीर्य मुहुर्धर्म-

स्थापनव्रतमाचरेत्। दशस्वप्यवतारेषु यथा विष्णुत्वमिष्यते। शङ्करत्वं तथा ज्ञेयं त्रिष्वन्येषु च भाविषु। इममेवाभिप्रायमनुसरन्ति। जन्मकुण्डलीप्रदर्शिता कच्छभुजदेशस्थेन ज्योतिर्विदा टीकाकारेण। कलिगतवर्षाणि ६०५ लग्ने कर्के चन्द्रः चतुर्थे तुलायां शनिकेतू सप्तमे मकरे कुजः दशमे मेषे रविबुधगुरुशुक्रराहवः इमामेव कुण्डलीं मनसिकृत्वा प्राहुर्माधवाचार्या दिग्विजये। 'लग्ने शुभे शुभयुते सुषुवे कुमारं श्रीपार्वतीव सुखिनी शुभवीक्षिते च। जाया सती शिवगुरोर्निजतुङ्गसंस्थे सूर्ये कुजे रविसुते च गुरौ च केन्द्रे'। इति पञ्चाधिकत्वमदूरमिति मन्वाना भास्करपण्डिता आहुः। वर्षेष्वतीतेषु शतेषु षट्सु तिष्येऽवतीर्णं भुवि शङ्करार्यम्। शिष्यैश्चतुर्भिः सहितं शिवादिपारम्परीकावधि मानमाम'इति। मेषस्थरविणा कर्कस्थचन्द्रेण च वैशाखशुक्लपञ्चमीति निर्णीयते। तत्रैव तयोस्तथासंभवात्। लग्ने शुभे शुभयुत इति दर्शितकुण्डल्या जन्मकालो विज्ञेय इति माधवाचार्याणामभिप्रायः। आ ज्ञातः काल इति वर्षेष्वतीतेषु शतेषु षट्स्वित्युक्तिर्भास्कराचार्याणामधिकानां पञ्चानामुपलक्षणमिति। अवलम्ब्य सुधन्वानमाचार्यैर्दिग्जयः कृतः। तमेव तु समालम्ब्य होरा ज्ञेया मनीषिभिः। दुर्धन्वापि यदा नास्ति का कथा स्यात्सुधन्वनः। नन्दात्प्रागेव विज्ञेयो सुधन्वा शङ्करो गुरुः। अनया कुण्डल्या दीर्घायुर्योगो लग्नेशस्य लग्ने सत्वाद्गुरोः केन्द्रे स्थितत्वात्। 'मया पञ्चाशीतेरधिकमपनीते च वयसी'ति श्लोकेश्च। चिद्विलासोऽत्र साक्षीति च। द्वात्रिंशद्वर्षलेखस्तु द्वितीयावतारकथासांकर्यात्। तत्र साक्षी जिनविजयो ज्ञेयः। आकूपञ्चवर्षाणि षट्शतात्पूर्वयुगे परिगणितानि संधौ। इति भास्करमतमिति। किं बहुना यदा यदा धर्ममार्गस्थापने राजा प्रवर्तते तदातदैकः शंकरावतार इति नानाविधलेखादवसीयते। दशमभावस्थगुरुफलं चमत्कारचिन्तामणौ नारायणभट्टाः

'ध्वजा मण्डपा मन्दिरं निनशालं पितुः पूर्वजेभ्योऽपि तेजोधिकत्वम् । न तुष्टो भवेच्छर्मणा पुत्रकाणां पचेत्प्रत्यहं प्रस्थसामुद्रमन्न' मिति तत् स्पष्टमेवावधि दृश्यते इति शिवम् ॥

यदुक्तं माधवाचार्यैः 'श्रीपार्वतीव सुषुवे सुखिनी कुमारमि'ति । तथैवमाकूतं । शरवणोद्भूतः स्कन्दो मातृत्वं नातिचरतिस्म पार्वत्या, यथावा देवक्याः पुत्रत्वं श्रीकृष्णश्चतुर्भुजशङ्खचक्रगदान्वितः प्रादुर्भूतोऽपि तथाऽयं शंकरावतारोप्ययोनिसंभवः । गर्भादिवर्णनं देवकीवत्सेवं मायामात्रमिति । ततः कूष्माण्डसंभवोऽपि चरितार्थः । सर्वशास्त्राकरे बृहन्नारायणीये श्रीशङ्करकृतवायुलिङ्गस्तुतिरप्यत्र लिङ्गम् । परिगृह्य तनुं भगवद्विमुखांस्तत्पदसंमुखकरणोद्युक्तः । शङ्करयतिराड्वातार्थानो नौरिव पायाज्जडजातभयात् ॥ १ ॥ मागधी बुद्धिरन्यैव द्रावडी तु ततोऽन्यथा । प्रसङ्गे समनुप्राप्ते साक्षिणौ बुद्धशङ्करौ ॥

इति श्रीनित्यधामनिवासिकृष्णानंदसरस्वतीकृतश्रीमद्भगवद्भाष्यकारजगद्गुरुश्रीशंकराचार्यावतारकालपरामर्शः ॥

---

श्रीजगद्गुरुशङ्कराचार्याणां जन्मकुण्डली । गतकली ६०५ ।



## द्वारकापीठस्थस्वामिनां विचारः

# संशयतिमिरभास्करः ॥ ११ ॥

यस्मिन्नसदिदं विश्वं सद्भाति व्योम्नि नैल्यवत् ।
तं वन्दे सच्चिदानन्दलक्षणं लोकशङ्करम् ॥ १ ॥
तत्प्रकाशितवेदार्थतत्त्वनिर्णयकारिणः ।
विपश्चितो विराजन्तां वस्तुयाथार्थ्यदर्शिनः ॥ २ ॥

इह खलु महेश्वरमायावैचित्र्यवशात् कोपि राजराजेश्वरनामा दाक्षिणात्यवाडवबालोऽनधिगतस्वगुरुशासनो बाल्ये कंचित्कालं क्षूणविद्यामभ्यस्तवान् । ततः कचित्किंचित्तर्कादिकमधीत्य द्वारकां जगाम । तत्र पीठस्थसंन्यासिनां ऐश्वर्यमवलोक्य लोभव-श्चितचित्तः सन्पीठलाभमपेक्ष्य संन्यासार्थं तान्प्रार्थयामास । तैश्च तदीयचरित्रं स्थितिं चावलोक्य न त्वं संन्यासाधिकारी नापि पीठाधिकारीति धिक्कृतः सन् विमना भूत्वा नर्मदातीरे कर्नालीक्षेत्रमगात् । तत्र च गौडादधिगतसंन्यासमानन्दाश्रम-नामानं कंचिद्यतिमुपलभ्य ततः संन्यासमुपलेभे । ततः कति-पयकालानन्तरं द्वारकापीठस्थान् सिद्धिंगतानुपाकर्ण्य द्वारकापीठं केनाप्यनधिष्ठितमिति निश्चित्य अस्मिन्नेवावकाशे पीठलाभार्थं प्रय-तितव्यमिति मन्वानः पुनर्द्वारकां ययौ । तत्रत्याधिकारिणीं जीजी-बाई तोषयित्वा तया साकं कांचन संविदं कृत्वा तद्विश्वासार्थं

---

१ गौडाधिगतसंन्यासतयाऽऽनन्दाश्रमस्यायोग्यत्वं तदधिगतसंन्यासस्य राज-राजेश्वरस्य ततोप्यपकृष्टत्वमित्याकूतं गौडाय मे न रोचते गौडाधिगतसंन्यासत्व-स्यापकृष्टत्वप्रयोजकत्वस्वीकारे तु शृङ्गेरीमठादिसाधीश्वरगौडसंन्यासिश्रीसुरेश्व-राचार्याधिगतसंन्यासानां तदुत्तराधिगतसंन्यासानां च स्वामिनामपकृष्टता स्वी-कृतेव स्यादिति सुधियो विभावयन्तु । राजराजेश्वरेतिवृत्तत्वज्ञत्वादुदासीनोऽस्मि ।

तस्मै लेख्यं वितीर्य तां छन्दयामास । ततः तत्रत्यपरिवारजनाननुकूलीकृत्य स्वयमेव पीठमधिरुरोह । तदनन्तरं स्वल्पेनैव कालेन नष्टे स्वातन्त्र्यं देशे स्वाचार्यत्वं च प्रकटयामास । ततः तत्स्वातन्त्र्यविक्षुब्धचित्ता जीजीवाई कलहमारेभे । तेनैव कलहनिमित्तेन तां मठाद्दूरीचकार । ततस्तयाऽनन्यशरणया तत्रत्यदेशाधिकारी अभियोगं शरणीचक्रे । तेनाधिकारिणा राजराजेश्वरः जीजीवाय्यनुमतौ त्वया स्थातव्यमिति आज्ञापितः । पुनः स्थलान्तराधिकारिणापि तथैव नियोजितः । पुनस्तृतीयाभियोगसमये राजनियोगात्प्रागेव जीजीबाई मर्त्यलोकमुत्ससर्ज । ततस्तस्मिन्निष्कण्टकपीठे समुपविश्य तत्पूर्वपीठाधिकारिणां केशवानन्दसरस्वतीस्वामिनां कंचित्कलङ्कमारोप्य निन्दामारेभे । एतस्मिन्नन्तरे मूलवागलसंस्थानस्थश्रीसदानन्दतीर्थस्वामिनः संचारार्थं गुर्जरदेशं विविशुः । तेषां मर्यादां स्थितिं लोककृतसमर्हणं चावलोक्य मत्सरपरवशचित्तस्तेषां निन्दां तदीयसत्कारप्रतिबन्धं चारेभे । एतत्सर्वं स्वीयचरित्रं स्वयमेव मुद्रयित्वा स्वीययोग्यतां प्रकटीचकार । एतच्च सार्वजनिकम् । तानि च श्रीसदानन्दतीर्थनिन्दातुन्दिलानि प्रखरतरमात्सर्यज्वालाजटिलाक्षरघटितानि तन्मुद्रितपत्राण्युपलभ्य सत्पुरुषाणां भूमण्डलाचार्येत्यादिपरम्पराप्राप्तविरुदावलीविराजमानानां श्रीसदानन्दतीर्थस्वामिनां निन्दां प्रतिमासं प्रतिपक्षं प्रतिदिनं प्रतिघटिकं प्रतिपलं च श्रुत्वा मुद्रितां च दृष्ट्वा संत्रस्तचित्ताः सन्तः द्वारकाप्रान्तनिकटवर्तिनः सुरतनाम्ना प्रसिद्धसूर्यपुरादिपत्तनस्था महाजनाः काशीपुण्यपत्तनमोहमयीत्यादिमहानगरेभ्यः वेदशास्त्रविदः मान्यान्पण्डितानाहूय सादरं सभां मेलयित्वा तस्यां सभायामाहूतान्पण्डितान् सभासदः कृत्वा श्रीमत्परमहंसपरिव्राजकाचार्यवर्यसर्ववेदशास्त्रार्थहृदयज्ञश्रीकृष्णानन्दसरस्वतीस्वामिनः अध्यक्षीकृत्य प्रागुक्तचरित्रो राजराजेश्वरः पीठाधिकारमर्हति श्रीसदानन्दतीर्था

वेति जिज्ञासमानाः सन्तः जोशीत्युपनामकरविशंकरपुत्रभवानीशं-करहस्तेन सभायां कांश्चित्प्रश्नान् तान्पण्डितान् प्रति उपायनान्य-कार्षुः । तेच प्रश्नाः क्रमेणानूद्य समाधीयन्ते.

तत्र प्रथमः प्रश्नः—१ द्वारकापीठस्योपरि पूर्वं संप्रदायप्रवर्तका आचार्याः के बभूवुः सुरेश्वराः पद्मपादा वेति.

तत्रोत्तरम्—यागादिषु पश्चिमदिशायाः सामवेदाधिष्ठितत्वप्र-सिद्धेः सामवेदाधिष्ठितपश्चिमदिगवस्थितद्वारकामठे आचार्याणां परकायप्रवेशसमये तत्त्वमसि तत्त्वमसि तत्त्वमसि राजन्निति स्वी-यमहावाक्येन प्रबोधनलिङ्गेन निश्चितसामवेदाः पद्मपादाचार्या एवेति । तथाच मठाम्नाये द्वारकामठमुपक्रम्य, 'विख्यातं तन्महा-वाक्यं वाक्यं तत्त्वमसीति चे'ति । 'स्वरूपब्रह्मचारीति आचार्यः पद्मपादक इति च । सुरेश्वराचार्यास्तु माधवकृतशंकरदिग्विजये त्रयोदशसर्गे षट्षष्टितमे श्लोके शुक्लयजुरन्तर्गतकण्वशाखीयत्वेन प्रतिपादिताः । तथाच सुरेश्वराचार्यान्प्रकृत्य श्लोकः 'तद्वत्त्वदीया खलु कण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम् । तद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्ति'रिति यजुर्वेदाधिष्ठितदक्षिण-दिगवस्थितशृङ्गेरीपीठे निवेशिताः । तथाच आनन्दगिरिकृतशङ्कर-दिग्विजयेऽपि शृङ्गेरीपीठमुपक्रम्य शृङ्गेर्यां परमगुरुर्द्वादशाब्दं वि-द्यापीठे स्थित्वा बहुशिष्येभ्यः शुद्धाद्वैतविद्यायाः सम्यगुपदेशं कृत्वा तदनन्तरं कंचिच्छिष्यं सुरेश्वराख्यं पीठाध्यक्षं कृत्वा स्वयं निश्चक्राम । तथाच मठाम्नाये दक्षिणमठस्थापनप्रकरणे, 'आचार्यो लोकविश्रुतः । वार्तिकादिब्रह्मविद्याकर्ता यो मुनिपूजितः । सुरेश्वरा-चार्य इति साक्षाद्ब्रह्मावतारकः' इति । युक्ततरं चैतत् शृङ्गेरीमठे सरस्वतीस्थापनेन विश्वरूपाचार्यस्य ब्रह्मावतारत्वेन याजुषत्वेन च दक्षिणदिशो यजुरधिष्ठितत्वेन च विश्वरूपाचार्यस्य दक्षिणपीठाचा-र्यत्वं कथं सर्वज्ञा अप्याचार्याः याजुषस्थले सामवेदिस्थापनं साम-वेदिस्थले याजुषस्थापनमिति अन्यथा कुर्युः.

द्वितीयः प्रश्नः—२ साधारणसंन्यासिनः पीठाचार्यसंन्यासिनश्च दीक्षायां भेदोऽस्ति न वा ?

तत्रोत्तरम्—साधारणसंन्यासिनां पीठस्थसंन्यासिनां च प्रैषोच्चारण-श्रवण-महावाक्योपदेशरूपदीक्षाया एकरूपत्वेऽपि पीठस्थानां स्वयमात्मारामोऽपि धर्मनिष्ठो भूत्वा शिष्यान्धर्मं ज्ञानं चानुशाधीत्याज्ञारूपो विशेषः । इतरेषां तु स्वयमात्मारामतां संपाद्य वैराग्यं संरक्ष्य विषयवासनामुज्झित्वा शरणागतान्प्रति ज्ञानमार्गमनुशाधीत्याज्ञारूपो विशेषः । एषां योगपट्टाधिकारित्वेन योगारूढत्वं व्यक्ततरम् । अत्र प्रमाणं तु योगपट्टः आचार्यपट्ट इति शब्दस्वारस्यम् । आचार्यशब्दार्थस्तु, 'आचिनोति न शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमारभते यस्मादाचार्यस्तेन चोच्यते' इत्यादियोगवार्तिकादिधृते स्मृत्यन्तरे प्रसिद्धः । निष्कर्षस्तु इतरसंन्यासी ज्ञानप्रधानः तत्र प्रमाणं, 'यतेश्चत्वारि कर्माणि पञ्चमं नैव विद्यते । स्नानं शौचं तथा भिक्षा पुनरेकान्तसेवन'मिति । एकान्तसेवनमित्यस्य एकान्तं अव्यभिचारि ब्रह्म । अथवा मनोवागाद्यतीतत्वात् विविक्तं ब्रह्म तस्य सेवनं श्रवणमनननिदिध्यासनानां कर्तृत्वं कारयितृत्वं चेत्यर्थ इति योगपट्टस्य, स्वयंधर्माननुष्ठाय अन्यैरपि अनुष्ठापनं इत्याचार्यपट्टस्य चेति.

तृतीयः प्रश्नः—३ कस्यापि पीठाधिपतेः समाधिभावप्राप्त्यनन्तरं तत्पीठस्योपरि तदुपदिष्टशिष्य एवाधिकारी भवति किंवा साधारणसंन्यास्यपि भवतीति, किंच यदि साधारणसंन्यास्यधिकृतो भवेत्तर्हि तदधिकारदानाधिकारी कः ?

तत्रोत्तरम्—पीठाधिपतौ सिद्धिंगते सति तत्पीठे तदुपदिष्टसंन्यासी अधिकारमर्हति गुरुरिक्थग्रहणे तदीयसच्छिष्यस्यैवाधिकारात् । तथाच याज्ञवल्क्यः, 'वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः । क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिन'इति । तदीयस-

च्छिष्याभावे च, 'समानयोगपट्टकाः पीठस्था अधिकारिणः। अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं हरे'दिति मनूक्तन्यायात्। नच गृहस्थः, असमानधर्मत्वेन अप्रत्यासन्नत्वात्। नापि वानप्रस्थब्रह्मचारिणौ उक्तयुक्तेः। अतएव नापि भिन्नयोगपट्टकः संन्यासी तस्मात् समानयोगपट्टकेष्वपि यः कश्चित्पीठाधिकृतसमानयोगपट्टकः सोऽधिकारमर्हति। तत्र पीठाधिकारस्य समानयोगपट्टस्य च प्रत्यासन्नत्वात्। तस्याप्यलाभे दक्षिणामूर्तिमिव पीठस्थगुरुदेहं सिद्धिंगतं साक्षीकृत्य कंचिद्योग्यं ब्राह्मणं ज्ञातदेशजातिकुलगोत्रनामानमातुराश्रमेण दीक्षयित्वा तत्परम्परानुकूलं योगपट्टं विधाय ब्राह्मणैरधिकारी विधातव्यः तद्धस्तेनैव तदौर्ध्वदेहिकं कारयितव्यं, न कथंचित्साधारणसंन्यास्यधिकारी अप्रत्यासन्नत्वात् तथैव प्रसिद्धशृङ्गेर्यादिमठेषु व्यवहारदर्शनात् बाधाभावात् उपन्यस्तमनुवचनाच्च इतोऽधिकदूषणं त्वग्रे निरूपयिष्यामः। अनेनैव प्रश्नशेषोऽपि दत्तोत्तरः.

चतुर्थः प्रश्नः—४ श्रीमच्छङ्कराचार्यनिर्मितपीठचतुष्टयादतिरिक्ताः पीठशाखा भवितुमर्हन्ति न वा? भवेयुश्चेत्कियत्यस्ताः कानि च तासां नामानि तत्र स्थिता आचार्याः श्रीमच्छङ्कराचार्यपरंपराप्राप्तशिष्या वान्ये वा?

तत्रोत्तरम्—सन्ति शाखामठाः शृङ्गेरीमठस्य तेषां नामानि कुडली-करवीर-पुष्पगिरी-हंपी-अवनी-शिवगङ्गेति षट्[1]। तत्पीठस्था अपि आचार्यपरम्परागता[2] एव.

---

[1] आचार्याणां रिक्थनिरपेक्षाणां रिक्थं तु तदनुरक्तजनतायाः ब्रह्मीभूतेषु तेषु तत्पीठे आचार्यान्तरप्रतिष्ठापनाधिकारोऽपि तादृशजनताया एव। तत्र मतभेदे तु जनताया आचार्यस्य च वैदुष्यमास्तिक्यं च परीक्ष्ये। उदाहृतस्मृतियुक्तयस्तु सामान्यसंन्यासिविषया, उपस्थितसदसत्संन्यासिशिष्यविषया वा.

[2] आचार्यसमकालसंन्यासिशिष्यपरम्परापि कुत्रापि विद्यते?

पञ्चमः प्रश्नः—शृङ्गेरीमठस्य द्वारकामठस्य च योगपट्टाः के के सन्ति?

तत्रोत्तरम्—शृङ्गेरीमठीययोगपट्टाः भारती-सरस्वती-पुरी चेति। तथाच मठाम्नाये तत्प्रकरणे, 'नामानि भारती चेति सरस्वती पुरी तथे'ति । द्वारकामठे 'तीर्थाश्रमौ योगपट्टौ' मठाम्नाये तत्प्रकरणे 'तीर्थाश्रमपदे उभे' इत्युक्तेः । तत्र पीठस्थानां तु शृङ्गेरीमठे भारतीति द्वारकामठे तीर्थ इति अन्यत्र मूलवागलसंस्थाने तीर्थयोगपट्टानामेवाचार्यत्वदर्शनात् आश्रमयोगपट्टवतां क्वापि पीठसंबन्धादर्शनादभिनवकल्पनाया अन्याय्यत्वान्निर्मूलत्वाच्च दक्षिणमठाम्नाये भारतीशब्दवत् पश्चिमाम्नाये तीर्थशब्दस्य प्रथमोपादानात् द्वारकाप्रथमाचार्याणां पद्मपादानां तीर्थयात्राया दिग्विजये लेखदर्शनात्तीर्थप्रियत्वात्तीर्थ इति योगपट्टः तत्परम्परागतानामपि पीठाचार्याणां तीर्थयोगपट्ट एव युक्ततरः । शृङ्गेरीमठे तु भारत्याः स्थापनेन तदाराधकत्वेन च भारतीति योगपट्टः । भारतीसरस्वतीशब्दौ पर्यायौ । तथाच दक्षिणमठाम्नायः शक्तिः श्रीशारदेति चेति । तत्र शारदास्थापनं तु दिग्विजये प्रसिद्धं तस्माच्छृङ्गेरीमठस्यैव शारदामठ इति व्यवहारो युक्तः द्वारकामठस्य तु शारदामठ इति व्यवहारो निर्मूलत्वात्प्रामादिकः

षष्ठः प्रश्नः—६ एकपीठस्योपरि पीठान्तराचार्यशिष्यो यद्यधिकृतो भवेत्तदा योगपट्टो भिन्नो भवेत्स एव वा?

तत्रोत्तरम्—एकस्मिन्पीठे पीठान्तराचार्यशिष्यः नोपवेष्टुमर्हति असन्निहितत्वात् गुरुपरम्पराविच्छेदप्रसङ्गात् अव्यवहितपूर्वकाली-

१ नहि परम्परापरिपालनार्थैव पीठाचार्ययो रचना, अपि तु नास्तिक्यपराभवार्येति तत्र पीठे पीठान्तरसंन्यासिनोपि समर्थस्य प्रतिष्ठायां नापायं पश्यामः । किं कृतं परम्परां पालयद्भिरपि दुर्बलैराचार्यैर्यत्र ते निवसन्ति तत्रैवोत्कलमद्रसौराष्ट्रादिविषयेषु भूयो भेदा भूयांसो नास्तिका आत्मानं मलिनयन्ति । प्रामन-

नगुरुकरकमलसंजातेति लेखविरोधाच्च। अतो योगपट्टविचारः कृतस्तरामिति.

सप्तमः प्रश्नः—७ कियति पूर्वकाले द्वारकापीठस्थानां केशवानन्दस्वामिनां सरस्वतीयोगपट्ट आसीत् तदा ते स्वामिनः कतमपीठाधिकृताचार्येण उपदिष्टा ज्ञातव्याः?

तत्रोत्तरम्—राजराजेश्वरप्राक्कालिका द्वारकामठस्थाः केशवानन्दसरस्वतीनामकाः शृङ्गेरीमठपरम्परागताः तत्परम्परायामेव सरस्वतीयोगपट्टप्रसिद्धेः। एतेन इमेप्येतत्पीठानधिकारिण एवेति विदांकुर्वन्तु न्यायविदः

अष्टमः प्रश्नः—८ श्रीशंकराचार्याणां कः सिद्धांतः?

तत्रोत्तरम्—जीवब्रह्मैक्यरूपं शुद्धाद्वैतम् अत्र प्रमाणं चत्वारो वेदा इतिहासाः पुराणानि आचार्यपादप्रणीताः प्रस्थानत्रयभाष्यादिग्रन्थाश्च.

नवमः प्रश्नः—९ श्रीमदाचार्याणां कस्य देवस्योपासना योग्या भवति?

तत्रोत्तरम्—या परम्पराप्राप्ता सैव। 'यः स्वां देवतामतियजते प्रस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवती'ति तैत्तिरीयश्रुतेः। साच देवता चन्द्रमौलीश्वरः चतुर्मठसाधारणः प्रतिमठं या काचित् विशेषदेवता परम्पराप्राप्ता स्यात्साप्युपास्या.

दशमः प्रश्नः—१० शृङ्गेरीमठस्य कुडलीमठस्य च मुद्रायां विद्याशङ्कर इत्येवाक्षराणि सन्ति। किंच अनयोर्मठयोः शिवप्रा-

---

गरमठसंन्यासिनोऽपि कुलचक्रकुलवीरकुलावधूततत्त्वमजानन्तोऽपि तान्त्रिकावधूताः शूद्रशिष्या भवन्तः कलङ्कयन्ति संन्यासशब्दम्। वस्तुतस्तु मठान्तरशिष्यस्य मठान्तराधीशत्वे शिष्यपरम्पराविच्छेदेऽपि न भवति गुरुपरम्पराविच्छेदः.

१ संज्ञां स्वीकृत्य कर्मधारयः.

धान्यं वर्तते द्वारकामठस्थयोः श्रीकेशवानन्दसरस्वतीश्रीदामोदरानन्दसरस्वतीस्वामिनोः मुद्रायां श्रीरामेत्यक्षराणि सन्ति मुद्राकारस्तु शङ्खचक्राद्यन्यतरसदृशो वर्तते तथा राजराजेश्वरस्य मुद्रायां श्रीद्वारकाधीशो विजयत इत्यक्षराणि सन्ति तर्हि द्वारकामठस्य देवता शिवो विष्णुर्वा ?

तत्रोत्तरम्—द्वारकामठमुद्रिकायां श्रीरामेत्यक्षराणि अनवकाशप्रविष्टानि तत्र रामसंबन्धासंभवात् मुद्राया विष्ण्वायुधाकारतां तु न निषेद्धुमर्हामः मठे कृष्णोपासनाया दर्शनात् । मुद्रायां अक्षरोचितं तु कृष्णेति चन्द्रमौलीश्वरेति वा केशवानन्दसरस्वतीस्वामिदामोदरानन्दसरस्वतीस्वामिनोः प्रमाद एव । राजराजेश्वरमुद्रिकायां द्वारकाधीशो विजयत इत्यक्षराणि न निषेद्धुमर्हामः । मुद्रिकायामधिकाक्षरावलीं तु संप्रदायविरुद्धां निषेद्धुं न काचन कस्यापि भीतिः । द्वारकामठीयदेवता तु कृष्णश्चन्द्रमौलीश्वरश्च

एकादशः प्रश्नः—११ संन्यासानन्तरं गौडद्रविडजात्योर्भेदोऽस्ति न वा किंच स मन्तव्यो न वा ?

तत्रोत्तरम्—नहि चतुर्थाश्रमग्रहणमात्रेण द्रविडगौडादिभेदो निवर्तते अन्यथा ब्राह्मणत्वस्यापि निवृत्तिप्रसंगः । नायं भेदः स्थापनेन तिष्ठति नापि त्यागेन गच्छति किंतु अज्ञाननिवृत्त्या देहाभिमाननिवृत्तौ भेदः स्वयं निवर्तते । सति च देहाभिमाने शतशो निवार्यमाणोऽपि न निवर्तते

द्वादशः प्रश्नः—१२ गौडसंन्यासिनः सकाशात् पञ्चद्राविडजातीयब्राह्मणेन संन्यासोऽङ्गीकर्तव्यो न वा ?

तत्रोत्तरम्—अनापदि शिष्टाचारविरोधात् गौडसंन्यासिनः सकाशात् द्रविडब्राह्मणेन संन्यासो न ग्राह्यः । गृहीतेऽपि संन्यासे

---

१ अभ्यर्हितत्वादल्पाच्तरत्वाद्योचितो गौडस्य पूर्वनिपातः । पूर्वजत्वादार्यमिजनत्वाच्च गौडानामभ्यर्हितत्वम्.

अपाङ्क्तत्वदर्शनात् काशीकर–नाल्यादिषु। ननु श्रीमच्छङ्कराचार्यपरमगुरोर्गौडपादाचार्यस्य गौडत्वप्रसिद्धेः सुरेश्वराचार्यस्याप्याश्रमग्रहणात् प्राङ् मण्डनमिश्र इति मिश्रोपाह्नतया गौडत्वनिश्चयात् तयोरुभयोर्द्रविडादिषु संन्यासपरम्पराप्रवर्तकत्वदर्शनात् युक्तं गौडात्संन्यासग्रहणमिति चेन्न। तेषां गौडपादाचार्याणां सिद्धगुरुत्वात्। गोविन्दभगवत्पादानां संन्यासग्रहणसमये इतरत्र संन्यासानुपलम्भाच्चापद्धर्मत्वान्नायं दोषः। सुरेश्वराचार्याणां निश्चितेपि गौडत्वे ब्रह्मावतारत्वेन जगद्गुरुत्वाव्याहतेर्युक्तं तन्निकटे संन्यासग्रहणं युक्तं च तेषामाचार्यत्वम्। भगवदवतारो रामः कृष्णो वा क्षत्रकुलोत्पन्नः ब्राह्मणैः पूज्यत इति किं सर्वे क्षत्रिया ब्राह्मणैः पूज्या भवेयुः। किमेको विश्वामित्रस्तपःप्रभावादिना ब्राह्मणकुलं प्रविष्ट इति किं सर्वे क्षत्रिया ब्राह्मणजातावापतेयुः। किमेका द्रौपदी स्वर्गसाम्राज्यलक्ष्मीत्वेन पञ्चपतिकेति सर्वाः स्त्रियः पञ्चपतिका भवेयुः। किं पंचपतिका अपि पतिव्रता भवेयुः। बहिःपतिव्रता अपि किं शिष्टमान्या भवेयुः। किं मान्या अपि कदाचिद्भगवत्प्रिया भवेयुरिति। तस्मात् 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न'त्विति वचनमनुसृत्य न द्रविडैर्गौडसकाशात् संन्यासो ग्राह्यः। गौडेषु तथा शिष्टाचारात् गृह्णन्ति चेद्द्रविडात्संन्यासं गृह्णन्तु नाम न वयं निवारयामः। उपन्यस्तवचनविरोधस्तु तैः सोढव्यः। एतेन द्रविडेभ्यो भाष्यकृद्भ्यः सकाशान्मण्डनमिश्रादीनां संन्यासग्रहणं व्याख्यातम्।

---

१ युक्तमेव, संन्यासपर्यन्तमशास्त्रीयस्य तुच्छस्य भेदस्यानुवृत्तेर्गर्हितत्वात्। श्रृङ्गेरीमठे गौडस्वामिनो मण्डनमिश्रस्य स्वामित्वं स्वीकुर्वता श्रीशंकरेण साक्षादस्यार्थस्याङ्गीकृतत्वाच्चेतोऽपि पद्धतरस्याध्ययनाध्यापनसंभवस्य गुरुशिष्यभावस्य परस्परमसंशयं दर्शनाच्च. २ आद्य एव क्षत्रिया इव गौडा द्वितीया इत्यत्र साधकं गमकं नास्त्येव जीवद्भ्यां रामकृष्णाभ्यां पादस्पर्शपूर्वपूजितौ गौडा एव वसिष्ठगर्गौ। समानां वैषम्यमेव च लोकविद्विष्टम्.

गौडपादानां 'नारायणं पद्मभुवं वसिष्ठ'मिति श्लोके नारायणादिशब्दानां व्यक्तिनामत्वेन गौडपादेति शब्दस्यापि व्यक्तिनामत्वौचित्याद्द्रविडत्वकल्पनाया अपि संभवः यथाचार्यशरणागतिसमये त्रोटकच्छन्दोऽनुवाणो ब्राह्मणः त्रोटकाचार्य इति गीयते तथा शुकशरणागतिसमये गुडोपायनपाणिर्ब्राह्मणो गौडपाद इत्यपि तन्नामोपपत्तेः गौडपादशब्दे कर्मधारयः।

त्रयोदशः प्रश्नः—१३ कोपि ब्राह्मणः साधारणसंन्यासिनः सकाशात्संन्यासग्रहणानन्तरं आचार्यान्तरस्य पीठे समुपविश्य रिक्थादिवैभवस्य पात्रं भवति न वा.

तत्रोत्तरम्—मुमुक्षुतया अन्यस्माद्गृहीतसंन्यासः अन्यदीयरिक्थादिवैभवस्य न पात्रम्। पूर्वं प्रैषोच्चारकाले आसादितवस्त्वतिरिक्तस्य त्रैलोक्यस्यापि त्यागात् आसादितदण्डकमण्डल्वादिवस्तुनस्त्यक्तप्रायस्य देहधारणार्थं गुरुब्राह्मणानुज्ञया गृहीतत्वात् तदतिरिक्तग्रहणस्य 'मा गृधः कस्य स्विद्धनमि'ति श्रुत्या निषिद्धत्वात् नान्यदीयपीठरिक्थवैभवादिग्रहणाधिकारी भवति तद्ग्रहणे च वान्ताशित्वदोषप्रसङ्गात्[1].

चतुर्दशः प्रश्नः—१४ मूलवागलसंस्थानस्थाः श्रीमत्सदानन्दतीर्थस्वामिनः कस्य पीठस्य परम्परागताः संन्ति ?

तत्रोत्तरम्—मूलवागलसंस्थानस्थाः श्रीमत्सदानन्दतीर्थस्वामिनः तीर्थेति योगपट्टचिह्नात् अन्यत्र पीठाश्रितत्वाच्च द्वारकापीठसंबन्धिन इति प्रतिभाति.

पञ्चदशः प्रश्नः—१५ आचार्याणां बिरुदावलीमध्ये अनाद्यविच्छिन्नगुरुपरम्पराप्राप्तेति विशेषणमस्ति तस्यार्थो हेतुश्च कः ?

तत्रोत्तरम्—अनाद्यविच्छिन्नगुरुपरम्पराप्राप्तेति विशेषणस्याय-

---

१ एतच्च सर्वसंन्यासिसाधारणम्.

मर्थः प्राप्तेत्यत्र गत्यर्थात्कर्तरि क्तप्रत्यये प्रतिपदविहितद्वितीयासमासे गुरुपरम्परामधिगत इत्यर्थः। तत्र परम्परायां अनाद्यविच्छिन्नेति विशेषणद्वयं, तत्र अनादित्वं च सृष्ट्यादिकालारब्धत्वं, अविच्छिन्नत्वं च अत्रुटितत्वेनाद्ययावदनुवृत्तत्वं एतद्विशेषणद्वयबलादितरोपदिष्टस्य संन्यासिनः पीठसंबन्धाभावः फलम् इतरोपदिष्टस्य पीठस्थगुरुपरम्पराविच्छेदात् विशिष्टविशेषणाघटनात्। अत्र प्रश्ने हेतुशब्दः फलपर्यायः।

षोडशः प्रश्नः—१६ श्रीमत्परमहंससदानन्दतीर्थस्वामिनां श्रीमत्परमहंसराजराजेश्वरस्वामिनां च मध्ये शास्त्ररीत्या द्वारकापीठाधिपतयः के सन्ति?

तत्रोत्तरम्—राजराजेश्वरस्य अन्योपदिष्टत्वेन प्राक्तनप्रश्नोत्तरसमये एव निराकृतत्वात् नाधिकारः। सदानन्दतीर्थानां तु विरुदावल्यां तदीयग्रामभूदानादिपत्रेपूपलब्धायां दुर्वासपुरवराधीश्वरेति विशेषणदर्शनात् स्कन्दपुराणीयद्वारकामाहात्म्ये तृतीयाध्याये द्वारकां प्रकृत्य,'दुर्वाससा तु ऋषिणा रक्षिता तिष्ठते पुरी'ति तस्मिन्नेव माहात्म्ये अष्टात्रिंशाध्याये 'तत्रैव लिङ्गरूपेण दुर्वासाः संव्यवस्थित' इति वचनाभ्यां दुर्वाससा रक्षितं पुरं दुर्वासपुरं दुर्वासोऽधिष्ठितं पुरं दुर्वासपुरमिति व्युत्पत्त्या दुर्वासपुरं द्वारकैव तादृशविरुदावलीविराजमानाः, सदानन्दतीर्था एव द्वारकापीठसंबन्धिन इति भाति। तदीयविरुदावल्यां घनगिरिप्रतिष्ठापनाचार्येति विशेषणं वर्तते तत्र घनगिरिः द्वारकासन्निहितः कश्चित्पर्वतविशेष इति वृद्धाः। दुर्वासपुराधीश्वरत्वात् घनगिरिसिंहासनप्रतिष्ठापकत्वात् अनुच्छिद्यमानपीठस्थितत्वात् तीर्थयोगपट्टयुक्तत्वात् द्वारकाधीश्वरश्रीकृष्णोपासकत्वात् तदीयमुद्रायाः कृष्णनामाङ्कितत्वाच्चन्द्रमौली-

१ अत्र यद्वक्तव्यं तदन्यत्रोक्तम्. २ कदाचिदेतदर्थान्येव प्राक्तनानि प्रश्नोत्तराणि.

श्वरनामाङ्कितत्वाच्च अद्वैतमतावलम्बित्वात् तदीयमठे देशान्तरे च द्वारकामठस्थाः इत्यैतिह्याच्च एषां द्वारकापीठसंबन्धो निराबाध एव गार्हस्थ्यानन्तरं प्राप्तसंन्यासेषु शाखामठेषु दृष्टेष्वपि पीठाधिकारिषु मूलभूते शृङ्गेरीमठे ब्रह्मचर्यादेव प्राप्तसंन्यासानां पीठाधिकारस्य दर्शनात् । युक्तं चैतत् जाबालशाखायां 'गृहाद्वनाद्वा प्रव्रजेत् ब्रह्मचर्यादेव वे'त्यत्रैवकारेण ब्रह्मचर्यादेव प्राप्तसंन्यासस्य मुख्यत्वात् । तथैव मूलबागलसंस्थानेऽपि ब्रह्मचर्यात् प्राप्तसंन्यासानामेव पीठस्थत्वदर्शनाच्च सदानन्दतीर्थानां मूलबागलवासिनां शृङ्गेरीमठस्थानामिव मूलमठपीठाचार्यत्वं निश्चीयते स तेषां मूलमठः तीर्थयोगपट्टलिङ्गेन द्वारकामठ एवेति निश्चेतुं शक्नुमः । तुङ्गभद्रातीरे मूलबागले निवासमात्रं मूलबागलस्य संस्थानमिति व्यवहारस्तु बहुतिथनिवासादिति शिवम् ॥

## एष सर्वः प्रतिवचनादिव्यवहारोऽध्यक्षनिर्वाहितः।
## अनुमन्तॄणां पण्डितानां नामानि—

१ राजाराम शास्त्री वोडस काशीवासी हस्ताक्षर स्वीय.

१ रावजीशास्त्री अग्निहोत्री कल्याणकर हस्ताक्षर खुद्द

### पुणेकर मंडळी.

१ गङ्गाधरशास्त्री दातार स्वहस्ताक्षर.

१ कृष्णशास्त्री राजवाडे हस्ताक्षरखुद्द.

१ रामदीक्षित आपटे हस्ताक्षर स्वीय.

१ नारायणशास्त्री गोडबोले हस्ताक्षर स्वीय.

१ नरसिंहशास्त्री शेजवलकर दस्तुर खुद्द.

१ गणेशशास्त्री जोशी मालवणकर स्वहस्ताक्षर.

१ दामोदरशास्त्री साठे स्वीयहस्ताक्षर

१ आबाचार्य नरसिंहपुरकर स्वीयहस्ताक्षर.

१ हरिशास्त्री पेंडशे स्वीयहस्ताक्षर (भट्टच)

१ शास्त्री देवनारायण मतं (उरपाड).

१ आण्णाशास्त्री (महिसूरकर).

१ देसाई गोपाळजी खंड्ड वसी. (महुवावाला)

१ सीतारामशास्त्री माटे (बडोदेकर).

### मुंबईकर मंडळी.

१ भालचंद्रशास्त्री गुर्जर हिंदुधर्मव्यवस्थापकसभाध्यक्ष हस्ताक्षरखुद्द.

१ शिवरामशास्त्री गोरे दस्तुरखुद्द.

१ काशिनाथशास्त्री जोशी देवाचें गोठणेकर दस्तुरखुद्द.

१ विठ्ठल शिवरामशास्त्री तारळेकर दस्तुरखुद्द.

१ पांडुरंग शिवरामशास्त्री भावे हिंदुधर्मव्यवस्थापकसभेचे कारभारी हल्लीं वस्ती वासिंद दस्तुरखुद्द.

१ नारायणशास्त्री वहुतुले पेणकर दस्तुरखुद्द.

१ नारायण गणेशशास्त्री निजामपुरकर दस्तुरखुद्द हल्लींवस्ती मुंबई.

### सुरतकर मंडळी.

१ शु० पार्वतीशंकरस्य.

१ पंड्यामणिनन्दस्य.

१ बालशास्त्रिणः पुण्यपत्तनस्थस्य.

१ मार्तंडशास्त्रिणः सूर्यपुरस्थस्य.

१ वामनशास्त्रिणः

१ शास्त्रिइच्छाशङ्करस्य.

१ गिरिजाशङ्कर ज्यो०

१ शा० चन्द्रशङ्करस्य.

१ पुराणिक रविशङ्करस्य.

मुद्रयितारः सुरतपत्तनस्थमहाजनाः।

# आतुरसंन्यासपरामर्शः ॥ १२ ॥

आतुराणां च संन्यासे न विधिर्नैव च क्रिया । प्रैपमात्रं समुश्चार्य संन्यासं तत्र पूरयेत् । आतुरसंबन्धिसंन्यासे न विधिः धर्मतः पुत्रानुत्पाद्य जीविकां कल्पयित्वा देवानिष्ट्वा कृतकृत्यः पुत्रे गार्हस्थ्यभारं समारोप्यात्मन्यग्नीन्समारोप्य प्रव्रजेदिति यः शास्त्रसिद्धो विधिः स नास्ति असंभवात्संन्यासधर्मस्य बलवत्त्वात् । नच दण्डं न कमण्डलुमित्यादिनिषेध उपपद्यते । प्रैपोच्चार एवाश्रमः । गुरोः शिष्यस्य वा मुमूर्षुत्वे सम एव न्यायः । तादृशप्रसङ्गस्य पुनरलाभात् । न परीक्षितः शिष्यः पुनर्लभ्येत गुरुर्वा । किं बहु वक्तव्यं प्रैपोच्चारमात्रः संन्यासः स एव ब्रह्मीभाव इति स्मृतेरर्थोऽत एव न विधिर्नैव च क्रियेत्युपपन्नम् । किमवशिष्येत ब्रह्मीभावे संप्राप्ते इति शिवम् ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृत आतुरसंन्यासपरामर्शः ॥

---

# संन्यासात्परावृत्तस्य मीमांसा ॥ १३ ॥

सं० १९५७ शके १८२२ ज्येष्ठशुक्लप्रतिपदि भौमे औदीच्यकुलाग्रणीः श्रीकानजीशर्मा पृच्छति स्म । कश्चित्कृतसंन्यासः परावृत्तः संन्यासात्कस्यचित्पण्डितस्य बलमाश्रित्य तत्समुचितं नवेति ॥

तद्वायमुपन्यासः । संन्यासोपनिषदि यथा—'संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः । संन्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदु'रिति श्रवणाद्वेदितव्यमस्योत्तरम् । यत्संन्यासो नाम पूर्णं ब्राह्मण्यम् । किं बहुना । धर्मभूयिष्ठेऽस्मिन्भरतखण्डे वर्णाश्रमव्यवस्थानिबद्धे चत्वार आश्रमास्तेपु कलौ वानप्रस्थाश्रमो निषिद्धः उर्वरितेपु त्रयः संस्कारा उपनयनं १ विवाहः २ संन्यास ३ इति त्र-

योपि न परावर्तन्ते। यः परावर्तयेत्स पतित इति प्रसिद्धं लोकशास्त्रयोः। पतितेष्वाचार्या दण्डधरा इत्यपि प्रसिद्धम्। इदमेवाचार्यत्वं। तस्मात्पतितापतितविभागोऽवश्यं विधेयो यद्याचार्यत्वं जागर्ति। शास्त्रीयाः संस्कारा अचेतनान्तं प्रवर्तन्ते अश्वत्थस्योपनयनं यथा। मतमिदं श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीस्वामिनाम्। सं० १९५७ शके १८२२ ज्ये० शु० ७

मुद्रयिता कानजीशर्मा उपाध्यायोपाभिधः॥

---

# संन्यासिपादुकामीमांसा॥ १४॥

नमः शास्त्राय गुरवे मनुष्याणामनादये।
यदालम्ब्यैव मानुष्यं फलाय परिकल्पते॥ १॥
उपानद्धारणं भिक्षोरयुक्तं युक्तमेव वा।
इति मीमांस्यते तद्वन्मस्कर्यपि विदांमुदे॥ २॥

अथ संन्यासिनां शुचितमानामुपानद्धारणमयुक्तं मृतपशुचर्ममय्यास्तस्या अशुचितमत्वादिति केचित्। संधार्येत्यपरे। चर्ममय्या अपि तस्याः शौचाभिधानात्। 'शुष्कचर्म तु काष्ठवत्'। 'चर्म तैलेन शुध्यती'ति च। अत्र संदिग्ध आह। यदि धारणाग्रहस्तर्हि मृगचर्ममयी संधार्येति। मृगचर्मणः संध्याजपादिषु विनियोगदर्शनेन शुचित्वनिश्चयादिति। असंदिग्ध आह। आनडुहचर्मणोऽपि कर्मविशेषे विनियोगदर्शनाच्छुचित्वमिति। संदिग्धः। यस्मिन्कर्मणि यद्विनियुक्तं तत्रैव तद्ग्राह्यमिति। असंदिग्धः। शुष्कचर्म तु काष्ठवत्, चर्म तैलेन शुध्यतीति न किंचित्कर्माङ्गतया शौचं विधीयते किंतु स्वरूपेणात एवोपानद्युगं समावर्तने विधीयते गृह्ये। यथा वैणवं दण्डमुपानद्युगं छत्रं स्रजमुन्मर्दनमनुलेपनमाञ्जनमुष्णीषमिति। संदिग्धः। आस्तां तर्हि समावृत्तस्य गृहिण इति। असं-

दिग्धः । अस्तु गृहिणोऽपि भिक्षोरपीति । यथा भिक्षुमुपक्रम्य । 'नोपानद्भ्यां विना गच्छेन्मार्गे पद्कण्टकावृते । उदपात्रं च भिक्षा च दुष्येद्वत उपानहौ । उपानहौ सदा धार्ये भिक्षाकाले विशेषत' इति विधानाद्विश्वेश्वरपद्धतौ । अत्र विशेषपदोपादानान्नियमः सूच्यत इति । संदिग्धः । मृगचर्ममयी धार्येति । असंदिग्धः । जपादौ मृगचर्मणो विनियोगदर्शनाद्यत्र यद्विहितं तत्रैव तद्ग्राह्यमिति त्वदभ्युपगमात्परिशिष्टपशुचर्ममयी ग्राह्येति । संदिग्धः । उपानहौ सदा धार्येति स्मृतौ चर्मशब्दानुपादानाद्वस्त्रमयी धार्येति । असंदिग्धः । उपानच्छब्दस्य चर्ममय्यां रूढेरन्यथा समावर्त्तनेऽपि तदप्राप्तेः । मार्गे पद्कंटकावृत इति हेतुकथनसमाधानानुपपत्तेश्च वस्त्रमयीग्रहणे । निष्टीवनं मूत्रं पुरीषमुच्छिष्टं शर्कराः कण्टका इति पद् । नैते कण्टका वस्त्रमय्या निवार्यन्त इति । संदिग्धः । उपानच्छब्दस्य काष्ठपादुकायां लक्षणा न सोपानत्को मूत्रपुरीषे कुर्यादितियत् इति । असंदिग्धः । 'यः काष्ठपादुकारूढो गेहाद्गेहान्तरं व्रजेत् । छेत्तव्यौ चरणौ तस्य नान्यो दंडो विधीयत'इति स्वस्थानमात्रोपयोगात्तस्या इति । तस्माच्चर्ममयोपानद्धारणं मस्करिणां विहितं नित्यमिति सिद्धम् । संदिग्धः । कोसावभिधीयते मस्करीति । असंदिग्धः । किं नाधीतं महामुनेः पदवाक्यप्रमाणपारावारपारीणस्य पाणिनेः शास्त्रम् । 'मस्करमस्करिणौ वेणुपरिव्राजकयो'रिति सूत्रम् । मकरशब्दस्य सुडागमे मस्करो वेणुः परिव्राजको मस्करीति । संदिग्धः । कस्मात्परिव्राजके मस्करीति निपातः स्यादेव मतुबर्थेन संसिद्धिः । असंदिग्धः । स्यादेव तथा परमत्र बहूनि प्रयोजनानि विवक्षितानि प्रत्ययान्तरनिषेधो गृहस्थे प्रवृत्त्यभावो परिव्राजके मस्करसंबन्धनियमाभावश्चेति । यतो मस्करिशब्दप्रवृत्तिनिमित्तं परिव्राजकत्वं नमस्कारसंबन्धः । अतएवारुण्युपनिषदि संन्यासमभिधाय गोसर्पनिवारणार्थं दण्ड आत्मोपकारार्थं

लोकोपकारार्थं चेति लौकिकत्वमभिहितं। आत्मोपकारो भिक्षादिसत्कारः। लोकोपकारो वन्दनादिना पुण्यलाभः। गोसर्पनिवारणं तु प्रसिद्धं प्रयोजनम् एतेनाविद्वद्विषयो दण्ड इति सिद्धम्। ब्रह्मोपनिषदि कुटीचको बहूदको हंसः परमहंसस्तुरीयातीतोऽवधूत इति षड्विधं संन्यासमभिधाय व्यवस्थोक्ता। कुटीचकबहूदकयोस्त्रिदण्डमूर्ध्वपुण्ड्रमृतुक्षौरं श्रवणाधिकार इति। हंसस्यैकदण्ड ऊर्ध्वपुण्ड्रमृतुक्षौरं मननाधिकार इति। परमहंसस्यैकदण्ड उद्धूलनं न क्षौरं कुर्याच्चेदयने निदिध्यासाधिकार इति। अतएव प्रणवमहावाक्योपदेश उपपद्यते। पूर्वेषां त्रयाणां न तदधिकारः किंत्वष्टाक्षराधिकारः मूर्तिपूजाधिकारश्च। तुरीयातीतावधूतयोर्न किंचिच्छिष्योद्धारमात्रं कर्म। कः कुर्यादन्यः। विविदिषासंन्यासं कृत्वा विद्वद्दशामागतस्तुरीयातीतः। विद्वद्दशां संपाद्य कृतसंन्यासोऽवधूतः। नानयोर्दण्डकमण्डल्वादिनियमः सर्वोत्तीर्णत्वात्। एनयोरेवोपदेशाधिकारो योग्यत्वात्। संदिग्धः। चित्रमेषोऽधिकारो यथेष्टचारिणोः। असंदिग्धः। नैतच्चित्तचित्रं पाशच्छेदाय कृतसंन्यासयोः पाशच्छेदो गुणः। 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचि'दिति गीतायाम्। अतएवैतज्जगन्मृगजलयन्तो दूरीकुर्वतो वा दृष्टेः। अधिकारश्चर्या च समर्पितानयोर्भगवता। 'अव्यक्तलिङ्गोऽव्यक्तार्थोमनीष्युन्मत्तवालवत्' इति। 'मौने मौनी गुणिनि गुणवान्भोगिनि प्राप्तभोगो मूर्खे मूर्खः सुहृदि सुहृदः पण्डिते पण्डितश्च। वाले बालो युवतिषु युवा वाग्मिनि प्रौढवाग्मी धन्यः कोऽपि त्रिभुवनजयी योऽवधूतेऽवधूतः॥' इत्याचार्याश्चर्यामाहुरेकीकृत्य द्वावपि। एते षडपि मस्करिशब्दाः। दंडित्वं सकलसाधारणं मस्करित्वं कृतसंन्यासासाधारणं। अत एवामरसिंहः 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी'ति संन्यासपर्यायेष्वाह। मस्करशब्दोऽपि संन्यासिविधृतवेणावेवान्यथा-

मस्करिनिपातवैयर्थ्यापत्तेः साहचर्याच्च। संदिग्धः। अस्तु मस्करो मुद्राभेदः कस्मादिति। असंदिग्धः। लौकिक्यस्ताः संप्रदायद्योतनार्थाः प्रबोधकरणार्थाश्च। अतएव भिद्यन्ते। संदिग्धः। दण्डे देवर्षिपितृमये तर्पणं कस्मादिति। असंदिग्धः। अच्छिन्नपाशानां त्वदुक्तहेतोरिति। संदिग्धः। आस्तां मस्करिणामुपानद्धारणं ब्रह्मचारिणोऽपि प्राप्तं तुल्यन्यायान्मार्गस्य कण्टकावृतत्वान्माधुकराचरणाच्च। असंदिग्धः। सत्यं तुल्यो न्यायः। परंतु समावर्तने वैणवदण्डेन सहचारिणी न ब्रह्मचारिणा लब्धोपानत्काष्ठपादुका वा अतस्तद्धारणं तेषां प्रमादः। तथा काष्ठपादुकाधारणं गृहस्थानां प्रमादः। चर्मशङ्कयोपानत्त्यागो यतीनां प्रमादः। तथा काष्ठपादुकानारुह्य गेहान्तरगमनं यतीनां प्रमादः। शास्त्रमनवलोक्योपालम्भ इतरेषां प्रमादः। यथा यागे प्रत्यक्षपशुनिन्देत्युपरम्यते। संदिग्धः। शतमुक्तमपि न मन्यते मयेति। असंदिग्धः। भवज्जातीया भवादृशा एव। सा जातिरन्यैव या युक्तिमच्छास्त्रं मनुते तनुते च तथेति। महापुण्येन लभते मूर्खेभ्यस्तु यशः श्रियम्। विद्वद्भ्यस्तु कुलीनेभ्यः सहजैव पदेपदे॥ १॥ पामराणां मकारश्चेलुप्येत कृपया हरेः। पारं लब्ध्वा कृतार्थानि शास्त्राणि सकलान्यपि॥ १॥

'दीपं शूर्पं तथा शय्यां पादत्राणं च मार्जनीम्।
स्नानांते संस्पृशेद्यस्तु पुनःस्नानेन शुध्यती'ति गृहस्थमभिधत्ते।
खनेत्रगजचन्द्राब्दे शालिवाहमहीपतेः।
मीमांसेयं समुद्भूद्भिक्षूणां भयशातनी॥ १॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीनिगदिता मस्करिपादुकामीमांसा संक्षेपः॥

---

१ कस्यचिद्वादिनो मुखमुद्रणाय प्रौढिवाद आदृतः स्वामिपादैः।

# भैरवाष्टमीनिर्णयः ॥ १५ ॥

श्रीकाशिकां गुरोर्गेहं गुरोर्गेहं च काशिकाम्।
वेद वेद स पूतात्मा गुरुं विश्वेश्वरं मिथः ॥ १ ॥
भीरूणां धर्महानिभ्यस्त्राता भैरव उच्यते।
वशंवदो मुमुक्षूणां बलमस्तु सदा मम ॥ २ ॥

स्वतःप्रमाणेन वेदेनोपदिष्टं 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विद्यतेऽयनाये'ति कैवल्यस्य ज्ञानैकसाध्यत्वं तद्रूपत्वाद्विधायेतरसाधनसाध्यत्वं निषिध्यते तस्य तद्रूपत्वाभावादनया श्रुत्या। श्रुत्यन्तरं चाह 'आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः' इति ज्ञानस्य दौर्लभ्यम्। अपरा चाह 'क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ती'ति साधनदौर्लभ्यम्। अतएवाह वसिष्ठः—'ईश्वरानुग्रहादेवं पुंसामद्वैतवासना। महाभयकृतत्राणा द्वित्राणामेव जायते' इति। श्रीभगवानप्याह 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः।' इति। यततां मुमुक्षूणां सिद्धानां सिद्ध्या ब्रह्मदीक्षया दीक्षितानां कश्चित्पदवाक्यप्रमाणपारावारपारीणो व्युत्पन्नतमो मां कैवल्यरूपं तत्त्वतो वेत्ति। येन बलेन जिज्ञासति सा श्रुतिरेव यत्र मयि मूका कुण्ठिता च तत्र कियानसौ प्रमातेति प्रमातृत्वं त्यजति तदा सोहमेव कैवल्यरूपो भवाम्येतत्तत्वतो वेदनं दुर्घटं मत्वा सर्वमनोरथसिद्धिशालिन्यामानन्दवनाभिधायां श्रीकाशिकायां वासो विहितो यत्र पदवाक्यप्रमाणपारावारपारीणः सन्नध्येता मुक्तो भवति। यथाह यजुः—'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्तथा बाल्यं पाण्डित्यं च निर्विद्याथ मुनिर्भवति मौनं चामौनं च निर्विद्याथ ब्राह्मणः' इति। ब्राह्मणो जात्या ब्रह्मदीक्षाधिकारी पाण्डित्यं प्रमाणपारावारः तं निर्विद्य प्रविश्य बा-

त्येन बलं श्रुतार्थनिष्ठा तद्धितोपायेन मननेन तिष्ठासेत्कालं नयेत्। तथा तेन कालयापनोपायेन काले नीते सति बाल्यमुपपत्तिचिन्तनं पाण्डित्यं प्रमाणानामेकवाक्यतासामर्थ्यं निर्विद्य परामृश्येदमेव युक्ततरमिति निश्चित्य अथ निश्चयोत्तरकालयापनानन्तरं मुनिर्भवति । यदुक्तं श्रुत्वा गुरुणा वा 'एकमेवाद्वितीयं ब्रह्मे'ति तन्निदिध्यासपरो भवति । अथेत्यनुवर्तते । निदिध्यासकालयापनानन्तरं मौनं चामौनं च व्युत्थानसमाधी चकारौ समुच्चयार्थावन्योन्यं यन्मौनं तदमौनं यदमौनं तन्मौनं समाधिरपि व्युत्थानं व्युत्थानमपि समाधिरद्वितीये तत्त्वे तदसंभवात्। तौ व्युत्थानसमाधी एकरूपौ ज्ञात्वा निर्विद्य पारं गत्वाऽथ समाधिव्युत्थानैक्यरूपभूमिकापाकानन्तरं ब्राह्मणो यथार्थः जातिसंपन्नो गुणसंपन्नश्चेति । एतदन्तं ब्राह्मण्यमिति श्रुत्यर्थः ॥

पिता सूते ब्राह्मणं गुरुः करोति ब्राह्मणमिति श्रुतितात्पर्यम्। यो हि जातिब्राह्मणः स एव कालेन ब्राह्मणो भवति यथा यो हि बीजे स्थित आम्रः स एव फलकाले पर्यवस्यति नात्र विवादः कस्यचित्। एतादृशं ब्राह्मण्यं श्रीकाशिकायाम्। अतएवोपदेशतारतम्यं लोकान्तरलाभो व्यासलिखितो न्यायसंमतोऽतः कथमपि नानधिकारिणो ज्ञानमिति सत्यं तथापि मोचयत्येव काशी । यत्र हि 'अभिजानामि ब्राह्मणमाख्यातारं विचक्षणं । परं हि तत्परं ब्रह्म जानात्येव च ब्राह्मण'इति सनत्सुजातोक्तलक्षणलक्षितः श्रीविश्वेश्वरो ब्राह्मणतमोऽध्यापकोस्ति । तस्माद्यथा यथा ब्राह्मण्यमुज्ज्वलं तथातथा ब्राह्मणतमा गुरवो लभ्यन्ते केनचित्कदाचित्। अत्र समुद्धारदीक्षाधरोऽखण्डगुरुः सर्वविद्याधीश्वरो जीवाः सर्वे विद्यार्थिनः श्रीभैरवोऽधिकारसिद्धिदाता दण्डपाणिरधिकारप्रदर्शयिता तत्र किं विचार्यं किं वक्तव्यं वा कैवल्यान्तं यत्र व्युत्पत्तिस्तृप्त्यन्तं फलमिति तत्र श्रीगुरुगेहे श्रीकाशिकायामवश्यं विद्यार्थिना वासो

विधेय इति प्राप्ते वासविधिमुक्त्वा तत्र जातापराधानां निवृत्तये प्रायश्चित्तमाह वार्षिकं यथा वेदानां यातयामतानिवृत्तये किंचित्कर्म। यथाह श्रीशिवः श्रीजगदम्बां प्रति शिवरहस्ये 'मलमूत्रादिकं काश्यां त्यक्त्वापि बहुधा नरैः। बहुधैव तथा कार्यं प्रायश्चित्तं यथाविधि।' बहुधैवेति प्रतिवर्षमित्यर्थः। तस्य नित्यत्वमाह 'तादृशैर्यत्नतः कार्यं प्रायश्चित्तं मयोदितम्। अन्यथा यातनां घोरां प्राप्नुवन्ति न संशयः।' तादृशैः शिशुपशुवृद्धातुरमुक्तेतरैः। प्रायश्चित्तस्वरूपमाह 'श्रीकालभैरवप्रान्ते कुण्डमस्त्येकमुत्तमम्। कालाष्टमीदिने तत्र स्नानं कार्यं विधानतः। तत्कुण्डनिकटे रम्यं लिङ्गं कालेश्वराभिधम्। भैरवस्थापितं तिष्ठत्येकं पापौघनाशनम्। तत्पूजनं यथाशास्त्रं कार्यं विल्वदलादिभिः। ततः पूजा यथाशास्त्रं कर्तव्या भैरवस्य च। यथाशास्त्रं नयथेच्छमित्यर्थः। तीर्थस्नानं लिङ्गपूजनं च भैरवपूजाङ्गम्। नियमानाह 'प्रदक्षिणनमस्काराः कार्याश्चाष्टोत्तरं शतम्। जागरेणोपवासेन प्रीणनीयो हि भैरवः।' व्रतपूर्त्युपायमाह। 'शुचिभिस्तैलपक्वान्नैः शैवा ब्राह्मणपुङ्गवाः। भोजनीयाः प्रयत्नेन भैरवप्रीतिकामुकैः।' स्वगृहनिर्मितैश्चणकवटकैः शैवा विद्यार्थिनोऽधिकारिणः। श्रीभैरवो विद्यार्थिनां शास्ता तत्प्रीत्याऽपराधा दह्यन्त इति भावः॥

निर्दिष्टां कालाष्टमीमाह। कालाष्टमीति विज्ञेया कार्तिकस्यासिताष्टमी। तस्यामुपोषणं कार्यं तथा जागरणं निशि। पूजाप्युपलक्षिता। एतद्व्रतप्रवृत्तिकालमाह 'पुरा राथन्तरे कल्पे वसिष्ठाद्या मुनीश्वराः। देवाश्चन्द्रादयः सर्वे काश्यां संपूज्य मां विभुम्। मुनीश्वराः श्रीगुरुकुलवासतत्त्ववेदिनः। मां विभुं सर्वविद्येश्वरमीशानं विश्वेश्वरम्। 'नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ। कृत्तिवासेश्वरं प्रापुर्बिल्वपत्रादिसाधनाः।' रवेः प्राप्तिक्रियायां विनियोगः। 'कृत्तिवासेश्वरं सम्यक् पूजयित्वा ततः परम्। ध्यायन्तः शङ्करं नित्यमुप-

विष्टाः स्थिरासनाः ॥' नित्यमनित्येन ध्यातव्यमित्यर्थः । श्रीभैरवावतारात्प्राक् कृत्तिवासेश्वरपूजया प्रायश्चित्तं संपादितमासीदिति गम्यते । तत्र कलिप्रवेशमाह 'तदानीमागतो ब्रह्मा कृत्तिवासेश्वरालयम् । रिक्तपाणिरनभ्यर्च्य शिवं मां स तु संस्थितः ॥' तदानीमिति नित्यकर्मसंपाद्याचरितप्रायश्चित्तेषु महर्षिषु शिवं मां यथार्थगुरुं सर्वविद्याधीश्वरं । 'तदानीं विस्मिताः सर्वे वसिष्ठाद्या मुनीश्वराः । तमूचुः श्रान्तमनसः स्मयाविष्टमुदङ्मुखम् ॥' तदानीमदृष्टपूर्वे गुर्वपमाने सति । स्मयेत्यादिलक्षणकथनम् । यदूचुस्तदाह 'किं ब्रह्मन्देवदेवेशं शङ्करं साम्बमव्ययम् । अभ्यर्च्य तमनभ्यर्च्य रिक्तपाणिरुपस्थित'इत्यादित्रयोदशभिः श्लोकैः । तदा स्वाहङ्कारहेतुमाह ब्रह्मा । 'वेदाः सृष्टा मया पूर्वं सृष्टा लोका मया पुरा । मदन्यः सर्जको लोके नास्ति पूज्योऽपि सर्वथे'त्यादि पाण्डित्यं पराक्रमं च प्रदर्शयति सति ब्रह्मणि विष्णुरर्घ्यपाणिरुपस्थितोऽभिषेकपुरःसरं यथाशास्त्रं तुष्टिपूर्वं मां कृत्तिवासेश्वरनामानं वैराग्यसीमानं संपूज्य श्रीपञ्चाक्षरीं ब्रह्मविद्यां जपन्समाधौ निविष्टस्तदा कलिनिविष्टमनाः । 'सभा वा न प्रवेष्टव्या वक्तव्यं वा सुभाषितम् । अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी'ति शास्त्रं विस्मृत्य ब्रह्मा । 'उवाच वचनं भ्रान्तः क्रोधमुत्पादयन्हरेः । असंपूज्यैव पूजार्हं मामयं विष्णुरुद्धतः । शूलिपूजां करोत्यत्र भ्रान्तोऽयं नात्र संशयः' इति । मूढः परश्रेयोविघातकृतार्थः । किमाश्चर्यं यथोक्तम् । 'ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छती'ति । संपादिता बह्वी विद्या संपादितोऽपि पराक्रमो व्यर्थप्रयास एव परमेश्वर्या अनुग्रहं विनेति तात्पर्यम् । तदनुग्रहवान्विष्णुः । 'इत्युदीरितमाकर्ण्य वचनं तद्विधेर्हरिः । पूजां समाप्य तदनु जगाद वचनं तदा ॥' पूजां समाप्य समाधेरुत्थाय । तदा श्रेयोविघ्ने समुपस्थिते सति समाप्यन्ता पूजेति प्रकरणतात्पर्यम् ।

यदुक्तं तदाह शिवः शिवां 'हाहा दुर्भग दुर्बुद्धे किमेवं वक्तुमर्हसि। कथं भ्रान्तोऽद्य जातोऽसि शुभं नाद्य तु दृश्यते।' इत्यादि बहु। अन्ते चोपसंहृतम् 'अशैवोयं दुराचारः स्थापनीयो न सर्वथा। अशैवशिक्षा कर्तव्या देवेश त्रिपुरान्तक। अशैवः अविदितश्रेयोमार्गः दुराचारः अप्राप्तकर्मकर्ता अयं विशेषणद्वयसंपन्नो ब्रह्मा। त्रिपुरान्तकेति प्रभोर्मेऽवश्यं कर्मोक्तम्। तस्य च फलं। नो चेदधर्मवृद्धिस्तु भविष्यति न संशयः। अधर्मवृद्ध्या देवानां दुःखवृद्धिर्भविष्यति। अधर्मवृद्धिः श्रेयोविघातवृद्धिः। प्रभूणामग्रे वक्तुमपि वेत्ति विष्णुः। 'इत्युक्त्वा प्रणतो विष्णुः स ऋषिः ससुरस्तदा। प्रसीदेश प्रसीदेश प्रसीदेति वदन्मुहुः॥' प्रासं प्रसङ्गं। 'तदोग्ररूपादनघान्मत्तः श्रीकालभैरवः। आविरासीत्तदा लोकान्भीषयन्निखिलानपि।' तदा सदोदासीनस्यापि प्रभोर्मम न्यायतो दण्डदानप्रसङ्गात्कोपे समुत्पन्ने सति। अनघात् अनुल्लङ्घितन्यायात्। तदावतारसमय एव। एक उग्ररूपादित्यनेन द्वितीयो भीषयन्नित्यनेनान्वितस्तदाशब्दस्तत्रैकं तदाशब्दं मध्याह्न इति केचिद्व्याकुर्वन्ति तच्चिन्त्यम्। मध्याह्नस्यानुपस्थितेः सर्वनामत्वेऽपि तच्छब्दस्य। व्यर्थ एष प्रयासो महातां यो हि मध्याह्नावताराग्रहः। कथमप्यङ्गीकृतेऽपि मध्याह्ने प्रदोषे स्थापनोत्तरं पूजाया वक्ष्यमाणत्वान्न मनोरथसिद्धिः। नन्ववतारलिङ्गेन रामकृष्णादिवत्तत्कालपूजानुमीयत इति चेच्छ्रुतत्वात्प्रदोषपूजया बाध्येत। यथाहुः 'श्रुतिलिङ्गप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षादि'ति। अतएव तैरेव भट्टै रात्रिव्रतत्वमङ्गीकृतं कर्मत्रयात्मकत्वाद्व्रतस्येति। वस्तुतस्तु नक्तंदिवात्मकं व्रतम्। दिवापि किंचिद्रात्रावपि किंचित्कर्म। तस्य भीषणहेतव उक्ता व्याप्यायं सप्तपातालानित्यादिभिरष्टभिः श्लोकैस्तदा 'भीषास्माद्वातः पवते भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम'. इति श्रुतिसमन्वयो

दर्शितो दृष्टश्च । ततः स भैरवो लोकान्भीषयन्निखिलानपि । प्रणम्य मामुवाचेदं वचनं विनयान्वितः । यो हि न लोकभीषणः स न प्रभोर्दण्ड इति भावः । विनयान्वितो दत्ताधिकारस्मरणात् । लब्धेऽप्यधिकारे महान्तो नाविनीता भवन्तीति तात्पर्यम् । शंभो किं करवाण्यद्येत्यादिश्लोकचतुष्टयोपपादितं वचनमुपसंजहार । मयोग्रतररूपेण तूष्णीं स्थातुं न शक्यते । देवोत्तम महादेव हराज्ञापय मां विभो । प्रभुणोद्यतो दण्डस्तूष्णीं न स्थापनीय इति भावः । एवमुक्तो भैरवेण प्रणतश्च मुहुर्मुहुः । तदा ब्रह्मशिरश्छेदं कुरुष्वेत्युक्तवानहम् । तदा न्याये दण्डे च समुद्यते सति । 'तदा तस्य शिरश्छिन्नं प्रथमं तु शिरस्तदा । जगाम नागनिलयं प्रलपन् सत्वरं शिवे ॥' प्रलपन् अहो विन्नसन्तोषफलमित्याम्रेडन् । तत्र च नागाधिपः शेषः परिचितं छिन्नं ब्रह्मशिरोऽवलोक्य बहूंस्तस्यापराधान्संभाव्याकाले प्रलयं निश्चित्याह मनसि । 'समयः प्रलयस्यास्तु मास्तु वायं तथाप्यहम् । काशीं प्रति गमिष्यामि यत्र प्रलयभीर्न मे ॥' यत्र श्रीविश्वेश्वरोऽजरामरविद्यामध्यापयति अतएव त्रिकण्टकविराजितेत्युच्यते । त्रिकण्टकः प्रणवः । प्राप्य च तां परविद्याप्रचारिणीमात्मानं कृतकृत्यं मन्वानः फणिराट् । 'ततः सरत्नपुष्पाद्यैर्विश्वेशं मां सनातनम् । संपूज्य नित्ययात्रादि सर्वं कर्म चकार सः ॥' सनातनमखण्डगुरुं । सर्वं शास्त्रविहितम् । रत्नानि स्वधनं दक्षिणायै । स च चिरतरमत्सेवया श्रीकाशीवासस्वरूपमर्मज्ञः । यात्राया नित्यत्वविशेषणात् यथोपलब्धोपनयनानां संध्या नित्या तथा लब्धकाशेः पुण्यराशेः काचिद्यात्रा नित्या । यथोपनयं संरक्ष्यते तया तथा यात्रया काशीलाभः । ततस्तद्दिनप्राप्तं कर्म चकार । 'आदिभैरवमभ्यर्च्य धूपदीपादिभिस्ततः । कृत्तिवासेश्वरं द्रष्टुं पुष्पपाणिरुपाययौ ॥' राथंतरकल्पात्पूर्वं तेन भैरवेण कृत्तिवासेश्वरेण च चारितार्थ्यं वार्षिकप्रायश्चित्तस्य सांप्रतिकावतारानन्त-

रमेषा तृतीयपूजोपस्थापिता। 'श्रीकालभैरवं दृष्ट्वा भीमरूपं भयानकम्। चकम्पे मूर्च्छितः शेषः पपात पृथिवीतले।' 'महद्भयं वज्रमुद्यत'मिति श्रुतेस्तदा जागृतेः। एतस्योद्यतदण्डस्याग्रे क उत्थातुमर्हतीति मत्वोत्थापिता अभयहस्तेन देवाः सप्तर्षयः सफणयस्ते च तं समुद्यतं प्रभोर्दण्डमनुकूलीकर्तुं बहुभिः स्तोत्रैः सामर्थ्यप्रदर्शनेन शमयामासुः। प्रशमिते च तस्मिन् स्तोत्रतात्पर्यमुपसंजह्रुः। 'द्रष्टुं न शक्यते घोरं तवेदं रूपमीदृशम्। सौम्यरूपं महेशान प्रसीद करुणाकरे'ति। कृतकार्यस्य प्रभोर्दण्डस्य सदापि घोररूपत्वे प्रजास्थितिरेव दुर्घटेति शम एव न्यायः सदेति भावः।

न्यायमनुसृत्य प्रशमिते तस्मिन् स्वमनोरथसिद्धिं प्रदर्शयति स्म विष्णुर्न्यायप्राप्ताम्। 'दुष्टस्यैवं मता शिक्षा शिवद्रोहाय तस्य तु। शिक्षेयमेव सर्वेश अशैवानां दुरात्मनाम्॥' अशैवानां गुरुसंप्रदायविच्छेदिनाम्। नाशिवो गुरुर्भवति इति न्यायमुक्त्वा। 'उत्साहोऽथ महानासीन्मम श्रीकालभैरवः। दुरात्माऽयं शिवद्रोही निहतोऽयं यतस्त्वया॥' अतएवार्जुनं प्रति श्वेतवाराहकल्पे 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं

---

१ कोऽयं न्याय इति नावगम्यते। सिद्धान्ते ब्रह्मविष्णुशिवानां भेदस्य वैरस्य चाश्रुतेस्तारतम्यकृते क्रियमाणप्रयास एवान्यायः। पामरप्रकृतिसिद्धेऽपि भेदे तारतम्ये वा ज्येष्ठस्य हिरण्यगर्भस्थानीयस्य पितामहस्य ब्रह्मणोऽवराभ्यां विष्णुशिवाभ्यां क्रियमाणोऽपराध एवान्यायः। रुद्राणामन्यतमः शिवः। आदित्यानामन्यतमो विष्णुरित्यवरत्वमनयोः स्पष्टमेव। अवैदिकशैववैष्णवसंप्रदाययोरिव ब्राह्मेन्द्रसंप्रदाययोरपि नास्ति सद्भाव इत्यनयोः पदेपदेऽभ्यस्यतेऽपमानो निजपूजाप्रचाराय सिद्धान्ततस्कराभ्यां संप्रदायावेशशालिशाभ्यां शैववैष्णवाभ्यामिति तु न्यायः। निर्दिष्टविधिना विधिहरिहरा अपि तत्तत्कर्मपरमेश्वरा इतरतिरस्कारमन्तरैवाराध्या इति राद्धान्त आपरमार्थावबोधमिति संप्रदायः।

सृजाम्यहम् ।' इति प्रतिज्ञास्यामि । 'यदा मम महेशेन विष्णुत्वं दत्त-मादरात् । तदापि भैरव श्रीमन्त्संतोषो नेदृशोऽभवत् ॥' संतोषमूलं शासनफलमाह 'अशैवे निहते दुष्टे धर्मोपि स्थिरतां गतः । अन्यथा धर्मलेशस्याप्यवस्थानं तु दुर्लभम् ॥' एतदेव महतामाविर्भावफलं मम संमतम् । 'परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय संभवामि युगेयुगे' । युगेयुगे धर्माधर्मयोः कल-हेकल्हे । भाविफलं विचार्य शिक्षणीय इति मतमाह ॥ 'परंतु भैरव श्रीमन् शिक्षास्य हितकारिणी । जाता मरणमात्रेण मुक्ति-रत्र भविष्यति ॥' काशी मम संमता मरणमात्रेण मोक्षे प्रतिबन्धं वारयति साधनसंपत्तिं संपादयतीति । काश्या अन्यत्र देहान्त-दण्डः सफलश्चात्र त्वनुग्रहाय कल्पते । 'ततोस्य मरणं येन न भविष्यति भैरव । यथा शिरांसि ग्रीवासु योजयामि त्वदाज्ञया ॥' इति चतुर्षु योजितेषु । 'एकं गतं शिरोस्यैव पातालं प्रति सत्वरम् । दुःखमेवमशैवानां भावीत्याख्यापनाय तत् ।' युक्ततरमेतत् । 'तेनो-नशिरसा ब्रह्मा दुःखितस्तिष्ठतु प्रभो । मरणे त्वस्य दुःखानि नेदृ-शानीति मन्महे ॥ स्मरन्त्स्वकृतकर्माणि दुःखहेतूनयं विधिः । तिष्ठत्वाकल्पमत्यन्तं दुःखितः प्रलपन्त्सदा ॥' ईदृशमनोरथस्य फलम् । 'अपराधिनमालोक्य नृपाश्च क्रूरशासनाः । कुर्वन्ति हस्त-पादान्यतरं लूनं दुरासदाः ।' कुर्वन्तीति विधौ लेट् कुर्वन्त्वित्यर्थः । 'एनमालोक्य शिरसा हीनमन्ये नराः सुराः । शिवद्रोहं दुःखहेतुं न करिष्यन्ति सर्वथा ।' एनं शठम् । शिवद्रोहं परश्रेयोविघातमित्ये-वार्थः प्रकरणात् । एवं दण्डं योजयितुर्मम फलम् । 'ब्रह्मणोपीदृशं दुःखं शिवद्रोहरतात्मनः । किमुतास्माकमित्यन्ये भीताः स्थास्यन्ति भैरव ।' दण्डेन सहैव शास्त्रप्रवृत्तेः काश्यामन्यत्र वा गुरुनिकट इति भावः । इत्थं दण्डविधिं प्रणीय प्राप्तमाह । 'प्राणैः संयोजया-श्वेनं सत्वरं दुःखितोऽस्त्वयम् । दुःखं प्राणवियुक्तस्य कथं भवति

भैरव ॥' आशु सत्वरमितिशब्दाभ्यां तारकोपदेशात्प्रागिति गम्यते। प्राणैः संयोजयेत्युक्त्या मृत इत्यपि च गम्यते।

ननु मुमूर्षोरेव यत्रोपदेशः श्रूयते किमु मृतस्य प्राणसंयोजनेनाऽस्य विदिततत्वस्य जीवन्मुक्तिरेवावशिष्यत इति चेन्न। अधिकारिण एव मुमुक्षोर्मुमूर्षोरुपदेशोऽन्यस्य तु दंडपाणिकृतचरमभूषानंतरमिति व्यवस्थायां सत्यामेष नाद्यापि चरमभूषाप्रविष्टो नाप्युपदिष्ट इति भावः। एवं प्रासंगिकं संभाष्य। 'किंचास्य तृणरूपस्य वधार्थं रूपमीदृशं ॥ किमर्थं धृतमीशान कल्पक्षयकरं परं ॥' अस्यास्माकं श्रेयोविघातरूपस्य। किमर्थमस्मदनुग्रहार्थमिति काकुः। महाकल्पस्येत्यादिना घोरतरत्वं प्रतिपाद्य। 'प्रसङ्गेनापि देवेश तव रूपं सनातनम्। दृष्टमद्य कृतार्थोऽस्मि कैतद्रूपस्य दर्शनम् ॥' प्रसङ्गेन मूर्खस्य ब्रह्मणः। सनातनं प्रभोः सनातनत्वे दण्डोऽपि सनातनः। कृतार्थः परिहृतविघ्नः। 'आद्यं तु दृष्टमेतन्नो रूपं भैरव सर्वथा। इदं किंचिदपि द्रष्टुं न शक्यं सत्यमुच्यते। आद्यं अस्मात्कालात्पूर्वसिद्धं कृत्तिवासेश्वरेण सह पूजितम्। इत्युक्त्वा प्रणिपत्य सौम्यरूपे श्रीभैरवं नियोज्य तदाशिषं संपाद्य यदेदृशः प्रसंगस्तदाहं स्मर्तव्य इत्याज्ञां शिरसि कृत्वा तुष्टेन विष्णुना शिरांसि संयोजितानि भैरवेण प्राणस्तदा स विघ्नसंतोषी ब्रह्मा लज्जयान्यत्र जगामेति श्लोकपञ्चकं व्याख्यातम्। प्रायो महतां निकटे प्रकटितगुणः शठो लज्जते। 'ततो ववुः सुखा वाताः पुष्पवृष्टिर्बभूव च। प्रसन्नाश्च दिशः सर्वा बभूवुर्धूसराः पुरा ॥' ततः विघ्नोत्सारणानन्तरं पुष्पवृष्टिरेषा दिव्या पूजा। एवमादिसर्वतः शान्तिं दृष्ट्वा शेषोऽपि निर्भयः स्वस्थानं ययौ। दिव्यपूजायाः पुष्पवृष्टेर्दिगादिशान्तेश्च कालमाह। 'एतस्मिन्नन्तरे देवाः सूर्योऽप्यस्तंगतः शिवे। ततः संध्यादिकं कृत्वा शिवपूजापरा बभुः ॥' यथा शेषः पातालं तथा सूर्योऽस्तमित्यपिशब्दार्थः। शिव-

पूजापराः कृत्तिवासेश्वरस्य शेषपूजापरा उत्तरपूजापरा वा । ततः काशीपालनार्थं भैरवः स्थापितो मया । कृत्तिवासेश्वरस्यैव दक्षिणां दिशि सादरम् ॥' ततस्तेषु पूजाव्यग्रेषु सत्सु सप्तम्यर्थे तसिः । दक्षिणां दक्षिणस्याम् । 'ततः सायं विष्णुमुख्याः कृत्वा पूजां मम प्रिये । भैरवाभ्यर्चनार्थाय जग्मुर्भैरवसंनिधौ ॥' ततः स्थापनोत्तरं मम कृत्तिवासेश्वरस्य । जग्मुः कृत्तिवासेश्वरालयात् । सायं प्रदोषसमये । 'ततस्ते भैरवं देवमुपचारैश्च षोडशैः । संपूज्यार्घ्यप्रदानानि चक्रुर्भक्तिसमन्विताः ॥' कृत्तिवासेश्वरपूजोत्तरमर्घ्यदानात्प्राक् विघ्नमाचरितमिति गम्यते । अतएव । उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम् । तथा जागरणं रात्रौ पूजा यामचतुष्टये । भैरवपूजाया आकस्मिकत्वात्कृत्तिवासेश्वरपूजाया व्युच्छिन्नत्वादव्युच्छिन्नस्योपोषणस्याङ्गमिति पर्यवसितं पारिशेष्यात् । अनेनैव न्यायेन । तथा जागरणं रात्रौ पूजा यामचतुष्टये । एतद्द्वयमपि पतितमर्घ्यमार्गे । अतएव । 'भैरवायोग्ररूपाय यस्त्वर्घ्यं न प्रयच्छति । तस्योपवासजनितं न फलं जागरार्जितम् ॥' उपोषणस्याङ्गविकलत्वात् । अतएवास्यार्घ्यस्यैतद्रूपम् । 'पात्रे पुष्पाणि सजलान्यादायार्घ्यमनुत्तमम् । जपन्तो ददुरर्घ्याणि भैरवायाऽमितात्मने ॥' अनुत्तममेतादृशसमयस्य पुनरनुपलम्भात् । जपन्तः पठन्तः । अमितात्मने यो ह्यमितः कृत्तिवासस्तदात्मने तस्यैव भैरवरूपेण परिणतत्वान्मायया । एतदन्तापि कृत्तिवासेश्वरपूजा तत्कालसमुचितोर्घ्यमन्त्रः न तु कृतः श्लोकः । 'भैरवार्घ्यं गृहाणेश भीमरूपाव्ययानघ । अनेनार्घ्यप्रदानेन तुष्टो भव शिवप्रिय ॥' औचित्यप्रदर्शनं मन्त्रार्थः । दीनैः किं देयं समर्थेभ्य इत्यभिप्रायः । 'सहस्राक्षिशिरोबाहो सहस्रचरणाजर । गृहाणार्घ्यं भैरवेदं सपुष्पं परमेश्वर ॥' तात्कालिकस्वरूपनिर्देशो मन्त्रार्थः । 'पुष्पाञ्जलिं गृहाणेश वरदो भव भैरव । पुनरर्घ्यं गृहाणेदं सपुष्पं यातनापह ॥' मध्ये पुष्पाञ्जलिं दत्वा तृती-

यार्घ्यप्रदानं कर्तव्यमस्मिन्कर्मणीति मन्त्रार्थः। अनेनैवार्घ्यप्रदानम्। त्रयाणां मन्त्राणां विष्ण्वादय ऋषयः। ततःप्रभृति कृत्तिवासेश्वरलिङ्गा मन्त्रा लुप्ताः। 'इति कृत्वार्घ्यदानानि शिवविष्णुपुरोगमाः। चक्रुर्जागरणं रूपं शंसन्तो भैरवस्य ते ॥' संनिहितत्वात्। सदा कथं तदुच्यते। 'भैरवस्य तु कर्तव्या पूजा यामचतुष्टये। कार्यं शिवकथालापैर्निशि जागरणं सदा ॥' शिवकथालापैस्तद्बाधे मानाभावात्। अस्य प्रायश्चित्तव्रतरूपस्य फलं। 'जागरं चोपवासं च कृत्वा कालाष्टमीदिने। प्रयतः पापनिर्मुक्तः शैवो भवति शोभने ॥' चकारौ पूजार्घ्यदानयोः समुच्चयार्थौ। शैवो भवति विघ्ननिवृत्तेः। तथैवाकरणे। 'यो देवि भैरवाष्टम्यामुपवासं प्रयत्नतः। न करिष्यति मोहेन स यात्येव हि यातनाम् ॥' प्रयत्नतः नाहं भैरवोपासनां जाने इति। व्रतरूपं प्रायश्चित्तमुपसंहरति। 'तस्मात्पूजा भैरवस्य कर्तव्या सततं बुधैः। यातनाभीरुभिर्मर्त्यैर्मुनिभिश्चापरैरपि। सततं प्रतिवर्षम्। काशीवासविधेरनादित्वात्तत्र प्रमादे प्रायश्चित्तस्याप्यनादिसिद्धत्वादादिभैरवकृत्तिवासेश्वरपूजया संपादनीयेऽपि तस्मिन्नङ्गविधिरयं प्रासङ्गिको नासत्यसोमपानविधिवच्च्यवनमहर्षिप्रसङ्गे। श्रीकालभैरवप्रान्त इत्यादिश्लोका इतिकर्तव्यताबोधकास्ततः सायं विष्णुमुख्या इति वचनेनैकवाक्यतापन्नास्तस्मादेषोऽङ्गविधिः कृत्तिवासेश्वरपूजायाः। तद्विधिस्त्वनुमीयते नित्यकर्मोत्तरं तत्र प्रवृत्तिलिङ्गात्तत्र तत्र। एवमुपलब्धेऽपि पूजाकाले नावतारकाले उपलब्धो मध्याह्ने संस्थिते रवावित्यस्य गमनान्वयात्तदानींततस्तदाशब्दानां प्राकरणिककालनिरूपकाणामुपक्षीणत्वात्पुनर्मध्याह्नग्रहणे मानाभावात्प्रयोजनाभावाच्च पूजाविधेः प्रदोषादियामचतुष्टयेन चरितार्थत्वादानुमानिककालग्रहणमप्रयोजकम्। यत्तु निर्णयसिंधौ तदोग्ररूपादनघादिति श्लोकमवलम्ब्य मध्याह्ने भैरवोत्पत्तिश्रवणादित्युक्तं। साच रात्रिव्यापिनी सती प्रदोषव्या-

पिनी ग्राह्येति वक्तुः खण्डनाय मध्याह्नव्यापिनी ग्राह्येति मनसि निधाय तदुपष्टम्भाय नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवावित्युपन्यस्तं तच्चिन्त्यम् । तस्य कृत्तिवासेश्वरपूजाकालनिर्णयपरत्वात् । परन्तु मध्याह्नव्यापिनी लब्धा चेदुक्ता कृत्तिवासेश्वऽपूजाया अप्यष्टमीनिमित्तत्वात् । मध्याह्ने पूजाप्रवृत्तिलिङ्गात्तथाविधिकल्पनाया आवश्यकत्वात् । कृत्तिवासेश्वरपूजनं प्रायश्चित्तं रात्रौ यामचतुष्टयपूजान्तम् । रात्रौ यामचतुष्टयपूजा भैरवे विधेया तथैव विधिवचनात् । न चेयं कृत्तिवासादन्यस्य पूजा प्राक्सिद्धाया एतस्या भैरवे प्रतिपत्तिस्तादात्म्यात् । अत्रेयं चिन्ता त्रिविधलिङ्गदर्शनात् । किमियमष्टमी मध्याह्नव्यापिन्युत संध्याव्यापिन्यथ रात्रिव्यापिनी ग्राह्येति । मध्याह्ने कृत्तिवासेश्वरं जग्मुः सायाह्ने भैरवं जग्मुः पूजायै पूजा यामचतुष्टय इति त्रीणि लिङ्गान्यष्टमीमूलानि तत्र का निर्णेतव्येति । कासहेतोपक्रममुपसंहारं चेति । उपक्रमस्तु कार्त्तिकस्यासिताष्टम्यां मध्याह्ने कृत्तिवासेश्वरं जग्मुरिति उपसंहारश्च तस्यामेवाष्टम्यां प्रदोषे पूजायै भैरवं जग्मुरिति जागराद्यपि तत्रैव । मध्याह्नादि जागरान्तं कालं या सहेत साष्टमी निर्णेतव्या ।

ननु प्रतिवर्षमेतादृशी व्याप्तिर्दुर्लभेति चेदुपक्रमादुपसंहारो बलीयानिति न्यायेन प्रदोषव्यापिनी सहेत किंचित् । पूजोपसंहारस्यापि बलवत्त्वाद्यामचतुष्टयपूजाजागरणानुकूल्यात् । मध्याह्नमात्रव्याप्ता तु न सहेत कंचिद्भारं दुर्बलाश्रयत्वात् । यत्र मध्याह्ने संपूजितः कृत्तिवासास्तस्य नामापि न श्रूयतेऽष्टम्या सह । आसीत्पूर्वं कृत्तिवासोऽष्टमीति तत्राष्टमीपरिशिष्टा बलवता श्रीभैरवेण संरुध्धा ततःप्रभृति भैरवाष्टमीति नामान्तरमापन्ना निर्णेतव्या यथाप्रदोषसमयमारभ्य भैरवपूजा जागरानुकूला । मध्याह्नमात्रव्यापिन्यपि शास्त्रार्थस्त्वभूतपूर्वं भैरवावतारात्प्राक् । तस्मान्मध्याह्न-

व्यापिन्या निर्णयः कैश्चिल्लिखितोवतारात्प्राक्कालिकः। सोऽपि सांमुख्यनियममपहाय स्मृतः। रात्रिव्यापिन्या निर्णयस्तु जघन्यतरः प्रदोषपूजावज्ञाप्रसङ्गात्। तद्व्याप्तिं विना रात्रिव्यात्यभाव इति चेदागतं मार्गे। तस्मादेष वृत्तान्तः सिद्धोऽनेनार्थवादेन कथं गुरुकुले वासो विधेयः कथं वा संसारोद्विग्नेनासंसरणसुखं संपादनीयमिति यततामेषा सरणिरिति। अतएव तत्र विघ्नमाचरता ब्रह्मणा लब्धं तथा यथानीतिज्ञानविधुरेण लब्धव्यम्[1]। यथानीतिः। 'शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलंक्रिया। प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषण'इति। अहो ज्ञातवेदेनापि न स्मृता श्रुतिः। 'ये तत्र ब्राह्मणाः संमर्शिनः युक्ता आयुक्ताः अलूक्षा धर्मकामाः स्युः ते यथा तत्र वर्तेरन् तथा तत्र वर्तेथा' इति। तस्मादसौ नाधीतवेदः किंतु स्मृतवेदः। 'एष आदेशः। एष उपदेश' इत्युपदेशमाज्ञां च प्रवर्त्तयति गुरुः। उपदेशं च को विसरेत्। तस्मान्मुमुक्षुभिरत्रैवंवासो विधेयो यथाशास्त्रं न कुप्येत। ब्रह्मदीक्षया दीक्षावतां न्यासिनां न वासविधिः किंत्वनुज्ञामात्रम्। एवं साधारणगुरुकुलवासरहस्यविद्वांसो विशेषगुरुगृहमपि श्रीकाशीं मन्वाना एतद्व्रतमाचरन्ति ते च शिष्टतमाः समानफलत्वात्। अत्र निवसता सता स्वनाम्ना शिवलिङ्गं संस्थाप्य वासचिन्ता कर्त्तव्या भैरवप्रतिष्ठापितलिङ्गलिङ्गात्। तत्फलं तु काशीश्रेयस्करी वियोगरूपात्मघातप्रत्यवायाभावः। अतएवाविमुक्तमिति काशीनाम। अतएव श्रीविश्वेश्वरेणापि स्थापितं लिङ्गं विश्वेश्वरो नाम येन दिवोदाससमयवियोगो निर्वोढः। एवं श्रीगुरुकुलरूपश्रीकाशीवासिनां प्रायश्चित्तात्मकं व्रतमुक्तम्। द्वितीयदिने पारणाप्रकार उक्तः। शुचिभिस्तैलपक्वान्नैः शैवा ब्राह्मणपुङ्गवाः। भोजनीयाः प्रयत्नेन

---

[1] ब्रह्मणोपि पटुतरेण वासनाशून्येन नीतिमता दण्डिना भाव्यम्, पाखण्डिना संग्रहपण्डितेन तु तेन निजात्मा दण्ड्यते इति प्रकरणार्थः.

भैरवप्रीतिकामुकैः । पूर्वदिने प्रदोषव्याप्तिपक्षमङ्गीकृत्यैवोक्तं निर्णयसिन्धौ । यामत्रयोर्ध्वगामिन्यां प्रातरेवाह पारणेति वचनादिति प्रातः पारणम् । एतदवतारात्प्राकृत्तिवासाष्टमीनिर्णयः सोऽपि जागराद्यनुकूल एवासीदसंभवे यथाकथंचिदुत्तरदिने मध्याह्नव्याप्त्यापीति । अवतारानन्तरं भैरवस्य प्राधान्यं दर्शितं काशीखण्डे । मार्गशीर्षासिताष्टम्यां कालभैरवसन्निधौ । उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते' इति । तस्यैव भैरवं प्रक्रम्य त्रिस्थलीसेतौ 'कृत्वा च विविधां पूजां महासंभारविस्तरैः । नरो मार्गासिताष्टम्यां वार्षिकं विघ्नमुत्सृजेत् । तीर्थे कालोदके स्नात्वा कृत्वा तर्पणमत्वरः । विलोक्य कालराजानं निरयादुद्धरेत्पितॄ'निति । अत्वरः कृत्तिवासेश्वरपूजोत्तरं प्रदोषान्तं मध्ये व्यापारान्तरविधानाभावात् । अत्रेदमाकूतम् । पूर्वदिने प्रदोषव्याप्त्यभाव एव परदिनमनुसंधेयम् । पूर्वदिने प्रदोषमात्रव्याप्तौ मध्याह्ने सप्तम्यामपि कृत्तिवासाः पूज्यः । उभयत्र प्रदोषव्याप्त्यभावे नवम्यामपि भैरवः पूज्यः । उभयत्र प्रदोषव्याप्तौ पूर्वदिने पूजाजागरणे कृत्तिवासभैरवपूजयोरष्टम्यां समतत्वादेकत्वाच्च तयोः । 'रुद्रव्रतेषु सर्वेषु कर्त्तव्या संमुखीतिथि'रिति वचनमनुकूलं प्रधानानुसरणं च । उभयत्र प्रदोषव्याप्त्यभावे परैव पूजोपसंहारकालिकत्वाभावेऽपि पूजोपक्रमकालिकत्वात् । अन्यथा व्रतलोपप्रसङ्गात् । न मध्याह्नव्याप्तिरत्र निर्णायिका वचनाभावादनुकूलतर्काभावाच्च । प्रदोषव्याप्त्या निर्णये तु भैरवपूजाप्राधान्यमनुकूलस्तर्कः । ननु यद्यष्टम्यामुभावपि पूज्याविति मतं तदोत्तरदिने मध्याह्नव्याप्तौ पूर्वदिने प्रदोषव्याप्तौ पूर्वदिने भैरवपूजां जागरादिकं च संपाद्योत्तरदिने मध्याह्ने कृत्तिवासेश्वरपूजनमिति प्राप्तमिति चेत्पूर्वदिने भैरवपूजोपक्रमरूपस्य कृत्तिवासेश्वरपूजनस्याभावाद्भैरवपूजानुत्थानप्रसङ्गात्पूर्णाहुतिवत् । संपादितायां पूर्वदिने भैरवपूजायां पुनरुपक्रमानुसरणस्यानौचित्याज्जागरादेरा-

वृत्तिप्रसङ्गाच्च। तस्मादियं मध्याह्नव्यापिनी ग्राह्येति लेखश्चिन्त्यः। तथोभयदिने प्रदोषव्याप्तौ तदेकदेशस्पर्शे वा परैवेत्यपि माना-भावात्। इतरत्सर्वं व्याख्यातप्रायमिति दिक्। प्राप्ते चात्र संशये शिवरहस्ये सप्तमांशे पर्यालोचनीय एकादशोऽध्यायः।

इदमत्र रहस्यम्—मुमुक्षुभिरेवात्र वासो विधेयः प्रायश्चित्तलि-ङ्गात्। मुक्तानामनुज्ञोदरंभरीणां न निषेधो यातनान्ते मोक्षलिङ्गात् कथमपि मुक्तिरेव फलं मुमुक्षूणां तीव्रसंवेगानां तीव्रं फलमितरेषां कालदैर्घ्ये। यथा यतीनां तीव्रमितरेषामधीतविद्यानामपि विलम्बः फले। फलं तु मुक्तिरेव तदेकफलत्वाद्विद्यायाः सा च लभ्यते गुरुकुलवासेन स च गुरुर्मातृवदङ्गीकरोति पोषयति च हृद्यया विद्यया यथा स्तन्येन माता सा च पुष्टिस्तुष्टिसहिता नैश्चि-त्यरूपमोक्षसुखान्ता स एव गुरुः परमेश्वरः सैव माता पर-मेश्वरी फलयाथार्थ्यात्। अतएव श्रुतिराह 'मातृमान्पितृमानाचार्य-वान् पुरुषो वेदे'ति श्रीः।

श्रीभैरवगृहाणेमां सेवां कांचित्कृतां मया।<br>
त्वमेव बलमस्माकं भिक्षूणां भिक्षुनायकः॥ १॥<br>
शाके श्रीशालिवाहस्य मुनिचन्द्राष्टभूमिते।<br>
काशिकायां भैरवस्य प्रीतये निर्णयः कृतः॥ २॥<br>
विश्वेश्वरो येन दृष्टः स न पश्यति संसृतिम्।<br>
श्रीकाशिका येन लब्धा लब्धव्यं नावशिष्यते॥ ३॥

इति श्रीकैवल्यधामनिवासिश्रीसच्चिदानन्दसरस्वतीपूज्यपादपादपंकजरेणु-ना कृष्णानंदसरस्वतीभिक्षुणा विरचितो गुरुकुलवासनिर्णयमूलो भैरवा-ष्टमीनिर्णयः समूलः सफलश्च समाप्तः।

---

१ भैरवाष्टमीति समाख्ययाऽष्टम्युपहितमध्याह्नस्य श्रुतत्वात् तादृशमध्याह्ने कृ-त्तिवाससो भगवतः पूजासमनन्तरमेव प्रदोषसमयेऽश्रुतावश्यकाष्टमीसन्निधाने भैरवपूजाया विधानादष्टम्युपहितमध्याह्नवद्दिनप्रदोषस्यैव भैरवपूजाप्रयोजकत्वे कृत्तिवासःपूजासमनन्तरत्वस्य लिङ्गाच्च मध्याह्नव्यापिन्या एवाष्टम्या निर्णयं युक्त-मुत्पश्यामः। अष्टम्युपहितप्रदोषवद्दिनमध्यत्वस्य कृत्तिवासःपूजाप्रयोजकत्वे स्वामिपादसम्मते मध्याह्नप्रत्यासन्नाया अष्टम्याः प्रदोषोपाधित्वे चानुकूलत-र्काभावः स्पष्ट एव.

# एकादशीविवेकः ॥ १६ ॥

श्रीलक्ष्मीरमणं नत्वा लक्ष्मीरमणतुष्टये ।
करोमि स्वीयबोधाय चैकादश्या विवेचनम् ॥ १ ॥

'उदयात्प्राक् चतस्रस्तु घटिका अरुणोदय' इति स्कन्दनारदाभ्यामुक्ते अरुणोदये दशमीगन्धशून्यैकादशी शुद्धा उपोष्या । अरुणोदयमारभ्य दशमीयुता विद्धा त्याज्या । 'अरुणोदयकाले तु दशमी यदि दृश्यते । सा विद्धैकादशी तत्र पापमूलमुपोषण' मिति भविष्यपुराणवचनात् । 'उदयोपरि विद्धा तु दशम्यैकादशी यदा । दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासन' इति काण्ववचनात् । 'दशम्याः प्रान्तमादाय यदोदेति दिवाकरः । तेन स्पष्टं हरिदिनं दत्तं जम्भासुराय त्वि'ति स्मृत्यन्तरवचनात् । अरुणोदयवेलायां विद्धा काचिदुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जये'दिति कौत्सवचनात् । 'दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रापत्यविनाशश्च परेत्य नरकं व्रजेदि'ति नारदवचनात् । 'दशमीशेषसंयुक्तां यः करोति विमूढधीः । एकादशीफलं तस्य न स्याद्द्वादशवार्षिकमि'ति ब्रह्मवैवर्तात् । 'दशमीशेषसंयुक्तामुपोष्यैकादशीं किल । संवत्सरकृतेनेह नरो धर्मेण मुच्यते'इति विष्णुरहस्याच्च । अयं च विद्धानिषेधः शुद्धायाः संभवे, असंभवे तु विद्धैव सर्वैरुपोष्या । 'एकादशी काचित् भवेत् दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदे'ति विष्णुरहस्यात् । 'एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तस्तत्र साहस्रिकं फलमि'ति वसिष्ठेन क्षयदिनस्यातीव पुण्यजनकत्वबोधनात् । 'एकादशी दिशा युक्ता वर्धमाने विवर्जयेत् । क्षयमार्गे स्थिते सोमे कुर्वीत दशमीयुतामि'ति भविष्यपुराणात् । 'एकादशी दिशा विद्धा परतोऽनन्ववर्धते[1] । यतिभिर्गृहिभिश्चैव सैवोपोष्या क्षये

1 पाठे सन्देहो भाति, नानुवर्धते इति पाठस्तु युक्तः.

तिथिरि'ति हेमाद्रिधृतपद्मपुराणवचनात्। 'अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु। मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशीतिथिः। तदर्धविद्धान्यन्यानि दिनान्युपवसेद्बुधः। पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी। एकादशीं तु कुर्वीत क्षीयते द्वादशी यदी'ति ऋष्यशृङ्गवचनात्। 'एकादशी तृतीया च षष्ठी चैव त्रयोदशी। पूर्वविद्धा तु कर्तव्या यदि न स्यात्परेह्नी'ति वसिष्ठवचनात्। 'एकादशी न लभ्येत सकला द्वादशी भवेत्। उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवीदि'ति ऋष्यशृङ्गवचनात्। 'दिनक्षयस्पृते देवि नोपोष्या दशमीयुता। सैवोपोष्या तदा पुण्या परतश्चेत्त्रयोदशी'ति पद्मपुराणवचनात् द्वादश्यां यदि त्रयोदशीत्यर्थः। 'द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः। तामेवोपवसेत्काममकामो विष्णुतत्पर' इति वैष्णवस्य क्षयगतैकादश्याः प्राशस्त्यबोधककूर्मपुराणवचनाच्च। 'प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्जिता' इति स्कन्दपुराणवचनात्। 'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता। संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद्गृही'ति गारुडपुराणवचनात्। आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता। एकादशी तु संपूर्णा विद्धान्या परिकल्पिते'ति भविष्यपुराणवचनाच्चावगतसंपूर्णत्वविशिष्टा एकादशी यदा वर्धते तदा 'विष्णुप्रीणनतत्परैः। उपवासद्वयं कार्यमि'ति वसिष्ठमतम्। 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परै'रिति बृहद्वसिष्ठवचनात्। यदा तु अहोरात्रव्यापिनी पूर्णा अरुणोदये दशमीविद्धा शुद्धा वा एकादश्येव वर्धते तदा पूर्वा गृहस्थैः कार्या। 'निष्कामस्तु गृही कुर्यादुत्तरैकादशी सदा। प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तमे'ति हेमाद्रिधृतस्कन्दपुराणवचनेन सकामगृहस्थस्य पारणे द्वादश्यावश्यकत्वप्रतीतेः वक्ष्यमाणव-

चनकदम्बाश्च। उत्तरा यत्यादिभिः कार्या। 'प्रथमेऽहनि संपूर्णा व्याप्याहोरात्रसंयुता। द्वादश्यां च तथा तात दृश्यते पुनरेव सा। पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो' इति स्कन्दपुराणवचनात्। 'एकादशी विवृद्धा चेत् शुक्ले कृष्णे विशेषतः। उत्तरां तु यतिः कुर्यादपूर्वामुपवसेद्गृही'ति प्रचेतोवचनात्। 'पुनः प्रभातसमये घटिकैका यदा भवेत्। अत्रोपवासो विहितो वनस्थस्य यतेस्तथा। विधवायाश्च तत्रैव परतो द्वादशी न चे'दिति गृहस्थस्य पूर्वासूचकात् गारुडपुराणवचनात्। 'त्रयोदश्यां न लभ्येत द्वादशी यदि किंचन। उपोष्यैकादशी तत्र दशमीमिश्रितापि चे'ति स्कन्दपुराणवचनात्। 'त्रयोदश्यां यदा नष्टा द्वादशी घटिकाद्वयम्। दशम्यैकादशी विद्धा सैवोपोष्या सदा तिथि'रिति हारीतवचनात्। 'पारणाहे न लभ्येत द्वादशी कलयापि चेत्। तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथि'रिति ऋष्यशृङ्गवचनात्। द्वादशी स्वल्पमल्पापि यदि न स्यात्परेहनि। दशमीमिश्रिता कार्या महापातकनाशिनी'ति वृहद्वसिष्ठवचनाच्च। पूर्वोक्तगारुडस्कन्दपुराणादिवचनैः 'विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत्। अविद्धापि च विद्धा स्यात्परतो द्वादशी यदी'त्यनेन गृहस्थस्य एकादशीमात्रवृद्धौ विद्धाया अप्येकादश्या अविद्धात्वबोधकेन एकादशीद्वादश्योर्वृद्धौ अविद्धाया अप्येकादश्याः सर्वेषां विद्धात्वबोधकेन पाद्मवचनेनापि गृहस्थवैष्णवस्य शैवादिगृहस्थवत् विद्धा पूर्वैकादशी प्राप्ता 'दशमीवेधसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रत'मित्यनेन गारुडपुराणवचनेन निषिध्यते अतस्तेनोत्तरैव कार्या। गारुडवचनस्योक्तरीत्या चारितार्थ्यानङ्गीकारे अरुणोदयदशमीविद्धैकादश्यामविशेषेणोपवासनिषेधकैः पूर्वोक्तानेकवचनैः 'परमापदमापन्नो हर्षे वा समुपस्थितः। नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी। समात्मा सर्वजीवेषु निजाचारादवि-

प्लुतः । विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते' इति स्कन्दपुराणोक्तलक्षणस्य वैष्णवस्यापि उपवासनिषेधसिद्धौ वैयर्थ्यं वैष्णवेन नैवोपोष्यं तदितरैः सर्वैरुपोष्यमित्यर्थस्वीकारे उभयवृद्धौ एकादशीमात्रवृद्धौ वा विद्धैकादश्याः सर्वैरुपोष्यत्वापत्त्या विरुद्धार्थप्रतिपादकत्वं वा स्पष्टमेवेति बोध्यम् । यदा तु एकादशी द्वादशी च वर्धते तदा सर्वैरुत्तरा कार्या । 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदी'ति भृगुवचनात् । 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । सर्वैरेवोत्तरा कार्या परतो द्वादशी यदी'ति नारदवचनात् । 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या परा पुण्या परतो द्वादशी यदी'ति गारुडवचनात् । एकादशी विष्णुना चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदमि'ति वाराहपुराणवचनात् । 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते । गृहस्थोपि परां कुर्यात्पूर्वां नोपवसेत्तदा । पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदी'ति स्मृत्यन्तरवचनाच्च । 'एकादशी विष्णुना चेद्द्वादशी परतः स्थिता । उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदमि'ति वाराहपुराणवचने । 'एकादशी भवेत्पूर्णा परतो द्वादशी यदि । एकादशीं परित्यज्य द्वादशीं समुपोषयेदि'ति उभयवृद्धिप्रतिपादकस्मृत्यन्तरवचने । 'संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी । द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारणमि'ति नारदवचने । 'एकादशीकलाप्राप्ता येन द्वादश्युपोषिता । तुल्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणमि'ति विष्णुरहस्यवचने च यथा एकादश्याः कलादियुक्तायां द्वादश्यां केवलद्वादशीशब्दः प्रयुक्तः तथैव 'आदित्योदयवेलाया आरभ्य षष्टिनाडिका । संकीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः । पुत्रपौत्रप्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् । तत्र क्रतुशतं पुण्यं त्रयो-

दश्यां तु पारणमि'ति गारुडपुराणवचने । 'एकादशी भवेत्पूर्णा परतो द्वादशी यदि । तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपोषये-दि'ति स्कन्दपुराणवचने । 'एकादशी यदा पूर्णा परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते' इति तिथिवृद्धि-प्राशस्त्यप्रतिपादककालिकापुराणवचने । 'पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्धते । तत्रोपोष्या तु भद्रा स्यात्तिथिवृद्धिः प्रशस्य-ते'इति गारुडपुराणवचने एतादृशान्यवचनेषु च द्वादशीशब्दः स्वल्पैकादशीयुक्तद्वादशीवाचकः नतु केवलद्वादशीवाचकः । 'आदि-त्योदयवेलाया आरभ्य० संपूर्णा० पूर्णा० तिथिवृद्धिः प्रशस्यत' इत्यादिवचनस्य पदैरुक्तार्थस्य संभवात् 'न चेदेकादशी विष्णौ द्वादशी परतः स्थिता । उपोष्यैकादशी तत्र यदीच्छेत्परमं पदमि'ति नार-दवचनानुसारात् । 'शुद्धा यदा समा हीना समा क्षीणाधिकोत्तरा । एकादशीमुपवसेत्र शुद्धां वैष्णवीमपी'ति स्कन्दपुराणवचनात् । एका-दशी न लभ्येत सकला द्वादशी भवेत् । उपोष्यैकादशी विद्धा ऋषिरु-द्दालकोऽब्रवीदि'ति ऋष्यशृङ्गवचनेन परत एकादश्यभावे विद्धाया अप्यङ्गीकाराच्च । एकादशीक्षये विद्धैकादश्युपवासविधायकादस्मा-देव ऋष्यशृङ्गवचनात् । 'एकादशीं दिशा युक्तां वर्धमाने विवर्जयेत् । क्षयमार्गस्थिते सोमे कुर्वीत दशमीयुता'मिति भविष्यत्पुराणव-चनात् । 'एकादशी भवेत्काचिद्दशम्या दूषिता तिथिः । वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदे'ति विष्णुरहस्यवचनादपि 'एका-दशी यदा लुप्ता परतो द्वादशी भवेत् । उपोष्या द्वादशी तत्र यदीच्छेत्परमां गति'मिति व्यासवचनस्यापि एकादशी यदा लुप्ता छिन्ना खण्डिता दिनद्वयेपि पूर्णा न भवति पूर्वदिने उदये दशम्याः सत्वात् उत्तरदिने उदये एकादश्याः स्वल्पत्वाच्च तदा स्वल्पै-कादशीयुक्ता द्वादशी उपोष्या नतु पूर्वा । अलुप्तेति छित्त्वा वा ईदृशार्थस्य स्वीकाराच्च । किंच महाशिवरात्र्याः आश्विनशुक्ल-

प्रतिपदश्चामाविद्धाया राष्ट्रभङ्गमहापातकादिजनकत्वेनातिनिषिद्धत्वेऽपि अविद्धाया असंभवे अमाविद्धैव यथा स्वीक्रियते न तिथ्यन्तरं तथैव एकादश्या दशमीविद्धाया अतिनिषिद्धत्वेपि शुद्धाया असंभवे अविशेषणे विद्धाग्रहणप्रतिपादकपूर्वोक्तवचनैर्दशमीविद्धाया एव ग्रहणौचित्यात् 'सर्वत्रैकादशी कार्या द्वादशीमिश्रिता नरैः। प्रातर्भवतु मा वाभूत् यतो नित्यमुपोषणमि'ति ऋष्यशृङ्गवचनेनापि खण्डतिथौ सर्वत्र क्षयवृद्ध्यादौ द्वादशीयुता एकादशी ग्राह्या नतु केवलद्वादशीत्यर्थस्य प्रतिपादनात्। शुद्धैकादशीसंभवसंदेहे विद्धैकादश्युपवासापेक्षया शुद्धद्वादश्युपवास एव वरः। 'उपोष्या द्वादशी शुद्धा द्वादश्यामेव पारणम्। निर्गतायां त्रयोदश्यां कला वा द्विकलापि वा। द्विकलायां तु द्वादश्यां पारणं यः करोति हि। तामुपोष्य महीपाल न गर्भे विशते नरः' इति हेमाद्रिधृतभविष्यवचनात्। विवादेषु तु सर्वेषु द्वादश्यां समुपोषणम्। पारणं हि त्रयोदश्यामाज्ञेयं मासकी मुने' इति मार्कण्डेयेषु प्रद्युम्नसंवादाच्चेत्यलम्। तथाच शुद्धा वा एकादश्येव गृहस्थयत्यादिभिः यथाशास्त्रमुपोष्या नतु एकादशीक्षयादौ केवलद्वादशीति सिद्धम्। पक्षपातं परित्यज्य विचार्य कृतबुद्धिभिः। एकादश्या विवेकेन श्रीलक्ष्मीरमणो विभुः। प्रीयतां सर्वलोकस्य शं तनोतु च शाश्वतम्।

यन्नाम्ना विहितं यत्तत्तेनानुष्ठेयमादरात्।
अविशेषाद्यद्विहितं तत्सर्वैरिति पद्धतिः॥

इति श्रीकैवल्यधामनिवासिपरमहंसकृष्णानन्दसरस्वतीविरचित
एकादशीविवेकः समाप्तः॥

# एकादशीपरामर्शः ॥ १७ ॥

सर्वव्रतानां संपूर्तिर्यस्मिन्नस्मै परात्मने ।
श्रीकृष्णाय महाकृष्णभक्तासक्ताय ते नमः ॥ १ ॥

शास्त्रगाह्यं व्रतं किंचिन्नित्यं सर्वार्थसाधनम् ।
निर्णीयते कृष्णतुष्ट्यै कृष्णानन्देन भिक्षुणा ॥ २ ॥

अथैकादशीव्रतं परामृश्यते । एकादशीनाम कालविशेषो दशमीद्वादशीमध्यगतः शुद्धः । व्रतं नाम भोजनं तदभावश्च । शास्त्रानधिकारिणि पर्यवसन्नं फलाय कल्पते शास्त्रत्वात् । विधिवचनं शास्त्रम् । तत्त्विदं प्रकृतमेकादशीव्रतं भोजननिवृत्तिभोजनोभयरूपं विष्णुपूजनात्मकं वैष्णवे पर्यवसन्नं । तल्लक्षणमभिहितं यथा । 'परमापद्गतापन्नो हर्षे वा समुपस्थितः । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी ।' इति । अत्र वाक्ये द्वाभ्यां यच्छब्दाभ्यां लक्षणद्वयमभिहितं तच्छब्दद्वयापेक्षणात् । नैकादशीं त्यजेदिति विधिः । यो न त्यजेत्स वैष्णव इत्येकं लक्षणम् । यस्य वैष्णवी दीक्षास्ति स वैष्णव इत्यपरम् । वैष्णवी दीक्षा संन्यासः । अतएव 'द्वे रूपे वासुदेवस्य चरं चाचरमेव च । चरं संन्यासिनां रूपमचरं प्रतिमादिक'मिति दीक्षामात्रेण विष्णुत्वं । अतएव पाञ्चरात्रादिदीक्षितोपि नगिच्छति विजानन्नाश्रमक्रमम् । यदि मन्यते तथैव दीक्षया वैष्णवत्वं तर्हि करोतु यतिसंमतामेकादशीम् । परंतु गार्हस्थ्यादनिवृत्तो गृहस्थवाक्यविषयतां नातिवर्तते । अस्य व्रतस्याश्रमावलम्बेन प्रवृत्तेः ।

ननु कथं वैष्णवः संन्यासी विष्णुरूपत्वादिति चेद्रूपं विष्णोः साधकात्मा तद्वैष्णवः कोत्र विवादः । गृहस्थब्रह्मचारिणौ सामान्यलक्षणसंपन्नौ गृहस्थशब्देन व्यवह्रियेते । ब्रह्मचारिणस्तत्साधि-

तान्नस्वामित्वात्। निवृत्तिधर्मनिष्ठः संन्यासी वैष्णवशब्देन। तथा गार्हस्थ्यान्निवृत्तः संन्यासमप्राप्तो दीक्षाविशेषदीक्षितो वानप्रस्थः प्रसिद्धः। तथा नैष्ठिकब्रह्मचारिषु वैखानसादयो वानप्रस्थाः प्रसिद्धाः पुराणेषु ते सर्वे निवृत्तिपरायणाः वैष्णवा व्यपदिश्यन्ते। तथा विधवापि प्राप्तनिवृत्तिधर्मा सापि वैधव्येन दीक्ष्यतेऽतएव न गेहिनी। तस्मादाश्रमभेदाननतिलङ्घ्य निर्णेतव्यैकादशी। तथाच चत्वारोऽधिकारिणः। गृही वनस्थो यतिर्विधवा चेति। एष्वधिकारिषु प्राप्तेऽस्मिन्व्रते द्वौ वेधौ दशमीकृतौ व्रतप्रतिबन्धावरुणोदयवेधः सूर्योदयवेधश्चेति। सूर्योदयवेधो दानवानां क्रूरकर्मणाम्। 'उदयोपरि विद्धा तु दशम्यैकादशी यदा। दानवेभ्यः प्रीणनार्थं दत्तवान्पाकशासनः।' इति। अरुणोदयवेधः परिशिष्ट इतरेषाम्। स च वैष्णवानामवैष्णवानां समानः। यथा दशमी दूरे भवेद्यथा द्वादश्यां पारणं घटेत तथैतद्व्रतमाचरितव्यमिति शास्त्रतात्पर्यमवसीयते। यद्युभयं न घटेत तदा विद्धायामेव व्रतं पारणं द्वादश्याम्। यदि ततः परेद्युर्द्वादशीलेशस्तदा विद्धां त्यक्त्वा लेशमात्रायामेकादश्यां व्रतं लेशमात्रायां द्वादश्यां पारणम्। यथा पूर्वदिने सूर्यस्यारुणोदयदशमीसंसर्गाद्दशमीत्वं तथा सूर्यस्पर्शादेकादशीत्वं द्वादशीत्वं चैतद्व्रतोपयोगि तत्। पञ्चमहायज्ञानामत्यन्तोपसंहारस्तु निर्मूलो यावद्दिनस्य व्रताङ्गद्वादशीत्वादेकादशीवत्। सत्यामेवं व्यवस्थायां परापरवैष्णवभेदेनाश्रमभेदमूलेन व्यवस्थाप्यते व्रतम्। यच्च हर्षामर्षविषादकालेपि व्रतनिष्ठत्वं वैष्णवत्वं तच्च समानं चातुर्वर्णिकचातुराश्रम्यं पञ्चोपासकानाम्। यच्च निवृत्तिदीक्षावत्त्वं संन्यासो नाम द्वितीयं लक्षणं तच्च पञ्चोपासकसाधारणं ब्राह्मणासाधारणं च। को दीक्षितो भवेद्गुरुत्वलक्षणेन ब्राह्मणेतरः। यच्च पाञ्चरात्रादिदीक्षावत्त्वं वैष्णवत्वमिति लक्षणं तन्नि-

न्दोपलब्धेरश्रौतासाधारणम् । यदि नाङ्गीक्रियेत तर्हि निन्दितत्वं चातुर्वर्ण्यसाधारणम् । एवंच कामानधिकारित्वं वैष्णवत्वं परं तदधिकारित्वमपरमिति पर्यवसिते सकामनिष्कामाचरणीये व्रते एकादश्युपोष्येत्युत्सर्गः । विद्धा नोपोष्येति निषेधः । पारणाय द्वादश्यभावे शुद्धाया असंभवे विद्धाप्युपोष्येति प्रतिप्रसवः । शुद्धायाः संभवे द्वादश्यभावे वैष्णवेन निष्कामेन विद्धा नैवोपोष्येति नियमः । वैष्णवो यतिर्वनस्थो विधवा च सत्येवम् । 'दशम्यनुगता यत्र तिथिरेकादशी भवेत् । तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत् ॥' इत्येवंजातीयकानि वेधनिषेधोत्सर्गवाक्यानि 'विद्धाप्यविद्धा विज्ञेया परतो द्वादशी न चेत् । अविद्धापि च विद्धा स्यात्परतो द्वादशी यदी'त्यनेनैकवाक्यतापन्नानि वेधं

---

१ तथापि नैतद् । पञ्चरात्रादिसिद्धान्तस्याप्रमाणत्वात् तन्मूलत्वाच्च संप्रदायवैष्णवानाम् । नच संकीर्णशूद्रान्त्यजातादिकर्तव्योपदेशपरतया तत्कृते तेषां प्रामाण्यमिति वाच्यम् । संकीर्णादिकर्तव्यस्यापि श्रुतिमूलासु स्मृतिषु निरूपितत्वात् । तन्मात्रमायसत्वाच्च तदभ्युदयस्य । अनधिकारिणेऽधिकारप्रदानमकर्मणि कर्मबुद्धिव्यवस्थापनं सरलश्रेयोमार्गनिरूपणादिकं च नास्तित्रयं वैदिकनिन्दा च तद्बहुलत्वात्पञ्चरात्रादेरप्रमाणता । वैदिकनिन्दा च "जैमिनिः सुगतश्चैव नास्तिको नग्न एव च । कपिलश्चाक्षपादश्च षडेते हेतुवादिनः । एतन्मतानुसारेण वर्तन्ते ये ( ते ) नराधमाः (ह. प. प. प.)" इति ग्रन्थेन स्पष्टैव । नहि जैमिनिसमोऽपरो वैदिकः । वेदनिन्दापि वैदिकनिन्दामुखेन कृतैवेति नास्तिको वेदनिन्दक इति स्मृतेस्ते नास्तिका एवेति तत्तन्त्राणामप्रामाण्यम् । वस्तुतस्तु शूद्रप्रधाना उपलभ्यमाना वैष्णवशैवाः पञ्चरात्रतन्त्रादपि च्युताः । तथाहि हयशीर्षपञ्चरात्रे द्वितीयपटले निरूपणप्रस्तावे 'कदाचिदपि शूद्रस्तु नचाचार्यत्वमर्हति' इति शूद्रस्याचार्यत्वनिषेधेऽपि शूद्राश्संकराश्चाचार्यपदेऽभिषिक्ता भवन्ति । तत्रैव पञ्चमे पटले "नगरग्राममध्ये तु ब्रह्मणस्स्थानमुत्तममित्यारभ्य चण्डीशस्य महेशस्य ऐशान्यां स्थानमिष्यते । विष्णोः स्थानं समासाद्य कालभेदेन विद्यते" इति विष्ण्वादीनां प्रतिष्ठाया उक्तत्वेऽपि संप्रति वैष्णवाः शिवनामग्रहणेनापि पापं स्मरन्ति.

संकोचयन्ति प्रसारयन्ति च । तथाच विशिष्टोर्थः पारणयोग्यद्वादशीयुतैकादश्युपोष्येति । अतएव 'द्विस्पृगेकादशी यत्र तत्र संनिहितो हरिः। तामेवोपवसेत्काममकामो विष्णुतत्परः' इत्येवंजातीयकान्येकादशीक्षयवचनानि चरितार्थानि । एतान्येव विद्धानिषेधवाक्यानि विधिवचनैः '(ए)कादशीमुपवसेन्न कदाचिदतिक्रमेत्। एकादशी सदोपोष्या पक्षयोः शुक्लकृष्णयो'रित्यादिभिरेकवाक्यतापन्नान्यविद्धैकादशी नित्यमुपोष्येत्यर्थमभिदधति । तथाच वाक्यद्वयं द्वादशीयुतत्वाविद्धत्वविशेषणाभ्याम् । अतएव 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत्' इति सन्देह उपपद्यते । अन्यतरविशेषणव्यभिचारात् । संपूर्णत्वमुदयद्वयव्याप्तिमत्त्वात्। अविद्धात्वादुत्तरदिने प्राप्तं परंतु पारणयोग्यद्वादश्यभावात्पूर्वदिने प्राप्तमित्यर्थः । 'आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता । एकादशी तु संपूर्णा विद्धान्या परिकल्पिते'ति प्रशस्ततमसंपूर्णत्वाङ्गीकारे संदेहानुत्थानप्रसङ्गात्। एवं संदेहोपपत्तावाह । 'उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ।' इति सामान्यतः प्राप्तेऽधिकारभेदेन व्यवस्थामाह। 'निष्कामस्तु गृही कुर्यादुत्तरैकादशी सदा। प्रातर्भवतु वा मा वा द्वादशी च द्विजोत्तमे'ति । निष्कामो गृहीत्युपलक्षणं वनस्थयतिविधवानाम् । यस्माद्गृहित्वं निष्कामत्वं च समानाधिकरणमनुपपन्नं तस्माद्गृहीति काकुरधिकारभेदबोधनाय । न तेषां सूर्यस्पर्शनियमो द्वादश्यां सूर्योदये भवतु वा मा वा तेषां सा द्वादशीत्यर्थः। एषैव व्यवस्था वाक्यान्तरे वाक्यद्वयविषयत्वात्। प्रथमेहनि संपूर्णा व्याप्याहोरात्रसंयुता । द्वादश्यां च तथा तात दृश्यते पुनरेव सा। पूर्वा कार्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो। एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः। उत्तरां तु यतिः कुर्यात्पूर्वामुपवसेद्गृही'। यतिरित्युपलक्षणं निष्कामानाम्।

'पुनः प्रभातसमये घटिकैका यदा भवेत् । अत्रोपवासो विहितो वनस्थस्य यतेस्तथा । विधवायाश्च तत्रैव परतो द्वादशी न चेत्' । अधिकारिविशेषे वेधसंकोचौ द्वादशीविस्तार इति तात्पर्यम् । गृहिणां तिथ्यन्ते द्वादश्यां पारणं वनस्थादीनामुत्तरदिने द्वादश्याम् । अतएव 'पारणाहे न लभ्येत द्वादशी कलयापि चेत् । तदानीं दशमीविद्धाप्युपोष्यैकादशी तिथि'रिति वचनं गृहस्थेषु कामाधिकारिषु चरितार्थम् । यदि कलामात्रमपि स्यात्तदा परैव प्राप्ता सर्वेषाम् । वेधाभावे पूर्वैव सर्वेषां प्रतिबन्धाभावात् । 'उदयात्प्राग्यदा विप्र मुहूर्तद्वयसंयुता । संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद्गृही'ति न विधायकं तत्रैवेति नियमेनातथात्वे व्रताभावप्रसङ्गात् । तस्माद्व्यवस्थाप्रयोजकं संपूर्णत्वं सूर्यद्वयस्पर्शरूपम् । पूर्वदिने विद्धत्वादुत्तरदिने द्वादश्यभावात्प्रवृत्ता व्यवस्था । द्वादशी कामं पूरयति मोक्षमेकादशीति तत्त्वमधिकारिनिदर्शनात् ।

ननूत्तरदिने कथं द्वादशीति चेत्सूर्यस्पर्शाभावेऽप्यरुणस्पर्शाद्दशमीवत् । अतएव दिनत्रयात्मकत्वं संपद्यते व्रतस्य । व्रतिनां द्वादशीतरेषां त्रयोदशी । तस्मादधिकारभेदेन वेधसंकोचविस्तारावितिसिद्धम् । अतएव पारणयोग्यत्वविशेषणं संगच्छतेऽधिकारभेदेन योग्यत्वसिद्धेः । न सूर्यस्पर्शनियमस्तेषां निष्कामत्वाद्व्रताचरणमधिकारद्योतनाय । ननूत्तरदिने कथं पारणसंभवः 'पारणे मरणे चैव तत्कालव्यापिनी तिथि'रिति नियमात्सूर्योदयात्प्राक्पारणाऽसंभवात्सन्ध्यादिप्रतिबन्धाद्गुदयोत्तरं द्वादश्यभावादिति चेत्संन्यासिविधवयोरप्रतिबन्धेपि गृहिकृतपञ्चमहायज्ञोत्तरमेव पारणसंभवाद्वनस्थस्य स्याच्चेदस्तु कर्मोपसंहारः सोपि परतन्त्रः । एष निष्कामगृहस्थो यो वनस्थः । पाञ्चरात्रादिदीक्षावतामपि गृहस्थत्वेन कर्मोपसंहारप्रसङ्गः पूर्वदिनाधिकारात् । ननु 'दशमीवेधसंयुक्तो यदि स्यादरुणोदयः । नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमि'ति

पाञ्चरात्रादिदीक्षावतो वैष्णवत्वेनोत्तरदिन एव प्राप्तमिति चेन्नै-तद्वैष्णवत्वं व्रते विषयः किंत्वाश्रमाः।

ननु 'यस्य दीक्षास्ति वैष्णवी'ति वाक्यान्तरे लक्षणसमाम्नानात्पञ्चरात्रादिदीक्षित एव वैष्णवशब्दार्थ इति चेन्नैतल्लक्षणमेकादशीव्रते तव प्रयोजकमतएव तदग्रिमकारिकायां लक्षणमाह स्कन्दः। 'समात्मा सर्वजीवेषु निजाचारादविप्लुतः[1]। विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते' इति तच्च लक्षणं संन्यासिनि वनस्थे वा घटते नान्यत्र। विष्ण्वर्पिताखिलाचारत्वमेव संन्यासः। किंच विद्धैकादशी वैष्णवेन नोपोष्येति वचनं परापरसाधारण्येन निषेधं वक्ति तदा सकामेन सकामत्वं निष्कामेन निष्कामत्वं पालनीयमिति पाराशर्यिते व्यवस्थोक्त सकामस्य वेधसङ्कोचो निष्कामस्य द्वादशीधूलिरप्यलं निष्कामत्वात् इति व्यवस्थार्थः प्रकरणार्थश्च। तस्मादत्र वचने वैष्णवः परः परिशिष्टः। अतएवात्र प्रकरणे गृहस्थो यतिर्विधवा चेति वनस्थ इति चाश्रमनामानि निर्दिष्टानि तस्मादाश्रमनिमित्तो वैष्णवोत्र प्रकरणे।

कोयमाश्रमप्रकरणे पाञ्चरात्रः प्रविशति न वर्णाश्रमवचनेषु श्रुतिस्मृतिपुराणे तस्य निर्वाहः स्यादितिहासेषु। न वैष्णवत्वमाश्रममाच्छादयति पिण्डलोपप्रसङ्गात्। आश्रमनिमित्तो हि पिण्डः। विद्धां नोपवसेत्पारणयोग्यद्वादशीसंबद्धामुपवसेदिति वाक्याभ्यां क्षीणायामेकादश्यां व्रते प्रतिबद्धे सर्वाधिकारिषु वेधसंकोचो गत्यन्तराभावात्। अतएव 'द्विस्पृगेकादशी यत्र तत्र सन्निहितो हरिः। तामेवोपवसेत्काममकामो विष्णुतत्परः। एकादशी न लभ्येत सकला द्वादशी भवेत्। उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवीदि'ति चरितार्थम्। पूर्वदिने विद्धत्वादुत्तरदिने द्वाद-

---

१ निजाचारविप्लुते विषमात्मनि.

शीसंबद्धैकादश्यभावादुक्तवचनद्वयस्यावकाशः । वेधवाक्यं बलवदिति केचित् । द्वादशीवाक्यं बलवदिति केचित् । तेन मतभेदबलेनान्ते द्वयोरेकवाक्यत्वं शास्त्रार्थं एकविषयत्वात् । तथाच विद्धां पारणयोग्यद्वादशीसंबद्धामुपवसेदित्यर्थे पर्यवसन्ने वेधसंकोचो वेदितव्यो न द्वादशीविस्तारो वेधस्य द्वादश्यधीनत्वादिति तात्पर्यं वचनद्वयस्य । तथाच द्वादशीपारणान्तमेतद्व्रतमित्यवगम्यते । अतएव 'दिनक्षयमृते देवि नोपोष्या दशमीयुता । सैवोपोष्या तदा पुण्या परतश्चेत्त्रयोदशी'ति हेतुवचनं चरितार्थम् । यदि कथमपि न संपद्यते द्वादशी तदा विद्धाप्युपोष्येत्यर्थः । एकादशीक्षये सर्वैर्द्वादशीक्षये सकामैः । अतएव 'आदित्योदयवेलायाः प्राङ्मुहूर्तद्वयान्विता । एकादशी तु संपूर्णा विद्धान्या परिकल्पिता'। परिकल्पितेति द्वादशीमनुरुध्याधिकारं च वेधसङ्कोचविस्तराभ्याम् । अतएव 'पूर्वविद्धा न कर्तव्या षष्ठ्येकादश्यथाष्टमी । एकादशीं तु कुर्वीत क्षीयते द्वादशी यदी'त्याह । अधिकारिविशेषस्य द्वादश्यां पारणाभावप्रसङ्गादित्यर्थः । अधिकारिविशेषस्तु निर्विवादोऽधिकारभेदादेव योग्यत्वसिद्धेर्द्वादश्याम् । 'परतो द्वादशी न चे'दित्यस्य वाक्यशेषोयम् । 'परतो द्वादशी यदी'त्यस्य वाक्यशेषस्तु 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । तत्रोपोष्या द्वितीया तु परतो द्वादशी यदी'त्यादिवचनकदम्बासा सर्वसाधारण्येन द्वितीयदिने व्रतं विधत्ते । अतएव 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा । वैष्णवी च त्रयोदश्यां घटिकैकापि दृश्यते । गृहस्थोपि परां कुर्यात्पूर्वां नोपवसेत्तदा । पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदी'ति स्मृत्यन्तरम् । एतदेवानुरुध्य सर्वाण्युभयवृद्धिवचनानि चरितार्थानि । पूर्वदिनस्य विद्धत्वादित्यर्थः । अत्र प्रकरणे 'संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी । द्वादश्यां लङ्घनं कार्यं त्रयोदश्यां तु पारण'मिति वचने द्वादशीत्रयोदशीशब्दावुदयसान्निध्यात्प्रवृत्तौ । वस्तुतस्तु सूर्यो-

दयव्याप्त्यैकादशी द्वादशीति वक्तव्यम्। तथापि यां द्वादशीं वेत्सि तामेकादशीं विद्धि यां त्रयोदशीं तां द्वादशीमिति बोधनाय। एतेन तत्कालनियमः परित्यक्ततीर्थपारणचरितार्थो वा। अन्यथा त्रयोदशीस्थाने द्वादशीति वक्तव्यं तथा द्वादशीस्थाने एकादशीति। तत्र च परदिन इति विशेषणं देयम्। तस्माल्लाघवा-दुक्तौ द्वादशीत्रयोदशीशब्दौ तदा न पञ्चमहायज्ञानामुपसं-हारोत्पन्तम्। सर्वस्यास्तिथेरुदयव्याप्ततिथिरूपत्वमित्युत्सर्गात्। अतएवोदितहोमिनां नापराधः। तत्कालनियमाग्रहस्तु तीर्थपारणे चरितार्थः। तथाचैतत्सिद्धम्। अविद्धायामेकादश्यां परतो द्वदश्यां सर्वेषामेका। विद्धायां पूर्वदिने परदिने लवमात्रायामेकादश्यां तत्परदिने लवमात्रायां द्वादश्यां परेद्युः सर्वेषाम्। एकाशीक्षये विद्धाप्येकैव सर्वेषाम्। द्वादशीक्षये सति विद्धवृद्धैकादशीयोगे सकामानां पूर्वा निष्कामानामुत्तरा। अविद्धैकादशीवृद्धौ सत्यपि द्वादशीक्षये सर्वेषामेका पूर्वैव। द्वादशीमात्रवृद्धिस्त्वनिर्णयाङ्गम्। अत्राधिकारिणः सर्वेऽप्याश्रमिणः।

नन्वेकादशीक्षये 'एकादशी यदा लुप्ता परतो द्वादशी भवेत्। उपोष्या द्वादशी तत्र यदीच्छेत्परमां गति'मिति परदिने प्राप्ते कथं सर्वेषां पूर्वेद्युरिति चेत् 'एकादशी न लभ्येत सकला द्वादशी भवेत्। उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽब्रवी'दितिवचनान्त-रानुरोधेनालुप्तेतिच्छेदे सर्वं समञ्जसम्। पाञ्चरात्राणां व्यवस्था पञ्चरात्रादवगन्तव्या। न तेषां भारः श्रुतिस्मृतिपुराणेषु। नन्वा-श्रमित्वात्प्रवेश इति चेदाश्रमव्यवस्थयाऽवगन्तव्यं किं तया संकीर्ण-तया। नन्वत्र प्रकरणे वैष्णवशब्दो व्यर्थ इति चेन्न। वनस्थादि-संग्रहार्थत्वात्। अतएवाह गरुडः। 'वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णव' इति। वैखानसा वालखिल्या उदुम्बराः फेनपा वातरशनाः श्रमणा इत्यादयो वनस्थाः कुटीचको बहूदको हंसः

परमहंस इत्यादयो यतयो यथाधिकारं निवृत्तिदीक्षादीक्षिता वैष्णवा इति तदर्थः । ननु लक्षणद्वयं व्यर्थमिति चेद्य एकादशीं न त्यजेत्स वैष्णव इति व्रतमूलं वैष्णवत्वं सर्वसाधारणं दीक्षामूलं वनस्थयतिनैष्ठिकविधवासाधारणम् । अतएव पृथक्कृत्य पूर्वामुपवसेद्गृहीति विधत्ते सामान्यलक्षणमवलम्ब्य । दीक्षितस्य वचनविशेषे वैष्णवशब्देनोपादानं वचनविशेषे पृथगुपादानं वनस्थो यतिर्विधवेति । अनेन नैष्ठिकोप्युपलक्षितः । सामान्यलक्षणं लौकिकं दीक्षालक्षणं शास्त्रीयम् । लौकिकलक्षणसंपन्नो ब्रह्मचारी गृहस्थव्यवस्थया तिष्ठेत् । अतएवात्र प्रकरणे ब्रह्मचारिणामपि न श्रुतम् । तस्मात्परापरवैष्णवभेदेन सकामनिष्कामादिभेदेन वाऽश्रमावलम्बिनी व्यवस्था सिद्धा । यदि वेधे परेद्युरेकादश्यां ततः परेद्युर्द्वादश्यां च सन्देहस्तदार्थसिद्धं निर्णयमाह प्रद्युम्नो मार्कण्डेयं प्रति । यथा ‘विवादेषु तु सर्वेषु द्वादश्यां समुपोषणम् । पारणं हि त्रयोदश्यामाज्ञेयं मामकी मुने’ इति । सर्वेषु नान्यतम इत्यर्थः । द्वादशी त्रयोदशी च व्याख्याता । इयं मामक्याज्ञेतिकालस्यातिसौक्ष्म्येण ज्योतिर्विदां प्रमादसंभवात्तदङ्गीकार ईश्वराभिप्रेत इति विज्ञातत्वादित्यर्थः । एवमेव स्कन्दोपि ‘प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः । संपूर्णा इति विख्याता हरिवासरवर्जिता’ इत्याह । लेशमात्रमपि पूर्णत्वाय कल्पत इत्यर्थः । एतावता प्रबन्धेनैकादशीमुपवसेन्न कदाचिदतिक्रमेदिति सिद्धम् । अतएव द्वादशीमात्रवृद्धौ केचित्परामुपवसन्ति तेषामुपन्यस्तविधिनिषेधोल्लङ्घनं पाशः । परतो द्वादशी यदीति तूभयवृद्धौ चरितार्थम् । इत्थं व्यवस्थायामाहुः ‘यत्राम्ना विहितं यत्तत्तेनानुष्ठेयमादरात् । अविशेषाद्यद्विहितं तत्सर्वैरिति पद्धति’रिति । विदुषः संन्यासिनो व्रतं ‘तस्यैवं विदुषो यज्ञस्ये’त्यनुवाके प्रतिपादितम् । परिशिष्टाः केचिच्छास्त्रार्था आकरेभ्योवगन्तव्याः । अस्य परा-

मर्शस्य दशमीवेधो द्वादशीयोग एकादशीवृद्धिक्षयौ द्वादशीक्षयश्चेति पश्चाङ्गानि। दशमीद्वादशीद्वन्द्वं वेधशोधनकर्मणा। एकादशी महारत्नमाश्रमेभ्यो ददात्यहो ॥ १ ॥ एकादशीव्रतं मन्ये जगज्जीवनमेव हि। येन कामश्च मोक्षश्चाधिकारिषु समर्प्यते ॥ २ ॥ पुच्छे दोषो दशम्यास्तु गुणः पुच्छे द्वयोरथ। पुच्छसंकोचविस्तारौ निर्णीयन्ते कृतात्मभिः ॥३॥ पूर्णाश्रमाज्ञयाद्य त्वं दृष्टासि परमेश्वरि। एकादशि महामाये त्वयि मुग्धा महाधियः ॥४॥ इत्थं विज्ञातवान्कृष्णो भिक्षुरेकादशीव्रतम्। रोचतां विदुषां मूर्धमुकुटेभ्योऽथ विष्णवे ॥ ५ ॥ यत्प्रेरितं भगवता हृदयस्थितेन यद्बोधितं च गुरुणा करुणार्णवेन। तत्कृष्णभिक्षुरलिखद्बुधचित्तपद्मसद्मोत्थमोदमकरन्दरसाभिलापी ॥ ६ ॥ गजक्ष्मागजचन्द्राङ्के शालिवाहशके शुभे। परामर्शः समाप्तोयं पुष्पवन्तौ घटान्वितौ ॥ ७ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतः संक्षिप्त एकादशीपरामर्शः समाप्तः।

---

# एकादशीपरिशिष्टम् ॥ १८ ॥

वर्णानामाश्रमाणां च देवता विष्णुरेव हि।
नारायणादिराचार्यपारम्पर्यमतो भुवि ॥ १ ॥

तदुक्तं श्रीभगवता गीतायामर्जुनं प्रति। यथा 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययं' इति। मयाऽचार्यरूपेण सृष्टं विभाजितं। कथमिति तदाह। गुणकर्मविभागश इति। गुणा आश्रमाः कर्माणि तत्तन्नियतानि। तेषां विभागश एष आश्रम एतत्कर्मेति विभज्य चातुर्वर्ण्यं मया सृष्टं विभाजितं। न कोपि वर्ण आश्रमधर्मरहित इत्यर्थः। तस्य व्यवस्थापनस्य कर्तारमपि मां व्यवस्थापनीयानां वर्णा-

नामाश्रमाणां च अकर्तारं विद्धि तेषामनादित्वात् । 'तानि धर्माणि प्रथमान्यासन्नि'ति श्रुतेः । तल्लोपप्रसङ्गे शङ्कायामाह । अव्ययमिति । अव्ययत्वात्तदा तदा व्यवस्थापयामि । अतएव 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमि'त्याह स्वयं । धर्मस्य वर्णाश्रमव्यवस्थायाः । अधर्मस्य यथेष्टाचरणस्य । आत्मानं तत्तत्कालोचितरूपं सृजामि बिभर्मि । एतेन सर्वेऽवतारा व्याख्याताः । प्रयोजनं चोक्तं । 'परित्राणाय सधूनां विनाशाय च दुष्कृतां । धर्मसंस्थापनार्थाय संभवामि युगे युग' इति । साधूनां वर्णाश्रमवतां । दुष्कृतां तद्विघातिनां तत्त्यागिनां च सत्यप्यधिकारे । एवं कर्मद्वये कृते फलमाह धर्मसंस्थापनायेति । एतत्कर्मद्वयमेव मामकं कर्म धर्मसंस्थापनमुच्यते । यदा यदा युगे युग इति वीप्साभ्यां बहवोऽवताराः प्रतियुगमितिगम्यते । अतएव वेदादौ हरिं स्मरन्ति । यत्र वर्णाश्रमो मूलं सर्वोयं वेदो वर्णाश्रमव्यवस्थायां परिसमाप्तः । अतएवोपनीतानां वेदाध्ययनविधिः । आश्रमैर्वर्णाः सफला आश्रमा लोकद्वयाधिकारात्सफला इति निखिलवेदार्थः । अतएव 'निराश्रमो न तिष्ठेत दिनमेकमपि द्विज' इति निषेधः । अधिकारलोपप्रसङ्गादिति । वर्णलोपप्रसङ्गाच्चेति । वर्णैराश्रमधर्मैः संपादितं वित्तमाश्रमधर्मैरेव संपाद्यमतो वर्ण आश्रमे च्युतो न दायभाक् । तस्मादाश्रमेण निमित्तेन प्रवृत्तेऽस्मिन्नेकादशीव्रते विष्णुर्देवता । व्रताऽधिकारिण आश्रमिणः । यत्तु केनचिद्राज्ञा पशुभिरपि कारितमेकादशीव्रतमिति श्रूयते लोके तत्तु कस्यचिद्भक्तस्योत्पातः न व्यवस्था पशूनामनधिकारात् । अन्यथोपनयनस्यापि प्रसङ्गः । किमद्य अस्माकं वैष्णवमतमुन्मूलयितुं प्रवृत्ताः । न तथा किंतु वैष्णवी दीक्षा वर्णानामाश्रमा इति बोधयितुं प्रवृत्ता इति विज्ञेयं । पाञ्चरात्रविषया गृहिण आश्रमच्युता इति च । पञ्चानामप्युपासनानामाश्रमाऽविरोधेन चारितार्थ्यं । यज्ञपुरुषं भजन्ते यज्ञाँल्लोपयन्ति तच्चित्रम् ।

ननु 'गुणकर्मविभागश' इति पादव्याख्यानप्रसङ्गे गुणा आश्रमाः कर्माणि तत्तन्नियतानीति व्याख्यातं तन्निर्मूलम् । गीतायामेव 'ब्रह्म-कर्म स्वभावजमि'त्यादिचातुर्वर्ण्यकर्माणि पृथगेवोक्तानीति चेत्तानि स्वभावजान्यप्याश्रमाङ्गानि तेन तेन वर्णेन तस्मिंस्तस्मिन्नाश्रमे तानि तानि कर्माणि सेवितव्यानि इति गीतार्थो व्यवस्थितः । कृपिगोर-क्ष्यादीनामप्याश्रमाङ्गतया विनियोगः । चित्रमेतत् । च्यवन्ते मार्गा-दयमस्माकं मार्ग इति वदन्ति । मार्गस्तु श्रुतिस्मृतिसिद्धोनादिर्व-र्णानां न यत्र मतभेदः सिद्धान्तभेदाभावादिति । प्रकृतेस्त्रयो गुणा वर्णानां चत्वारः । तत्र प्रकृतिगुणशुद्धितारतम्येन वर्णगुणाः पालिता भवन्तीति निर्विवादम् । अतएवाश्रमहीनो वर्णः पतित उच्यते । अतएव 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव' इति वचनमुपपन्नम् । वर्णानां स्वकर्मत्वाश्रमोचितकर्माचरणं तदेव तस्यार्चनमित्यर्थः । अस्मिन्नेवैकादशीव्रतकोलाहले एकादशीव्रतनिष्टं-मन्यैः कैश्चिदाश्रमास्त्यक्ताः पञ्चमहायज्ञलोपात्कैश्चि'दुपोष्या द्वादशी शुद्धे'तिवलेनैकादशी त्यक्ता कैश्चित्पौराणिकं व्रतमिति व्रतमप्येकादश्यपि । वैदिका वयं पौराणिकं न मन्यामह इति चेत्किं व्यासस्यावैदिकत्वमभ्युपगतं । स च भवतां गुरूणां गुरुरत एव वेदव्यासो वेदव्यवस्थापनात् । किं पुराणानि वेदबाह्यानि । किं भिन्नं प्रस्थानं तेषां । वयं तु मन्यामहे वेदोपबृंहकाणीति । तर्हि प्रस्थानत्रयमिति श्रुतिस्मृतिपुराणेषु व्यवहार आचार्याणां कथमिति चेदाचार्यभेदात्तदुपपत्तिः । तात्पर्यैक्यादेकप्रस्थानत्वं च युक्तम् । अत्रैकादशीव्रते श्रुतिस्मृतिपुराणानामेकवाक्यताख्यातये निबन्धकाराणां वचनान्युपन्यसामः । यथा 'श्रुतिस्मृतिपुराणेषु जयत्येकादशीव्रतं । तत्रोपवासः कर्त्तव्यः स च वासो गुणैः सह ॥ १ ॥' तत्र श्रुतिः कठशाखीया 'तस्मान्नित्यमेकादशीमुप-वसेत्सर्वकामामि'त्यादिः । स्मृतिस्तु कण्वस्य 'एकादशीमुपवसेन्न

प्रशान्तिदति कर्मेदि'ति। पुराणं तु सनत्कुमारसंहितायां 'एकादशी यदीयोक्ता पक्षयोः शुक्लकृष्णयो'रिति। यद्येकादशीव्रतविषये श्रुतिर्नाभविष्यत्तदा स्मृतिः पुराणं च नाभविष्यत्। तस्मादाश्रमव्यवस्थया सवर्णमात्रवृत्तिरिक्तेऽस्मिन्व्रतेऽधिकारिण आश्रमिण एव। वैष्णवमात्रागमदीक्षिता अपि वानप्रस्थाद्याश्रमविधयाधिकारिणः। तस्मादस्मार्तवैष्णवभेदेन व्यवस्था चिन्त्या पूर्वाचार्यैः क्षन्तव्यं च मम साहसविलसितम्।

इत्थं गीतायामष्टादशेऽध्याये वर्णाश्रमव्यवस्थोपक्रमः। यथा 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः। सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः।' इति त्रिगुणात्मकत्वं प्रपञ्चस्य निरूप्य वर्णाश्रमव्यवस्थामाह 'ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप। कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः।' स्वभावा वर्णास्तैर्निमित्तैरुद्भूतैः संस्काररूपैः गुणैराश्रमैश्चतुर्भिः। तानि शिक्षणीयानि प्रविभक्तानि कर्माण्याह 'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च। ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजं।' शमोन्तर्निग्रहः। दमो बहिर्निग्रहः। तपः स्वाध्यायः। शौचमाचारः। एते ब्रह्मचारिशिक्ष्याः। क्षान्तिः क्षमा। आर्जवमवक्रता। ज्ञानमधीतस्य विचारः। एते गृहिशिक्ष्याः। विज्ञानं विचारितार्थे निष्ठा। वानप्रस्थशिक्ष्यं 'पूजा देवे श्रद्धा यज्ञरूपा' इत्यादिश्रुतिभिर्निवृत्तिपरमार्थज्ञानं विज्ञानम्। आस्तिक्यमस्तिमात्रं ब्रह्म तत्संपत्तिः। 'अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः। अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते' इत्यादिश्रुतिभ्यः। एतावन्ति कर्माणि ब्राह्मणैःसाध्यानि तस्माद्ब्रह्मकर्म स्वभावजमित्युक्तिर्भगवतः। 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनं। दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजं॥' शौर्यं प्राप्ते प्रसङ्गे समुत्साहः। तेजोऽदीनता। धृतिर्धैर्यं। दाक्ष्यमुपायचतुष्टयप्रवीणता। अपलायनं शत्रु-

सांमुख्याद्निवृत्तिः । एतानि ब्रह्मचारिशिक्ष्याणि । दानं यथा-पात्रं त्यागशीलता । ईश्वरभाव आज्ञाप्रवर्तनशक्तिः । द्वे गृहिविषये । एतानि क्षत्रियैकसाध्यानि । 'कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजं ।' त्रीण्यपि कर्माण्याश्रमद्वयसाधारणानि वैश्यैकसाध्यानि । अतिकठिनं सत्यानृतात्मकं कर्म । सत्ये स्थितोऽप्यनृते प्रविशति वैश्यः । यथाऽधुनैव आत्मानं वैश्यं ब्रुवन्नपि निवृत्तः सत्यार्थोद्वेदात्तत्संस्कारान्तं । 'परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजं ।' परिचर्या सेवा सा च शूद्रैकसाध्या । एते चत्वारो वर्णाः प्रसङ्गादन्यकर्मप्रवृत्ता अपि चरमदशायामत्रैव पर्यवस्यन्तीत्यपिशब्दो ध्वनयति । अन्तेऽङ्गीकारप्रसङ्गे आदावेव कुतो नहि न्यायेनाह 'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।' संसिद्धिं जन्मसाफल्यं । तत्रोपपत्तिमाह 'स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।' स्वधर्मनिष्टैव सिद्धिमार्ग इत्यर्थः । कस्मादेतत्तदाह 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततं । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।' यो जगत्कारणं परमात्मा जगदात्मा तं स्वे वर्णाः कर्म तेषामाश्रमधर्मस्तेन परमात्मानमभ्यर्च्य सिद्धिमेवोपैति, नाधःपतति मानव इत्यर्थः । स्वकर्मणेत्यर्चधात्वर्थेनाभेदेनान्वेति । तेन स्वकर्मैव तदर्चनमित्यर्थः पर्यवस्यति । स्वकर्मणि कृते स्वः सिध्यत्येवेत्यर्थः । मानव इति मनुष्यसामान्यस्य चातुर्वर्ण्यान्तर्गतत्वादाश्रमैरीश्वरार्चनं फलाय कल्पत इति काल्पनिकैराश्रमोपमर्दकैर्धर्मैर्न[1] फलमाकाङ्क्षेत ।

---

१ एतेनात्मकल्याणाय सर्वो यतेतेति परमे आत्मकल्याणे निर्वाणे सर्वोऽधिकरोतीत्यतएव सर्वेषां निर्वाणफलके संन्यासे भजनादौ पाखण्डे च समानोऽधिकार इति वदन्तो धूर्ता निरस्ताः । स्वधर्मस्यैव क्रमेण यावत्कल्याणे पर्याप्तत्वात् कल्याणभ्रान्त्यादतस्य परधर्मस्य प्रत्युत भयावहत्वाच्च धर्मविशेषे साङ्कर्यमनार्यजनानुवृत्तमार्येषु पाखण्डत्वाद्धेयमेवेति सिद्धान्त आहतश्च.

अतएव श्रुतिः 'यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्था'मिति । आश्रमत्याग एव वेदस्य सत्यक्तुः सख्युस्त्यागस्तद्धर्तुः कर्मफलमिति वाच्यपि न भागोस्ति किं पुनः फले भागो नास्तीति । यत्किञ्चित्फलमिति शृणोति तदलीकं स आश्रमत्यक्ता सुकृतस्य पन्थानं न वेदेत्यर्थः । तस्मादाह 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्' इति । कदाचिद्दृष्टफलवैगुण्येन विगुण इव भासमानोपि स्वधर्म एव श्रेयान् । स्वनुष्ठितोपि परधर्मोऽनुकरणरूपत्वान्न श्रेयान् । नटशतं कृत्वापि नटो न योषा भवति तस्माद्दर्शनीय इति शास्त्रं । अत आह । 'स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषं' इति । संप्रति फलाभावेपि फलाधिकारान्न च्यवत इत्यर्थः । तस्मादुपसंहरति वर्णाश्रमव्यवस्थां 'सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्' इति । दोषो दारिद्र्यादिः । यमारम्भं गुणं मनुषे तत्रापि स एव दोष इत्याह 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति । यथा यत्र धूमस्तत्र वह्निरिति तथाऽऽरम्भमात्रं दोषवदिति नियमः । दृश्यन्ते सर्वेप्यारम्भेषु दरिद्राः । कस्य नात्र निमग्ना संसारार्णवे । तस्मान्नाहंकारावकाश इत्याह 'असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः' इति । स्वधर्ममाचरेदिति शेषः । तत्फलमाह 'नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' इति । सर्वेषामाश्रमाणां फलं संन्यासः तत्फलं नैष्कर्म्यसिद्धिः । ब्रह्मीभाव इत्यर्थः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' इति ब्रह्मजिज्ञासोपक्रमात् । शमादीनां ब्राह्मणगुणत्वोक्तेर्ब्राह्मणस्यैवाधिकारः संन्यासे । अतएव भगवानाह 'यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इति । चतुर्भिर्महावाक्यैः प्रणवेन च सर्वशाखाप्रत्ययं ब्रह्मविजानता - ब्राह्मणस्य सर्ववेदवेत्तृत्वं तत एव

गुरुत्वम्। उदपाने जललक्षणसमन्वयं विजानतो जलसामान्यं विदितं भवति। एतदन्तमधिकारो ब्राह्मणस्यैवेति भगवतोऽभिप्रायः। अतएव विदितवेद्यत्वे तुल्ये जनको गृही याज्ञवल्क्यः संन्यासीति व्यवस्थोपपत्तिः। अतएव शमादीनां ब्रह्मकर्मस्वभावजत्वमित्याह। सिद्धिं प्राप्तो यथा ब्रह्मेत्यादिर्निष्ठासाधनोक्तिः। एवंस्थिते शूद्रादिः स्वधर्ममाचरन्वैश्यतां क्षत्रियतां ब्राह्मणतां नैष्कर्म्यसिद्धिं क्रमेणाप्नोतीति श्रेयान्स्वधर्मोऽधिकारवृद्धिहेतुः। परधर्ममाचरन्ब्राह्मणादिः क्षत्रियतां वैश्यतां शूद्रतां क्रमेणाप्नोति ततो भयावहः परधर्मः। ऊर्ध्वं गच्छन्ब्रह्मान्तं गच्छति पतन्नन्धतमोन्तं। तस्मादाश्रमधर्मा बलवन्तः। दीक्षाधर्मा दुर्बला इति सिद्धम्। अस्तु वा पाञ्चरात्रदीक्षा संन्यासिषु तत्रापि निष्कामाधिकारित्वम्। अतएव निष्कामा वयं द्वितीयैकादश्यधिकारिण इति तच्च माध्वरामानुजयोरेव शोभते संन्यासित्वाव्यभिचारात्। या च दीक्षामात्रेण कामाधिकारिषु गृहस्थेषु निष्कामशब्दप्रवृत्तिः सा चिन्त्या मतिमद्भिः। न तेनाग्निहोत्रादिलोपप्रसङ्ग एकादशीलोपप्रसङ्गो वा। न जुहुयान्न दद्यादित्यादिनिषेधकदम्बः संन्यासिषु चरितार्थः। यो न दद्यान्न जुहुयात्सोऽत्र दीक्षायामधिकारी द्वितीयैकादश्यधिकारीति तदर्थः। निष्कामाऽधिकारात्पाञ्चरात्रदीक्षायाः। एवं व्यवस्थायां स्मृतेः पाञ्चरात्रस्यैकवाक्यता सुसंपन्ना। नापि कस्यापि धर्मस्योच्छेदः। तातकूपन्यायं त्यजन्तोऽनुसरिष्यन्त्येनं पन्थानम्।

मत्कृता य इह केऽपि निबन्धाः काशिकामुकुटरत्नसदक्षैः।
पञ्चभिर्द्विजवरैः खलु दृष्टा अन्धकारिनगरेऽपि किमन्धाः ॥१॥

---

१ इयमेकवाक्यता तुष्यतु दुर्जन इति न्यायेन।

तेषां नामानि ।

श्रीमत्कैलासचन्द्रशर्मा भट्टाचार्यः

श्रीमत्पण्डितस्वामी राममिश्रशास्त्री

श्रीमत्सुरेन्द्रलालगोस्वामी

श्रीमद्भागवताचार्यः

श्रीमट्टोपरोपाह्वराजारामशास्त्री

एकाङ्कसिद्धिचन्द्राब्दे शालिवाहमहीपतेः ।
एकादशीपरामर्शपरिशिष्टं निरूपितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकश्रीसच्चिदानन्दसरस्वतीपादपद्माराधककरुणा-मंदसरस्वतीप्रणीतं एकादशीपरामर्शपरिशिष्टं समाप्तम् ।

---

श्रीराजारामशास्त्रीटोपरेप्रणीतः

## कण्टकत्रयोद्धारप्रदीपः ॥ १९ ॥

नत्वा श्रीनृहरिं देवं भक्तवत्सलमादरात् । एकादशीपरार्शो हर्षेणानुक्रमस्ततं ॥ १ ॥ अथ श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीपूज्यपादैः सत्स्वपि बहुषु धर्मशास्त्रग्रन्थेषु वर्तमानकालिकलोकानुग्रहेच्छया परमेकादशीव्रतं महता समारम्भेण "अथैकादशीव्रतं परामृश्यत" इत्यारभ्य "केचिच्छास्त्रार्था आकरेभ्योऽवगन्तव्याः" इत्यन्तेन वाक्यस्तोमेन निरणायि—तस्य वाक्यस्तोमस्य "एकादशीपरामर्श" इति नामकरणमकारि तमिमं वाक्यस्तोमं विलोक्य जातसन्देहस्तान्प्रति शरणं गत्वा दुर्बोधमिमं ग्रंथं बोधयन्तु दयालव इति प्रार्थनामकरवम् । अथ तैः कारुणिकैर्व्याकरणादिनिखिलशास्त्रेषु पारंगतैः करुणया बोधितः पूर्वावस्थातोऽधिकं खिन्नमना अभवम् । तदिदानीं तेषामाज्ञयैव प्रकाश्यते ।

---

१ देवर्यन्तं शास्त्रनिरपेक्षनामानुकरणम्.

तत्रैकादशीपरामर्श इति ग्रन्थनामघटकैकादशीपदं प्रतिज्ञानुरोधादेकादशीव्रते लाक्षणिकमिति भाति । किमियं लक्षणा प्रयोजनेन सहिता रहिता वेत्येतत्तत्त्वं त एव जानन्ति । ननु नायमुपालम्भः शोभते । प्रयोजनाभावेपि लाघवात्तथा नामकरणमिति चेत् ततोप्येकापरामर्श इत्यस्य लाघवस्य संभवात् । नच तथा कृतम् । तेनेदं मन्यामहे केनचित्प्रयोजनेन भवितव्यमिति ।

---

१ शक्यार्थेन सहान्वयस्य तात्पर्यस्य वा बाधे शक्यार्थसंबन्धवदर्थबोधकत्वे शब्दस्य भवति हि वृत्तिर्लक्षणाबोध्यो लक्ष्यो बोधकश्च लाक्षणिक इति नापरोक्षं विदुषाम् । प्रकृते टोपरेमते व्रतशब्दासंनिधाने एकादशीशब्दो लाक्षणिकस्तद्व्रतवाचकत्वे । तत्संनिधाने तु स न तथा । लक्षणा चेयं रूढिप्रयोजनान्यतररूपहेतुविरहिणीति काव्यप्रकाशादिशास्त्रकृदसंमता ।

आकर्ण्यैते टोपरेपण्डितस्तार्किकस्तन्मतसंमता चेदलं काव्यप्रकाशकारादिमुखावलोकनेन । नेयं लक्षणा ममापि संमता । रूढेः प्रयोजनस्य वाऽनुपलब्धेः । प्रकाशादिसंमताऽपि च नेति तात्पर्यं चेत्तथापि नाक्षेपावसरः । एकादशीनिर्णयो वामनद्वादशीनिर्णयः प्रदोपनिर्णयोऽनध्यायनिर्णयः स्वाध्यायनिर्णयः सन्ध्यानिर्णयस्संक्रान्तिनिर्णय एकादशीं परित्यज्य प्रमादादित्यादौ लक्षणाया दृष्टत्वेन रूढेः स्पष्टत्वात् । एवमपि लक्षणायां लक्षणैव दोषस्तत्प्रकाश एव च दोपदृष्टेर्मम कर्त्तव्य इति चेदाकूतम्, तथापि न मनोरथस्य सिद्धिः । व्रतशब्दसंनिधानेऽपि पूर्वपदस्यैकादशीशब्दस्योत्तरपदार्थान्वययोग्योत्तरपदार्थातिरिक्तनिमित्तादिपदार्थपरतया शाकपार्थिवादिसमासपूर्वपदशाकादिपदस्येव लाक्षणिकत्वात् । क्रोधान्धेन टोपरेमहाशयेन कृतो लाघवाल्लक्षणेत्याक्षेपस्तमेव तत्पदे निक्षिपति । लाघवस्य तन्मतेऽपि लक्षणाया अप्रयोजकत्वात् । ततोप्येकापरामर्श इति कथनं तु व्युत्पत्तिशैथिल्यं स्पष्टयति टोपरेगुरोः । एकाशब्दस्यैकादश्येकदेशस्यानर्थकत्वाच्छक्यार्थोपस्थापकत्वाभावाच्छक्यार्थसंबन्धलक्षणलक्षणाया असंभवात् स्त्रीविशेषणोचितस्य संख्यावाचकस्य तस्य स्वविशेष्याध्याहारक्षमत्वेऽपि स्वघटितसमुदायबोध्यतिथिविशेषोपहितकालादिसाध्यानुष्ठानबोधकत्वेऽव्युत्पन्नत्वात् । अतएव कलिङ्गः साहसिक इत्यादौ न कलिशब्दस्य लक्षणयाप्यर्थविशेषबोधकत्वमिति संक्षेपः.

नचेयं प्रयोजनेन रहिता लक्षणा संभवति । एकादशीपरामर्श इत्यस्य रूढित्वाभावात् । स्पष्टं चेदं काव्यप्रकाशादौ ॥ १ ॥

अथैकादशीव्रतं परामृश्यत इति प्रथमं सूत्रम् । तद्भाष्यं तु एकादशीनाम कालविशेषो दशमीद्वादशीमध्यगतः शुद्धः । व्रतं नाम भोजनं तदभावश्च । प्रकृतसंगतिचिन्तनं परामर्श इति । अत्र व्रतशब्दस्य भोजनतदभावोभयात्मकत्वं कस्मादिति पृष्टाः श्रीस्वामिनो व्रताद्भोजनतन्निवृत्त्योरिति वार्तिकादिति समाहितवन्तः । तत्तु तेषामेव शोभते । नह्यस्माद्वार्तिकात्पुष्पवन्तशब्दवद्व्रतशब्दस्यापि भोजनतदभावोभयवाचित्वं सिध्यति । तथासति पुष्पवन्तपदादेकं धर्मं परित्यज्यापरधर्मप्रकारकबोधो यथा न भवति तथा व्रतशब्दादपि नैकं धर्मं परित्यज्यापरधर्मप्रकारकबोधो भवेत् । नैव भवतीति चेत्पयो व्रतयति शूद्रान्नं व्रतयतीत्यस्माच्छाब्दबोधानापत्तेः । नन्वन्यत्र व्रतशब्दस्य नानाधर्मावच्छिन्नवाचकत्वेपि प्रकृते एकादशीव्रतमित्यत्र व्रतशब्दस्योभयवाचित्वमेवेतिचेत्किं तत्र प्रमाणमिति पुनरपि प्रमाणाकाङ्क्षोन्मज्जेत् । अनिवृत्तायां च तस्यां तद्भाष्यस्याश्रद्धेयत्वापातः केन वारणीयः । नन्वेवं भवन्त एव वदन्तु व्रतशब्दार्थमिति चेत् नाहमत्र पामरः प्रभवामीति प्राचीननिबन्धकारा एव शरणीकरणीया इति ॥ २ ॥

प्रकृतसंगतिविवेचनं परामर्श इत्यस्याप्यर्थे पृष्टे श्रीस्वामिचरणा इत्यर्थमाहुः । प्रकृतयोरेकादशीव्रतयोः संगतेर्विवेचनमिति । यद्ययमेवार्थस्तर्हि तदीयविषयतायाः संगतौ सत्वेन व्रतेऽभावाद्व्रतं परामृश्यत इति कथं सुवचं भवेदिति त एव जानन्तु । अथाप्यस्य प्रकृतयैकादश्या या संगतिस्तत्प्रकारकज्ञानविशेषः परामर्श इत्यर्थकरणेनैकादशीनिरूपितसंगतिप्रकारकज्ञानीयविशेष्यताया व्रतेऽबाधाद्व्रतं परामृश्यत इत्यस्य साधुत्वं प्रतीम इति ॥ ३ ॥

यत्तु व्रतं नाम भोजनं तदभावश्चेति सिद्धान्तयित्वोपसंहारे

भोजननिवृत्तिभोजनोभयरूपमिति व्यत्यासेनाभ्यधायि तस्यापि रहस्यं तैरेव प्रकाशनीयम्। किंच भोजननिवृत्तिर्भोजनाभावाद्भिन्नाऽभिन्ना वा। यदि पूर्वः पक्षः कथं तर्हि व्रतत्वम्। उभयस्वरूपस्य व्रतस्य भोजनाभावान्तर्भावेण व्रतत्वाभावेऽपि भोजनान्तर्भावेण व्रतत्वं निर्बाधमिति चेत् व्रतत्वस्य कपिसंयोगवदव्याप्यवृत्तित्वापत्तेः। व्रतशरीरे भोजनाभावप्रवेशस्यात्यन्तं वैयर्थ्यापत्तेश्च। यद्युत्तरः पक्षः कथं तर्हि भोजनं तदभावश्चेत्यर्थकरणं विदुषां मनःप्रसादाय प्रभवेत्। यदि तदभावपदं तन्निवृत्तिपरमिति चेत् लक्षणापत्तेः। नह्यर्थकरणे 'लक्षणा' शोभते। अर्थकरणप्रयोजनबाधापत्तेरिति ॥ ४ ॥

वैष्णवे पर्यवसन्नमिति एवं सिद्धान्तिते एकादशीव्रतस्य शैवादावप्रसरप्रसङ्गः। नहि यद्यत्र पर्यवस्यति तत्ततोन्यत्र गच्छति। यदि 'वैष्णवो वाथ शैवो वा सौरोप्येतत्समाचरे'दित्यादिवचनबलाच्छैवादावपि निष्कम्पं प्रसरेदिति चेत् नमोऽस्तु वैष्णवे पर्यवसन्नमित्युक्त्या इति ॥ ५ ॥

तल्लक्षणमभिहितम्। यथा 'परमापदमापन्नो हर्षे वा समुपस्थिते। नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी' इति। अत्र वाक्ये द्वाभ्यां यच्छब्दाभ्यां लक्षणद्वयमभिहितम्। तच्छब्दद्वयापेक्षणात्। नैकादशीं त्यजेदिति विधिः। यो न त्यजेत्स वैष्णव इत्येकं लक्षणम्। यस्य वैष्णवी दीक्षास्ति स वैष्णव इत्यपरम्। वैष्णवी दीक्षा संन्यास इति। अत्रास्य वचनस्य श्रीस्वामिन एव मूलमिति भाति। अन्यत्र कालमाधवादौ विष्णुरहस्यादुद्धृतस्य 'परमापदमापन्नो हर्षे वा समुपस्थिते। सूतके मृतके चैव न त्यजेद्द्वादशीव्रतम्' इत्यन्यस्यैव दर्शनात्। आस्तां वा तावत्तदप्यन्यत्र प्रमाणीभूतम्। तत्रैव वा कुत्रचित्। नहि मादृशेनातिपासरेणादृष्टं कल्पितमेवेति निश्चेतुं शक्यम्। तथापीदं न वैष्णवलक्षणप्रतिपादकं भवि-

तुमर्हति । अन्यथैव योजयितुं शक्यत्वात् । तथाहि यस्येति जात्येकवचनम् । षष्ठी च निर्धारणे । अप्यर्थकं त्वित्यव्ययम् । तथा च येषां वैष्णवी दीक्षास्ति तेषांमध्ये यः कोपि नैकादशीं त्यजेदित्यर्थः संपद्यते । प्रदर्शितविष्णुरहस्यस्थवचनैकवाक्यत्वानुरोधात् । युक्तं चैतत् । श्रीस्वामिचरणानां मते तु वाक्यार्थत्रयकल्पनातो निरर्थकता । अश्रुतलक्ष्यवाचकपदकल्पना । कथंचिदेकवाक्यत्वविरुद्धत्रिकद्वयापत्तिश्च द्रष्टव्या ॥ ६ ॥

वैष्णवी दीक्षा संन्यास इति । अत्र संन्यासो वैष्णवी दीक्षेति युक्तम् । उद्देश्यवाचकपदस्य पूर्वं प्रयोगात् । आस्तां वा तथैवोपन्यासः तत्र प्रमाणापेक्षायां श्रीस्वामिचरणा एव प्रमाणम् । वस्तुतस्तु वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णव इत्येव शास्त्रसिद्धं वैष्णवलक्षणम् । दीक्षापि सैव प्रकृता । अन्यथा संन्यास एव कुतो वैष्णवी दीक्षा । उपनयनं कुतो न सा । नन्वस्मत्पक्षे 'द्वे रूपे वासुदेवस्य चरं चाचरमेव च । चरं संन्यासिनां रूपमचलं प्रतिमादिक'मित्याद्युपोद्बलकस्य सत्त्वात् । भवन्मते च तदभावात् नैवम् । अत्रापि अतएव 'अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनु'रिति वचनस्योपोद्बलकतया समर्पयितुं शक्यत्वात् । एतेनाग्रिमः सर्वोपि ग्रन्थो व्याख्यात इति कृतमपराधेनेति शम् । इति टोपरे इत्युपनामकेन राजारामशर्मणाऽनुव्यवसितः परामर्शः ॥ १ ॥

अथ तैरेव कृष्णानन्दस्वामिभिर्भैरवाष्टमी निर्णीता । तत्र प्रमाणत्वेन शिवरहस्यस्थवचनानि उपन्यस्य यथेष्टं व्याख्यातानि । किमर्थमयं तेषां प्रारम्भ इति न विद्मः । तथाहि शिवरहस्ये सप्तमप्रकरणे 'अन्तर्गृहे कृतं पापं यन्मलोत्सर्जनार्जितम् । मूत्रोत्सर्गार्जितं चात्र न नश्यति च दुःखदम् ॥ १ ॥' इत्यनेन पार्वतींप्रति शिवेनान्तर्गृहे मलमूत्रोत्सर्जनजपापस्याऽनिष्कृतिमेवोक्त्वान्तर्गृहाद्बहिस्तत्कृतपापक्षयार्थं प्रायश्चित्तमुक्तम् । तद्यथा ।

'अन्तर्गृहाद्बहिः कुर्याद्यदि मूत्रविसर्जनम्। पुरीषोत्सर्जने वापि तत्प्रायश्चित्तमुच्यते १ पञ्चगव्यं यथाशास्त्रं ग्राह्यं मुण्डनपूर्वकम्। ततोन्तर्गृहयात्रैका कर्तव्या विधिपूर्वकम् २ ततः पञ्चक्रोशयात्रा निराहारेण सादरम्। कर्तव्या विधिवद्विप्रा भोजनीयाश्च यत्नतः ३ इदं मूत्रोत्सर्जनस्य प्रायश्चित्तमुदाहृतम्। पुरीषोत्सर्जने कार्यमेतद्दशगुणं क्रमात् ४ एकमेव हि विज्ञेयमुभयत्रापि मुण्डनम्। ब्राह्मणाश्च यथाशक्ति भोजनीयाः प्रयत्नतः ५ त्यक्त्वैकदा मलं मर्त्यैरेकदा मूत्रमेव वा। एवं कार्यं प्रयत्नेन प्रायश्चित्तं वरानने ६ मलमूत्रादिकं काश्यां त्यक्त्वापि बहुधा जनैः। बहुधैव तथा कार्यं प्रायश्चित्तं यथाविधि ७ तादृशैर्यत्नतः कार्यं प्रायश्चित्तं मयोदितम्। अन्यथा यातनां घोरां प्राप्नुवन्ति न संशयः ८' इति प्रासङ्गिकं समाप्य कालाष्टमीदिनकृत्यमुक्तम्। तद्यथा—'श्रीकालभैरवप्रान्ते कुण्डमस्त्येकमुत्तमम्। कालाष्टमीदिने तत्र स्नानं कार्यं विधानतः १ तत्कुण्डनिकटे रम्यं लिङ्गं कालेश्वराभिधम्। भैरवस्थापितं तिष्ठत्येकं पापौघनाशनम् २ तत्पूजनं यथाशास्त्रं कार्यं बिल्वदलादिभिः। ततः पूजा यथाशास्त्रं कर्तव्या भैरवस्य च ३ प्रदक्षिणनमस्काराः कार्याश्चाष्टोत्तरं शतम्। जागरेणोपवासेन प्रीणनीयो हि भैरवः ४ शुचिभिस्तैलपक्वान्नैः शैवा ब्राह्मणपुङ्गवाः। भोजनीयाः प्रयत्नेन भैरवप्रीतिकामुकैः ५' इति। एवंस्थिते वटपिप्पलन्यायेन श्रीस्वामिचरणैर्दुःखपङ्कनिमग्नजगदुद्धिधीर्षया प्राचीननिबन्धकारेष्वीर्षया च मलमूत्रादिकं काश्यामिति प्रायश्चित्तप्रकरणस्थवचनद्वयं कालाष्टमीकृत्येन सह संयोज्य मूलवचनानि यथेष्टं व्याख्याय कालाष्टमीनिर्णयः कृतः। सच तेषां लेखत एव ज्ञातव्य इति नोद्ध्रियते। निर्णयसिन्धुः परमत्र प्रदर्श्यते। कालाष्टमी द्विविधा काशीखण्डसिद्धा शिवरहस्यसिद्धा च। तत्राद्या भट्टाभिमता। तथाच ते मार्गशीर्षकृष्णाष्टमी कालाष्टमी। साच रात्रि-

मध्याह्नव्यापिनी ग्राह्या । 'मार्गशीर्षासिताष्टम्यां कालभैरवसंनिधौ । उपोष्य जागरं कुर्वन्सर्वपापैः प्रमुच्यते' इति काशीखण्डाद्रात्रिप्रशस्त्यागमेः । 'कृष्णपक्षेषु सर्वेषु कर्तव्या संमुखी तिथि'रिति ग्रन्थेष्वर्णितेति । दिनद्वयेऽन्यतः संपूर्णायां वा रात्रिव्याप्तौ पूर्वैव पूर्वोक्तवचनादिति । अत्रान्यमतमुद्धाव्य दूषितं दिनद्वय इत्यारभ्य सेन मध्याह्नव्यापिनी युक्तेत्यन्तेन । दिनद्वयेंऽशतो रात्रिव्याप्तावुभयत्र भैरवोत्पत्तेः प्रदोषकालीनत्वादिति केचित्तन्न शिवरहस्ये मध्याह्ने भैरवोत्पत्तेः श्रवणात् । तथाच तत्रैव 'नित्ययात्रादिकं कृत्वा मध्याह्ने संस्थिते रवौ'इत्युपक्रम्य ब्रह्मणा रुद्रेऽवधाते उक्तम् । 'ततोऽप्रेरूपादनघान्मत्तः श्रीकालभैरवः । आविरासीत्तदा लोकान्भीषयन्निवलानघो'ति तत्रोपवास एव प्रधानमित्युक्तम् । तत्रैव 'उपोषणस्याङ्गभूतमर्घ्यदानमिह स्मृतम् । तथा जागरणं रात्रौ पूजायामनुष्ठेयं । संध्यायामपि पूजैवोक्ता तेन मध्याह्नव्यापिनी युक्तेति । अत्र मध्याह्नव्यापिनी युक्तेत्यनेन यन्मते दिनद्वयेंऽशतो रात्रिव्याप्तावुभयत्र कालाष्टमी तन्मत औचित्यमात्रं प्रदर्शितम् । न स्वसिद्धान्तः प्रदर्शित इति भ्रमितव्यम् । स्वामिनस्त्वत्र भ्रान्ता यत्त्वित्यादिना परवधाय कृतोद्यमाः स्वशिरस्येव शस्त्रं पातयामासुरित्युपरम्यते ॥ २ ॥

इदानीं तत्कृतयस्करिपादुकामीमांसा मीमांस्यते । 'नोपानहं विना गच्छेन्मार्गे पट्कण्टकावृते । उदपात्रं च भिक्षा च दुष्येदत उपानहौ[1] उपानहौ सदा धार्ये भिक्षाकाले विशेषत' इति वचने भारमारोप्य यतिभिरुपानद्धारणं कर्तव्यमिति सिद्धान्तितं तन्न भिक्षुधर्मसंमतम् । पूर्वोक्तवचनस्य 'दृष्टिपूतं न्यसेत्पाद' मित्यस्य परिपोषकत्वान्न स्वातन्त्र्येण विधायकत्वम् । यदि स्वातन्त्र्येण विधायकत्वे आग्रहस्तेदुपानहौ संधार्य भिक्षार्थमटन्तु का नो हानिः ।

1 सन्धिः सन्दिग्धः.

उपानद्धारणं 'सदोपवीतिना भाव्य'मित्यादिवत्सदैवकुर्वन्तु वा तत्रापि कास्माकं हानिरिति शम् ॥ ३ ॥

इति टोपरे इत्युपनामकराजारामकृतः कण्टकत्रयोद्धारप्रदीपः ।

---

# टोपराटोपपरामर्शः[1] ॥ २० ॥

अनुव्यवसायः

"नत्वा श्रीनृहरिं देवं भक्तवत्सलमादरात् ।
एकादशीपरामर्शो हर्षेणानुव्यवस्यते ॥ १ ॥"

अथ श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीपूज्यपादैः सत्स्वपि बहुषु धर्मशास्त्रग्रन्थेषु वर्तमानकालिकलोकानुग्रहेच्छया परमेकादशीव्रतं महता समारम्भेण अथैकादशीव्रतं परामृश्यत इत्यारभ्य केचिच्छास्त्रार्था आकरेभ्योऽवगन्तव्या इत्यन्तेन वाक्यस्तोमेन निरणायि, तस्य वाक्यस्तोमस्य "एकादशीपरामर्श" इति नामकरणमकारि, तमिमं वाक्यस्तोमं विलोक्य जातसन्देहस्तान्प्रति शरणं गत्वा दुर्बोधमिमं ग्रन्थं बोधयन्तु दयालव इति प्रार्थनामकरवम् । अथ तैः कारुणिकैर्व्याकरणादिनिखिलशास्त्रेषु पारङ्गतैः करुणया बोधितः पूर्वावस्थातोधिकं खिन्नमना अभवं, तन्निदानं तेषामाज्ञयैव प्रकाश्यते । तत्रैकादशीपरामर्श इति ग्रन्थनामघटकैकादशीपदं प्रतिज्ञानुरोधादेकादशीव्रते लाक्षणिकमिति भाति । किमियं लक्षणा प्रयोजनेन सहिता रहिता वेत्येतत्तत्त्वं त एव जानन्ति ।

ननु नायमुपालम्भः शोभते । प्रयोजनाभावेपि लाघवात्तथा नामकरणमिति चेत् ततोप्येकापरामर्श इत्यस्य लाघवस्य संभवात् । नच तथा कृतं तेनेदं मन्यामहे केनचित्प्रयोजनेन भवितव्यमिति ।

---

१ टोपरेशब्दो नैकारान्त इति बुद्ध्यैकारो विभक्तिजबुद्ध्या समासे बहिष्कृतः.

नचेयं प्रयोजनरहिता लक्षणा सम्भवति एकादशीपरामर्श इत्यस्य रूढित्वाभावात् । स्पष्टं चेदं काव्यप्रकाशादौ ॥ १ ॥”

अथ टोपराऽऽटोपं परामृशामः। यत्राटोपेऽनुव्यवसायनाम्नि सप्त संदेहा अङ्कितास्ते क्रमेण समाधीयन्ते। तदुपोद्घातेऽष्टमोऽनङ्कित एषः। सत्स्वपीत्यादिः। अतएव परामर्शप्रवृत्तिर्नहि निर्मूला सा भवितुमर्हतीत्युत्तरम् । निरणायीति न संदेहे पातितैकादशी वा व्रतं वाऽधिकारिणो वेत्यर्थः । नामकरणसकारीति । राजाराम इतिवत् । बोधित इति । दिनत्रयपर्याप्तत्वाद्व्रतस्येत्येतदन्तं । तन्निदानमिति । तस्य खेदस्य हेतुरबोध इत्यर्थः। भातीति नायं विषयो बोधित इति ध्वनिः। तत्त्वमिति। अत्र लक्षणास्ति नवेत्यादि। त एवेति। न वयमत्र बोधिता इत्यर्थः। ननु नायमुपालम्भः शोभत इति अयमुपालम्भो न शोभत इति ननु इति वितर्के । तथैवानुव्यवसायाद्यथाधिकारं वाचः। नचेयं प्रयोजनरहिता लक्षणा संभवतीत्युपसंहारो लाक्षणिकं भातीत्युपक्रमविरुद्धः रूढित्वाभावादिति। राजारामशब्दवत् । काव्यप्रकाशादाविति । मुहुरवलोकनीयः काव्यप्रकाशः। किं न विजानाति स महात्मा ग्रन्थकृन्निर्मातारः स्वतन्त्रा नामकरण इति। वस्तुतस्तु प्रकृतानुव्यवसायगोचरेऽस्मिन् परामर्शे एकादशी च व्रतं चाधिकारिणश्च परामृष्टास्तथापि बहुपरामृष्टत्वादेकादश्या एकादशीपरामर्श इति नामकरणम् । आस्तामेतत्सर्वं । अस्मिन् राजारामनाम्नि कथं साधुतेति प्रश्ने किमुत्तरम् ॥ १ ॥

अथैकादशीव्रतं परामृश्यते इति प्रथमं सूत्रम् । तद्भाष्यं तु एकादशीनाम कालविशेषो दशमीद्वादशीमध्यगतः शुद्धः कालविशेषः। व्रतं नाम भोजनं तदभावश्च प्रकृतसङ्गतिचिन्तनं परामर्श इति । अत्र व्रतशब्दस्य भोजनतदभावोभयात्मकत्वं कस्मादिति पृष्टाः श्रीस्वामिनो “व्रताद्भोजनतन्निवृत्त्यो”रिति वार्तिकादिति समाहितवन्तः, तत्तु तेषामेव शोभते। नह्यस्माद्वार्तिकात्पुष्पवन्तशब्दवत्

व्रतशब्दस्यापि भोजनतदभावोभयवाचित्वं सिध्यति । तथासति पुष्पवन्तपदात् एकं धर्मं परित्यज्यापरधर्मप्रकारकबोधो यथा न भवति तथा व्रतशब्दादपि नैकं धर्मं परित्यज्यापरधर्मप्रकारकबोधो भवेत् नैव भवतीतिचेत् पयोव्रतयति शूद्रान्नं व्रतयतीत्यस्मात् शाब्दबोधानापत्तेः। नन्वन्यत्र व्रतशब्दस्य नानाधर्मावच्छिन्नवाचकत्वेपि प्रकृते एकादशीव्रतमित्यत्र व्रतशब्दस्योभयवाचित्वमेवेति चेत् किं तत्र प्रमाणमिति पुनरपि प्रमाणाकाङ्क्षोन्मज्जेत्। अनिवृत्तायां च तस्यां तद्भाष्यस्य अश्रद्धेयत्वापातः केन वारणीयः । नन्वेवं भवन्त एव वदन्तु व्रतशब्दार्थमिति चेत् नाहमत्र पामरः प्रभवामीति प्राचीननिबन्धकारा एव शरणीकरणीया इति ॥ २ ॥

उभयात्मकत्वमिति । उभयार्थकत्वमित्यर्थः । तेषामेवेति । अवैयाकरणानां शक्तिग्राहकमूर्धन्ये व्याकरणे मुग्धत्वादित्यर्थः । यथा पुष्पवन्तशब्दो दिवाकरनिशाकरयोरुभयत्वावच्छिन्नपर्याप्तिकशक्तिमांस्तथा न व्रतशब्दः किंतु भोजनतन्निवृत्त्योरन्यतरत्वेन शक्त इति तद्रहस्यं। तस्य व्यासज्यवृत्तित्वाभावात्। तदेव व्याख्यातं स्वयं नह्यस्माद्वार्त्तिकादित्यादिना शाब्दबोधानापत्तेरित्यन्तेन । पयोव्रतयति । निवृत्त इतरभोजनात्पयो भुनक्तीत्यर्थः। शूद्रान्नं व्रतयति। शूद्रान्नभोजनान्निवृत्तः सन्नितरान्नं भुनक्तीत्यर्थः। अन्यतरत्वस्य शक्यतावच्छेदकत्वाद्यथेच्छं विशेषणविध्यनुसारं । शाब्दबोधानापत्तेः स्थलं तु खण्डशक्तिमहिमानासिद्धत्वं । उभयवाचित्वमेवेति । युक्तं तत् । अत्रोभयशब्दोऽन्यतरपरः । व्रताद्भोजनतन्निवृत्त्योरित्यत्र द्वित्वमविवक्षितमाश्रयमात्रं विवक्षितम्। अतएवान्यतरत्वं शक्यतावच्छेदकम् । यथा "अस्थिदधिसक्थ्यक्ष्णामनङुदात्त"इत्यत्र बहुत्वमविवक्षितमत एवान्यतमत्वं समासार्थः। प्रकृते दशमीद्वादशीभोजनसहित एकादश्युपवास एकादशीव्रतशब्दार्थः । ननु

व्रतवार्तिकवदस्थ्यादिसूत्रेपि मिथो विशेषणत्वं कस्मान्नेति चेदसंभवार्थापत्तेः सूत्रस्य । नासंभवार्थता वार्तिकस्येति दिनत्रयावच्छिन्नं व्रतमेकमुपवासप्रधानं पारणान्तं सिध्यतीति । इन्मज्जेदिति । यावदव्युत्पत्तिरिति शेषः । केन वारणीय इति । पाण्डित्येनेत्युत्तरम् । स्वपाण्डित्यमाविष्करोति । नन्वेवमित्यादिना शरणीकरणीया इत्यन्तेन । गतानुगतिकैरिति शेषः ॥ १ ॥

प्रकृतसङ्गतिविवेचनं परामर्श इत्यस्याप्यर्थे पृष्टे श्रीस्वामिचरणा इत्थमर्थमाहुः प्रकृतयोरेकादशीव्रतयोः संगतेर्विवेचनमिति । यद्ययमेवार्थस्तर्हि तदीयविषयतायाः सङ्गतौ सत्त्वेन व्रतेऽभावाद्व्रतं परामृश्यत इति कथं सुवचं भवेदिति त एव जानन्तु । अथास्यस्य प्रकृतयैकादश्या या सङ्गतिस्तत्प्रकारकं ज्ञानविशेषः परामर्श इत्यर्थकरणेनैकादशीनिरूपितसङ्गतिप्रकारकज्ञानीयविशेष्यतायाः व्रतेऽबाधाद्व्रतं परामृश्यत इत्यस्य साधुत्वं प्रतीम इति ॥ २ ॥

प्रकृतेत्यादिप्रतीमइत्यन्तेन स्वपूर्वपक्षस्य स्वयमुत्तरं दत्तं चित्रमेतत् । एषा व्युत्पत्तिः कस्मात्कुत्र संभूतेति चिन्त्यम् ॥ ३ ॥

यत्तु व्रतं नाम भोजनं तदभावश्चेति सिद्धान्तयित्वोपसंहारे भोजननिवृत्तिभोजनोभयरूपमिति व्यत्यासेनाभ्यधायि तस्यापि रहस्यं तैरेव प्रकाशनीयम् । किंच किं भोजननिवृत्तिर्भोजनाभावाद्भिन्नाऽभिन्ना वा । यदि पूर्वः पक्षः कथं तर्हि व्रतत्वम् । उभयस्वरूपस्य व्रतस्य भोजनाभावान्तर्भावेण तत्त्वाभावेपि भोजनान्तर्भावेण व्रतत्वं निर्बाधमिति चेद्व्रतत्वस्य कपिसंयोगवदव्याप्यवृत्तित्वापत्तेः व्रतशरीरे भोजनाभावस्य प्रवेशस्यात्यन्तं वैयर्थ्यापत्तेश्च । यद्युत्तरः पक्षः कथं तर्हि व्रतं नाम भोजनं तदभावश्चेत्यर्थकरणं विदुषां मनःप्रसादाय प्रभवेत् । यदि तदभावपदं तन्निवृत्तिपरमिति चेत् लक्षणापत्तेः । नह्यर्थकरणे लक्षणा शोभते अर्थकरणप्रयोजनवाध्यापत्तेरिति ॥ ४ ॥

स्वाज्ञानमभिनन्दतीति। तस्यापीत्यादि। खण्डशक्तिस्थले यथेच्छं प्रयोगार्हतेति तद्रहस्यं। अनन्यसाध्यत्वमाह। तैरेवेति। किंचेत्यादि "मा हिंस्यात्सर्वा भूतानी"त्यत्र समः प्रश्नः। यथा हिंसानिवृत्तेर्गतिस्तथा भोजननिवृत्तेर्गतिश्चिन्त्या। भिन्नाभिन्ना वेति। यथेच्छं सा। दशमीद्वादश्योर्भिन्ना। एकादश्यामभिन्ना। व्रतस्य त्रिदिनात्मकत्वात्। कथं तर्हि व्रतत्वमिति। त्रिदिनात्मकत्वानङ्गीकार इत्यर्थः। तदेवाह स्वयमेव। उभयेत्यादिना चेदित्यन्तेन। उभयस्वरूपत्वेपि व्रतस्यैकादश्यामुपवासप्राधान्येन भोजनाभावान्तर्भावेणेत्यर्थः। पारणानङ्गीकार आह। व्रतत्वाभावेपीति। तदङ्गीकार आह। भोजनान्तर्भावेणेति। पारणान्ते व्रते फलमेतदेवेत्याह। व्रतत्वं निर्बाधमिति। चेदित्यन्यथात्वं सूच्यते। अन्यथा व्रतत्वस्य कपिसंयोगवदव्याप्यवृत्तित्वापत्तेरित्यर्थः। वस्तुतस्तु नैकादशीनिर्णये कपिसंयोगो योग्यः। तस्यैव फलं तत्तदुपासकमन्यैराश्रमा उपप्लाविता व्रतानि च "उत्तिष्ठत जाग्रताश्रमान्परिपालयत तेन पञ्चापि पञ्चाशत्कोटयोपि देवतास्तुष्टिमापद्येरन्। आश्रमोपप्लवमूलो मतभेदस्तेनेदं सर्वं दारिद्र्यं। भोजनाभावस्येति। उपलक्षणमेतत् भोजनस्यापि। हरिशब्दवन्नानार्थत्वे एकस्मिन् शब्दे एकार्थविषयकतात्पर्यग्रहोऽपरार्थविषयकतात्पर्यग्रहं प्रतिबध्नीयात्। तदाहात्यन्तं वैयर्थ्यापत्तेश्चेति। शाब्दबोधप्रतिबन्धात्। यथेन्द्रावर्णोर्हरौ। नात्र तथा भोजनतदभावयोरेकशक्तिविषयत्वात्। शक्तिभेदादर्थभेद उच्यते। यत्तूत्तरः पक्ष इति। द्वयोरपि पक्षयोरेकमेवोत्तरं। कथं तर्हीति। शक्तिमाहात्म्यज्ञानेनेति प्रतीकारः। विदुषामिति। अधीतशास्त्राणामप्यनधिगतशक्तिमहिम्नां। एतेनायं विद्वच्छब्दो विविदिषौ लाक्षणिक इति पर्यवसितं। तदाह यदीत्यादिना "मा हिंस्यात्सर्वा भूतानी"ति विहिता हिंसानिवृत्तिर्भाव‌रूपोताभावरूपेति चिन्त्यं। निवृत्तिर्न व्यापार इति महाचार्याः

शारीरके । एष चतुर्थोऽनुव्यवसायः स्वयं व्याख्येयस्तदा विदुषां मनःप्रसादः संपन्नो भवेत् ॥ ४ ॥

वैष्णवे पर्यवसन्नमिति एवं सिद्धान्तिते एकादशीव्रतस्य शैवादावप्रसरप्रसङ्गः । नहि यद्यत्र पर्यवस्यति तत्ततोऽन्यत्र गच्छति । यदि "वैष्णवो वाऽथ शैवो वा सौरोऽप्येतत्समाचरेदि"त्यादिवचनबलाच्छैवादावपि निष्कम्पं प्रसरेदिति चेत् नमोस्तु वैष्णवे पर्यवसन्नमित्युक्त्या इति ॥ ५ ॥

एकादशीव्रतनिष्ठत्वं वैष्णवत्वं निष्ठात्वाश्रममूलेत्यवज्ञायाह । शैवादावप्रसङ्ग इति । परामर्शोक्तलक्षणमङ्गीकृत्याह यदीत्यादि । यथेच्छदेवतोपासकत्वं नैकादशीव्रतप्रयोजकाश्रमित्वरूपवैष्णवत्वविरोधीत्यर्थः । अत एवाङ्गीकारमाह नमोस्तु वैष्णवे पर्यवसन्नमित्युक्त्या इतीति । अङ्गीकृतेष्वेव नमस्कारो दृष्टः उपकृतं बहु । "वैष्णवो वाथ शैवो वा सौरोऽप्येतत्समाचरेदि"ति वचनेनानुव्यवसायकृन्मतिराश्रमे नीता । किमेकादशीव्रतनिष्ठत्वं वैष्णवत्वमिति लक्षणे सुप्रसन्नता । "अर्कपर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्" इति व्रतपट्कस्याश्रममूलत्वे "एकादशीमुपवसेन्न कदाचिदतिक्रमेदि"त्यतिक्रमणनिषेधे च सति चित्रमेतत् । "उपोष्या द्वादशी शुद्धा त्रयोदश्यां तु पारणमि"ति वचनमवलम्ब्य भोजनेनैकादशीमतिवाह्य द्वादश्यां समुपोषणपरत्वं वैष्णवत्वं । एकादश्यामुपोष्य द्वादश्यां पारणपरत्वं स्मार्तत्वमिति सिद्धान्तः । येनैवं निर्णेतुं शक्नुमः । आश्रमधर्मरतत्वं स्मार्तत्वं तदुपेक्षकत्वं वैष्णवत्वमिति । अतएवाग्निहोत्रहोमश्राद्धादीनां त्यागस्तादृशेषु वैष्णवेषु । किंच द्वादश्याः शुद्धत्वविशेषणेन किमुपकृतं कथं तस्या दशमीवेधसंभवो योऽपाकर्तव्यो विशेषणस्य । तस्माच्छुद्धैकादशीयुतत्वाच्छुद्धत्वं विज्ञेयमिति दिक् । किंबहुना । "उपवीताद्बलं लब्धं तुलसीकाष्ठमालया ।

संतोलयन्तु विद्वांस उपवीतं च मालिकाम् ।" यदिदानीं जगत्याश्रमधर्मशैथिल्यं परिदृश्यते तदेतदेकादशीनिर्णयोपप्लवमूलमिति विदांकुर्वन्तु ब्राह्मणाः ॥ ५ ॥

तल्लक्षणमभिहितं यथा "परमापदमापन्नो हर्षे वा समुपस्थितः । नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी" इति । अत्र वाक्ये द्वाभ्यां यच्छब्दाभ्यां लक्षणद्वयमभिहितम् तच्छब्दद्वयापेक्षणात् । नैकादशीं त्यजेदिति विधिः यो न त्यजेत्स वैष्णव इत्येकं लक्षणम् । यस्य वैष्णवी दीक्षास्ति स वैष्णव इत्यपरम् । वैष्णवी दीक्षा संन्यास इति अत्रास्य वचनस्य श्रीस्वामिन एव मूलमिति भाति । अन्यत्र कालमाधवादौ विष्णुरहस्याद्दुद्धृतस्य "परमापदमापन्नो हर्षे वा समुपस्थिते । सूतके मृतके चैव न त्यजेद्द्वादशीव्रतम् ।" इत्यन्यस्यैव दर्शनात् । आस्तां वा तदप्यन्यत्र प्रमाणीभूतम् तत्रैव वा कुत्रचित् । नहि मादृशेनातिपामरेणादृष्टं कल्पितमेवेति निश्चेतुं शक्यम् । तथापीदं न वैष्णवलक्षणप्रतिपादकं भवितुमर्हति, अन्यथैव योजयितुं शक्यत्वात् । तथाहि । यस्येति जात्येकवचनम् । षष्ठी च निर्धारणे । अप्यर्थकं त्वित्यव्ययम् । तथाच येषां वैष्णवीदीक्षास्ति तेषां मध्ये यः कोपि नैकादशीं त्यजेदित्यर्थः संपद्यते । प्रदर्शितविष्णुरहस्यस्थवचनैकवाक्यत्वानुरोधात् । युक्तं चैतत् श्रीस्वामिचरणानां मते तु वाक्यार्थत्रयकल्पनातोनिरर्थकता अश्रुतलक्ष्यवाचकपदकल्पना कथंचिदेकवाक्यत्वे विरुद्धत्रिकद्वयापत्तिश्च द्रष्टव्या ॥ ६ ॥

स्वामिन एव मूलमिति । का हानिः संदृब्धे वचने । स्वसंमतं पाठमाह । परमापदमापन्न इत्यादि । अत्र पाठे न त्यजेद्द्वादशीव्रतमिति विधेयस्य परमापदमापन्न उद्देश्यः यदि शास्त्रसंप्रदायाभिज्ञता तदा हर्षे समुपस्थिते सूतके मृतक इति त्रयः काला

---

१ एतन्नयेऽयमेव व्यर्थः स्यात्.

निर्दिष्टाः । एषु त्रिषु कालेषु "परमापदमापन्नो न त्यजेद्द्वादशीमनि"ति पर्यवसन्ने वक्तव्यं तदा कथमापन्नस्य हर्षकालस्थितिः । कथमप्यङ्गीकारे उद्देश्यतावच्छेदकधर्मो हस्ताद्गलितः । तत्संपादने कालोऽपगच्छति मिथो विरोधात् । किंच संतुष्टो नाधिकारीति च प्राप्तम् । किंच निर्दिष्टकालत्रयादन्यत्रैतद्व्रतं नाचरितव्यमित्यपि बलादेवकारस्य । किंचैतद्द्वादशीव्रतं नैकादश्यां प्रवेष्टुमर्हतीति मनसि निधायाह । आस्तां वेति । अनन्वितत्वाभावमाह । प्रमाणीभूतमिति । न मार्गणावकाश इत्याह । तत्रैवेति । वा कुत्रचिदिति । अन्येष्वपि ग्रन्थेषु स्यात्तथैव पाठ इति । संभावनायां वाशब्दः । फलितमर्थमाह । नहि मादृशेत्यादि । अदृष्टत्वं न काल्पनिकत्वे हेतुरित्यर्थः । अङ्गीकृतं पामरत्वं प्रकाशयति तथापीत्यादियुक्तं चैतदित्यन्तेन । स्वपरिश्रममभिनन्दति । युक्तं चैतदिति । मदन्ये संनार्गं यच्छन्तु मा वेति तात्पर्यम् । एकवाक्यत्वानुरोधादिति । अनन्वितश्लोके नानन्वितार्थैकवाक्यता युक्तेति तात्पर्यम् । एकवाक्यताफलं तु येषां वैष्णवी दीक्षास्ति तेषां मध्ये य एकादशीं न त्यजेत्स परमापदमापन्न इत्यर्थः पर्यवसितः । स्वामिनां पाण्डित्यशैली नैतादृशीत्याह । स्वामिनामित्यादिना । अबद्धश्लोकस्थाने सुबद्धश्लोक आदेशो भवतीति न विजानात्येषोऽनुव्यवसायकार इत्यनुमानम् ॥ ६ ॥

वैष्णवी दीक्षा संन्यास इति । अत्र संन्यासो वैष्णवी दीक्षेति युक्तम् । उद्देश्यवाचकपदस्य पूर्वं प्रयोगात् । आस्तां वा तथैवोपन्यासः तत्र प्रमाणापेक्षायां श्रीस्वामिचरणा एव प्रमाणम् । वस्तुतस्तु वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णव इत्येव शास्त्रसिद्धं वैष्णवलक्षणम् । दीक्षापि सैव प्रकृता अन्यथा संन्यास एव कुतो वैष्णवी दीक्षा उपनयनं कुतो न सा अत्रापि । अत एव "अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुरि"ति वचनस्योपोद्बलकतया

समर्पयितुं शक्यत्वात् । एतेनाग्रिमः सर्वोऽपि ग्रन्थो व्याख्यात इति कृतमपराधेनेति शम् ॥ ७ ॥

टोपरे इत्युपनामकेन राजारामशर्मणानुव्यवसितः परामर्शः ।

यो न्वत्राविनयो जातः क्षन्तव्यः स दयालुभिः ।
यतितव्यमसन्देहे यद्यस्ति करुणा मयि ॥ १ ॥

स्वामिचरणा एव प्रमाणमिति । वैष्णवी दीक्षेति प्रतीकमुपादाय संन्यास एवेति व्याख्यान इत्यर्थः । ग्रन्थयोजनाप्रवीणत्वं पाण्डित्यमिति लक्षणं मनसि निधायेतिशब्दो न लिखितः प्रतीकद्योतकः । सैव प्रकृतेति । वानप्रस्थेष्वित्यर्थः । द्रष्टव्यमेतद्विष्णुपुराणादिषु । अधुना तु श्रीमद्रामानुजादिसंप्रदायेषु वैरागिसंप्रदायेषु वा दृश्यन्ते वैखानसाद्या दीक्षास्तल्लक्षणान्यूर्ध्वपुण्ड्रादीनि । वस्तुतस्तु परामर्शे संगृहीतमेतल्लक्षणम् । अन्यथा संन्यास एव कुतो वैष्णवी दीक्षेति । अन्यथा संन्यासो न वैष्णवी दीक्षा कुतोपीत्यर्थः । तस्याश्रमबहिर्भूतत्वात् । वैखानसाद्यागमोक्तदीक्षां प्राप्तो हि वैष्णव इत्यत्रादिशब्देन संन्याससंग्रहे कः प्रतिबन्धः । आगमनिगमयोरेकवाक्यतया साफल्यात् । तस्मादशास्त्रसंन्यासो न वैष्णवी दीक्षेत्यर्थः पर्यवसन्नः । तथा वैधव्यदीक्षापि वैष्णवी दीक्षा । अत एवात्र प्रकरणे कस्मिंश्चिद्वचने निष्कामशब्देनोपादानं संन्यासिवानप्रस्थविधवानां । कुत्रचिद्वचने वैष्णवशब्देन कुत्रचित्पृथक्संन्यासी वानप्रस्थो विधवेति द्वितीयैकादश्यधिकारिणाम् । तस्मात्त्रिविधोपादानानामेकार्थतेति । उपनयनं कुतो न सेति । कामाधिकारकोटिप्रवेशात् । दृश्यन्तेऽधुना लोके गृहस्थेष्वपि वैखानसाद्यागमदीक्षिता वयं निष्कामा वैष्णत्वाद्द्वितीयैकादश्यधिकारिण इति वदन्ति तथाचरन्ति ग्रन्थकर्तारो व्यवस्थापयन्ति तदनुमोदन्ते पण्डिताः पण्डिततराः पण्डिततमाश्च । तान्प्रत्येष बोधनावकाशः

१ वैरागिणो रामानुजविशेषाः

प्रश्नावकाशो वा किं श्रीमतां भवतां तत्रभवतां वैष्णवत्वेन गार्हस्थ्यं बाधितं। यदि बाधितं तदापसर गेहात्। यदि न बाधितं तदा द्वितीयैकादश्या अपसर। यद्याश्रमो बलवान् किं तेन वैष्णवत्वेन। यदि वैष्णवत्वं बलवत् किं तेनाश्रमेण। तस्यैव माहात्म्यं पञ्चमहायज्ञलोपापत्ति नाम। एष एव धर्मसंकरनामा कलिः। वर्णसंकरनामा च। तदपसारणार्थं प्रतिपक्षमेकादशीव्रतानुशासनं पूर्वाचार्याणां महर्षीणाम्। अतएव महाफलमेतद्व्रतं दिव्यम्। नहि कस्मिंश्चिद्व्रते कलेरपसारो दृष्टः। दृष्टानि तु फलानि सुबहूनि षण्ढानि। तस्माद्गृहस्थमात्रचारिणौ य एकादशीं न त्यजेत्स वैष्णव इति आश्रमित्वात्सामान्यलक्षणसंपन्नौ। यस्य दीक्षास्ति वैष्णवीति लक्षणविषयाः संन्यासिवानप्रस्थविधवाः तथा नैष्टिकब्रह्मचार्यपि निवृत्तिदीक्षावत्वात्। अत्र व्रते शैवत्वादिकमप्रयोजकम्। इत्थं व्यवस्थायां सत्यां "परमापदमापन्नो हर्षे वा समुपस्थितः। नैकादशीं त्यजेद्यस्तु यस्य दीक्षास्ति वैष्णवी। समात्मा सर्वजीवेषु निजाचारादविप्लुतः। विष्णवर्पिताखिलाचारः स हि वैष्णव उच्यते।" इति कारिकाद्वयेन वैष्णवौ लक्षितौ। तत्र परमापदमापन्नोऽपि हर्षे समुपस्थितोपि च एकादशीं न त्यजेदाश्रमित्वात्स वैष्णवः। वाशब्दोऽप्यर्थे। वैष्णव इत्युपकल्प्यते योग्यत्वात्। आश्रमसामान्यलक्षणमुक्त्वा विशेषलक्षणमाह यस्य दीक्षास्ति वैष्णवी स वैष्णव इति। तमुपक्रम्य स माहात्मेत्यादि तच संन्यासिनि घटतेऽत उक्तं वैष्णवी दीक्षा संन्यास इति। अत्रोद्देश्यविधेयभावः पुनरनुव्यवसनीयः। कुतो न सेति। यद्युपनीतो बटुः कामानधिकारिषु गण्येत तर्हि भवतु तथैव। अपरवैष्णवत्वमबाधितं। मामकी तनुरिति। अतएव नमस्काराधिकारः। दृश्यते च तथा मिथो नमस्कारः। यद्युपकुर्वाणस्तर्हि गृहस्थव्यवस्थया तिष्ठेत्। यदि नैष्ठिकस्तर्हि निवृत्तः कामाद्वैष्णवो भवितुमर्हति। नैष्ठिकब्रह्मचर्यस्य दीक्षा-

न्तरत्वेन वैखानसादिषु परिगणितुं शक्यत्वात्। अत्र द्वे लक्षणे एकादशीव्रतनिष्ठत्वं निष्कामत्वं चेति। तत्र प्रथमलक्षणस्य मनुष्यमात्रसाधारणत्वेन सकामनिष्कामतयाधिकारिभेददर्शनेन व्यवस्था कृता। मनुष्येष्वाश्रमाश्चत्वारः। ब्रह्मचारिगृहस्थौ सकामावपि व्रतनिष्ठत्वाद्वैष्णवौ। वानप्रस्थसंन्यासिनौ निष्कामत्वात्परवैष्णवौ व्रतनिष्ठत्वाव्यभिचारात्। कामक्षयाय यतमानो नैष्ठिको विधवा च परवैष्णवौ। अत्रैव सर्वेप्याश्रमाः परिसमाप्ताः। कोस्त्याश्रमबहिर्भूतो मानुषनामा। ब्राह्मणेषु चत्वार आश्रमाः क्षत्रियेषु त्रयो वैश्येषु द्वौ शूद्राद्याचण्डालान्तमेकः। अतएव पाङ्क्तापाङ्क्तविचारः सर्ववर्णेषु। यत्र स न विचारः स न वर्णः। ननु न म्लेच्छेषु वर्णाः सत्यं मनुष्याश्चेन्न। दायनिर्णयाभावप्रसङ्गात्। यथा वर्णास्तथाश्रमास्तथा दाया इति जगन्निर्णयः। यथा दायास्तथाश्रमा यथाश्रमास्तथा वर्णा यथा वर्णास्तथा मनुष्या इति विज्ञेयम्। अत एव न शास्त्रहीनो दृश्यते द्विपादवर्गो वैखरीं ब्रुवन्। यथाधिकारं च शास्त्रं। व्याख्यात इति। यथोपोद्घातो व्याख्यातस्तथैवोत्तरग्रन्थोनुसंधेयो दिङ्प्रदर्शनन्यायेनेत्यर्थः। अपराधेनेति नायमपराधः किंतु विनोदः। उपकारस्तु सत्यः। न पश्यामो वयमपराधिनं पश्याम इतस्तत उपकारिणं। यथाहुराचार्याः "संपूर्णं जगदेव नन्दनवनं सर्वेपि कल्पद्रुमा गङ्गावारि समस्तवारिनिवहा वाराणसी मेदिनी। वाचः प्राकृतसंस्कृताः श्रुतिशिरो यज्ञाः समस्ताः क्रिया यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयादि"ति। कृष्णस्य कः शत्रुरिति श्रुतो वा रामाद्व मान्यो नरपुंगवः कः। एकादशीतोभ्यधिकं व्रतं किं व्यवस्थया दृष्टिपथप्रवृत्तौ ॥ १ ॥

यो न्वत्रेत्यादि। प्रार्थनामङ्गीकुर्मः। अत्रेति। एकादशीव्रते। अविनयः। अवीनां नयो नीतिर्गतानुगतिकत्वं। तमपराधकोटौ निक्षिपति। क्षन्तव्य इति। असंदेह इति। गतानुगतिकत्वं

विच्छिद्य यथाशास्त्रप्रवर्तने । मयीति । मां टोपरोपाह्वराजाराम-शास्त्रिणं पुरस्कृत्येत्यर्थः । यथामति यते शास्त्रेपूपप्लुतिनिराकृतौ । पराकृतिर्मतानां चेदस्तु हानिर्न ते न मे ।

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतटोपरा-
टोपपरामर्शः संक्षिप्तः ॥

---

# अथ द्वितीयाटोपः ॥ २१ ॥

जयति श्रीकाशीनाथोऽष्टपुत्रो नाम । विजयते श्रीमान्राजरामः कुलभूषणः । अस्य प्रदीपस्य दुस्पृष्टवर्णांकनं युक्तं योग्यतावधारणाय । कज्जलं हि दुस्पृष्टं प्रदीपमस्तके स्पष्टं तद्धर हर दूरीकुरु दूरीकुरु महादेवेति प्रार्थ्यते प्रकृतपण्डितैः ॥ ॐ ॥ एवमाकारं दुस्पृष्ट इति वैयाकरणा आहुः । सपरार्धहीना कामकलेति तान्त्रिकाः । अस्य ग्रन्थकर्तुस्त्रिकण्टकविराजितत्वमव्याहतं कण्टकत्रयोद्धारप्रदीपे विरचितेपि । आत्मजेनेति । एष देहात्मवादः । प्राचीनधर्मसंस्थापने मिष एष प्रदीपः । इति मुखपृष्ठव्याख्या प्रकृतस्य । अन्यत्सुगमं ।

अथ द्वितीयष्टोपराटोपः परामृश्यते । यत्र भैरवाष्टमीनिर्णयो विषयः । इत एतत्पुस्तकलाभात्पूर्वमुपलब्धमनुव्यवसायं सप्तखण्डं समाधायाधुना त्रिकण्टकवासिप्रेषितं सवितर्यस्तमितेऽयमुपयुज्येतेति कण्टकत्रयोद्धारप्रदीपं परामृशन्तो भैरवाष्टमीकुचेष्टानाम द्वितीयं प्रकरणं परामृशामस्तत् । अथ तैरेवेत्यादावुपरम्यत इत्यन्त आटोपे कानिचित्प्रतीकान्युपादाय समाधीयन्ते । मूलं तु तैरेव मुद्रयित्वा प्रकाशितं । तत्र । यथेष्टं व्याख्यातानीति । प्रकरणानुसरणात् । इष्टिस्तदधीना । किमर्थमिति । कुचेष्टानिवृत्त्यर्थमिति वेत्तव्यं । सहसंयोज्येति । उपोद्घाततयेति वेदितव्यं कालाष्टमी

द्विविधेति । किं ग्रन्थद्वैविध्यादुत सिद्धान्तद्वैविध्यात् । आद्ये नाष्टमी द्विविधा। द्वितीये द्वयोरप्यप्रामाण्यं मिथो विरोधात्। सा च रात्रिव्यापिनी ग्राह्येति श्रीमद्भट्टानां प्रतिज्ञावाक्यं । तत्र वलं रात्रौ जागरणं। दिनद्वयेंऽशतो रात्रिव्याप्तौ पूर्वैवेति निर्णयवाक्यं। तत्र वलं सांमुख्यं तिथेः । दिनद्वयेंऽशतो रात्रिव्याप्तावुत्तरैवेति केचित्तत्र वलं भैरवोत्पत्तेः प्रदोपकालीनत्वं । तद्भ्रमं भट्टैः शिवरहस्ये मध्याह्ने भैरवोत्पत्तिश्रवणादिति। मध्याह्ने सायाह्ने वाऽवतारोऽस्तु परंतूत्तरैवेति सिद्धान्तो न शिथिलः। किं यद्दिनेऽवतारस्तद्दिने व्रतं युक्तमुत पूर्वदिने व्रतमवतार उत्तरदिनेऽष्टम्यां मध्याह्ने । अत्र कः पक्षः श्रेयानिति स्वयमेव विज्ञेयं पण्डितैः। स्वस्वसिद्धान्ते वलदानाय द्वावपि मुग्धौ । रुद्रव्रतेषु सर्वेष्विति वचनं दिनद्वये कर्मप्राप्तौ प्रवर्तते। अत्र न पूर्वदिने प्राप्तमवताराभावात्। अवतारमूलं व्रतं। परेण त्वनालोच्य प्रदोषकालोऽवतारस्येत्युक्तं। एतावत्तु वुद्धं यद्दिनेऽवतारस्तद्दिने व्रतमिति। दिनद्वये संपूर्णा रात्रिव्याप्तिश्चिन्त्या तिथेर्नवतिघटिकाऽभावात् । किमेष वटपिप्पलन्याय उत परवधन्याय आलोच्यताम्। किंच किं तदोग्ररूपादनघादित्यत्रत्यतदाशब्दस्य मध्याह्नवाचित्वं साधितं किं तथा प्रकरणमुपलब्धं संध्यायामपि पूजैवोक्तेति। तर्हि तत्कालव्यापिनी तिथिर्व्यक्तं वक्तव्या भट्टैः। तेन मध्याह्नव्यापिनी युक्तेत्युपसंहारश्चिन्त्यः । औचित्यमात्रं प्रदर्शितमिति। तेन स्वमतस्यानौचित्यं सिद्धं। न स्वसिद्धान्त इत्यादि। स्वसिद्धान्तो दिनद्वयेंशतो रात्रिव्याप्तौ पूर्वैवेति स च दर्शित एव। स्वामिनस्त्वत्र भ्रान्ता इति भ्रान्तलेखं पश्यन्तोपि भ्रान्ता इत्याकूतम्। पातयामासुरिति। निर्णयसिन्धोः स्वामिनो भट्टाः कर्तृत्वादित्यर्थः। अत्र के भ्रान्ता अस्यैव प्रदीपस्याग्रे स्फुटीभविष्यतीत्युपरामः। इति द्वितीयाटोपपरामर्शः।

---

# अथ तृतीयाटोपः ॥ २२ ॥

अथ तृतीयाटोपः परामृश्यते । यत्र परिव्राजकारूढोपानहौ विषयः । तत्रास्मत्कृतपरिव्राजकपादुकामीमांसार्थं वचनमुपन्यस्य तत्र भिक्षुधर्मसंमतमिति खण्डनप्रतिज्ञावाक्यं टोपराणां वचनोपन्यासबलहीनं सन् मुमूर्षति । इदमुपन्यसनीयमासीत्रिकाण्डमण्डनस्थं वचनं । "दीपं शूर्पं तथा शय्यां पादत्राणं च मार्जनीम् । स्नानान्ते संस्पृशेद्यस्तु पुनः स्नानेन शुद्ध्यती"ति । तद्गृहस्थविषयं संन्यासिनां भिक्षाकाले विधिबलात्परिशिष्यते । अतएवोपानद्धारणे बलमादधाति स्वयं "दृष्टिपूतं न्यसेदि"त्यादिना । उपानहौ धृत्वापि दृष्टिपूतं पादं न्यसेदित्येकवाक्यताफलमिति । अविरोधात् । का नो हानिरिति । वचनानुपन्यासो भवतां हानिः । वचनोपन्यासोऽस्माकं लाभः । सह्रोपवीतिनेत्यादिपङ्क्तिः समावृत्तेषु शोभामावहति साहचर्यादुपवीतस्येत्यलम् । तत्रापि कास्माकं हानिरिति । "मीनं जाले पातयन्तः स्वजाले निपतन्ति हि । कास्माकं हानिरिति च ब्रुवन्तीति किमद्भुतम् ।" कुचेष्टां विहायैव लेखो विधेयः फलं तस्य सैवोपतिष्ठेत काले । अतोऽद्यापि लोके कुचेष्टाविहीनं मुनीनां वचो मन्यते सर्वलोकैः ॥ १ ॥

नातःपरं भवल्लेखोपरि लिखामः ।

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतप्रणयने द्वितीयतृतीयाटोपरामर्शौ ।

---

१ कस्यचिद्वादिनो मुखमुद्रणाय स्वामिपादैर्विनोद आहत इति पूर्वमेव प्रतिपादितमतस्तस्मिन् विषये विशेष ऊहापोहोऽनावश्यक इति च सूचितम् । टोपरेपण्डितेन तु "संन्यासिपादुकामीमांसातिरस्कृतिकृते महानाटोप आहतो दरिद्रस्य मनोरथ इव स्वयमशिथिलायतेति विनोदः प्रत्युतासिद्धान्तायतेति नैव

सिद्धान्तः स विनोद एवेति स्पष्टप्रतिपत्तये क्रियते यत्नो जनताभ्रान्तिकर्त्तनः।

संन्यासो नाम सर्वपरिग्रहत्यागोऽधिकांशपरिग्रहत्यागो वा। हंस-परमहंस-संन्यास-जाबालि-महाजाबाल्युपनिषत्सु करपात्रादित्यागप्रधानविधेरुपलब्धेः। त्यागतारतम्येनैव कुटीचकादिभेदोपलब्धेश्च। रावण जनकादिज्ञानिगृहस्थेषु ज्ञानस्य परिपूर्णस्य सत्त्वेऽपि त्यागित्वव्यवहारादर्शनाज्ज्ञानमात्रस्यैव त्यागित्वसन्न्यासित्वव्यवहारप्रयोजकत्वेऽपर्याप्तत्वाच्च। संन्यासशब्दस्य तत्रैवार्थे शक्तत्वाच्च। सर्वकर्मपरित्यागे कर्मफलपरित्यागे च "संन्यास-शब्दस्तु भाक्तः। एवंच संन्यासिनां पादुकादिपरिग्रहोनुचित एव।

कौपीनाच्छादनं वासः कन्थां शीतापहारिणीम्। पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्" इत्यादि स्मृतयस्तु शीतातपादिक्लेशासहिष्णून् शिथिलान् संन्यासिनोऽनुगृह्णन्ति नतु कतिपयपरिग्रहं विदधतेऽदृष्टार्थं दृष्टस्यैव शीतापहारस्य फलस्य श्रुतेः।

शिथिलानां पादुकाग्रहे स्मृतिसंमतिः पादुकाशब्दश्चामरादौ चर्ममयपादत्राणे प्रसिद्ध उपानच्छब्दपर्यायः काष्ठमयपादत्राणे चाप्रसिद्ध इति तेषामुपानद्धारणे न दोष इत्यपि च धूलिप्रक्षेप एव। कदाचिज्जामदग्न्यः क्षिप्तान् शरानादायार्पयन्तीं चिरेणागतां "स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम्। रेणुके किं चिरेण त्वमागतेति पुनः पुन"रिति पृष्टां "शिरस्तावत्प्रदीप्तं मे पादौ चैव तपोधन। सूर्यतेजो निरुद्धाहं वृक्षच्छायां समाश्रिते"ति प्रतिवदन्तीं रेणुकां "अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम्। शरैर्निपातयिष्यामि सूर्यमित्याद्युवाचह"। विदितजामदग्न्यप्रभावो भगवान् भास्करोऽपि "महर्षे शिरसस्त्राणं छत्रं मद्रश्मिवारणम्। प्रतिगृह्णीष्व पादानां त्राणार्थं चर्मपादुके। अद्यप्रभृति चैवेह लोके संप्रचरिष्यति। पुण्यकेषु च सर्वेषु परमक्षय्यमेव चे"ति वदन् "भीतस्तदैवादात्तस्मै छत्रोपानहमुत्तमम्" इत्युपानद्दानस्तवने महाभारते उपानत्पर्यायश्चर्मपादुकाशब्दो लिखितो नतु केवलपादुकाशब्दः, केवलस्यैवास्योपानत्पर्यायत्वे दत्तं चर्मविशेषणमनर्थकं स्यात्तथा माभूदिति काष्ठमयपादत्राणे पादुकाशब्दस्य वृत्तिरस्तीत्यस्य निर्विवादमवगम्यमानत्वात्। देवीपुराणादौ "मणिरत्नमयी कार्या हेमरत्नमयी तथा। चन्दनेनापि कर्तव्या पादुका

सौवर्णाऽपि वा । सौवर्णी रौप्यगा चापि देवदारुमयी तथे"तिग्रन्थेन पादुका-शब्दस्य मणिमय्यादिपादत्राणे वृत्तेः स्पष्टत्वाच्च ।

ननु काष्ठमयपादत्राणेऽपि पादुकाशब्दश्चर्ममयपादत्राणेऽप्यस्त्वेव विशेषा-ग्रहेण संन्यासिनापि चर्ममयी पादुका धार्यैवेत्यपि न समीचीनम् । उभयत्र पादुकाशब्दस्य शक्तत्वेऽपि गुरुपादुकापूजावसरे पूर्वगुरुगृहीतायाः काष्ठमयी-पादुकाया एव पूजाचारसंप्रदायदर्शनेन द्वयोर्धारणे परिग्रहस्य वृद्धिभयेन च शिष्टैर्नेनापि संन्यासिना धार्या चेत्काष्ठपादुकैव धार्येत्यस्यैव कल्पस्याचारा-नुगृहीतत्वात् ।

नोपानद्भ्यां विना गच्छेन्मार्गे पङ्क कण्टकावृते । उदपात्रं च भिक्षा च दुष्ये-दत्र उपानहौ । उपानहौ सदा धार्ये भिक्षाकाले विशेषतः" ( निष्ठीवनं मूत्रं पुरीषमुच्छिष्टं शकृतः कश्मलः पङ्क कण्टकाः ) इति विश्वेश्वरपद्धतिधृतवाक्येन भिक्षाकालेऽप्युपानद्धारणं स्पष्टं प्रतीयत इत्यपि न व्युत्पन्नप्रतीतिसहम् । ग्रन्थकारस्य मूलानुपलम्भेन मान्यत्वे मानाभावात् । पूर्वोक्ताचारानुरोधेनात्रो-पानच्छब्दस्यापि काष्ठमयीपादुकापरत्वसंभवाच्च । भुञ्जाने संन्यासिनि भिक्षां भुङ्क्ते इति व्यवहारदर्शनादनुमीयते संन्यासिपरिभाषायां भिक्षाकालो भोजन-कालस्तत्कालेनैवोपानद्धारणं विधीयते तच्च "सोपानत्कश्च यद्भुङ्क्ते तद्वै रक्षांसि भुञ्जते" इति मनुस्मृत्या निषिध्यते इति तद्वाक्यस्य मन्वर्थविपरीतत्वाच्च ।

अस्तु वा भिक्षाकालो गोचरकालस्तथापि "भिक्षा दुष्येदत उपानहौ—" इति ग्रन्थेन भिक्षाया अशुचित्वनिवृत्तये विहितस्योपानद्धारणस्य "दीपं दण्डं तथा वस्त्रं पादत्राणं च मार्जनीम् । स्नानं कृत्वा स्पृशेद्यस्तु पुनः स्नानेन शुध्यती"ति । संन्यासिगृहस्थसाधारणेन । स्मरणेनोपानहोऽशुचित्वप्र-बोधकत्वनिश्चयपरिच्छिन्नत्वाच्च । मनुस्मृतिविपरीतार्थद्वयलोकविद्विष्टार्थकादृढ-मूलवचनबलेन दीपमिति स्मृतेर्गृहस्थपरतया व्याख्यानस्योपहासास्पदत्वाच्च । अशुचिमूत्रादिसंपर्केण भिक्षाया अशुचित्वमिया मूत्राद्यशुचिद्रव्यासक्तसंपर्के-णातितरामशुचिभूताया जात्वशुचेरुपानहो धारणस्य धृष्टतामात्रकार्यत्वाच्च । "ब्रह्मचारिगतं भैक्ष्यं नित्यं मेध्यमिति स्थिति"रिति यमस्मृतौ ब्रह्मचारिपदस्य ब्रह्मचार्य-भिक्षोपजीविपरतया व्याख्याने भिक्षाया अशुचित्वभयस्यैवाभावाच्च । ब्रह्मचार्य-पेक्षया भिक्षायां संन्यासिनां स्वातन्त्र्यस्मरणेन ब्रह्मचारिपदस्य संन्यास्युपलक्षकत्वे दापाभावात् । सदा धार्ये इत्यनेन सदापदस्वारस्येन गम्यते दर्शनादिका-

# षड्विंशतिप्रश्नपरामर्शः ॥ २३ ॥

श्रीमोहमय्यां भविष्यसभायां विचारणीयो विषयविभाग उपलब्धो वाचितश्च तत्र षड्विंशतिप्रश्ना उपन्यस्ता उत्तराणि च प्रार्थितान्यपि तत्रागमनं च प्रार्थ्यते । चित्रं समुपलब्धेपूत्तरेपु किं तेन समाजेन कृतकार्यत्वात् । अस्तु । उपन्यस्ता विषयाः प्रायो वैदिकपद्धत्यादिपु दत्तोत्तरास्तथापि पुनरुत्तराणीमानि

प्र० १ वेदानां स्वतःप्रामाण्यविचारोऽपौरुपेयविचारश्च । उ० १ अमोघा वागनाद्यनन्ता भवति स्वतःप्रमाणं चापौरुपेया च भवति ॥ १ ॥

प्र० २ । मन्त्रब्राह्मणयोरपौरुषेयत्वं केवलमन्त्राणां वा । उ० २ यदा मन्त्रास्तदैव तेषां विनियोगा उपस्थिताः । दत्तमुत्तरममोघा वागनाद्यनन्ता भवतीति । अनुश्रवे संप्रदायपूर्वकत्वद्योतनाय ऋपिस्मरणं ॥ २ ॥ प्र० ३ तयोश्च समकालिकत्वं विपमकालिकत्वं वा । उ० ३ एकाचार्यत्वात्समकालिकत्वं घकारोत्तरटकारादिवद्विपमकालत्वं च ॥ ३ ॥ प्र० ४ भूतसृष्टेः प्राग्वेदानां प्रादुर्भावस्तदुत्तरं वा । उ० ४ यदा प्रमातृप्रादुर्भावस्तदैव प्रमाणप्रादुर्भावः ॥ ४ ॥ प्र० ५

---

लेऽपि ते धार्यें । एतदपि "वहन्नुपानहौ पद्भ्यां यस्तु मामुपसंक्रमेत् । चर्मकारस्तु जायेत वर्षाणां तु त्रयोदश"ेति वराहपुराणवचनविपरीतमिति मूलवतानेन चिन्त्यमूलस्य तस्य वाक्यस्य बाधस्यैवोचितत्वाच्च । नहि संन्यासिनः सन्देशहारका निशिचरास्तस्कारा वा यत्तेषामपि कण्टकाद्यावृतेनापि पथा चङ्क्रमणं संभवतीति कण्टकाद्यावृतमार्गगर्भविसीपिकाया अप्यकिंचित्करत्वाच्च ।

"शरीरत्राणकामो वै सोपानत्कः सदा व्रजे"दित्यादिवैद्यकविधीनां च दृष्टफलानां पुत्रकामः पुत्रेष्टेरिव शरीरत्राणकामो गृहस्थो विषयो नतु शरीरनिरपेक्षः संन्यासदक्षः । अन्यथा शरीरत्राणपोषणकामानां कामकिङ्कराणां कृते विहितानां स्रक्चन्दनवनितादीनामपि वृष्याणां सेवने त्यागिनोऽधिकारिणो भवेयुरिति संक्षेपः.

वेदनिर्माता विग्रहवान् विग्रहरहितो वा । उ० ५ वेदानां निर्मितत्वे विग्रहविचारः सफलः । "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं पुराणमि"ति वेदवक्तुः स्वरूपं समाम्नातम् । "अस्य महतो भूतस्य निःश्वसितं यदेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इत्यादिपुराणान्ताः परिगणिताश्च वाग्विभूतयः ॥ ५ ॥

प्र० ६ ऋषयो मन्त्रद्रष्टारस्तत्र मन्त्रद्रष्टृत्वं च किं नाम । उ० योगबलेन चक्षुःश्रवस्त्वं तेन शब्दरूपाणामपि दर्शनं मन्त्राणां । प्रसिद्धं चैतत्सर्पजातिषु । अतएव शेषो योगाचार्यश्चक्षुःश्रवाश्च ॥ ६ ॥ प्र० वेदोक्तमधुच्छन्दोभरद्वाजादीनां शब्दार्थविचारः । उ० ७ तेषां शब्दानां विचाराः पुराणतोऽवसेयाः ॥ ७ ॥ प्र० ८ यज्ञियद्रव्यदेवताविचारस्तत्र यज्ञियपशुहिंसायाः कर्तव्याऽकर्तव्ययोर्विचारः । उ० ८ द्रव्याणि देवताश्च तत्र तत्र निर्दिष्टा यज्ञियपशावालम्भनशब्दोऽन्यपशौ हिंसाशब्दो विधिप्राप्तेऽकर्तव्यशङ्काऽनुत्थानात्संध्यामाचरन्ति जना अद्यापि ॥ ८ ॥ प्र० ९ षण्णामङ्गानां समयविचारः । उ० ९ चित्रमेतदङ्गिनमङ्गीकृत्याङ्गसमयविचार इति । यथोक्तं पाणिनीयशिक्षायां बहुविधशिक्षाप्रादुर्भावप्रसङ्गे । अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा । शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोरि"ति । पाणिनीयमिदं मतं शास्त्रानुपूर्वमितराणि मतानि काल्पनिकानि ततो न वेदाङ्गानीति पाणिनिशिष्याः प्राहुः । एतेन सङ्गतिश्लोका आर्षा इतरेऽनादय इति सिद्धम् । एतेन पुराणस्मृतीतिहासादयो व्याख्याताः । शास्त्रानुपूर्वत्वे उपपत्तिमाहुः यथोक्तं लोकवेदयोरिति । आचार्यद्वारा लोकेऽनादित्वाद्वेदे । सर्वेप्याचार्या अनादिसिद्धा एव विद्या आहुरवञ्चकत्वान्महानुभावत्वात्प्राप्ते प्रसङ्गे । अतएव तत्रतत्र प्रश्नोत्तरग्रन्थसङ्गतिर्विद्यास्त्वनादयः । एतेन व्यासमन्वादिपदवी व्याख्याता ।

बह्वो व्यासा बह्वो मनवस्तां तां पदवीं भजन्तेऽनादिसिद्धधर्मविद्या अनुशासति च प्रतिकल्पम्। एतेनाङ्गानामनादित्वं वेदानामनादित्वात् अङ्गाङ्गिनोरविनाभावात्। सङ्गतिग्रन्थानामेवाचार्यकृतत्वात्सङ्गमनीयग्रन्थानामनादित्वान्महाभारते भगवद्गीतासूपनिषत्स्विति लेखः सङ्गच्छते। श्रीभगवानुवाचेत्यादिश्लोक उपनिषद इतरे वैयासिका इति व्यासः सूचयामासानादिसादिविभागम्। तस्मात्सर्वेषामाचार्याणामाप्ततमानामनादिविद्यासंग्राहकत्वं सिद्धम्। "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।" इत्यङ्गान्यभिधायाङ्गाङ्गिनोरविनाभावेनाङ्गान्तं वेदत्वादाहुः पाणिनीयाः "तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते" इति। व्यङ्गस्य नैष्फल्यं प्रसिद्धं। वेद एव कश्चिद्भागो बोधसामग्रीति व्यवहारोऽङ्गमिति। व्याकरणस्य पाणिनिकृतत्वं न किंतु पाणिनिप्रोक्तत्वं वेदितव्यम्। यतः "शङ्करः शाङ्करीं प्रादाद्दाक्षीपुत्राय धीमते। वाङ्मयेभ्यः समाहृत्य देवीं वाचमितिस्थिति"रिति शिक्षानुलब्धा। श्रीशिवः शाङ्करीं यया सर्वज्ञो बभूव दाक्षीपुत्राय दक्षस्य श्वशुरस्य काचित्कन्या यशस्विनी तस्याः पुत्राय मातृऋणोद्धारसमर्थाय धीमत उपदेशयोग्याय वाङ्मयेभ्यो मन्त्रेभ्यः सारतरां दृष्ट्वा देवीं वाचमिति ऋचमुपदिदेश। स्वयं डमरुद्वारा चतुर्दशसूत्रीं मूलविद्यामुपदिदेश। तपःसंतुष्टा वाग्देवी निखिलविद्योद्धारसूत्राण्युपदिदेश। तानि च प्रोक्तानि पाणिनिना महर्षिणा। अतएव भाष्यकाराः पाणिनीयस्य प्रयोजनमाहुः "रक्षोहागमलघ्वसंदेहाः प्रयोजनमि"ति। प्रोक्तार्थे प्रत्ययो नतु कृतार्थे। यथा शिवश्चतुर्दशसूत्रीं तदुद्बोधकविद्यां चोपदिदेशानादिसिद्धां तथा वाग्देवीतराणि सूत्राणि। तस्मादङ्गानां न कश्चित्कर्ता। प्र० १० दर्शनानां परस्परविरोधपरिहारः सम-

चारविचारश्च । उ० १० श्रीशङ्कराचार्यैर्विरोधपरिहारः समयविचारश्च कृतः । अतएव तत्प्रशस्तिपत्रिकायामनाद्यविच्छिन्नगुरुपरम्पराप्राप्तषड्दर्शनस्थापनाचार्या इति विरुदावलिः प्रसिद्धा । उपासनामार्गप्रवृत्तये सिद्धान्तविरोधपरिहारं कृत्वा स्थापितानि न तत्र सन्देहावकाशः तत्तत्सिद्धान्तबाधादिति दिक् ॥ १० ॥ प्र० ११ विग्रहवत्यो विग्रहरहिता वा यज्ञिया देवताः । उ० ११ कामरूपा उभयथापि भवन्ति ॥ ११ ॥ प्र० १२ बुद्धदर्शनानि जिनदर्शनानि च षड्दर्शनेभ्यः पूर्वाणि न वा । उ० १२ पूर्वाणि वा पराणि वा सन्तु तथापि श्रीशङ्कराचार्यैरुत्खनितानि । पूर्वत्वं परत्वं वा न प्रामाण्यहेतुरिति विज्ञेयम् ॥ १२ ॥ प्र० १३ स्मृतीनां कर्तृत्वादिविचारः । उ० १३ स्मृतीनां कर्तारोऽनुभवाः स्मृतेरनुभवपूर्वत्वनियमात् । आदिशब्देन समय उपलक्ष्यते चे"न्नापृष्टः कस्यचिद्ब्रूयादि"ति शास्त्राद्धिस्मृतिप्रसङ्गे प्रश्नप्रसङ्गस्तदा प्रवचनप्रसङ्गः स्मृतिप्रसङ्गश्च । एष समयविचारस्तत्तत्स्मृतिग्रन्थोपोद्घाते स्पष्टः ॥ १३ ॥ प्र० १४ स्मृतीनां व्यवहारपूर्वकत्वं तत्पूर्वकत्वं वा व्यवहारस्य । उ० १४ अनुभवात्स्मृतिः स्मृतेर्व्यवहार इत्यन्योन्यपूर्वत्वमनादित्वादुभयोः । अनुभवरहितस्य स्मृत्यनुपपत्तेः । स्मृतिरहितस्य व्यवहारानुपपत्तेश्च ॥ १४ ॥ प्र० १५ कलौ क्षत्रियवैश्ययोः सद्भावविचार उपनयनविचारश्च । उ० १५ सर्वासामपि जातीनां सदसद्भावविचारः खानेसुमारीपत्राच्छास्त्रादाचाराद्यावगन्तव्यः उपनयनविचारस्तु गृह्यसूत्रादवगन्तव्यः ॥ १५ ॥ प्र० १६ कन्याया वरस्य च परिणयनसमयविचारः । उ० १६ कन्यायाः परिणयसमयोऽष्टमं वर्षमुपनयनवत् । तेन सपिण्डा भवन्ति कन्याः यथोपनयनेन वराः । तेषां समावर्तनोत्तरं परिणयसमयः । उपनीतवरतादात्म्येनोपनीतत्वं सपिण्डत्वं च कन्यानां । मुख्यं

---

१ अल्पादल्पमिति भावः ।

सापिण्ड्यप्रयोजकमुपनयम् ॥ १६ ॥ प्र० १७ चातुर्वर्ण्यविभागो गुणकर्मभिर्जन्मना वा। उ० १७ श्रीमन्महामहोपाध्यायसत्संप्रदायप्रवर्तकसर्वतन्त्रस्वतन्त्रपण्डितस्वामिराममिश्रशास्त्रिणस्तु क्षत्रियवैश्ययोः संन्यासाधिकारसिद्ध्यर्थं यज्जायते स ब्राह्मण इति श्रुतिमवलम्ब्यौत्पत्तिकं ब्राह्मण्यं पुरुषमात्रस्येति ब्राह्मणः प्रव्रजेदिति श्रुतिविषयत्वादनयोः संन्यास इत्याहुः। गुणकर्माधीनो वर्णविभाग इत्यङ्गीचक्रुरर्थात्। पूर्वोपन्यस्तविरुदावलीभूषितदयानन्दसरस्वतीस्वामिनस्तु "जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते। वेदाध्यायी भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः" इति वचनमवलम्ब्यौत्पत्तिकं शूद्रत्वं सर्वेषां संस्काराधीनो वर्णविभाग इत्याहुः। अत्रैकेन पण्डितेनोपनयनाधिकारो दत्तः परेण संन्यासाधिकार उभाभ्यामुभयं वा। सर्वतन्त्रस्वतन्त्राः सत्संप्रदायमित्थमेव प्रवर्तयन्ति। अस्तु द्वयोरपि वचनयोरेकवाक्यत्वविचारः परिशिष्यते द्वयोरपि। सति च तस्मिन् यज्जायते स ब्राह्मणः शूद्रश्चेति व्यधिकरणयोः सामानाधिकरण्यं परिहरति गृह्यसूत्रं। अष्टमे वर्षे ब्राह्मणमुपनयेदेकादशे क्षत्रियं द्वादशे वैश्यं इत्युपनयनविधिं ब्रुवद् गृह्यसूत्रं शूद्रमुपनयेदिति न विधत्ते। एतेन शूद्रस्याधिकारो निरस्तः। क्षत्रियमुपनयेद्वैश्यमुपनयेदिति विध्यन्तरेण जन्मना चातुर्वर्ण्यविभागो व्यक्तीकृतः ॥ १७ ॥ प्र० १८ द्विजानां द्वीपान्तरगमनमुचितं न वा। उ० १८ चित्रमेतत्। निषिद्धं समुद्रे नौयानमङ्गीकुर्वन्ति शङ्कते च तत्र यस्य नामापि न गृहीतम् ॥ १८ ॥ प्र० १९ स्वेषु वर्णेषु सामान्यतो भोजनविचारः कन्याव्यवहारविचारश्च। उ० १९ कुलशीलजातीरुपेक्ष्य सामान्यजातिमवलम्ब्य सर्वाङ्गीनत्वं कामयन्ते यद्दारिद्र्यस्य मुख्यलक्षणम्। दरिद्राः प्रायः सामान्यजातिमवलम्बन्ते मनुष्यत्वमात्रे परिवसन्ति च। कुलमग्रे परीक्षेतेति विवाहशास्त्रं। यथा कन्या तथा हविरिति भोजन-

शास्त्रं । प्र० २० स्त्रीणामध्ययनविचारो गृहकार्येषु प्राधान्यविचारश्च । उ० २० दंपत्योरङ्गाङ्गिभावो लोकशास्त्रप्रसिद्धो यथा न लुप्येत तथाध्ययनं प्राधान्यं च । यतः पत्युरुपनयनेनोपनयनवत्त्वं तद्विद्यया विद्यावत्त्वं ततस्तदङ्गस्य यत्प्राप्तं तावदध्यापनीयं न न्यूनमधिकं वा । दंपत्योर्योगक्षेमरूपत्वात्पुरुपायोगः संपादकः स्त्री क्षेमं कल्याणं तत्कारिणी व्यवस्थापिका तस्या यावत्प्राप्तं तावत्प्राधान्यं न न्यूनमधिकं वा । "स्त्री पुंवच्च प्रभवति गृहे तद्धि गेहं विनष्टमि"तिवृद्धाः ॥ २० ॥ प्र० २१ क्षत्रियाणां धर्मोन्नतिविचारः । उ० २१ अस्योत्तरं न वितरामः ॥ २१ ॥ प्र० २२ चतुर्दशविद्यानां पठनपाठनविचारः । उ० २२ वर्णाश्रमव्यवस्थां पुरस्कृत्य प्रतिस्थलं शाला स्थापनीया तत्र श्रीजगद्गुरुपीठाचार्यैरध्यक्षः स्थापनीयः । एषा वैदिकपद्धतिसुदर्शनादौ स्पष्टीकृता व्यवस्था ततोऽधिकमधिगन्तव्या ॥ २२ ॥ प्र० २३ पुराणेतिहासेषु संदिग्धविषयविचारस्तत्तत्समयविचारश्च । उ० २३ सन्तु संदिग्धविषयविचाराः केनचिद्यत्नेन तत्तत्समये सिद्धेऽपि तानि पुराणान्येव ते चेतिहासा एव । पुराणशब्दः प्रसिद्धः पुरातने न नव्ये । अतएव व्यासपदवीमारूढः स्वयं व्यासः सन्नपि व्यास उवाचेति लिखति । तेन सिद्धं पूर्वव्यासोक्तमनुवदतीति । एतेन सर्वाः स्मृतयो व्याख्याताः । तत्तत्पदवीमारूढाः पूर्वारूढोक्तिमनुवदन्तीति निष्कर्षः । इति हआसेति व्युत्पत्तेरितिहासशब्दस्य योयमधुना निवन्धो मयोक्तः स एवमेव पूर्वमासैवाऽधुना मयोक्त इत्याचार्याणां भाषणादितिहासनाम । सर्गादिपञ्चलक्षणसंपन्नत्वं पुराणत्वमिति वेद एव विभागस्तदर्थोपबृंहकोऽङ्गवत् । अतएव विद्यानामनादित्वं । वैयासिकादिशब्देषु प्रोक्तार्थे प्रत्ययः ॥ २३ ॥ प्र० २४ विधवाविवाहः शास्त्रविरुद्धो न वा । उ० २४ यदि दानं दत्तस्यापहारो वा सापिण्ड्यप्रयोजकगोत्रनिवृत्तिः शास्त्रविरुद्धो

न स्यात्तदा विधवाविवाहोपि शास्त्रसंमतः स्यात्। विधवाविवाहं वदन्नपि पराशरः सापिण्ड्यमङ्गीकरोति न ब्रवीति तन्निवृत्तिं तदुपायं वा। तस्मात्सापिण्ड्यप्रवृत्तेः पूर्वं पुनर्वरान्तराय दद्यादिति तदभिप्रायो वेदितव्यः। इमं प्रश्नमुपाकर्ण्य वाराङ्गना हसन्ति द्विजैरपि सापिण्ड्यं गोत्रं च दानपद्धतिश्च विस्मृतेति। सविस्मयमस्मद्वंशो वर्धतामिति जपन्ति। अग्रेऽस्माकं जीविकायाश्च गतिः केवेति चिन्तयन्ति। एतच्च सविस्तरं वैदिकपद्धत्यां निरूपितम्। असपिण्डां यवीयसीमिति विवाहस्मृतौ कन्यानां सापिण्ड्यमङ्गीकृतं तच्च गोत्रनिमित्तं। गोत्रं सप्तपदीनिमित्तं। कच्छबन्धनं चाचारारम्भश्च। प्र० २५ वर्णानामाश्रमाणां च कलौ विशेषधर्मविचारः। उ० २५ कलौ धर्मोपप्लवकारिणि धर्मोद्धारसन्नाहः कर्तव्य इति कलौ विशेषधर्मा आकरेभ्योऽवगन्तव्याः ॥ २५ ॥ प्र० २६ पतितानां पुनरुद्धारविचारः। उ० २६ पातित्यप्रयोजककर्मत्यागादुद्धृता भवन्ति पुनः पूर्वजातौ न मिलिष्यन्ति। पातित्यं नाम सापिण्ड्योच्छेदः पुनस्तस्योत्पादनमशक्यमिति पृथग्जातिधर्मेण स्थातव्यं गौणमुख्यन्यायस्य सर्वसंमतत्वात्। पतितैरुद्धृतैरपि नान्ये पातयितव्या इत्युद्धारधर्मः। एतदादीनि प्रकरणानि पुण्यपत्तने चित्रशालाध्यक्षराजेश्री वासुदेवराव जोशी हस्ते दत्तानि मुद्रणार्थं श्रीकाश्यां मुद्रणयन्त्रप्रातिकूल्यात्तत्रापि प्रतिकूलं तानि प्रकरणानि यदोपलभामहे तदा भवदीयभव्यसभायामुपस्थापयामः॥२६॥ अमोघवाचामनाद्यनन्तत्वं मनुराह—"अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवे"ति। दिव्या अमोघा। तदाह श्रुतिः "स भूरिति व्याहरत्। स भूमिमसृजते"ति व्याहारमात्रेण सप्तव्याहृतीनां सप्तलोका निर्मिताः। पातालादयो मुख्यन्तर्भूता भवन्ति। अतएव ता व्याहृतय उच्यन्ते। एवं मन्त्रसामर्थ्येन सप्तलोकान्विधाय तत्र च "एते असृग्रमिन्दवस्तिरःपवित्रमाशवः। विश्वान्यभिसौभगे"ति मन्त्रं

स्मृत्वा चकार देवादिसृष्टिं तत्र च "सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ॥ धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते" इति व्यवस्थोक्ता । तस्मादपरा श्रुतिराह "अनन्ता वै वेदाः" इति ईशज्ञानस्यानन्तत्वादनन्ताः सृष्टयो वाङ्मात्राः "वाचारम्भणं विकारो नामधेयमि"ति तस्मादेव "नेह नानास्ती"त्यपरा तस्मादेव तृतीयायात्र "द्वैतमिव भवति तदितर इतरं पश्यती"ति । शब्दमात्रस्य दर्शनं दर्शनमिवेत्यभिप्रायः । तावता वेदस्यानाद्यनन्तत्वात्संसारोऽनाद्यनन्तः । तस्माद्वेदस्वास्थ्ये संसारस्वास्थ्यं तदुपप्लव उपप्लवः संसारे इति सिद्धम् । "अस्य महतो भूतस्य निःश्वसितमि"ति श्रुत्या पुराणान्तानां वेदत्वमङ्गत्वं चेति सिद्धं दिव्यवाग्रूपत्वादिति दिक् । यथा कादिवर्णानां न कश्चिन्निर्मातोच्चरितारो बहवस्तथा वर्णसंघातोऽप्यनिर्मितः स च योजितो वाग्गणः काव्यमयोजितः श्रुतिस्मृत्यादिशब्दितः । तेन बीजमन्त्रशब्दौ व्याख्यातौ ।

ननु पुराणानामप्यनादित्वे तत्प्रतिपादितानां पाण्डवादीनां पञ्चसहस्राण्येव वर्षाणि व्यतीयुरिति कथमुपपद्येतेतिचेत् किं चित्रं "ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावती"ति सति न्याये । "शतं भीष्मा" इतीतिहासाच्च बहवः पाण्डवा व्यतीयुर्निबन्धः स एव । वाणी द्विविधा । सशरीराऽशरीरभेदात् । अशरीरा स्वतःप्रमाणं । पुरुषापराधाभावात् । ततः सशरीरा परतःप्रमाणं । तदेव निर्दिष्टं श्रुतौ "अस्य महतो भूतस्य निःश्वसितमि"ति । अशरीरत्वं महद्भूतत्वं । चिदात्मनो निःश्वसितं प्रथमा कला तया सहोद्भूताः सर्वा विद्याः । प्राण एव रूपेण विद्या भवतीति श्रुतितात्पर्यम् । अतएव ब्रह्मनिष्ठानां प्राणोऽत्रैव समवनीयते विद्याभिः सह । कलावति कला लीयन्त इति श्रुतितात्पर्यं । ब्रह्मकला

रूपत्वाद्विद्यानां ब्राह्मणा भरद्वाजाय मुनये दर्शिताः "वेदा वा एते" इति। अनन्ता वै वेदा इत्युपसंजहार। तस्मात्सर्वविद्याधीशस्याऽशरीरस्यानाद्यनन्तत्वात्सर्वविद्या अनाद्यनन्ता इति सिद्धं कथमत्र कृत्रिमत्वशङ्केति विदांकुर्वन्तु सभासद इति शम्। वेदस्य ब्रह्मसंज्ञाऽपि कलाकलावतोरभेदमूला। एवं सर्वा विद्याः। "दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वर"मिति भगवदुक्तरीत्या विद्यादर्शनम्।

पूर्वं श्रीशङ्कराचार्यकृतव्यवस्थया जगतः स्वास्थ्यमभूत्तत्स्मर्तव्यं नव्यैरधिकप्रश्नैः। अतएव तेषां जगद्गुरुत्वं बिरुदावली लिख्यते सर्वैः। अतस्तेषामेव समक्षं भवितव्यैषा सभा तदा सर्वोऽयं यत्नः फलाय कल्पेत।

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतषड्विंशतिप्रश्नपरामर्शः॥

---

# प्रश्नोत्तररत्नमालिका ॥ २४ ॥

| प्रश्नः<br>कश्चित्पृच्छति | उत्तरम्<br>उत्तरयति कृष्णभिक्षुः |
|---|---|
| १ शिखा किमर्थमिति | १ मानुषीतनुरूर्ध्वमूला कर्माधिकृतेति |
| २ यज्ञोपवीतं किमर्थमिति | २ अलिङ्गस्य कर्मानधिकारादिति |
| ३ उपनयनं किमर्थमिति | ३ अदीक्षितस्यापि तथेति |
| ४ विवाहः किमर्थमिति | ४ शास्त्राधिकारिप्रजार्थं दीक्षेति |
| ५ सर्वैरेकत्र कुतो न भोक्तव्यमिति | ५ अधिकारभेदादिति |
| ६ यथेच्छं कन्यासंबन्धः कुतो नेति | ६ पित्रोर्नीतिधर्मज्ञत्वादिति |
| ७ यथेच्छं कस्मान्न भोक्तव्यमिति | ७ जिह्वाया लज्जास्थानत्वादिति |
| ८ पर्वसु कस्मात्स्नातव्यमिति | ८ संधिकाले धर्मस्यैवावलम्बादिति |
| ९ वर्णभेदः कस्मादिति | ९ विवेकादिति |
| १० आश्रमाणां प्रयोजनं किमिति | १० उत्तरोत्तराधिकारवृद्धिरिति |
| ११ किमाश्रमलिङ्गप्रयोजनमिति | ११ आश्रमव्यञ्जनमिति |

| कश्चित्पृच्छति | उत्तरयति कृष्णभिक्षुः |
|---|---|
| १२ ललाटे तिलकं कस्मादिति | १२ सशास्त्रत्वादिति |
| १३ प्रतिमानां जलानां च प्रतिष्ठा कस्मादिति | १३ गुणदर्शनादिति |
| १४ ब्राह्मणः कस्मान्न हन्तव्य इति | १४ उत्पातभयादिति |
| १५ गौः कस्मान्न हन्तव्येति | १५ दुर्भिक्षभयादिति |
| १६ ब्राह्मणेभ्यः कस्माद्दातव्यमिति | १६ ज्ञानभूमित्वादिति |
| १७ मिथो नमस्कारः कस्मादिति | १७ शास्त्राङ्गीकारद्योतनादिति |
| १८ शास्त्राक्क्रेतव्यं कस्मादिति | १८ अल्पज्ञत्वादिति |
| १९ शास्त्रमङ्गीकर्तव्यं कस्मादिति | १९ मनुष्यत्वादिति |
| २० धर्मः कस्येति | २० यो यत्रोद्दिष्ट इति |
| २१ का योषिदिति | २१ क्षेमकारिणीति |
| २२ कः पुमानिति | २२ योगकर इति |
| २३ कः षण्ढ इति | २३ योगक्षेमविहीन इति |
| २४ किं ब्रह्मेति | २४ यत्र मनसः सहजविश्राम इति |
| २५ का मायेति च | २५ मनसो यत्र संचार इति |
| २६ श्राद्धं कस्मादिति | २६ संबन्धद्योतनादिति |
| २७ संध्या कस्मादिति | २७ आयुष्कामात्तेजस्कामाच्चेति |
| २८ संस्कारेषु संस्कृतभाषैव किमर्थमुपादेयेति | २८ संस्कृतेन संस्कृतमुपादेयं संस्कारे योग्यत्वादिति |
| २९ कस्मान्न विधवाविवाह इति | २९ पूर्वपतिस्वत्वानिवृत्तेरिति |
| ३० ईशः कस्मान्मन्तव्य इति | ३० जीवानां परतन्त्रत्वादिति |
| ३१ प्रपञ्चो मिथ्या कस्मादिति | ३१ विचारपारसिद्धेरिति |
| ३२ अद्वितीयं ब्रह्म कस्मादिति | ३२ तस्मादेवेति |
| ३३ ईशः केन कुत्र दृष्ट इति | ३३ विवेकिभिः सर्वत्र दृष्ट इति |
| ३४ प्रारब्धप्रयत्नयोः किं बलवदिति | ३४ सुप्ते प्रारब्धं जाग्रति प्रयत्न इति |
| ३५ क ईश्वर इति | ३५ यस्य नास्ति पृष्ठप्रदेश इति |
| ३६ स्रष्टः किंवा स इति | ३६ तम इति |

ब्राह्मणाः परिचिन्वन्ति ब्रह्म तद्ब्राह्मणानपि । अत्र मानं श्रुतिर्धर्मो बुद्धिमन्तः सुशिक्षिताः ॥ १ ॥ नामधेयं ब्राह्मणानां नागन्तुकमिदं भुवि । तत्साफल्याय तेषां तु सर्वमाचरणं मतम् ॥ २ ॥ ईश्वरे ब्रह्मता नित्यमुक्तत्वात्संमता विदाम् । अचिन्त्यशक्तियोगेन गुणमूर्तिषु चेशता ॥ ३ ॥ तदीयचिह्नसम्बन्धादीशता नार्मदादिषु । व्युत्क्रमान्नार्मदादीनां ब्रह्मान्तं रूपमुच्यते ॥ ४ ॥ अतः पूजाक्रमो लोके शास्त्रज्ञैः संप्रवर्तितः । अत्र वादः शास्त्रमार्गानभिज्ञत्वैकहेतुकः ॥ ५ ॥ जनस्थाने जनज्ञप्तिसिद्धये कृष्णभिक्षुणा । रचितां मालिकां कण्ठे कुर्वन्स्थाने भवेज्जनः ॥६॥ राजन्ते नासिके मुक्तास्तत्र स्रोतोऽपि राजते । यद्रवं शिरसा मत्वा शिवः सुखमविन्दत ॥७॥

कृष्णानन्दयतीशेनानुत्तरापि कृतोत्तरा ।
प्रश्नावलिरियं राजत्येकनाथेन शोधिता ॥ १ ॥

इति श्रीकैवल्यधामनिवासिकृष्णभिक्षुविरचितां प्रश्नोत्तररत्नमालिकां पुरुषोत्तमः कण्ठे करोत्विति शम् ॥

---

# प्रश्नचतुष्टयोत्तराणि ॥ २५ ॥

श्रीराजराजेश्वरशङ्कराश्रमस्वामिपक्षीयमुकुन्दरायप्रभृतिप्रेषितनिमन्त्रणपत्रस्थप्रश्नचतुष्टयोत्तराणि पूर्वसभाध्यक्षाद्दत्तानि ।

तत्र प्रथमः प्रश्नः—वर्णाश्रमिणामत्यावश्यकतयानुष्ठेयाः के श्रौतस्मार्तधर्माः ।

तत्रोत्तरम्—नित्या नैमित्तिकाश्च । सति दुर्निवारे कामे काम्या अपि ।

द्वितीयः प्रश्नः—तदुद्धरणपरिगृहीतवसुधावतरणैः श्रीमच्छङ्करभगवच्चरणैर्निजसिद्धान्ताविच्छिन्नप्रचारणाय कति पीठानि निर्माय के के तत्र तत्राचार्याः संस्थापिताः ।

तत्रोत्तरम्—चत्वारि पीठानि निर्माय पद्मपादादिचत्वारः शिष्याः संस्थापिताः पद्मपादादिज्येष्ठादिक्रमेण । "नारायणं पद्मभवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च । व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम् । श्रीशङ्कराचार्यमथास्य पद्मपादं च हस्तामलकं च शिष्यम् । तं तोटकं वार्तिककारमन्यानस्मद्गुरून्संततमानतोऽस्मी"ति श्लोकोक्तक्रममनुरुध्य द्वारकागोवर्धनज्योतिर्मठशृङ्गेरीशारदामठेषु पद्मपाद, हस्तामलक, तोटकसुरेश्वराचार्या, इति । पद्मपादस्य ज्येष्ठत्वात् द्वारकामठस्य मठाम्नाये प्राथमिकत्वात् पश्चिमदिशायाः सामवेदाधिष्ठितत्वात्तन्मठप्रकरणे सामवेदस्य तत्त्वमसीति वाक्यस्य च स्थापनलेखनात् सामवेदतन्महावाक्याश्रयाचार्यस्य सामवेदित्वमर्थसिद्धम् । संन्यासिनां त्यक्तवेदानां सामवेदित्वादिव्यवहारो भूतपूर्वगत्या । अन्यथा कथं सामवेदस्थापनमुपपन्नं स्यात् । ननु पुस्तकस्थापनमात्रेण वेदस्थापनव्यवस्थानिर्वाहः । चतुर्ष्वपि मठेषु चतुर्णामपि वेदपुस्तकानां स्थापनसंभवात् । तस्माद् मठाम्नाये वेदस्थापनव्यवस्थालेखः तत्तत्पीठस्थप्राथमिकाचार्यविषयः । नासौ नियमः तत्तत्पीठेषु तत्तदाचार्यैः तत्तच्छास्त्रीयैरेव भवितव्यमग्रेपीति । एतावता सुरेश्वराचार्याणां कण्वशाखीयत्वेन पश्चिमाम्नायाचार्यत्वे वेदस्थापननियमे प्रथमग्रासे एव मक्षिकापातापत्तिः । पद्मपादाचार्याणां सामवेदित्वं तु आचार्याणां परकायप्रवेशप्रकरणे तत्त्वमसीति वाक्यप्रबोधनलिङ्गात् । तथैव संन्यासिषु अद्यापि व्यवहारदर्शनात् । इतः परं यद्यपह्नुतः स्यादयं व्यवहारः तर्हि ईश्वर एव शरणम् । तस्मात् उदाहृतश्लोकोक्ताचार्याणां मठाम्नायोक्तमठानां च यथासंख्यं व्यवस्था युक्ततरा । अन्यथा प्रसिद्धं पूर्वादिक्रमं परित्यज्य पश्चिमादिक्रमावलम्बने का वाचोयुक्तिः स्यात् । सुरेश्वराचार्याणां शिष्यक्रमे श्लोकोक्तक्रमे वा प्राथमिकत्वाभावेन सामवेदित्वाभावेन च न

पश्चिमाम्नायाचार्यत्वमिति सुधीभिर्विभावनीयम्। एतत्सर्वं भवत्संमतादस्मदसंमतान्मठाम्नायादेव सिद्धम्।

तृतीयः प्रश्नः—कीदृग्लक्षणलक्षितैस्तत्पीठाधिकारभागिभिराचार्यैर्भवितव्यं इत्येवमादिविषयविशेषविनिर्णयाय।

तत्रोत्तरम्—तत्तदीयविरुदावल्युक्तयावल्लक्षणलक्षितैराचार्यैस्तत्पीठाधिकारिभिर्भवितव्यं दिग्विजयसमर्थैः। परमिदानींतनानां तादृशां पुरुषधौरेयाणामभावेन तत्तत्पीठाधिकारिभ्यो लब्धपीठत्वमाचार्यत्वप्रयोजकम्। यदि विरुदावल्युक्तयावद्गुणविशिष्टः कश्चित् पुरुषधौरेय उत्तिष्ठेत् तर्हि स्वभुजबलेनैव दिग्विजयं कृत्वा स्वयमेव प्राथमिकाचार्यो भवेत् किमर्थमन्यदीयं धनमाकाङ्क्षेत शास्त्रविरुद्धम्। "मा गृधः कस्यस्विद्धनमि"ति श्रुतेः। यथा कश्चित् बाहुबलसंपन्नः क्षत्रियः स्वयमेव दिग्विजयं कृत्वा प्राथमिकसिंहासनाधीश्वरत्वं भजते न कस्यचिदनपत्यस्य राज्ञः पुत्रो भवामीत्याकाङ्क्षते। तथाकाङ्क्षायां अन्यदीयपुत्रत्वाङ्गीकारेण तेनैवं पुत्रीकर्त्रा पित्रा पराजितः। अहो! तस्य तद्बाहुबलं, अहो! तस्य तदाचार्यत्वं यत्सर्वज्ञः सर्वशक्तिमांश्च भूत्वा यत्स्वतन्त्रं पीठं निर्मातुमशक्त इति।

ननु कालानुसारेण यथाकथंचिल्लक्षणसंपन्न उच्छिन्नपरम्पराके पीठे उपवेशनीयोऽन्यैरिति चेत् पीठस्थपरम्परामुच्छिन्नां परीक्ष्यान्यपीठाचार्यसंमत्या यत्र कुत्रचिदप्यनिन्दितं स्थापयेत्। अन्यथा पूजाभङ्गापत्तेः। तन्निन्दाश्रवणापत्तेः। अहो! अयं भिक्षुकोलाहलः ततोऽधिकगुणसंपन्ने लब्धे पूर्वं स्वस्थापितस्य त्यागापत्तेः। एवमनवस्थाप्रसङ्गादयं पूर्वपक्षो न समञ्जसः। पूर्वस्थापिते एवाग्रहश्चेत् स्थापकेषु पक्षपातित्वदोषप्रसङ्गात्। अतः एतत्पूर्वपक्षिणाऽन्यो मार्गोऽवलम्बनीयः। तस्मात् स्थापनीयस्य संन्यासित्वात् इतरपीठाचार्यसंन्यासिसंमत्या स्थापनीयो न स्वतन्त्रैरन्यगृहस्थैः। स्थापनप्रकारस्तु इतरपीठाचार्यान्प्रति प्रष्टव्यः। पीठसं-

प्रदायस्त पीठाचार्यवेद्यत्वात् । तत्संप्रदायस्तु तत्पीठयोग्ययोगपट्टवतः पीठाचार्याच्छिष्यानयनमिति ।

चतुर्थः प्रश्नः—श्रीशारदापीठाचार्याहृताप्रयुक्तानां प्रसङ्गतोऽत्रत्यकतिपयविनेयजनप्रसञ्जितविचारावलम्बिनीनां कक्षाणां तदाचार्याधिकृतद्वारकासंस्थानारोपमर्यादाधूर्वहणगोचरविवदनावभासिनीनां च विशिष्य प्रामाणिकत्वाप्रामाणिकत्वविचारणाकृते च ।

तत्रोत्तरम्—उभाभ्यामपि पक्षाभ्यां प्रमाणानि संगृह्यैकीकृत्य राजकीयैः अन्यैर्वा अधीतशास्त्रैरवक्रबुद्धिभिर्व्यवहारकुशलैर्बहुदर्शिभिः संप्रदायविद्भिः सुविज्ञेयं । यावदुभयपक्षप्रमाणानि एकत्र न भवन्ति तावत् तासां कक्षाणां प्रामाणिकत्वाप्रामाणिकत्वनिर्णयो ब्रह्मणापि दुर्निर्वहः । अस्मिन् शास्त्रार्थे पूर्वाहूतपण्डितैरेव व्यवहर्तव्यमिति न नियमः किंतु यैः कैरन्यैः पण्डितैः चण्डभानुप्रकाशे व्यवहर्तव्या विचारणीया इति शिवम् ।

सह्या.

श्रीकृष्णानन्दसरस्वती.
महामहोपाध्याय राजारामशास्त्री.
भालचन्द्रशास्त्री गुर्जर.
शिवरामशास्त्री गोरे.
कृष्णशास्त्री महाबळ.
काशिनाथ शास्त्री जोशी.
गङ्गाधरशास्त्री दातार.
महामहोपाध्याय रामदीक्षित आपटे.
नारायणशास्त्री गोडबोले.
दामोदरशास्त्री साठे.
विठ्ठलशास्त्री तारळेकर.

---

# ज्वरनिवृत्त्युपायः ॥ २६ ॥

को वा कथं स्यान्मनुजो जगद्रक्षणदक्षिणः । स्वयं तर्तुमशक्तश्चेत्तारयेत्स भवेत्तदा ॥ १ ॥ यस्य स्याज्जगदेतत्तु चिन्तां स जगतो वहेत् । तस्मात्स जगदीशानः प्रभुः संकटशान्तिषु ॥ २ ॥ अथ

श्रीमद्भट्टकमलाकरेण रुद्रकोपोत्थजनमारशान्तिर्लिखिता मुद्रयित्वा प्रकाशिता पूर्वमधुना श्रीमद्भागवतोक्तमाहेश्वरज्वरनिवृत्त्युपायमतिप्रसिद्धमपि पुनः प्रबोधाय प्रकाशयामो भारतं वर्षं ज्वरदूनमभिलक्ष्य प्रसङ्गे प्रयुक्तः प्रयोगः फलाय कल्पत इति सकलसंमतः पन्थाः। बाणासुरयुद्धप्रसङ्गे महेश्वरेण सकलस्वगणपराभवं दृष्ट्वा क्रुद्धेनापराभवो ज्वरः प्रेषितः। यथा। "विद्राविते भूतगणे ज्वरस्तु त्रिशिरास्त्रिपात्। अभ्यधावत दाशार्हं दहन्निव दिशो दश ॥ १ ॥ अथ नारायणो देवस्तं दृष्ट्वा व्यसृजज्ज्वरं। माहेश्वरो वैष्णवश्च युयुधाते ज्वरावुभौ ॥ २ ॥ माहेश्वरः समाक्रन्दन्वैष्णवेन बलार्दितः। अलब्ध्वाऽभयमन्यत्र भीतो माहेश्वरो ज्वरः ॥ ३ ॥ शरणार्थी हृषीकेशं तुष्टाव प्रयताऽञ्जलिः ॥ ४ ॥ ज्वर उवाच। नमामि त्वाऽनन्तशक्तिं परेशं सर्वात्मानं केवलं ज्ञप्तिमात्रम्। विश्वोत्पत्तिस्थानसंरोधहेतुं यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ॥ ५ ॥ कालो दैवं कर्म जीवः स्वभावो द्रव्यं क्षेत्रं प्राण आत्मा विकारः। तत्संघातो बीजरोहप्रवाहस्त्वन्मायैषा तन्निषेधं प्रपद्ये ॥ ६ ॥ नानाभावैर्लीलयैवोपपन्नैर्देवान्साधूंल्लोकसेतून्बिभर्षि। हंस्युन्मार्गान्हिंसया वर्तमानाञ्जन्मैतत्ते भारहाराय भूमेः ॥ ७ ॥ तप्तोऽहं ते तेजसा दुःसहेन शान्तोग्रेणात्युल्बणेन ज्वरेण। तावत्तापो देहिनां तेऽङ्घ्रिमूलं नो सेवेरन्यावदाशानुबद्धाः ॥ ८ ॥ श्रीभगवानुवाच। त्रिशिरस्ते प्रसन्नोस्मि व्येतु ते मज्ज्वराद्भयम् यो नौ स्मरति संवादं तस्य त्वन्न भवेद्भयम् ॥ ९ ॥ इत्युक्तोऽच्युतमानम्य गतो माहेश्वरो ज्वरः ॥ १० ॥" इति। अत्र ज्वर उवाचेत्यादिचतुःश्लोक्या विष्ण्वालये प्रतिदिनं कुशपाणयः प्रयताञ्जलयो ब्राह्मणाः प्रतिस्थलं प्रतिग्रामं

१ कृत्रिमकृष्णभक्तैर्भाक्तैर्भागवतैश्च "तथापि सविशेषः" "परमार्थस्तु नास्त्येव" इत्यादिजल्पद्भिरेतद्विशेषणं मननीयम्.

सद्धर्ममावर्तयेयुः। ज्वरास्त्रस्य ज्वरास्त्रमेव प्रतीकार इति शास्त्रतात्पर्यं प्रत्यान्नदन्। अस्य प्रतीकारस्य भगवान् ज्वर एवाचार्यः। इममुपायं विद्वांकुर्वन्तु ब्राह्मणाः क्षत्रिया वेतरे प्रभवः। येषां स्वपररक्षणचिन्ता ते करिष्यन्ति।

अथ प्रयोगः। देशकालौ संकीर्त्य अस्मादेशान्माहेश्वरज्वरस्योत्सादनार्थं ज्वरकृतश्रीकृष्णस्तोत्रपाठान्करिष्यामहे इति संकल्पो दशावराणां त्र्यवराणां वा ब्राह्मणानां संकल्पदिनमारभ्य वर्षान्तं दुरन्नत्यागस्त्रिकालसंध्यानियमश्च। अन्येपि धर्मा अनुष्ठातॄणां वेदितव्याः। पाठान्ते माहेश्वरो ज्वरो निवृत्त इति विभाव्य कुशमुष्टिं प्रतीच्यां वायव्यां वा दिशि प्रक्षिपेत्। ततः स्तोत्रशेषं पठेत्, तावत्ताप इति ज्वरेणैवावधिरुक्तोऽधिकारिणश्च। आशां परित्यज्याऽनुष्ठातव्यमिति शास्त्रतात्पर्यम्। सेवेरन्निति बहुवचननिर्देशात् संघातसाध्यमेतत्कर्मेति व्यज्यते। रोगस्य संघातविषयत्वात् "संघे शक्तिः कलौ युगे" इति न्यायाच्च। अनुष्ठानान्ते काले वर्षतु पर्जन्य इति श्लोकं पठित्वा विष्णुं संपूज्य गृहं गच्छेयुः। निरूढरोगस्य दीर्घ उपायो वेदितव्यः। माहेश्वरो ज्वरस्त्रिदोषरूप आपादतलमस्तकमिति त्रिशिरास्त्रिपाच्च। अपराह्णोस्य कालः।

इति श्रीकैवल्यधामनिषण्णकृष्णानन्दसरस्वतीप्रकाशितो माहेश्वरज्वरनिवृत्त्युपायो व्याससंमतः॥

---

# जनमारशान्तिः॥ २७॥

जनमारो नाम संघातमरणलक्षणो मरकापरपर्यायो महामारीति प्रसिद्धो रोगविशेषः। स च लोभाद्याविष्टराजकृतकरादिपीडाद्यभिभूतप्रजाकृतस्वधर्मादित्यागजन्यरुद्रकोपोत्थ इति गर्गवाक्याशयोऽग्रे वक्ष्यते "वि० मा० काशीखण्डे" "साग्रं शतं योजनानां देशः

सर्वोऽभिभूयते। घोरै राजकृतैर्दोषैः परेषामपि सुव्रत ॥" ब्रह्मवैवर्ते "राजा यत्कुरुते पापं ब्रह्महत्यादि दारुणम्। वंशजान्हन्ति सहसा स्त्रीवधं कुरुते भृशं। तेन राजा च सा पृथ्वी स तत्क्षयमवाप्नुयात्। कालस्फोटादयो दोषा वैद्यविज्ञानलक्षणाः। प्रवदन्त्यौषधं नैव मन्त्रतन्त्राणि चैव हि। आशु मृत्युकराश्चैव शोकहृद्रोगकारिणः। रुद्रप्रकोपजस्तस्माज्जनमारोऽभिजायते। तस्मात्प्रसादयेद्देवं पार्वतीवल्लभं शिवम्। गाणपत्येन विधिना ह्यथर्वशिरसा तथा। यामलेन विधानेन कुर्याद्देवप्रसादनम्। रुद्रसूक्तं तथा गाथां विष्णुसूक्तं तथैव च। बल्युपहारान्विविधांश्चत्वरेषु निवेदयेत्। आवाहयित्वा सगणं रुद्रं शैलसुतान्वितं। शिवद्वारे विधिस्त्वेष कार्यो नान्यत्र वै शुभः। त्रैयम्बकेण मन्त्रेण होमं तत्र प्रकल्पयेत्। समिधो ब्रह्मवृक्षस्य जुहुयाच्च सहस्रकम्। साज्यं च पायसं चैव सहस्रं जुहुयात्सुधीः। सहस्रं बिल्वपत्रैश्च अविच्छिन्नैर्द्विजोत्तमः। जुहुयात्क्षीरयष्टीभिस्तथा च तिलसर्पिषा ( यष्टयः समिधः )। सर्वं स्विष्टकृतं चैव जपेच्छान्तिं द्विजोत्तमः। ततोऽभिषेचनं नृणां सर्वेषामपि कारयेत्। आचार्यब्रह्मऋत्विग्भ्यो हेमदानं प्रकल्पयेत्। गामाचार्याय साध्वीं च सवत्सां च पयस्विनीं। सदक्षिणां सवस्त्रां च सालंकारां सभाजनां। नामगोत्रं समुच्चार्य प्राङ्मुखाय निवेदयेत्। वक्ष्यमाणेन मन्त्रेण दाता चैवोत्तरामुखः। दानमन्त्रः। धेनुस्त्वं पृथिवीरूपा सर्वपापक्षयंकरी। जनस्यास्य च सर्वस्य मृत्युं नाशय शोभने। सप्तधान्यानि विप्रेभ्यो दद्याद्राजा समाहितः। भूमिदानानि भूरीणि विविधांश्च तुरङ्गमान्। दद्याच्छकटदानं च धुर्याभ्यां सुनियन्त्रितं। ततश्च रुद्रसदने गर्भागारं सुसंस्कृतं। दशाङ्गेन च धूपेन धूपयेत्प्रयतः पुमान्। शतपत्राणि पुष्पाणि पूजार्थं प्रतिपादयेत्। विलिप्य चन्दनं श्वेतं सकर्पूरं सुसंस्कृतं। दीपैर्नीराजयेद्देवं नैवेद्यैस्तोषयेच्छिवं। ताम्बूलं दाप-

येद्विद्वान्द्रविणं कनकादि च । एवं संपूज्य देवेशं प्रार्थयेत्सजनो नृपः । मन्त्रस्तु । देवदेव महादेव महापापविनाशन । जनमारकृतां पीडां सद्यो नाशय शङ्कर । इति संप्रार्थ्य देवेशं कुर्याच्चैव प्रदक्षिणं । जपेच्छिवस्तुतिं धीमान् श्रद्धया परया युतः । प्रसादिते ततो रुद्रे जनमारो निवर्तते । ब्राह्मणान्भोजयेत्पश्चात्सहस्रशतसंख्यया । रुद्रार्चनं गवां दानं गायत्रीजपमुत्तमं । निवारयन्ति विघ्नानां राशींश्चात्र न संशयः । शिवपूजां शिवध्यानं शिवाराधनसत्क्रियाम् । ये कुर्वन्ति सदा भक्त्या ते विघ्नान्न भजन्ति वै । यो राजा मङ्गलाविष्टो धर्मकीर्तिपरायणः । न भवेत्तस्य राष्ट्रे तु जनमारः कदाचन । उपवासेन भूपालो विधानमिदमाचरेत् । सभार्यः सजनः श्रीमान् सपुत्रः सपुरोहितः । धर्मसङ्गलगीतैश्च नृत्यैश्च विविधैरपि । शृणुयाद्वैष्णवाख्यानं हृष्टपुष्टजनावृतः । शां० सा० हेमाद्रौ मदनरत्ने नृसिंहपुराणे—अनावृष्टिमहामारीज्वररोगागमे तथा । नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः । कारयेल्लक्षहोमं तु ग्रामे यश्च नराधिपः । नृसिंहमन्त्रेणायं होमः । सुश्रुते—स्थानत्यागाज्जपाद्धोमान्महामारी प्रशाम्यति । आथर्वणे तु रौद्री शान्तिरुक्ता । हेमाद्रौ गर्गः—जनमारसमुत्पत्तिं प्रवक्ष्यामि च शान्तिकं । यदा लोभसमाविष्टैः पीड्यन्ते पार्थिवैः प्रजाः । रमत्यमिद्रवन् राजा नच धर्मेण तिष्ठति । [ क्लेशयत्यनिशं राजा नच धर्मं समाचरेत् ] । वचस्तस्यानुवर्तन्ते प्रजा धर्मं विहाय ताः । क्रोधलोभसमाविष्टाः साध्वाचारविवर्जिताः । पूजयन्ति च नो मोहाद्देवान्विप्रांस्तथा पितॄन् । तास्वधर्माभिभूतासु ततो रुद्रः प्रकुप्यति । अन्तकोऽप्येष भगवान्भूतानां प्रिय एव च । कुरुतेऽसौ विकारांश्च हन्तुं भूतान्पृथग्विधान् । ताराग्रहान्केतुदण्डान् राहुकारुककीलकान् । ससूर्यसन्ध्याविकृतीन्घोरान्वा मृगपक्षिणः । [ ताराग्रहोल्का रुद्राश्च राहुकेतुप्रदर्शनम् । उदयास्तमये

न्चन्द्रसूर्यबिम्बविपर्ययः । 'विपर्ययशब्देन शीतोष्णता' । विकारा मृगसिंहानां विद्युत्पातोल्बणानि च ।] भूमिकम्पोल्कानिर्घातशीतोष्णानिलविक्रियाः । अतिवर्षमवर्षं च तथैवर्तुविपर्ययः । ओषध्यो रसहीनाश्च भवन्त्यृतुविपर्यये । रसवीर्यविहीनास्ता रोगानुत्पादयन्त्यथ । [ गृष्ट्यो दुग्धहीनाश्च रोगयुक्ता भवन्ति वै । एतद्राजकृतं पापं विज्ञेयं नात्र संशयः ] दिव्यभौमान्तरिक्षाः स्युरुत्पाता दोषसूचकाः । संभवन्ति तदा रोगा दारुणा जनमारणाः । रुद्रप्रकोपजं तस्माज्जनमारं प्रचक्षते । तेनाभिभूताः सर्वेऽपि लभन्ते बुद्धिवैकृतं । सत्वं बलं च विकृतिं याति प्रायेण जन्तुषु । ब्रह्मस्वहरणाच्चापि गुरुद्रोहात्सतां वधात् । लक्ष्यते जनमारोऽयं समुत्पन्न इति श्रुतिः । तस्मात्प्रसादयेद्यत्नाद्देवदेवं महेश्वरम् । दैवज्ञानुप्रदिष्टेन विधिना सुसमाहितः । गाणपत्येन विधिना अथर्वशिरसा तथा । यामलेन विधानेन कुर्याद्देवप्रसादनम् । शिवसूक्तमुमासूक्तं जपेच्च शतरुद्रियम् । बल्युपहारान्विविधांश्चत्वरेषु निवेदयेत् । आवाहयित्वा सगणं रुद्रं रात्रावहस्सु च । ब्राह्मणान्भक्ष्यभोज्यैश्च दक्षिणाभिश्च तोषयेत् । प्रसादिते ततो रुद्रे जनमारो निवर्तते । नह्येष नानादैवत्यैर्विविधैश्चान्यकर्मभिः । बलाच्छमयितुं शक्यो रुद्रकोपसमुत्थितः । तस्मात्प्रसादयेद्यत्नैर्भावाय जगतो हितम् । शिवं प्रजानां भवति यदा संप्रीयते शिवः । धर्ममङ्गलशीलश्च देवब्राह्मणपूजकः । शिवार्चनरतः सर्वैरुपसर्गैर्विमुच्यते । जपोपवासनिरतो नृपतिश्च यतेन्द्रियः । युक्तो होममुपाश्रित्य नियमेन यथाविधि । एवं युक्तस्य नृपतेः कर्मसिद्धिः प्रशस्यते । कर्मणस्तस्य मूलं हि श्रद्दधानो नृपः स्मृतः । उपोषितो नृपः स्नातः शुक्लवस्त्रसमावृतः । आत्मरक्षां स्वयं कृत्वा ततः शान्तिं प्रयोजयेत् । धर्मात्मा धर्मविदुषां राजा राजपुरोहितः । राजा वै सगुणो येषां कुशलं तत्र वर्धते । ( पूर्वं नानोत्पातशान्तौ

जनमारशान्तिरुक्तास्ति । शान्तिसारेतु—याम्यां तु कारयेच्छान्तिं संप्राप्ते मरके तथेति । एषा शान्तिराथर्वणे प्रसिद्धेति तत्रैव ) विष्णुधर्मोत्तरे—रुद्राणां च तथा जप्यं सर्वारिष्टनिपूदनं । सर्वकामकरो होमस्तथा सर्वत्र शान्तिदः । अजाविकानामश्वानां कुञ्जराणां तथा गवाम् । मनुष्याणां नरेन्द्राणां बालानां योषितामिह । ग्रामाणां नगराणां च देशानामपि भार्गव । उपद्रुतानां धर्मज्ञ व्याधितानां तथैव च । मरके समनुप्राप्ते रिपुजे च तथा भये । रुद्रहोमः परा शान्तिः पायसेन घृतेन वा । मार्कण्डेयपुराणे—उपसर्गानशेषांस्तु महामारीसमुद्भवान् । तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम । मम दुर्गायाः । अत्र प्रागुक्तौ गायत्र्या नृसिंहमन्त्रेण वा लक्षहोमकोटिहोमौ च ज्ञेयौ । ( अत्र संख्योक्ता कात्यायनीतन्त्रे—उपसर्गोपशान्त्यर्थं त्रिरावृत्तं पठेन्नरः । ग्रहदोषोपशान्त्यर्थं पञ्चावृत्तं वरानने । महाभये समुत्पन्ने सप्तावृत्तमुदीरयेत् । नवावृत्त्या भवेच्छान्तिर्मुच्येत्प्राणार्तिजाद्भयात् । महाभये महोत्पातादिजे इति नागेशभट्टाः । तत्रैव—चंड्याः शतावृत्तपाठात्सर्वाः सिध्यन्ति सिद्धयः ) इति जनमारशान्तिः ।

अथ ब्रह्मवैवर्तोक्तः प्रयोगः । शुभकाले राजा ग्रामाधिपतिर्वा शिवालये आचमनादिदेशकालस्मरणान्ते श्रीरुद्रप्रसादसिद्धिद्वारा एतन्नगर(एतद्ग्रामेत्यूहः) निवासिसकलप्राणिशरीरेषु उत्पन्नोत्पत्स्यमानजनमाराख्यप्रबलरोगोपसर्गस्य शीघ्रोपशमपूर्वकं सर्वेषामायुरारोग्याद्यभीष्टसिद्ध्यर्थं सग्रहमखां जनमारशान्तिं करिष्ये इति संकल्प्य गणेशपूजनादिऋत्विग्वरणान्तं कुर्यात् । ततः आचार्यः प्रादेशकरणान्ते रुद्रस्य महापूजां विधाय रुद्रसूक्तानि शतरुद्रियानुवाकं रुद्राथर्वशीर्षं विष्णुसूक्तं च जप्त्वा अग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहाद्युत्कीर्तनान्ते रुद्रं प्रधानदेवं पलाशसमिद्घृताक्तपायसबिल्वदलक्षीरवृक्षसमिद्घृताक्ततिलैः प्रतिद्रव्यं सह-

स्वसंख्याभिराहुतिभिः शेषेणेत्यादिग्रहादिहोमान्ते त्र्यम्बकमन्त्रेणोक्तद्रव्यैरुक्तसंख्यया प्रधानहोमं कुर्यात्। ततः स्विष्टकृदादिप्रायश्चित्तहोमान्ते इन्द्रादिभ्यो बलीन्दत्त्वा क्षेत्रपालाय चत्वरे महाबलिं दद्यात्। शान्तिसूक्तजपान्ते पूर्णाहुतिं हुत्वा संस्रावहोमादिशेषं समाप्य स्थापितकलशोदकेन सर्वप्राणिनामभिषेकं कुर्यात्। ततः कर्ता धृतशुक्लाम्बरो विभूतिं धृत्वा ग्रहादीनामुत्तरपूजान्ते उदङ्मुखः प्राङ्मुखोपविष्टायाचार्याय सोपस्करां सदक्षिणां च धेनुं दद्यात्। तत्र मन्त्रः। धेनुस्त्वं पृथिवीरूपा सर्वपापक्षयंकरी। जनस्यास्य च सर्वस्य मृत्युं नाशय शोभने। ततस्तस्मै ब्रह्मादिऋत्विग्भ्यश्च यथाशक्ति सुवर्णं दत्त्वाऽन्येभ्यश्च सप्तधान्यानि भूमिमश्वान् सवृषं शकटं च यथासंभवं तत्तन्मन्त्रैर्दत्त्वा शिवस्य गर्भागारं गन्धादिनोपलिप्य दशाङ्गधूपेन धूपयित्वा शिवं सकर्पूरश्वेतचन्दनेन विलिप्य शतपत्रपुष्पैः संपूज्य धूपादताम्बूलसमर्पणान्ते सुवर्णादिदक्षिणां दत्त्वा सर्वैः सह कृताञ्जलिस्तं प्रार्थयेत्। देवदेव महादेव महापापविनाशन। जनमारकृतां पीडां सद्यो नाशय शङ्कर। ततो देवं प्रदक्षिणीकृत्य शिवस्तुतिं पठित्वा सहस्रं शतं वा विप्रान्संभोज्य भूयसीं दत्त्वा शान्तिं वाचयित्वा कर्म समापयेत्॥ १॥ यद्वा नृसिंहपुराणोक्तः प्रकारः—तत्र रुद्रपूजास्थाने नृसिंहं संपूज्याग्निग्रहस्थापनान्ते होमः। नृसिंहं प्रधान० तिलैर्लक्षसंख्या०। नृसिंहाय विद्महे वज्रनखाय धीमहि। तन्नः सिंहः प्रचोदयात्। इति होममन्त्रः। शेषं प्राग्वत्॥ २॥ यद्वा बौधायनोक्तः प्रकारः—प्राग्वत्संकल्प्य गणेशपूजादि कृत्वा ग्रामस्थं मुख्यदेवं सहस्रकलशैरभिषिच्य यथाविभवं संपूज्याग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात्। अहाद्युत्कीर्तनान्ते मृत्युंजयं प्रधानदेवं घृताक्ततिलैः पञ्चसहस्रसं० शेषं प्राग्वत्॥ ३॥ यद्वा गर्गोक्तः प्रकारः—तत्र सग्रहमखामित्युल्लेखवर्जं प्राग्वत्संकल्प्य रुद्राथर्व-

शीर्षजपान्ते उमासूक्तं जपित्वा यथाविभवं नानाविधपदार्थैर्महान्तं बलिं चत्वरे दत्वा यथाशक्ति विप्रान्संभोज्य दक्षिणाभिः सन्तोष्य कर्म समाप्य जपोपवासादिधर्मशीलो भवेत् ॥ ४ ॥ यद्वा विष्णुधर्मोक्तः प्रकारः—प्राग्वद्रुद्रपूजान्तेऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । ग्रहादिकीर्तनान्ते रुद्रं प्रधा० पायसेन ( घृतेन वा ) । अमुकसं० । रुद्राध्यायमन्त्रैर्होमः । महाबलिदानान्ते पूर्णाहुत्यादिकर्मसमाप्तिः ॥ ५ ॥ यद्वा रुद्रपूजान्ते यथासंभवं लघुरुद्रादि जपित्वा कर्मसमाप्तिः ॥ ६ ॥ यद्वा मार्कण्डेयपुराणोक्तः प्रकारः—संकल्पे श्रीदुर्गाप्रसादेत्यादिसिद्ध्यर्थमित्यन्ते मार्कण्डेयपुराणान्तर्गतश्रीदुर्गामाहात्म्यस्य त्रीन् सप्त नव शतं वा पाठान्करिष्ये इति संकल्प्य गणेशपूजादि कृत्वा पाठान्कुर्यात् ॥ ७ ॥

इति जनमारशान्तिप्रयोगः । भट्टकृता जनमारशान्तिः श्रीकृष्णानन्दसरस्वतीस्वामिभिः श्रीबालाजीयन्त्रालये मुद्रयित्वा प्रकाशिता । येनकेनापि मुद्रणीया लोकोपकारात् ।

---

## महामहोपाध्यायशब्दविचारः ॥ २८ ॥

अथ नवीना विग्रहपरामर्शोक्तदूषणमसहमाना आहुः । महानुपाध्यायो भवति यस्माद्गुरोः स महोपाध्यायस्तत्र महत्त्वं विशेषणीकृत्य महामहोपाध्याय इति प्रयोगः साधुरिति । इदमत्र विचार्यते किमुपाध्यायशब्दः शिष्यसाकाङ्क्ष उत गुरुसाकाङ्क्षः । आद्ये शिष्यो महोपाध्यायशब्दवाच्यस्तत्र महत्त्वविशेषणे न त्वदभीष्टार्थासिद्धिः पूर्वोक्तदूषणतादवस्थ्यं च परिहृतं विशेष्यभेदात् । तथापि गौणत्वमङ्गीकृतमतएव "आन्महत" इति सूत्रे आदिति योगविभागात्वं महाबाहुरितिवदुपपादितम् । योगविभागश्चैकादशशब्दोपपत्तयेऽङ्गीकृतो दीक्षितैः । अन्यथा "सन्महत्परमोत्तमोत्कृष्टाः पूज्यमा-

नै"रिति प्रतिपदोक्तसमासग्रहणे महाबाहावात्वं न स्यात्।तस्य प्रतिपदोक्तकर्मधारयेतरत्वात् । योगविभागे तु यथेच्छमात्वं तेनैकादशो महाबाहुश्च सिद्धः । लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वमाश्रित्य महाबाहुसाधनेपि नैकादशः सिद्धस्तस्माद्योगविभाग इति । अस्त्वेतत्सर्वमात्वविधानमुद्देश्यहीनमुन्मत्तप्रलापायते यन्नुद्देश्यो महच्छब्दोऽङ्गीकृतस्तदैकादशासिद्धिः । अनुद्देशे शास्त्राऽप्रवृत्तेः । योगविभाग उत्तरखण्डवैयर्थ्यं महाबाहुवन्महोपाध्यायासिद्धेः । तस्मात्सर्वमेतदकाण्डताण्डवम् । गुरुसाकाङ्क्षता तु न युज्यते पर्यायत्वाद् अयोग्यत्वाच्च। अत्रैतत्तत्त्वम् । सन्महदिति नियमसूत्रस्योद्देश्यसंकोचमात्रपर्यवसानात्सामान्यशास्त्रैकवाक्यतया सदादिशब्दानां पूज्यमानैरेव समासविधानान्नात्र लक्षणप्रतिपदोक्तपरिभाषावकाशस्तेन सामानाधिकरण्यमात्रेणा"ऽऽन्महत" इति सूत्रस्य महाबाहुर्विषयो महोपाध्यायवत् । एकादशशब्दस्तु निर्देशमात्रशरणः । एकस्य दशनीति वाच्यमिति वार्तिकमनुसंधेयम् । नियमोत्सर्गयोरेकवाक्यत्वेन क्षीणं समानाधिकरणग्रहणसामर्थ्यम् । नियमफलं तु महामूर्खो महापाप इत्यादिप्रयोगप्रतिबन्धः । अपूज्यमानत्वाद्धिक्क्रियमाणस्य । तस्माद्बहुव्रीहियत्नो निष्फलतामगात् । महानुपाध्यायो यस्मिन्निति विग्रहे ग्रामोपि महोपाध्यायशब्दितः स्यात् बहुव्रीह्याशायां महान्महो यस्येति तुष्यतु परंतु तदसंमतः । "मह उद्धव उत्सव"इत्यमरः । कर्मधारयद्वयाङ्गीकारे सिद्धसाधनतादयो दोषा उपन्यस्ताः । यद्गुरुनिरूपितमहत्त्वविधानमुपाध्यायशब्दवाच्ये शिष्ये तदुपहासो गुरूणामेतेन सर्वव्युत्पत्तिर्व्याख्याता मनोरथश्च । कर्मधारयो बहुव्रीहिर्वास्तु महत्त्वमेव विधीयत उपाध्याये । त्वदुक्तबहुव्रीहिपक्षेऽन्यपदार्थस्योपस्थानात्तन्निरूपितं महत्त्वं कर्मधारयपक्ष उपाध्यायान्तरनिरूपितम् । शिष्यनिरूपितमहत्त्वस्याविवक्षणादव्यावर्त्तकत्वात् । तस्मात्कर्मधारय एव श्रेयान् इति । पृषोदरा-

दित्वादात्वमित्यपरे । तथापि शाकपार्थिववन्धुः । महदात्वे घासकरविशिष्टेपूपसंख्यानमिति वार्तिकस्थविशिष्टशव्दोपलक्षितो महोपाध्यायशब्द इति केचित् । मिश्रास्तु महामहोपाध्यायशब्दे पूर्वो महच्छब्दोऽतिशयार्थोऽपरः पूजार्थस्तेनोद्देश्यतावच्छेदकविधेयभेदान्नानुपपत्तिरित्याहुस्तच्चित्रम् । सन्महदिति नियमेन पूजार्थक एव महच्छब्दोऽन्यथा समासानुपपत्तेः । अतिशयोऽपि पूजाया नातिरिच्यत इति नियमतात्पर्यम् ।

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतविग्रहपरामर्शे
नवीनकृतसमाधानपरामर्शः ।

---

# चमत्कारपरामर्शः ॥ २९ ॥

## ( भूभान्वोर्भ्रमणविचारः )

अथ चमत्कारं परामृशामः—

यावदस्य वशे विश्वमितरेषां च तत्तथा ।
तेन ते द्वादशादित्या अनन्तापि च मेदिनी ॥ १ ॥

वक्तव्यमस्य भानोर्वशे विश्वं तेन जगतः स्वास्थ्यं । स चोदयास्तमध्याह्नप्रदेशस्थितजनानां दृष्टिसंगमकेन्द्रे वर्तमानः सविता सकिरणः सप्रकाश उदयास्तप्रदेशयोरन्तराले स्थित इति निर्विवादं । ततो बहिःप्रदेशे तम एवेत्यपि निर्विवादं । मध्याह्नप्रदेशादुभयतः सम एव किरणप्रकाशप्रसारः एवमूर्ध्वाधरतोऽपि सम एव किरणप्रकाशप्रसारः । मण्डलस्य समवृत्तत्वात् । सत्येवं यस्मिन्प्रदेशे न तिर्यक्छाया स मध्याह्नप्रदेशस्तावत्पर्याप्तं सूर्यमण्डलमिति वक्तुं युक्तं । वैषम्ये छायातिर्यग्भावापत्तेः । इदमेव मध्याह्नस्य मध्याह्नत्वं । यथा यथोदेति पश्चिमायां तथा तथाऽस्तमेति पूर्वस्यां । यदा काश्यां मध्याह्नसमयस्तदा पश्चिमायां पञ्च-

दशघटिकान्तरितदेश उदयकालस्तदैव पूर्वस्यां पञ्चदशघटिकान्तरितदेशेऽस्तकालः तस्मादुदयास्तप्रदेशगर्भे वसन्सविता क्रियान्स्यात्तदनुमातव्यं मध्याह्नप्रदेशनियमात् । उदयास्तप्रदेशान्नातिरिच्यते सविताऽन्यथोदयास्तव्यत्यासप्रसङ्गस्तल्लोपप्रसङ्गो वा । तद्दूरत्वनिर्णयोऽप्युदयास्तमध्याह्नप्रदेशैः कृतः उदयास्तप्रदेशाभ्यां यावद्दूरे ततोऽर्धं मध्याह्नप्रदेशादूर्ध्वमिति । तदा तत्र किरणानां सूर्याऽभिमुखपरावृत्त्याऽर्धदीर्घत्वं द्विगुणत्वं च । तदेव मरीचिजलं यद्भूघातः । उदयास्तप्रदेशापेक्षया तापाधिक्यानुभवात् । सवितृमण्डलस्याऽल्पत्वानुभवाच्च । तेजःसाक्षात्कारे दूरत्वं स्थूलत्वप्रतीतिहेतुः । उदयास्तप्रदेशस्थितैः स्थूल एवाऽनुभूयते सविता । यदि पञ्चदशघटिकान्तरितावुदयास्तदेशौ त्रिसहस्रक्रोशान्तरितौ स्यातां तदा मध्याह्नप्रदेशात्सार्धैकसहस्रक्रोशान्तरितं सूर्यमण्डलमिति सिद्धम्। उदयास्ताभ्यां संचारसिद्धिः सवितुः। मध्याह्नाद्दूरत्वसिद्धिः । समच्छायया मण्डलपरिमाणासिद्धिः । एतेन भूमेरतिमहान्सूर्य इति मतं गतम्। उदयास्तान्तरालस्थितदेशस्य मध्याह्ने मण्डलपरिमापकत्वात् । दूरत्वस्य तेजःस्थौल्यप्रतीतिहेतुत्वात्सार्धैकसहस्रस्यापि दूरत्वकोटिनिवेशात्ततोपि सामीप्यकल्पनायां सूर्यमण्डलस्य द्वादशाऽङ्गुलत्वसिद्धिः प्रत्यूहेति दिक् ।

ननु समच्छायया मण्डलपरिमाणासिद्धिरिति प्रतिज्ञाव्याकोप इति चेन्न व्याकोपः। प्रतीत्यनुसारिणोरुभयोः संमतं तदिति ब्रवीति प्रतिबिम्बो न यत्र विषमता तदेव प्रतिबिम्बत्वं । यथा दूरत्वं तेजसो महत्त्वप्रतीतिहेतुस्तथा वस्तुमात्रस्य नीचत्वप्रतीतिहेतुः। तेन तैलयन्त्रवत्संचाराङ्गीकारेऽपि नानुपपत्तिः। घटीयन्त्रवत्संचाराङ्गीकारे तूर्ध्वाधरीभावः सहजसिद्धः। कथमपि भ्रमतु तथापि सूर्य एव भ्रमतीति निर्विवादः पक्षः। पृथ्वी भ्रमतीतिपक्षे सवेगगतौ वेगतारतम्येन मुखतो वाताघातानुभवस्यापलापप्रसङ्गः।

सूर्यो वायावरणेन सह भ्रमतीतिचेदियमेवापलापयुक्तिरुपपत्त्य-
न्तराभावात् । पृथ्वीगोलानङ्गीकारे नास्माकं तात्पर्यं बहूनां
महर्षीणां गोलाङ्गीकारप्रवृत्तेः । तथापि तेऽपि पृथ्वीमनन्तामेव
मन्यन्ते सदा कुड्यालेऽप्यवान्तरगोलाङ्गीकारे षाण्मासिकपृथ्वीप्रद-
क्षिणपक्ष उपस्थितः । गोलाकारानङ्गीकारे ध्रुववामतः कृत्वा
दक्षिणभागे पृथिव्यामेव प्रदक्षिणभ्रमणमङ्गीकर्तव्यं । तावता
सूर्यभ्रमणोपपत्तिदेशो निरूपितः । तद्बहिः पृथिव्यामनन्तत्वं निर्वि-
वादं । यदधोभागस्थैर्ध्रुवो दृश्येत तदाऽधोभाग एव न स कुतस्तरां
गोलाङ्गीकारः । गोलमङ्गीकृत्य षष्टीयन्त्रवत्संचारेऽपि पूर्वपश्चिमतः
पृथ्वीमानसिद्धावपि दक्षिणोत्तरतोऽनन्तत्वं दुर्वारं तदाऽर्धाङ्गी-
कारासंभवे पूर्णाङ्गीकारो न दोषायेति न्यायेन सर्वतोऽनन्तत्वम-
ङ्गीकृत्य मध्ये केनचिद्बिलेन संचरति सूर्य इत्यङ्गीकारे पाताला-
दिप्रकार उपपद्यते । पृथिव्यां सप्तसागराश्चोपपद्यन्ते शास्त्रं चोप-
पद्यते द्वादशादित्या इति । एवमेव बिलान्तरसंभवादनन्तायाम् ।
अतएव 'परा मार्ताण्डमास्यदि'ति 'परा मार्ताण्डमाभरदि'ति च
श्रौतकथोपपद्यते । तस्मादर्धाङ्गीकारवतामर्धभ्रमस्य संप्रतिपन्नत्वेन
पूर्णभ्रमाङ्गीकारो न कंचिद्दोषमुत्पादयेत् । शास्त्रप्रत्यक्षयोर्विरोधे शास्त्रं
प्रमाणं परोक्षापरोक्षविषयत्वाच्छास्त्रस्य । प्रत्यक्षं तु परोक्षे दुर्बलम्
ततो न परोक्षाऽस्तित्वनास्तित्वसाधकम् । अस्तु वा प्रत्यक्षस्यैव प्रामाण्यं
तथापि सूर्यभ्रमणे पृथ्वीस्थिरत्वे च तदेव प्रमाणं भूयः । यदि
तर्केण सूर्यस्थिरत्वं भूभ्रमणं च साध्येत तदा शास्त्रेण तद्बाध्ये-
दर्शि ... बलवत्त्वात्परोक्षविषये । प्रत्यक्षादपि दुर्बल-
त्वात् । उन्मत्तादविशेषप्रसङ्गात् । अतएव जिनपुत्रस्याप्यमरसिं-
हस्य कोशोऽपि चरितार्थः । 'भूर्भूमिरचलाऽनन्ता रसा विश्वंभरा
स्थिरे'तिकोशः । एतावता प्रबन्धेन भूमेः स्थिरत्वं साधितं
सूर्यस्यानतिदूरत्वमनतिमहत्त्वं च साधितं । शास्त्रस्य परोक्षापरो-

क्षविषयत्वेन शास्त्रोक्तैव भूमितिः सत्येत्यप्युक्तम्। अत्र केचन गोलाङ्गीकारपक्षे पातोत्पातव्यवस्थार्थमाकर्षणोत्कर्षणशक्तिद्वयमङ्गीकुर्वन्ति तच्चित्रं। यतो यत्रत्या यं भागमधो व्यपदिशन्ति तत्रैव निपतन्ति वस्तूनि यं भागमूर्ध्वं व्यपदिशन्ति तत्रैवोत्पतन्ति च। व्यपदेशाधीनत्वाद्व्यवहारस्येत्यलम्। अतएव भगवानाह—'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चि'दिति। स्वबुद्ध्येति शेषः। एष चमत्कारः। अतएव प्रामाण्यमुपसंजहार 'तस्माच्छास्त्रं प्रमाणं ते कार्याऽकार्यव्यवस्थितौ' इति तर्कस्य शास्त्रप्रत्यक्षाभ्यां दुर्बलत्वात्। प्रत्यक्षस्य शब्दाद्बलवत्त्वेपि परोक्षत्वदोषशेषान्न शास्त्राद्बलवत्त्वम्। तस्य न किंचित्परोक्षं। लौकिकशब्दात्तु बलवदेव प्रत्यक्षं। साजात्यात्। द्वादशादित्या अनन्ता मेदिनीति च शास्त्रमिति मङ्गलं। वैदिकपद्धत्यां नेत्रोन्मीलनपरिशिष्टं। सर्वतः समवृत्तस्य तमोगर्भनिवासिनः। रवेर्मितिर्निराबाधा मध्याह्ने सुप्रतिष्ठिता ॥ १ ॥ शङ्किताः पण्डिता अत्र भवन्त्यपि समाहिताः। शास्त्रैकवाक्यता कस्मै न रोचेत महात्मने ॥ २ ॥ चारितार्थ्यं द्वादशानामादित्यानां यदा तदा। अष्टादशानां सिद्धान्तवाणीनामेकवाक्यता ॥ ३ ॥ एकमङ्कमहीशब्दे द्वादशाङ्करवौ च ये। लिखन्ति पण्डितास्तैस्तु दत्ता संमतिरेव नः ॥ ४ ॥ यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। इत्युक्तिर्लोकदृष्टान्तात्पार्थाय द्वादशैव तान्। दर्शयामास भगवान्स्वशास्त्रं विश्वमावहन् ॥ ५ ॥ यः पारे तमसामीशस्तमसां विनिवृत्तये। बिभर्ति द्वादशादित्यांस्तदुक्तिर्मन्यते बुधैः ॥ ६ ॥ अन्योन्यसमप्रसिद्धास्ते तमोगर्भे भ्रमन्ति हि। ततो बहिस्तमोनन्तलोकालोकास्तु सन्धयः ॥ ७ ॥ चतुःसहस्राद्विशतक्रोशभूपिण्डतो बहिः। एकविंशतिसाहस्रषट्शतात्मा रवेः स्मृतिः ॥ ८ ॥ एक-

भानौ दर्शिनोऽयं न्यायो द्वादशभानुषु । सम एव ततोऽनन्तां
भेदिनां नृपथा विदुः ॥९॥ अन्तर्भूमितिमानेन सूर्यमार्गप्रकल्पनम् ।
भूगोलादपि दूरत्वं घटिकाषष्टिसिद्धये ॥ १० ॥ नक्षत्रमण्डले
चन्द्रो नक्षत्राणामहं शशी । इत्युक्तेर्दूरता तस्य यावन्नक्षत्रमण्डलम्
॥ ११ ॥ एकादशार्काश्चन्द्रेण हीना इति मनीषिणः । एकमेकं
चन्द्रमर्कं लिखन्ति निखिला जनाः ॥ १२ ॥ मेरोर्द्वादशभागेषु
द्वादशार्का भ्रमन्ति हि । भ्रमन्ति प्राणिनस्तत्र तत्तदर्कवशं
गताः ॥ १३ ॥ चित्तस्थैर्यानुसारेण शेषाद्या आश्रया अमी ।
चित्तशान्तौ विश्वशान्तिः कैवल्यमवशिष्यते ॥ १४ ॥ बिन्दुरेखा-
त्मकं बिम्बं बिन्दुस्तत्र निराकृतिः । बिन्द्वात्मिका यदा रेखा क्व
बिम्बं क्व च भूर्वा ॥१५॥ अतएवाह भगवान् पार्थाय स्वोक्तिवेदिने ।
निमेषोन्मेषमात्रत्वं विश्वस्याश्चर्यरूपिणः ॥ १६ ॥ अव्यक्ताद्व्य-
क्तयः सर्वाः प्रभवन्त्यहरागमे । रात्र्यागमे प्रलीयन्ते तत्रैवाव्य-
क्तसंज्ञके ॥ १७ ॥ इत्येतदेवाभिप्रेत्याहुराचार्याः—जगत्सूते धाता
हरिरवति रुद्रः क्षपयते तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयते ।
सदा पूर्वः शंभुस्तदिदमनुगृह्णाति च शिवस्तवाज्ञामालम्ब्य क्षणच-
लितयोर्भ्रूलतिकयोः ॥ १८ ॥ निमेषोन्मेषाभ्यां प्रलयमुदयं याति
जगती तवेत्याहुः सन्तो धरणिधरराजन्यतनये । त्वदुन्मेषाज्जातं
जगदिदमशेषं प्रलयतः परित्रातुं शङ्के परिहृतनिमेषास्तव दृश
इति ॥ १९ ॥ चमत्कारे चमत्कारा बहवः सन्ति सन्तु ते ।
आश्चर्यवत्पश्यतीति श्लोकवक्ता गुरोर्गुरुः ॥ २० ॥ सौराष्ट्रे
राजकोटे च रुद्रप्रासादसद्मनि । परामर्शोऽयमुद्भूत्काश्यां संपू-
र्णतामगात् ॥ २१ ॥ आश्चर्यवत्पश्यतीति श्लोकव्याख्यासमन्वये ।
उदाहृतं किंचिदेव चमत्कारं तनोतु तत् ॥ २२ ॥ त्रिनेत्रसिद्धि-
चन्द्राब्दे शालिवाहमहीपतेः । चमत्कारपरामर्शः कृष्णानन्देन
दर्शितः ॥ २३ ॥

लिखति क्रीडति स्वैरं भिक्षामश्नात्यकिंकरः।
जगदाश्चर्यसंतुष्टः कृष्णानन्दसरस्वती ॥ १ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतश्चमत्कारपरामर्शः। भगवतीमेदिनी द्वादशादित्याश्च तुष्यन्तु मा रुष्यन्तु ज्योतिर्विदश्चमत्कारे के रुष्यन्तीति न्यायः ॥

---

# जगद्गुरुसत्यस्वरूपस्तोत्रम् ॥ ३० ॥

श्रीजगद्गुरवे ब्रह्मविद्याधीश्वराय सिद्धेश्वराय तरुणाय व्यूढोरस्कायानुच्चायापि जगदुच्चाय बृहच्छीर्षाय कौपीनमात्रपरिधानाय विशालनयनाय स्मितवदनाय रुचिरकान्तये जगद्वृत्तशान्तये कृपापाङ्गाय करुणामूर्तये दीर्घभ्रूलताय विशालभालाय प्रकटितश्रुतिरहस्याय सर्वज्ञाय श्रीशङ्कराय नमः।

आचार्यशङ्करवचांसि सरांसि नूनं हंसावलीपरिचितानि समास्पदानि। मुक्तान्वितानि मधुराणि मनोहराणि संफुल्लवेदवचनाब्जरसाञ्चितानि ॥ १ ॥ गाम्भीर्यखर्वितसरित्पतिगर्वितानि यत्पाति मानुषसमुद्धरणक्षमाणि। यत्पारदृष्टिचकितावरकद्विजानि माधूकरैकशरणानि कृतानृणानि ॥ २ ॥ यत्त्यागिनां फलमिदं तु शरीरदाहो मृत्स्नाङ्कितश्च महतामपि भालपट्टः। शास्त्रोदितेऽपि सहजेऽपि सति द्विजत्वे दासाभिधा च पशुता च नृणां विडम्बः ॥३॥ यत्तीरवासिजनता जनतापहर्त्री गन्त्री च यत्परपदं तमसःपरस्तात्। मन्दारमालिततरङ्गितगाङ्गतीरं प्राप्ता अपि प्रतिदिनं परिचन्ति तानि ॥ ४ ॥ यत्राप्लुताः सकृदपि ब्रुवते मनुष्या ब्रह्माहमस्मि शिवमस्मि परा चिदस्मि। दासोऽहमस्मि भवसागरलुण्ठितोऽस्मीत्येवं वदन्ति तदलाभपथाधिरूढाः ॥ ५ ॥ आज्ञा हि तत्र जगदस्ति च यत्र गेहे हित्वा जगद्गुरुगृहे परमेशवासः। तस्मान्न तत्र विधिवाक्यनिषेधवाक्ये अद्वैतचण्डमिहिरः सरसां तटेषु ॥ ६ ॥

पदाम्बुजेन लभते परमार्तिशान्तिचिन्तामणिं सुखतरं परमात्मतत्त्वम् । शुभाब्जमक्षरमखण्डममूलमूलं निष्किंचनोऽपि सुरराजपदाधिकाङ्कः ॥ ७ ॥ यत्रोत्थतत्त्वमसिपद्मरसादनेन संस्पर्धते खलु नरो मधुसूदनेन । कृष्णोऽसि वृष्णितिलकोऽसि रमापतिश्च त्वं चाद्यमसि वदति प्रति तं पुरस्तात् ॥ ८ ॥ श्रीशङ्करेण विजितानि सदांसि सर्वाण्याचार्ये भूरि भुवने श्रुतिभिर्वसन्तः । संपुष्पिते फलभरे श्रुतिकाननेऽस्मिन्कृष्णो यतिर्वसति यत्र मिलन्ति सन्तः ॥ ९ ॥ कौपीनपरिधानः सन् जिगाय जगदर्भकः । स शङ्करो जगज्जेता गुरुरेको महीतले ॥ १० ॥ बालेन विजितं विश्वं बालेन निरिकृत्कृतः । लोकोत्तराविमौ मन्ये कृष्णः शङ्करभारती ॥ ११ ॥

इति श्रीकृष्णभिक्षुविरचितं श्रीजङ्गुरसत्यस्वरूपस्तोत्रं संपूर्णम् ।

---

# अथ वेदान्तस्तोत्राणि ॥ ३१ ॥

## शयनस्तोत्रम् ।

आस्तीर्य सर्वत इदं परमात्मरूपं प्रावार्य सर्वत इदं परमात्मरूपम् । शेते सुखेन निजलाभविनिर्वृतात्मा श्रीदेशिकेन्द्रकरुणालयदृष्टिदृष्टः ॥ १ ॥ संपूर्णवैदिकविधानसुतोपितेशो गार्हस्थ्यभोगविधिदीपविवेकभूमिः । त्यक्तैषणो विगतमानमदादि शेते श्रीदे० ॥ २ ॥ मायामयत्वमखिलेषु सदात्मकत्वं निर्णीय वेदवचनाद्गुरुवाक्यतोपि । त्यक्तक्रियोऽहिरिव दिष्टभुगेव शेते श्रीदे० ॥ ३ ॥ धृत्वा वपुर्गुरुवरस्य निधाय पूर्णं बोधं हृदि क नु गतं निजकर्मपूर्वम् । गच्छत्वनेन किमिति स्वसुखेन शेते श्रीदे० ॥ ४ ॥ स्वाप्नो गुरुर्निजसुखोन्नतिबोधहेतुरीशोपि भाति निजरूपतयैव नित्यम् । नेहेति वेदवचनानि निषिध्य शेते श्रीदे० ॥ ५ ॥ सङ्घाद्भयं परिभूशजन-

ताविरुद्धं कर्माचरन् विततजङ्गलकोणकेषु । शून्यालये कलशकार-गृहेपि शेते श्रीदे० ॥६॥ त्रैलोक्यराज्यमथवा कमलासनस्य विष्णोः शिवस्य विभवं च तृणाय मत्वा । कौपीनमप्यधिकमित्यहह प्रशेते श्रीदे० ॥ ७ ॥ आत्मानुसन्धिगलिताखिलवासनो यो विस्मृत्य विश्वमखिलं सशरीरमेतत् । खादन् हसन् भ्रमणमाकलयंश्च शेते श्रीदे० ॥८॥ बाहूपधानविनिषण्णशिराः शिलायां मञ्चे तटे द्युसरितो रविचन्द्रदीपे । आलिङ्गितस्वधिषणावनितस्तु शेते श्रीदे० ॥९॥ चिन्मुद्रयात्मकरसूचितचित्तवृत्तिः स्थित्या स्वया प्रकटयन्नधिकारिवर्गे । ब्राह्मीस्थितिं बहुलपुण्यचयेन शेते श्रीदे० ॥१०॥ द्रोणाचले स्वकृतपुण्यमयेन केन भाग्योदयेन गुरुणा निजबोधदाने । संदत्तचिन्मयसुखावचनीयनिद्रः कृष्णो मुनिः स्वपिति देशिकदृष्टिदृष्टः ॥ ११ ॥ इदं हि जनुषः फलं जननमृत्युविच्छेदकृत्स्वकीयसुखचिद्घने यदिह लब्धविश्रान्तिता । ततोपि च महत्फलं यदधिकारिवर्गे निजां दधात्यतुलसंविदं तत इदं गुरोराश्रयः ॥ १२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं शयनस्तोत्रं संपूर्णम् ॥

## भ्रष्टाष्टकम् ।

विश्वं सत्यं मनुते तनुते कर्माणि लोकसंसिद्ध्यै । वाचा मिथ्या जगदिति जल्पति नो वेत्ति यो महाभ्रष्टः ॥ १ ॥ ब्रह्मैवेदं जल्पति दोषादोषोत्तमाधमान्पश्यन् । नग्नो भूत्वा विचरत्यवधूतत्वं प्रदर्शयन्भ्रष्टः ॥ २ ॥ कृत्याकृत्यमशेषं त्यक्तुमशक्तः श्रुतेरगोचरताम् । आत्मनि जल्पन् हास्यास्पदतामेत्येष मानवो भ्रष्टः ॥ ३ ॥ पाशाष्टकसंकष्टश्लिष्टतनुर्मृष्टभोजनप्रीतः । शिष्टोहं मन्वानः कष्टसहो दुष्टमानवो भ्रष्टः ॥ ४ ॥ आत्मैवेदं जल्पँल्लोकोक्तीरसहमानमेधावी । स्तुतिवाक्यानि श्रोतुं धावन्तुष्टो न किं भवेद्भ्रष्टः ॥ ५ ॥ यस्मिन्स्वस्य च निष्ठा तद्धर्मिष्ठो न शिष्टगणनायां । कुर्वन्कर्म हतोयं यद्यपि शिष्टो न किं भवेद्भ्रष्टः ॥ ६ ॥ कर्तृत्वं भोक्तृत्वं

मन्वानः स्वात्मनि प्रभौ शंभौ । रोदिति हा किं कृतमिति किं वा भोक्तव्यमित्यसौ भ्रष्टः ॥ ७ ॥ चिन्मात्रं स्वात्मानं देहं मन्वान एजते यमतः । सर्वात्मानमबुध्वा ब्रह्मापि स्यादहो किल भ्रष्टः ॥ ८ ॥ भ्रष्टाष्टकमेतद्यत्नाविचारयतीह मानवो धन्यः । मान्यः स्याल्लोकेषु भ्रष्टत्वं वेत्ति निजचारित्रात् ॥ ९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं भ्रष्टाष्टकं संपूर्णम् ॥

## शिष्टस्तोत्रम् ।

भज विश्रान्तिं त्यज रे भ्रान्तिं निश्चिनु शैवं निजरूपम् । हेयादेयातीतं सच्चित्सुखरूपस्त्वं भव शिष्टः ॥ १ ॥ दृश्यमशेषं त्वत्तो भिन्नं माभैषीः किल भूमानम् । विध्यात्मानं वेदनरूपं वेदशिरस्थं भव शिष्टः ॥२॥ तृणवत्त्यज धनवनितापुत्रांल्लोकं शोकं भेदभवम् । इदमहमित्थं कलनां हित्वा पूर्णानन्दो भव शिष्टः ॥ ३ ॥ कृत्याकृत्ये त्यज रे दूरे विधिगोचरतां मागास्त्वम् । मानागोचररूपं ज्ञात्वा किं त्वं कर्ता भव शिष्टः ॥ ४ ॥ लोकविलक्षणचरितो भूया लोकातीतं पदमिच्छन् । पावय सकलां पृथिवीमेनामात्मारामो भव शिष्टः ॥ ५ ॥ निन्दास्तोत्रे मानामानौ समदृष्टेस्ते किं कुरुताम् । कुरुतां लोकः कामं स्वेष्टं का ते हानिर्भव शिष्टः ॥ ६ ॥ शैवः शाक्तो गणपतिभक्तो वैष्णवसौराविति नाना । अज्ञात्वा यं जाता लोके स त्वं शंभुर्भव शिष्टः ॥ ७ ॥ जलबुद्बुदवज्जगदिदमखिलं पश्यन्नात्मनि तिष्ठ त्वं । को वा मोहः शोकः को वाद्वैतदृशस्तव भव शिष्टः ॥ ८ ॥ अजपामन्त्रं देशिकवचनाल्लब्ध्वा देवं स्वात्मानम् । ज्ञात्वा सहजावस्थायां वस भावातीतो भव शिष्टः ॥ ९ ॥ शिष्टस्तोत्रं ब्रह्मिष्ठानां तुष्टिकरं स्यादिति कलये । उक्तावस्था सर्वेषां स्याद्गुरुकृपया किल बुद्धिमताम् ॥ १० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचितं शिष्टस्तोत्रं संपूर्णम् ॥

## प्रश्नोत्तरमालिका।

किं साध्यं मनुजानां बुद्धेः शुद्धत्वमेव बहुयत्नैः। किं त्याज्यं खलसङ्गो देहाहङ्कारममते च ॥ १ ॥ किं तीर्थं वेदशिरः किं देयं पात्रआत्मसंबोधः। किं भोग्यं सहजसुखं किं वाऽभोग्यं परेच्छया लब्धं ॥ २ ॥ किं कष्टं यत्सत्यं किं वा सहजं परं ब्रह्म। कर्तव्यं किं सर्वैरात्माऽकर्तेति बुद्धिरेव सदा ॥ ३ ॥ आदातुं संत्यक्तुं किमशक्यं ब्रह्म निजरूपम्। किं वा दुःखमबोधः किं सुखमात्मावबोधतः शान्तिः ॥ ४ ॥ विषमं विषं तु किं वा यत्किंचित्कस्यचिच्च या चिन्ता। परमामृतं तु किं वा श्रीगुरुवाक्यं कृपानिबिडम् ॥ ५ ॥ को गुरुरधिगन्तव्यो देशिकशिष्यत्वबाधबोधयिता। अध्येतव्यं किं खलु यावद्वदार्थदर्शकः प्रणवः ॥ ६ ॥ कोऽनध्यायोऽध्ययने यावत्सद्गुरुमलब्धवांस्तावत्। कः प्रणवार्थस्तूष्णीं किं ध्येयं ध्येयमात्रसंत्यागः ॥ ७ ॥ कः शूरो दृश्यात्रान्मायाभेत्ता स्वयंप्रकाशज्ञः। किं चिन्त्यं मनुजैरिह चिन्तावीजं विचित्रजगत इति ॥ ८ ॥ किं पेशलं हि लोके विद्वच्चरितं विरुद्धशास्त्रमपि। सद्भक्त्या किं कार्यं सज्जनपदरजसि भूयसः स्नानम् ॥ ९ ॥ आवात्स्यात्किं कार्यं निरहङ्कारेण साधुपदसेवा। भाग्योदयस्तु को वा गुरुवचनादद्वितीयपदलाभः ॥ १० ॥ मुक्तैः किं कर्तव्यं प्रारब्धाधीनसदसता(तोह)भोगः। पुंसां किं सर्वस्वं सच्चित्सुखनासिका गुरोर्मूर्तिः ॥ ११ ॥ का कामधेनुरनघा वेदे देवे तथा गुरौ श्रद्धा। को वैद्यो रोगहरो ब्रह्मिष्ठः सदयहृदयगुरुराजः ॥ १२ ॥ कः पुत्रः स्वोद्धर्ता ज्ञातस्वात्मैव चिन्मयः पुरुषः। कः सुखशायी लोके संसृतिमिथ्यात्वपक्कमतिस्तृप्तः ॥ १३ ॥ किं त्याज्यं साधुकृते चरिते कुत्सितमतिस्तु साधुजनैः। कः शत्रुर्दुःखकरो गुरुवचने संशयो[1] महाशत्रुः ॥ १४ ॥ कः शोभते नितान्तं निस्पृहताशालि-

[1] संशयशब्दोऽत्र प्रमादपरः। जिज्ञासाप्रयोज्यगुरुप्रमादसंशयप्रयोज्यादिसंशयस्य दुःखकरत्वेऽनुभवानुपलब्धेः.

निजबोधः । किं मान्यं सद्गुरुषु स्तोत्रारः सर्वदैन्यपरिहारः ॥ १५ ॥ को वा मान्यः सिद्धो बालोऽपि ब्रह्मभावगतिमान्यः । का वा दरिद्रसीमा मूढभिन्नसिद्धवृत्तिः प्रोक्ता ॥ १६ ॥ किं सोढव्यं निरूपा खलवचनं विषविनिर्मितं कठिनम् । स्थेयं कथं खलेषु सौम्यां निष्ठां दृढं समाश्रित्य ॥ १७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचिता प्रश्नोत्तरमालिका समाप्ता ॥

## शिवमानसपूजा ।

प्रत्यक्प्रणवधीवृत्त्या हृद्गृहान्तःप्रवेशनम् । मण्डपान्तःप्रवेशोयं पूजार्थं तव शङ्कर ॥ १ ॥ गुरुवाक्येषु विश्वासः स्थितिरासनसंस्थितिः । सर्वसंकल्पसंत्यागः संकल्पस्तव पूजने ॥ २ ॥ सर्वाधारस्त्वमेवेति निश्चयः पीठपूजनम् । ध्यानध्यातृध्येयबाधो ध्यानमानन्दकारणम् ॥३॥ दृश्यप्रमार्जनं चित्तान्निर्माल्यस्य विसर्जनम् । अहं ब्रह्मेत्यखण्डा या वृत्तिर्धाराभिषेचनम् ॥ ४ ॥ पृथिव्यात्मकतादृष्टिस्तव गन्धसमर्पणम् । बोधोपशमवैराग्यं त्रिदलं बिल्वमर्पये ॥ ५ ॥ आकाशात्मकताबोधः कुसुमार्पणमीश्वर । जगदाकाशपुष्पाभमिति पद्मं समर्पये ॥ ६ ॥ वायुतेजोमयत्वं ते धूपदीपावनुत्तमौ । दृश्यासंभवबोधेन निजानन्देन तृप्तता ॥ ७ ॥ सर्वतः प्रीतिजनकं नैवेद्यं विनिवेदये । जलात्मकत्वबुद्धिस्तु पीयूषं तेऽर्पये पिब ॥ ८ ॥ कर्तव्येष्वप्रसक्तिस्तु हस्तप्रक्षालनं तव ॥ ९ ॥ दुर्वासनापरित्यागस्ताम्बूलस्य समर्पणम् । वाचां विसर्जनं देव दक्षिणा श्रुतिसंमता ॥ १० ॥ फलाभिसन्धिराहित्यं फलार्पणमनुत्तमम् । अहमेव परं ब्रह्म सच्चिदानन्दलक्षणम् ॥ ११ ॥ एवं निदिध्यासवाक्यं स्तुतिः प्रियकरी तव । नामरूपाणि न त्वत्तो भिन्नानीति मतिस्तु या ॥ १२ ॥ तव पुष्पाञ्जलिः शम्भो

सर्वत्रोत्कीर्णपुष्पकः । स्वप्रकाशात्मबुद्धिस्तु महानीराजनं तव ॥१३॥ प्रादक्षिण्यं सर्वतस्ते व्याप्तिबुद्धिः स्मृतं शिव । त्वमेवाहमिति स्थित्या लीनता प्रणतिस्तव ॥ १४ ॥ शुद्धसत्त्वस्याभिवृद्धिश्छत्रं तापापनोदनम् । रजस्तमस्तिरस्कारश्चामरान्दोलने तव ॥ १५ ॥ निजानन्दपराघूर्णदोलनान्दोलने वस । धन्योऽहं कृतकृत्योऽहमिति गानं तव प्रियम् ॥ १६ ॥ निरङ्कुशमहातृप्त्या नर्तनं ते मुदे शिव । नानाविधैः शब्दजालैर्जृम्भणं वाद्यमुत्तमम् ॥ १७ ॥ शब्दातिगत्व-बुद्धिस्तु कल्याणमिति डिण्डिमः । वेगवत्तरगन्तासौ मनोऽश्वस्ते समर्पितः ॥ १८ ॥ अहंभावमहामत्तगजेन्द्रो भूरिलक्षणः । तत्र देहाद्यनारोपनिष्ठा दृढतरोऽङ्कुशः ॥ १९ ॥ अद्वैतबोधदुर्गोऽयं यत्र शत्रुर्न कश्चन । जनताराभविस्तारो रमस्वात्र यथासुखम् ॥ २० ॥ कल्पनासंपरित्यागो महाराज्यं समर्पये । भोक्तृत्वाध्यासराहित्यं वरं देहि सहस्रधा ॥ २१ ॥ अखण्डा तव पूजेयं सदा भवतु सर्वतः । आत्मत्वात्तव मे सर्वपूजैवास्ति न चान्यथा ॥ २२ ॥ इमां पूजां प्रतिदिनं यः पठेद्यत्रकुत्रचित् । सद्यः शिवमयो भूत्वा मुक्तश्चरति भूतले ॥ २३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमत्कृष्णानन्दसरस्वतीविरचिता शिवमानसपूजा समाप्ता ॥

## गुरुतत्त्वविवेचनस्तोत्रम् ।

अन्धेनान्धीकृतं विश्वं सचक्षुस्तु सचक्षुषं । दिदृक्षा चेद्व्रज त्वं तु देशिकेन्द्रं सचक्षुषं ॥१॥ अन्धस्य गुरुरेकाक्षस्तस्य द्व्यक्षो गुरुर्मतः । द्व्यक्षाणामपि सर्वेषां गुरुस्त्र्यक्षो न तत्समः ॥ २ ॥ सहस्राक्षादयः सर्वे द्व्यक्षा एव हि केवलं । कार्यध्येयदृशो यस्मात्त्र्यक्षशिष्यपदे स्थिताः ॥ ३ ॥ त्र्यक्षस्तु भगवानादिपुरुषः शङ्करो भवः । सृष्ट्वा सर्वाणि भूतानि कार्यं ध्येयं च संदिशन् ॥ ४ ॥ उभयातीतममलं तृतीयाक्षस्य गोचरं । ददाति प्रार्थितस्तुष्टः श्रीगुरुः परमेश्वरः

॥ ५ ॥ स आदिनाथो भगवाननादिर्ज्ञानाम्बुधिः स्वात्मरतिर्महात्मा । श्रीदेशिकेन्द्रः करुणाम्बुराशिर्नानास्वरूपैश्चरतीह लोके ॥ ६ ॥ क्वचिन्न किंचित्कुरुते मनस्वी क्वचिन्न किंचित् कुरुते प्रमत्तः । बालो यथा क्रीडति सर्वलोके तथैव स क्रीडति पामरेषु ॥ ७ ॥ स लभ्यते केनचिदेव पुंसा विज्ञायते केनचिदेव पुंसा । विचार्यते केनचिदेव पुंसा शृणोति वा यं स नरः स धन्यः ॥ ८ ॥

इति श्रीकृष्णानन्दसरस्वतीविरचितं गुरुतत्त्वविवेचनस्तोत्रम्

## निगमसारसंग्रहस्तोत्रम्

शब्दं स्पर्शं च रूपं रसमथ सकलं गन्धमप्यङ्ग येन त्वं जानीषे स शंभुस्त्रिपुरसुखलवान्पश्यति स्वप्रदीप्त्या । एकोप्यानन्त्यमागान्निजपरममहामाययेच्छोत्थया यः स्वातन्त्र्यान्नो जहाति स्वकपरशिवतां स त्वमेवर्क्षु गीतः ॥ १ ॥ अन्नं प्राणो मनो धीरहमिति च वपुःपञ्चकाणुप्रविष्टः साक्षी सच्चित्सुखाब्धिः सकलनरनरीधीगुहासु प्रदीपः । स्वाराज्यं यस्य लाभादिति वदति सदा याजुषी श्रौतवाणी सोऽहं ब्रह्मास्म्यखण्डो गुरुवचनबलात्स्वप्रथामात्ररूपः ॥२॥ सत्तासामान्यरूपा गलितनिजपरा देवता या पराख्या सूक्ष्माकाशादिभूतान्यनु निजवपुषा तत्र जृम्भामवाप । व्यामिश्रीकृत्य तानि स्त्रियमथ पुरुषं बुध्यते सामगीता सैव त्वं कार्यहेतू कलय भव सखे सर्वबोधैकभूमिः ॥ ३ ॥ योऽश्नीते परिकल्पितान्स्वकरणैरर्थान्बहिः पूरुषो विश्वाख्यः स्वपने मनोजनिमयान्भुङ्क्ते स तेजोमयः । तत्सर्वं विनिपीय सुप्तिसमये प्राज्ञोऽभवत्तत्रयं मायां तद्वशमाह चाङ्गिरसगीर्भूयोऽयमात्मा बृहत् ॥ ४ ॥ स्वाभाविकीभिर्निजशक्तिभिर्या क्रीडां विधत्ते शिवयुक्क्षमान्ताम् । सृष्टिं विधायापि गतान्यरूपा सानुत्तराहं परिमीयपादा ॥ ५ ॥ भज शिवं सहजं सततं त्यज प्रखरदुःखमयं सकलं जगत् । कलनया रहितो भव सन्मते किमु तया ततयासि च निष्कलः ॥६॥ निष्कलब्रह्मवि-

ग्राया माहात्म्यं को नु वेत्त्यहो। कृष्णानन्दस्तु तद्रूपो वेत्ति श्रीगुरुपादुका ॥७॥ निगमागमसारसंग्रहं कलयेद्यो गुरुपादभक्तिमान्। लभते स तु निर्वृतिं परां कलनाशून्यपदे स्वसंविदि ॥ ८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचितं
निगमसारसंग्रहस्तोत्रं समाप्तम्।

## तत्त्वमसिस्तोत्रम्

मनःकल्पितमेवेदं जगज्जीवेशकल्पनम्। तदेकं संपरित्यज्य निर्वाणमनुभूयताम् ॥ १ ॥ सति सर्वस्मिन्सर्वज्ञत्वं सत्यल्पे वा स्वल्पज्ञत्वं। सर्वाल्पस्याभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ २ ॥ सत्यां व्यष्टौ जीवोपाधिः सति सर्वस्मिन्नीशोपाधिः। व्यष्टिसमष्ट्योर्ज्ञाने कस्माज्जीवेशौ वा तत्त्वमसि ॥ ३ ॥ सत्यज्ञाने जीवत्वोक्तिर्मायासत्त्वे त्वीशत्वोक्तिः। मायाविद्याबाधे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ४ ॥ सति वा कार्ये कारणतोक्तिः कारणसत्वे कार्यत्वोक्तिः। कार्याकारणभावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ५ ॥ सति भोक्तव्ये भोक्तायं स्याद्दातव्ये वा दाता स स्यात्। भोग्यो विध्यो (?) भावे कस्माज्जीवेशौ वा तत्त्वमसि ॥ ६ ॥ सत्यज्ञाने गुरुणा वाच्यं सति वा द्वैते शिष्यैर्भाव्यम्। अद्वैतात्मनि गुरुशिष्यौ कौ त्यज रे भेदं तत्त्वमसि ॥ ७ ॥ सत्यद्वैते प्राप्तौ यत्नः सति वा द्वैते बाधे यत्नः। द्वैताद्वैते ते संकल्पस्त्यज रे शेषं तत्त्वमसि ॥ ८ ॥ साक्षित्वं यदि दृश्यं सत्यं दृश्यासत्वे साक्षी त्वं कः। उभयाभावे दर्शनमपि किं तूष्णींभव रे तत्त्वसि ॥ ९ ॥ अज्ञानामलविग्रहं निजसुखजृम्भणमेतन्नेतरथा। तस्मान्नैवादेयं हेयं तूष्णींभव रे तत्त्वमसि ॥ १० ॥ ब्रह्मैवाहं ब्रह्मैव त्वं ब्रह्मैवैकं नान्यत्किंचित्। निश्चित्येत्थं निजसमसुखभुक्तूष्णीं भव रे तत्त्वमसि ॥ ११ ॥ एतत्स्तोत्रं प्रपठता विचार्य गुरुवाक्यतः। प्राप्यते ब्रह्मपदवी सत्यं सत्यं न संशयः ॥ १२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यकृष्णानन्दसरस्वतीविरचितं तत्त्वमसिस्तोत्रंसमा०।

## श्रेयस्करीस्तोत्रम्

श्रेयस्करि श्रमनिवारिणि सिद्धविद्ये स्वानन्दपूर्णहृदये करुणातनो मे । चित्ते वस प्रियतमेन शिवेन सार्धं माङ्गल्यमातनु सदैव मुदैव मातः ॥ १ ॥ श्रेयस्करि श्रितजनोद्धरणैकदक्षे दाक्षायणि क्षपितपातकतूलराशे । शर्मण्यपादयुगले जलजप्रमादे मित्रे त्रयीप्रसृमरे रमतां मनो मे ॥ २ ॥ श्रेयस्करि प्रणतपामरदानपारज्ञानप्रदानसरणिश्रितपादपीठे । श्रेयांसि सन्ति निखिलानि सुमङ्गलानि तत्रैव मे वसतु मानसराजहंसः ॥ ३ ॥ श्रेयस्करीति तव नाम गृणाति भक्त्या श्रेयांसि तस्य सदने च करीपुरस्तात् । किं किं न सिद्ध्यति स मङ्गलनाममालां धृत्वा सुखं स्वपिति शेषतनौ रमेशः ॥ ४ ॥ श्रेयस्करीति वरदेति दयापरेति वेदोदरेति विधिशङ्करपूजितेति । वाणीति शंभुरमणीति च तारिणीति श्रीदेशिकेन्द्रकरुणेति गृणामि नित्यम् ॥ ५ ॥ श्रेयस्करि प्रकटमेव तवाभिधानं यत्रास्ति तत्र रविवत्प्रथमानवीर्यम् । ब्रह्मेन्द्ररुद्रमरुदादिगृहाणि सौख्यैः पूर्णानि नाममहिमा प्रथितस्त्रिलोक्याम् ॥ ६ ॥ श्रेयस्करि प्रणतवत्सलता त्वयीति वाचं शृणुष्व सरलां सरसां च सत्याम् । भक्त्या नतोस्मि विनतोस्मि सुमङ्गले त्वत्पादाम्बुजे प्रणिहिते मयि संनिधत्स्व ॥ ७ ॥ श्रेयस्करीचरणसेवनतत्परेण कृष्णेन भिक्षुवपुषा रचितं पठेद्यः । तस्य प्रसीदति सुरारिविमर्दिनीयमम्बा तनोति सदनेषु सुमङ्गलानि ॥ ८ ॥ यथामतिकृतस्तुतौ मुदमुपैति माता न किं यथाविभवदानतो मुदमुपैति पात्रं न किम् । भवानि तव संस्तुतिं विरचितुं नचाहं क्षमस्तथापि मुदमेष्यसि प्रदिशसीष्टमम्ब त्वरात् ॥ ९ ॥

इति श्रीकृष्णानन्दभिक्षुविरचितं श्रीश्रेयस्करीसुमङ्गलस्तोत्रं संपूर्णम्

## गुरुस्तोत्रम्

सद्गुरुं भज सद्गुरुं भज सद्गुरुं भज बुद्धिमन् येन संसृतिपार-

द्विभुजं वर्णयन्तोऽपि बहुबाहुं बहूदरम् ॥ ६ ॥ उत्पातान्वर्णयन्तस्ते महामङ्गलमङ्गलम् । सखित्वं वर्णयन्तस्ते दासत्वमपि मङ्गलम् ॥ ७ ॥ क्षत्रियं त्वां वर्णयन्तो ब्रुवन्ति त्वां जगद्गुरुम् । यथेष्टं त्वां वर्णयन्तो धर्मोद्धारं प्रचक्षते ॥ ८ ॥ वक्तव्यं त्वां वर्णयन्तस्तूष्णींभावे ब्रुडन्ति हि । भोक्तारं त्वां वर्णयन्तो नित्यमुक्तं प्रचक्षते ॥ ९ ॥ वासुदेवं वर्णयन्तः सर्वात्मत्वं वदन्ति ते । ब्रह्मण्यदेवतां गायन्वक्ति वेदादिमाक्षरम् ॥ १० ॥ दोषाकरं वर्णयन्तो वदन्ति गुणवारिधिम् । किमिदं तव चारित्रं वद कृष्ण दयानिधे ॥ ११ ॥ अद्यापि त्वद्यशोवर्के गेहेगेहे जनेजने । शिशवोपि च गायन्ति मोदन्तेपि च पण्डिताः ॥ १२ ॥ कृष्णकृष्णेति कृष्णेति नाम ते सुन्दरं हरे । मम वाचि सदैवास्तु विधेयैषा कृपा मयि ॥ १३ ॥ त्वद्यशो वर्णितुं को वा क्षमः क्षोणीतले पुमान् । काहं मन्दमतिर्भिक्षुः क्व तेऽमितयशांसि हि ॥ १४ ॥ कियन्ति तव कर्माणि कियाँल्लेखो मनीषिणाम् । अनन्त तव सर्वस्वमनन्तत्वं न चेतरत् ॥ १५ ॥ कृष्ण त्वां स्तोतुमिच्छामि त्वं च स्तुत्यतमो भुवि । त्वद्गुणा नावगाह्यन्ते ब्रूहि किं करवाण्यहम् ॥ १६ ॥ श्रीकृष्णकण्ठे मालैषा यशःपुष्पसुगुम्फिता । समर्पितानया प्रीतो भवतु श्रुतकीर्तिभूः ॥ १७ ॥ यशोमालागन्धं तव हृदयसंस्था भगवती सहैवाजिघ्रन्ती प्रकथयतु कर्णेपि च तव । सहावां जिघ्रावस्तव मम च तुष्टै भवति सा मतेः पुष्टै भिक्षोर्भवतु च विशुद्ध्यै श्रुतिमताम् ॥ १८ ॥ मा म्लानिमेतु हरिशीतलकण्ठलग्ना वक्षोविलग्नकमलेव विकासमेतु । मोदं तनोतु सततं मधुसूदनस्य माद्यद्द्विरेफनिनदैर्विनतिं करोतु ॥१९॥ वासुदेव नमस्तुभ्यं जगन्मङ्गलमङ्गल । कुरु मङ्गलया दृष्ट्या सर्वतो जयमङ्गलम् ॥२०॥

इति श्रीकृष्णयशोमालास्तोत्रं श्रीकृष्णक्षेत्रमथुरायां निर्माय श्रीकृष्णाय समर्पितं श्रीकृष्णभिक्षुणा ॥

# महानन्दचषकः ॥ ३२ ॥

महाभट्टारकाञ्चस्थां स्थविरामपि नूतनाम् । पुरातनगिरां भूमिं स्तुमोऽमलसरिणीं पराम् ॥ १ ॥ सुधासिन्धौ श्वेते सरसिरुहि सौभाग्यसदने पदौ प्रत्यालीढौ दृढतरनिरूढौ विदधती । करैः कर्त्री खड्गाम्बुजनरकपालानि दधती विधत्तां कल्याणं सजलजलदाभा त्रिनयना ॥ २ ॥ त्वदीयं पादाब्जं वहति शिरसा पञ्चकमपि प्रतीमस्तस्मात्त्वं सकलसुरपूज्येति गिरिजे । कृपालेशात्त्वत्तः सृजति हरते पालयति च त्रयं तस्मात्तुभ्यं प्रणुतिरतिमोदं जनयतु ॥ ३ ॥ न जानाति भ्रान्तस्त्रिगुणवशतः कार्यरचनासमारूढान्देवांस्त्रिगदति परेशा इति शिवे । यतस्तं(तद्) कालेनाकलितवपुषो स्टतनयोऽप्यनध्यस्तं स्वस्थं तव निगमगीतं वपुरहो ॥ ४ ॥ प्रपञ्चालीपीना त्वयि यदि विलीना भवति तत्त्वमेवास्या बीजं भवसि सकलात्मत्वमपि ते । ततः पूजाध्यानादिकमपि कथं तेत्र घटते परापूजामौनं तव सपदि निर्वाणजननम् ॥ ५ ॥ क विद्वः काविद्वः क च भवविमोक्षौ क पशुता क शास्त्रं काचारः कचन तव वेदोक्तसरणिः । क देवः काचार्यः कचन खलु शिष्यः शिशुरयो मनोवाचोगम्यं जननि तव रूपं यदि भवेत् ॥ ६ ॥ निराकारं कोऽपि प्रणिगदति साकारमितरः कथं दृष्टं ताभ्यां भवति परमाद्वैतसदनम् । अतो नानानेति प्रणिपतति मौनं श्रुतिवचो महामौनं मन्ये जननि तव रूपं किमपि तत् ॥ ७ ॥ त्वमेवेदं सर्वं तदपि वत मायेति जननि प्रतीयन्ते केचिद्द्वयमिह तु मायां नच जगत् । प्रतीमस्त्वन्मात्रं किमपि च महामौनमनघं समासाद्य प्राप्ताः कृतिजनितपुत्रस्य तुलनाम् ॥ ८ ॥ मुहुर्मायाबीजं स्मरति तव मूलेऽद्रितनये वधूं हृत्पद्मे स्वे शिरसि भजते कूर्चमपि तत् । तमालाभं श्वेतं त्वरुणमिति वर्णत्रयमनोः स्वयं संप्राप्तात्मा भजति किल निर्वाणपदवीम् ॥ ९ ॥ अतस्तत्राण्युक्त्वा

त्रिविधपुरुषार्थैकघटनान्यनन्तान्यन्ते तेऽकथयदणुमेनं परशिवः। महानिर्वाणाख्ये क्रमसहितसंन्यासविधयेऽवतीर्णेऽपर्णे त्वं यतिभिरनिशं ध्येयपदवी ॥ १० ॥ कटौ वैयाघ्रीत्वक् शिरसि च जटाजूटभुजगेड् गले नागो हारो नगपतिसुते तापसमिदम्। स्वरूपं त्वं धत्से विगलितरजस्कैर्मुनिवरैः सदा ध्येयं ज्ञानप्रदमिति यतेस्त्वं हि शरणम् ॥ ११ ॥ शिवो योनिर्योनिद्वितयमथ वृत्तं च कमलं दलैरष्टाभिर्भूरिति सदनमेतत्तव शिवे। मनोरर्णैर्युक्तं स्मरति यदि भक्तः प्रतिदिनं तदैश्वर्याणां भूर्भवति तव तुल्योऽयमनघः ॥ १२ ॥ हरारूढो वह्निस्तदनु च कला चामृतयुतो हरिर्वह्निः कामः शिवसहितषष्ठस्तव मनुः। त्रिभिर्नादैः साकं यदि विशति कर्णे सति तदा प्रवक्ता शास्त्राणां निजमहिमवेत्ता शिवसमः ॥ १३ ॥ वसिष्ठाद्यैः शिष्टैरपि च निजनिष्ठैर्गतभयैः परां काष्ठां प्राप्तैस्त्वमसि समुपास्या प्रतिदिनम्। अतो मन्ये मातस्तव गुणनिका येषु महती महन्मोहे शक्ता रुचिरतरशक्तिर्विलसति ॥ १४ ॥ कटाक्षव्याक्षेपो भवतु मम शोकापहृतये निजानन्दैरार्द्रे सति जगति वैराग्यपरमः। कृपापूर्णो भक्ते रिपुषु च महारौद्रभरितो दयाभारोदारस्तव जननि दीनेषु वरदे ॥ १५ ॥ यतन्ते ते केचिद्धृदि लसितदोषान्क्षपयितुं परे स्वर्गावाप्तावपि च परमब्रह्मभवने। अहं मन्ये मातस्त्वमहमिति निर्यत्नसहजस्थितौ तिष्ठन् पश्याम्यखिलनरचेष्टां बहुविधाम् ॥ १६ ॥ ललाटे सिन्दूरं वहसि जलदाभे गिरिसुते तदेतन्मन्येऽभ्रे सुरपतिधनुर्बिम्बितमिति। रवेरर्धं बिम्बं समुदितमथो वाञ्जनगिरौ स्वभक्ते यो रागः स खलु बहिरागत्य लसति ॥ १७ ॥ स्मितं मन्ये मातः सजलजलदाच्चन्द्रकिरणाः पतन्तीति प्राज्ञे निजगुरुकृपावेशवशतः। तुरीयं ते धाम प्रकटमिति मन्ये सकलगं निजानन्दस्पन्दं जननि भवसन्तापहरणम् ॥ १८ ॥

कुचावेतौ कुम्भोपमकरटिगण्डाभकठिनौ मुहुः पीतौ मातर्बहुभिरजमारभ्य शिशुभिः । अजीर्णौ तन्मन्ये यदि भवति जीर्णत्वमनयोः कथंकारं तेषाममरवरतादानपटुता ॥ १९ ॥ गले हारीभूतैरहिभिरपि मन्ये तव हृदि प्ररूढौ द्वौ शंभू भुजगफणया भूपिततनू । तयोर्मूर्ध्नोरेकः शशधर इति प्रौढकलहान्मिथः श्लिष्टौ योद्धुं जननि तदते नीलवदनौ ॥ २० ॥ अनन्तैर्ब्रह्माण्डैर्भरितजठरे रन्ध्रसदृशं त्विमं नाभिं धत्से धरणिधरकन्ये भ्रमिरतः । अनन्तान्यण्डानि प्रसभमित एवास्य बहिरित्यदेशात्तद्रोद्धुं कटितटभुजङ्गः प्रयतते ॥ २१ ॥ कटौ वैयाघ्रीत्वग् जनयति मतौ मेऽस्य कलनां स्वनिर्मोहेन्द्राद्रौ द्रुतरससुवर्णेति गिरिजे । यतो मध्ये नीलं वहति वसुधाभ्रान्तिजननं नमस्कुर्मो भूयो गलितमतयश्चित्रवपुषे ॥ २२ ॥ चमत्कारं चित्ते वहति तव पादाब्जयुगली सरोजे संरूढारुणतरमुखा स्वच्छनखरा । मुखे विन्यस्तेन्दुर्नलिनजठराक्रान्तिचतुरारुणाधालीनां स्त्रक्किमिति मम संशीति विषयः ॥ २३ ॥ त्रयाणां नेत्राणामरुणतरभास्वत्त्ववशतस्त्रयी सा संध्यानां त्वयि भजति सान्निध्यमनघे । द्वयोर्न्यास्या रागोऽनुमितिविषयस्ते त्रिषु शिवे स्फुटो नेत्रेष्वस्मात्त्वमसि समुपास्येति ऋगपि ॥ २४ ॥ यजुर्भिः सामाद्यैस्त्वमसि सवनैर्यज्ञसमये हविर्भिः संतर्प्येत्यपि निगदितुं भूसुरगणान् । गले रेखा धत्से सवनगतसंख्यासिरमले त्रिधा पूज्यत्वं वा परिणिगदितुं तद्भवतु ते ॥ २५ ॥ अये जाग्रत्कामः स्वपितिरपि जालन्धरगिरिः सुषुप्तिः पूर्णाख्यो भवति तव पीठः परशिवे । तुरीयाप्योड्याणो बत हतमतिर्भ्राम्यति दिशास्ववस्थास्ते पीठा इति नच विजानन्नरपशुः ॥ २६ ॥ शरो मूलाधारे रविरपि हृदम्भोजनिलये शशाङ्को भ्रूमध्ये वसति पुरुषार्थत्रयकृते । भजन्ते तान् ग्रन्थीनजहरिहराख्यानपि परे प्रभित्वा हित्वा तद्द्वयमिह तु रन्ध्रे सकलदम् ॥ २७ ॥ मलं

स्थूले हित्वाऽऽणवमथ च सूक्ष्मस्य वपुषो मलं कार्मं मायी-
यमपि च निदाने क्रमवशात् । समष्टि मायायां यदि भजति
भक्तस्तव तदा निजं धाम प्राप्तो भवति सुरवन्द्यैकच-
रणः ॥ २८ ॥ अजादीनां पञ्चावसथजनिभाजां कृतियुजां
मृषात्वात्प्रेतत्वं वदति स शिवस्तन्त्रवचनैः । निदानत्वात्तेषां
शिरसि तव संस्थापरचितेऽमनस्कैरारूढैः सुलभमिति तन्त्रस्य
हृदयम् ॥ २९ ॥ शिवश्चेज्जायायां भवति जगतः कारणतनुः
शिवे जाया चेत्स्याद्विलयमयते मन्त्रयुगलम् । तदा जातं हित्वा
द्वयमपि च तूष्णीं यदि भवेत्तदा शुद्धा विद्या त्वमसि च परा
शाम्भवि शिवः ॥ ३० ॥ यदात्मैक्यं तस्मिन्व्रजति परमे ब्रह्मणि
पुनः परं स्वस्मिन्नैक्यं भजति च तदा मन्त्रयुगलम् । मिलित्वा
तल्लीनां प्रणिगदति साम्राज्यपदवीं न मौनं नामौनं सच परम-
शम्भुः परशिवा ॥ ३१ ॥ यदा पञ्चज्ञानेन्द्रियसमुदयस्तिष्ठति
निजे मनो मौनं धत्ते दृढतरसमभ्यासवशतः । तदा ते सम्पत्ति-
र्भवति यमिनां भूरिसुखदा कठप्रोक्ता मुद्रागमपरिविगुप्ता विज-
यताम् ॥ ३२ ॥ यदा वर्णात्मा त्वं पदपदसमूहात्मकतया तदा-
वष्टम्भस्ते भवति जगतो मालिनि मनोः । त्वयारब्धं धत्ते स्थिति-
लयविधानं त्वयि शिवे तदेतच्छन्दोगाः स्फुटतरनिरुक्तिं विद-
धति ॥ ३३ ॥ भवत्याः किं ब्रूमः परमगणितान् शक्तिनिवहांस्त्वया
दत्तां लब्ध्वा किमपि कुरुते शक्तिमितरः । हरः संहर्ता भूद्धरिरपि
च पाता त्रिजगतां विधिर्धाता सूतुः सकलजगतां स्तम्भकरणः
॥ ३४ ॥ गले नागो हारः शिरसि च जटाजूटनिवहो ललाटे-
र्धेश्चन्द्रो वसतिरपि नैजे महिमनि । विहारः स्वच्छन्दं मनसि जग-
दाभोगविरहो निजानां भक्तानां गतिरियमुमेऽक्षोभ्यमहिषि ॥ ३५ ॥
यथाशक्तीत्यन्ते वदति सकलः कार्यसमये स्वतन्त्रत्वं तेन प्रकटि-
तमदस्तावकमुमे । उपास्यातः सर्वैर्न खलु परतन्त्रादिविषदस्त्वदो

गाथायुग्मया श्रुतिरपि च केनोपनिषदि ॥ ३६ ॥ समष्टिः शान्ताद्या परशिवहरिमहानिनदैस्त्वमेवैका वेदैः शिववचनशास्त्रैः स्तुतिपदम् । त्वगुन्मृग्नना धत्से जगदिति समाख्यां सदसतोर्विरुद्धां किं ब्रूमो वयमपि चमत्कारपदवीम् ॥ ३७ ॥ त्वमेका कल्पान्ते जगति विलयं याति विरतिं विधौ निद्राणेऽजे निजवपुषि लीने गिरिशये । जलत्वं ब्रह्माण्डे व्रजति सितपद्मे स्थितवती पुनः सृष्टौ दक्षा कलय मम रक्षामभयदे ॥ ३८ ॥ यदि त्वं वैमुख्यं निखिलसुरमुख्ये भजसि तत्क ईष्टे मां नेतुं भवजलनिधेः पारमितरः । स्वयं मग्नः पारं यदि गमयितुं भूष्णुरधुना विदध्यात्त्यक्तह्रीर्दृषदपि स्वनेशस्य तुलनाम् ॥ ३९ ॥ अवस्थासाक्षित्वात्त्रिपुरललिता नाम त्रिरूपे गुणारागाणां भूरिति तमसि गूढा परशिवे । ततः काली नीला भवजलधिसंतारचतुरेत्यतस्तारा प्रोक्ता त्वमसि गुणभेदेन बहुधा ॥ ४० ॥ भजन्ते ते रूपं सकलमनघे ते तु मलिनाः समुचित्याप्येके सकलमकलं मिश्रमतयः । विशुद्धानीरूपं तव शिववचः प्रौढमतयः समारूढः, किंचिन्नच भजति तत्केवल इति ॥ ४१ ॥ मुखे चन्द्रं धत्से शिरसि च तमो नागयुगलीं गले शङ्खं वक्षस्यपि वहसि पक्षिद्वयमिदम् । कटौ सिंहं शुण्डायुगलमपि माणिक्यमुकुटावधो रम्भास्तम्भौ सरसिजयुगं चित्रितमिदम् ॥ ४२ ॥ अनेकै रत्नौघैः खचितमुकुटोऽयं तव शिवे विधत्ते सारूप्यं मणिमयसुमेरोश्च शिरसः । वदन्तीत्थं केचित्परममरपादैरभिहतं शिरस्यूढो देव्या सकलसुरवन्द्योयमतुलः ॥ ४३ ॥ ललाटे चन्द्रोयं जननि शिशुभावेन विलसन्मुखेन्दोस्ते बालः शिरसि विधृतः प्रेमवशतः । परं धात्र्या हीनः कथमपि च जीवेदिति धिया प्रदत्तं पैयूषं वपुरत इवानेव सततम् ॥ ४४ ॥ अराला केश्येयं तव वदनचन्द्रादनधिया प्रसर्पन्ती राहोस्तनुरिति विधत्ते मयि मतिम् । परं शोभाभूमिं त्वपगतकलङ्कं तव मुखं विनिश्चिन्वन्नास्ति प्रचलति

ततो नापि सदनम् ॥ ४५ ॥ ललाटं काश्मीरारुणतरवपुर्भाति गिरिजे गिरेरर्धं बिम्बं समुदितमितीन्दोः सपदि नः । इमौ वक्रौ मातश्चिकुरनिवहावेणजनिते अराले द्वे शृङ्गे इति मतिविधानाय चतुरौ ॥४६॥ इमां वेणीं कालाहिरिति कलयन्तेऽम्ब कवयस्तदङ्कास्थां यस्माज्जठरवसतिक्रान्तरुचयः । सुधास्वादक्षेमा अमरनिवहाः कालकलिताः पतिस्ते कल्पान्ते कलयति मुदा ताण्डवविधिम् ॥ ४७ ॥ त्रयीं नेत्राणां ते भ्रुकुटियुगमध्यासनशिवे त्वयारोप्यं बिल्वं त्रिदलमिति मन्ये नगसुते । इयं तद्दण्डत्वं भजति तव नासातिसरलाऽथवा चम्पापुष्पं मुकुलितमधस्ताद्विगलितम् ॥ ४८ ॥ त्रयी ते नेत्राणां रुचिरतरबाणत्रयमतो यदाश्रित्यानङ्गः परिभवति शम्भुं स्वरसतः । इयं नासाप्युच्चैर्मदनकृतनाराचभरितो निषङ्गो दीर्घं ते भ्रुकुटियुगलं मन्मथधनुः ॥ ४९ ॥ कटाक्षा गाङ्गन्तः सहजशिशिरा अच्युतभवा रमाधीशन्तो वा त्रिभुवनपरित्राणकरणाः । अजन्तोऽभीष्टार्थप्रकटरचनापाटवजुषो जयन्तु ब्रह्मान्तः सति चिति घनानन्दनिधयः ॥ ५० ॥ शिवे बाणायन्ते शशितुहिनकर्पूरशिशिराः परायन्ते विष्णौ हरनयनदीप्तानलहुते । स्मरे जीवायन्ते मम जननि संस्थापनविधौ कदा वेणीयन्ते तरलितकटाक्षाः करुणया ॥ ५१ ॥ इमौ ते गण्डौ द्वौ नगपतिसुते गण्डकिशिले वहन्तौ ते नेत्रद्वयगलितनीलच्छविभरः । तयोर्मस्ते न्यस्तं नलिनदलयुग्मं भवति तत्तदीयाभायुक्तं तव नयनयुग्मं त्विति मतिः ॥ ५२ ॥ सरस्त्यक्त्वा मीनौ मकरभवसंत्रासभरितौ मुखे लावण्याम्भधावभयमिति तत्र स्थितिजुषौ । पुनस्ते श्रोत्रस्थान्मकरयुगलाङ्कीतमनसौ भ्रमन्तावुद्योगं जननि विदधाते शिवगतौ ॥ ५३ ॥ रहस्यानां पात्रं शिववचनशास्त्रस्य महतो रवीन्दुभ्यामम्ब स्थगयसि नितान्तं श्रुतियुगम् । शिवत्वान्मेपीदं शृणु वचनमुद्धाट्य सुभगे त्वमेवाहं त्वत्तो न च परतरोऽहं परशिवः ॥५४॥ स्मिते तौल्यं

कश्चित्कलयति विधोरस्य तुलनांममन्वानो धत्ते शशिनि नच पार्श्वं तदुभयोः । कलङ्की तज्जन्यो जगदिव पराज्ञातमशिवं परं मौनं स्थेयं कविभिरधुना वर्णनविधौ ॥ ५५ ॥ इयं ते दन्ताली जननि रचिता कुन्दमुकुलैरथो शुद्धा विद्या तव वदनमाश्रित्य लसति । कला वा द्वात्रिंशत्तव वदनचन्द्रस्य शिशिराश्चतुर्धा वाग्देव्यः सिततनुधरा वा तव मुखे ॥ ५६ ॥ कपोलौ ते कामेश्वरि सरसमध्यावटयुतौ सुपूर्णौ लावण्यैः शिशिरतरसावर्तसरसी । विधाता वा जह्रे जननि यत लावण्यमतुलं ततस्ताः सुन्दर्यो दिवि भुवि च काश्चिन्मृगदृशः ॥ ५७ ॥ प्रवालाभावोष्ठौ निजवपुषि निम्नोन्नतिजुषौ स्मरेणात्तौ चापौ शिवहृदयवेधाय सततम् । परं ह्यान्शब्दांस्तव कुसुमनाराचसदृशान्वहंती जिह्वान्तः स्मरशरधिमीष्टे नु चरितुम् ॥ ५८ ॥ विधत्तां कल्याणं तव चुबुकबिम्बोऽयमनघे हरेण प्रेम्णा तेऽधरमधुनि पीतेऽद्रितनये । ददत्पीयूषं स्वे वपुषि च निगूढं मुहुरहो विधत्ते शोभायाः सर इव सनीलावटभुवम् ॥ ५९ ॥ मुखं किं ते चन्द्रो जननि परिसान्द्रोऽमृतकरैर्लसत्पद्मं किंवा कलयति यतोऽलित्रितयकम् । मरन्दाढ्यं वाग्भिस्त्वमृतमधुराभिस्तव शिवे भवेत्किंवा नूनं मयि सदयभावं भजतु तत् ॥ ६० ॥ इयं पीवग्रीवा सकलसुललामानि दधती पुना रेखास्तिस्रोपि च विनिवहन्ती शुभतराः । अवश्यत्वं कामेश्वरसरलबाहुद्वयजनुःपरीरम्भस्येति ध्वननलिपिकास्ता विधिरधात् ॥ ६१ ॥ कुचावेतौ केचित्कलशयुगलं हस्तिकरटौ सुपीनौ पीयूषाभरितकुतुपौ कुड्मलयुगम् । पणौ पत्युः प्रेम्णो विमलतररत्नस्य गृणते वयं ब्रूमो मातः परमशिवखेलस्य गुटिके ॥ ६२ ॥ अमी ते ये हस्तास्तव तनुलतायाः परिसरे सनालं पद्मानां विलसति चतुष्कं सुललितम् । सरागत्वे तुल्ये भवतु च पकारोऽम्बुजनुषां विरोधो माभूयात्तव भुजलतानां नच कदा ॥ ६३ ॥

इमां नालीं नीलां मुकुलितसरोजद्वययुतां समुत्पन्नां नाभीसरसि नगकन्ये तनुतराम्। गृणीते रोमालिं वयमपि वदामः शिवतनो-रधस्ताद्गच्छन्ती महिपतिसुतां नाभिकुहरे ॥ ६४ ॥ इमौ ते वक्षोजौ सकलजनजीवौ स्थगयसे जनन्याः पुत्रेभ्यो भवति किमु लज्जात्र कुचयोः। ऋतं विष्णो हृद्यं तव जलजयुग्मं मुकुलितं पति-र्धत्ते नेत्रे रविशशियुगं तद्द्वयमिति ॥ ६५ ॥ इदं क्षामं क्षेमं कलयतु मयि क्षान्तिनिवहं क्षमालक्ष्यं धत्तेन्तरिति शिवचक्षुर्वि-षयताम्। विधत्ते क्षोणीशद्वयमयि कथं मूर्द्धनि वहेदिति त्रेधा नद्धं वलिभमिव भात्यम्ब जठरम् ॥ ६६ ॥ कटिर्मध्या धात्री मृगवरकटेर्भाति गिरिजे पदं तद्विष्णोः किं भवति यदसौ कोटि-रभवत्। कथं वासं धत्ते शिरसि गुरुभारं कुचयुगं ततो मन्ये हैमं तव कटितटे पट्टमतुलम् ॥ ६७ ॥ ऋतं काञ्चीक्षेत्रं शिवव-रदराजं जघनकं दधच्छ्रीरङ्गस्यावसथमथ काञ्चीं च परितः। विधत्ते कावेरीमिव तव नितम्बः किमु भवेद्वहन्हैमीं मालामरु-णतरविम्बो रविरहो ॥ ६८ ॥ इमौ वृत्तौ पीनौ जननि तव चोरू क्रमकृशौ करीन्द्राणां शुण्डा तुलयति निजेनानिशमपि। परं स्वस्मिंस्तद्वन्मृदुतरवपुष्ट्वस्य विरहाद्विधत्ते धूलिं सा निजशिरसि दुःखाकुलमना: ॥ ६९ ॥ इमे वृत्ते दीर्घे विमलकदलीकाण्डवपुषौ सुशीते ते जङ्घे मनसि विदधाते कुतुकिताम्। कथं ताभ्यामग्रे सरसिजयुगं ताम्ररुचिरं मुहुर्न्युब्जं वक्राकलितशशिखण्डं सम-मिति ॥ ७० ॥ इदं ते पादाब्जं भवतु मम भूत्यै गिरिसुते भवा-त्संतप्तानां शिरसि किल छत्रीभवति यत्। शिरो वाक्संपाद्या-मृतरसमरन्दाढ्यमरुणं मुनीन्द्राणां हृद्यं जननि सकलाम्नायसुधि-याम् ॥ ७१ ॥ शिवानां पञ्चानां शिरसि जलजद्वन्द्वमनघं भवत्या पादाख्यं सहजसुभगं दत्तमिति ते। भजन्ते पूज्यत्वं त्रिभिरपि च लोकैरत इमे यथेष्टं संतुष्टास्तव चरणयुग्मं प्रद-

दति ॥ ७२ ॥ मुनीनां सांख्यानां त्रितयभुवि निष्णातसुधियां मनस्तीर्थेऽगाधे विमलतरगङ्गौघसदृशे । सुजातं संजातं तव पदसरोजद्वन्द्वमिदं यतो धत्ते नित्यं वपुषि सरवं हंसकयुगम् ॥ ७३ ॥ अये ते पादाब्जे निभृतपरमप्रेमतरलामरन्दं ब्रह्माहुस्तव पदसरोजद्वन्द्वमुभम् । यदास्वादाद्धा सहजसुलभं चित्सुखमयं सुमे लब्धे गन्धे किमनु यतते भृङ्गनिवहः ॥ ७४ ॥ नवानां पद्मानां सततसुभगानां नवविधामणीनां गुच्छानां रसयुगभुवोश्चापि फलयोः । विभर्त्री कारुण्यामृतरसपरिस्राविततनुः प्रवालाभा काचिद्विलसतु पुरस्तात्सुरलता ॥ ७५ ॥ सरस्वत्या वक्त्रं मदनमहसाऽऽकण्ठकटितयथाशक्तिप्रान्तं विरचितवता पादयुगलम् । उपास्या केन त्वं जननि तव कूटत्रयतनुं सुरेन्द्रोपि ज्ञात्वा परमपगतः केन वचसि ॥ ७६ ॥ तुरीयं वक्त्राब्जं जननि निजवक्षोजयुगलं द्विसर्गौ पादान्तं तव भजति चेदल्पवपुपः । पदं वा हंसस्य भ्रमयति मृगाक्षीर्जगदपि स्वतन्त्रः सर्वत्र प्रभवति ऋचां मन्त्रविपयः ॥ ७७ ॥ शिवो योनिर्योनिर्वसुमिति मतीविष्णुयुगलं मनुः पद्मं पद्मैर्वसुमिति युतैः षोडशदलम् । त्रिकं वृत्तानां च त्रियमपि भुवां देवि सदनं मणिद्वीपारूढं मम भवतु भूत्यै सकलदम् ॥ ७८ ॥ स्मारो योनिर्लक्ष्मीरवनिरपि मायाशिववधू स्मराकाशौ पृथ्वी पुनरपि च माया भृगुरथो । स्मरः पृथ्वी माया तव मनुरयं सर्वजनतासुखास्थै संवृत्तो मयि दिशतु सौभाग्यपदवीम् ॥ ७९ ॥ अजानन्नर्चाया जपयजनयोः पद्धतिमुमे जपेच्चेन्मूढोऽपि प्रभवति सुरेज्येन तुलितः । परं लक्ष्मीस्थानं वरमृगदृशां मोहजनको रिपूणां वाक्स्तम्भी सकलजनपूज्यः शिवसमः ॥ ८० ॥ त्रिलोक्या ऐश्वर्यं सुरपतिरथ स्रष्टृपदवीविधाता पातृत्वं श्रियमपि च लेभे हरिरथो । हरः संहर्ताभून्निजमहिमनि स्वस्थमतिमानितोऽप्यन्ये स्वेष्टं दधिर इति ते मन्त्रमहिमा ॥ ८१ ॥

गिरं मूलाधारे स्मरमपि हृदम्भोजसदने भ्रुवोर्मध्ये शक्तिं स्मरति शिरसि ब्रह्मसदने। श्रिचाद्यैर्बीजैस्तैः शिवशरमितैर्ध्यायति मनुं तदा सच्चिद्रूपे विशति परमानन्दसदने ॥ ८२ ॥ चतुर्भिर्वाद्यैश्चे-द्भजति तव मह्यां वपुरथो नलैर्वह्नेर्गेहे भजति चडफैर्विष्णुसदने। गृहे कण्ठैर्वायोः किल गगन आद्यैश्च मनसो हलेन त्वं पत्युर्भ-वसि विमलाङ्केशयतनुः ॥ ८३ ॥ शरैराम्नायैश्चेद्भजति मनुजस्त्वां गिरिसुते तदा षष्ठेन त्वं वितरसि निजानन्दलहरीम्। तदा स्रोतो-द्वन्द्वं भजति नितरामैक्यपदवीं तदारूढो मुक्तो भजति तव विश्रान्तिचरणम् ॥ ८४ ॥ दधे मौनं वाणी मतिरपि दधे कुण्ठिततनुं बहिर्दृश्यायोगान्निजवपुषि चागोचरतया। अतो योऽहं सोऽहं न च मदितरोऽहं किमपि वा नचास्तेऽतस्तूष्णीं स्वपिति तव भक्तः परशिवः ॥ ८५ ॥ रहस्यान्तां विद्यां यदि दिशसि भक्ताय महतीं गुरो रूपं धृत्वा सदयहृदये द्रोणकलशे। यथा वा विन्ध्याद्रौ जननि शिशवे तत्पुनरहो तदा का का सिद्धिर्न भवति परब्रह्ममहिषि ॥ ८६ ॥ शठाः केचिज्जीवाः सकलशरणं देवि चरणं त्वदीयं मन्यन्ते निरवधिकसौख्यास्पदमपि। अनाराध्यं पुंभिस्त्विति कथमिदं चाप्तवचनं यतः शंभुः संध्यासमयमनु नित्यं भजति तत् ॥ ८७ ॥ यतो लक्ष्मीर्यत्र प्रतिवसति नान्यत्र शरणा यतो वीणाहस्ताप्यनुसरति मञ्जीरसुभगम्। यतश्चाष्टौ तुष्टा अणिममहिमाद्यास्तव पदे कथं त्यागो भाव्यो जननि तव पादद्व-यभुवः ॥ ८८ ॥ पुरस्तादस्माकं विलसतु शिरीषौघसुभगं महेन्द्रा-द्यैर्देवैरनिशमपि संप्रार्थिततरम्। फणीशस्यास्यानामविषयितला-वण्यसदनं ललामं शैवेऽङ्केऽरुणरुचिजनन्यास्तव वपुः ॥ ८९ ॥ इयं वाणी वीणा पिकशुकशिशूनामविषया त्वदास्यैकाधारामृत-निवहधारातिमधुरा। श्रुतिभ्यामास्वाद्या जननि तव पत्यू रहसि या विधत्तां कल्याणं कथमपि भवार्तस्य सततम् ॥ ९० ॥ प्रधत्से

गातरस्त्वं तव चरणसेवापरजनप्ररूढान्रागादीञ्जननि विनिधायायुधततून् । अतो हस्तान्मन्ये बत वितरितुं भक्तनिवहे चतुर्द्धायुक्तास्ता इति शमितचित्तोऽहमनघे ॥ ९१ ॥ यतन्ते मोक्षाय क्षितिधरसुते त्यक्तमहिला यजन्ते यज्ञैर्वा दिवि सततभोगार्थमपरे । तपन्तो दृश्यन्ते विविधविधिभिश्चेतरजना न जानन्त्येवं तव जननि सेवामभयदाम् ॥ ९२ ॥ कटाक्षे पात्राणां तव जननि सर्वेऽपि वशगाः पदे भृत्याः पृथ्वीपतय इति चाल्पं प्रकथनम् । यतो दास्यश्चाष्टावणिमलघिमाद्या अपि तथा पराकारा धृत्तिर्निजपदहृतापि त्यजति नो ॥ ९३ ॥ तपन्तामादित्याः परिपततु शत्रूज्झितशरो वहन्तां कल्पान्ता विविधतरवृत्ता गगनजाः । ततः किं मे भूयात्सति परमकल्याणसदने जपापुष्पाभे त्वय्यनवसरमास्तां मम मनः ॥ ९४ ॥ विधेयं कारुण्यं सततमपि मय्यम्ब सदये भवाब्धौ गम्भीरे परिपतितदुःखाकुलतनौ । जगन्मातुर्याच्या न घटत इयं किं तु मम ते पदद्वन्द्वे भूयादनिशमपि रागोऽतिसुखदः ॥ ९५ ॥ शतं जाताः शैवाः शतमपि हरेर्भक्तनिवहाः सहस्रं वे सौरा गणपतिपराः कोटिरभवन् । अनन्तास्ते शाक्तास्तव जननि भक्तस्तु न पुनर्विजानीते मातुर्जठरमिति तुभ्यं मम नमः ॥ ९६ ॥ शिवाद्याश्चानन्ता जननि बत ते दत्तविभवाः परेशं मन्यास्तान्न भजति सुतोयं तव शिवे । अये द्राक्षाभक्षी किमनु यतते निम्बरसने विहाय त्वामन्यान्विदधति मतौ मूढमतयः ॥ ९७ ॥ मनो जेतुं कश्चिज्जपनियममालम्ब्य यतते निजं ज्ञातुं कश्चित्कपिलवचनेभ्यो मतिमदात् । असंप्रज्ञातार्थं गिरिवरगुहासूज्झिततनुर्मदीयं सर्वस्वं तव जननि पादाम्बुजयुगम् ॥ ९८ ॥ जटावेणीयुक्तं भसिततिलकाभ्यामवगतं गजत्वग्वासोभ्यामधिगतमिदं चित्रितमहः । वपुस्ते तत्रेपु प्रकटिततरं भक्तनिवहान्समुद्धर्तुं भेत्तुं विविधगुणभेदं जयतु तत् ॥ ९९ ॥ क वा सेवा सेव्यं स्तुतिरपि तदी-

यापि पदवी कृतिः कर्ता कार्यं किमपि न च विघ्नोऽत्र भवति। अखण्डे निर्वाणे त्वयि विषयतां वाङ्मनसयोः कथंकारं ब्रूमो जयति तव धाम स्ववपुषा ॥ १०० ॥ अये मातर्वत्से मयि चरति संसारकुहरे प्रलब्धं नो जाने गुणमथ च दोषं मृदुमतिः। जगत्स्रष्ट्रा सृष्टं तव करतलाम्भोजयुगले गृहाणाम्ब प्रीत्यार्पितमिति महानन्दचषकम् ॥ १०१ ॥ नमोस्तु जगदम्ब ते परशिवाङ्कसंस्थायुते निजैकसुखसंतते परचिते पवित्रस्थिते। चिरंतनवचःश्रुते शशधराभमन्दस्मिते शिवादिसमुपासिते सततमस्तु तुभ्यं नमः ॥ १०२ ॥ नमो मन्त्रमातर्नमो विश्वयोने महाचक्रमध्यस्थितायै नमस्ते। नमः सद्गुरोः श्रीमहापादुकायां प्रतिष्ठापरायै नमस्ते नमस्ते ॥ १०३ ॥ महाम्नायपट्टाभियुक्तेषु भक्तेष्वभिज्ञाप्रदायै परायै नमस्ते। नमः स्वात्ममात्रप्रथामात्रमूर्त्यै शिवाभिन्नगात्र्यै नमस्ते नमस्ते ॥ १०४ ॥ नमोस्तु तुलजापुरावसति शर्मभूत्यै नमो नमः स्थितिजुषे पुनः सततशर्मगोवर्धने। नमोस्तु जगदम्बिके विहितवासविन्ध्याचले नमोस्तु ललिते तवाकलित एष पुष्पाञ्जलिः ॥ १०५ ॥ आबाल्याद्विषयसुखेषु मग्नचेता मातस्त्वां सकृदपि न स्मरामि चित्ते। नो शिष्टस्त्वयि न कृतोऽपराधको मे क्षन्तव्यः सदयनिरीक्षणेन मात्रा ॥ १०६ ॥ पाशाङ्कुशौ धनुर्बाणान्वहन्ती स्वकराम्बुजैः। अरुणा तरुणी काचित्पुरस्तादस्तु मे मुहुः ॥१०७ ॥ तारे तारय मां मातर्भवाद्भीरुभयंकरात्। करद्वन्द्वं शिरश्चैकमर्पितं तव पादयोः ॥ १०८ ॥ हित्वारुणे त्वां सुरवन्द्यपादामिन्द्राभिभृत्याः सुरलोकसिद्ध्यै। ते सैकताभाः परितापभाजो वयं तु ते पादयुगं भजामः ॥ १०९ ॥ पुरः स्थापय पादाब्जमर्पयामि शिरोऽधुना। पुनः श्लिष्यामि पश्यामि जिघ्रामि च लुठामि च ॥ ११० ॥ दोषी वा स्वगुणी वा स्वपराम्बाया मुदे भव। चिरं जीव महानन्द चषकेत्थं मम प्रिय ॥ १११ ॥ तत्रैव

गन्छ हे पुत्र यत्र सन्ति विमत्सराः । भट्टारिकाप्रियं मत्वा नैव त्वां पीडयन्ति ते ॥ ११२ ॥ जरीगर्तु गुणान्कोऽपि नरीनर्तु महोत्सुकः । वरीवर्तु भवांस्तस्यां सरीसर्तु परा मयि ॥ ११३ ॥ यस्तन्त्रेषु स्वतन्त्रोऽक्षरकुशलमतिर्व्याकृतिन्यायवेत्ता शृङ्गारादिष्वभिज्ञः कपिलफणिपतिप्रोक्तमर्मैकभूमिः । दीक्षादक्षः श्रुतीनां शिरसि च वचसां देवतानृत्यरङ्गो गुप्तप्रोक्तप्रवेत्ता कलयतु नितरामत्र टीकां मनोज्ञाम् ॥ ११४ ॥

इति श्रीमत्परमहंसपरिव्राजकवर्यकैवल्यधामनिवासिश्रीकृष्णानन्दसरस्वतीस्वामिविरचितो महानन्दचषकः संपूर्णः ॥

---

# ताराश्वधाटी ॥ २३ ॥

वाराशिरूढसितवाराशिजातशवमारारिरूढचरणाऽघोराधिराजनुतघोरासिघातपटुघोराहिशोभिशिरसम् । तारामुपास्व भवभारानपास्य भवमारारिरूपसदनं कारागृहं भवति दारादिबन्धुजनतारातिरेव सततम् ॥ १ ॥ वीरावलीविनुतपारावताभतनुताराधिराजसदनां हारायिताहिमणिहीरादिरत्नखचिताराढ्यहेममुकुटाम् । सारामनर्व्यतरवारादिशस्त्रवरपूराभिराजितकरां मारादिषट्कनिवहारात्तिभीरुरिह तारामुपास्व सततम् ॥२॥ कर्त्री कपालयुगधर्त्री जगन्निवहभर्त्री विनाशजनुषोः कर्त्री मुमुक्षुभवहर्त्री निजेन वपुषार्त्री च थापरचितिः । धात्री महेशहरिवेत्रीपतीननुविधात्री समस्तसुविदां छात्रीभवत्सनकदात्री कृपानिवहपात्रीकुरुष्व सदये ॥ ३ ॥ मानं विहाय किल दीनं निजं वदसि दानं गृहीष्यसि मुदाऽलानं भविष्यति च कानंदिता भवति नानन्दतीषदपि सा । मे नन्दनप्र-

---

१ वैदिकपद्धतिनिबन्धेन वैदिकतत्त्वावबोध इवानेनानन्दचषकेण तन्त्रतन्त्रस्वतन्त्रतापि प्रकटीभवति श्रीस्वामिपादानाम्.

भूतिरानन्दहेतुरिति गानं करोष्यविरतं ज्ञानं तिरोभवति भानं न सज्जगत आनन्दिनीं भज शिवाम् ॥ ४ ॥ पाटीरवासितसुशाटीविराजिकटिधाटीविनिर्जितमृगेट् चेटीभवद्दिविजभाटीभवज्जलजजाटीकिताङ्घ्रिमहिमोवाटीपु दिव्यतरुकोटीपु चामरसुकोटीरघृष्टचरणे नाटीकतेऽत्र परिपाटीषु मूढमतिराटीकवेदवचसाम् ॥ ५ ॥ नीलामुपास्व सुखमूलाविभेदपटुरालानभूततमसां कालाहिदष्टतनुमालाभरेण तव बालाग्रतुल्यमपि शम्। बालाकुचेपु मतिमालायसीह वदकोलाभ एष विततः कालानलज्वलिततूलाभ एव भवसीलापि तेन सुखदा ॥ ६ ॥ व्यर्थीभविष्यति कदर्थीकृतिस्त्वतु सार्थीकृतेशवपुषश्चार्थी न चेद्वद पुमर्थी कथं भवसि नार्थी तत्रास्ति धनदः। अर्थीभवन्नपि रमार्थी यदि प्रभवसार्थीकृतेन मनसाऽपार्थीभवेत्तु परमार्थीति गीतिरितिमार्थीभवात्र विपये ॥ ७ ॥ वातातपादिभयपातादि नास्ति तव माता पिता निजजनो द्यूतादिसक्तमतिजातातिवेलविपदातावतासिलुलितः। भो तात नास्ति हितकर्तापि नैव बहुवक्तापि याहि शरणं तां तारिणीं सकलसंतारिणीं मनसि संतानमेवमनु वै ॥ ८ ॥

इति श्रीमत्कृष्णानन्दसरस्वतीविरचिता ताराश्वधाटी संपूर्णा ॥

---

# चाटुदण्डकः ॥ ३४ ॥

श्रीरस्तु। जयजयजय ललिते वेदवाचाविष्कृते सुललितसकलसौभाग्यभूषणपरिष्कृते मुनिजनमनःकृताविष्कृते सरलतरकामेशवाहुवल्लरीसंपरिष्वक्ततनुलते श्रुतिसीमन्तिनीसीमन्तसिन्दूरमकरन्दलाक्षारसोल्लासिचरणाम्बुजाते हिमजाते अजाते। परशंभुवैराग्यकूलंकषोद्युक्तनद्युत्तरीतीधरत्तरलनैसर्गचापल्यकल्याणभूमीयमानमदनाख्यवीचीछटोल्लासि कर्णान्तसंचारिचारुवीक्षिते नर्मचेष्टासु दीक्षिते शिवनिरीक्षिते। शृङ्गारसंपन्नवृन्दारकीवृन्दधम्मिल्लमन्दारमन्देतरो-

द्वन्धसंमुग्धमधुमुक्समारब्धसंगीतसंगीतपादाम्बुजद्वन्द्वमकरन्दकीर्ते ललितमूर्ते सुकीर्ते । नानाविधोत्कृष्टमाणिक्यसंघातसंनद्धकोटीरघटनाय नीचैः स्थितिं प्राप्य वक्रत्वभाग्जूटशोभापराभूतलोकत्रये शोभालये जये । लालाटकाश्मीरपङ्कादधोन्यस्तकस्तूरिकालब्धसंधानया सुभ्रुवा धन्विनोऽनङ्गस्य सुमबाणसद्दर्शेन नेत्रत्रयेणाशुकृतसाह्यकृत्ये कृतपञ्चकृत्ये अकृत्ये । पत्नीसमाश्लिष्टचन्द्रभ्रमाधायितारासमाकारमुक्तामणिद्योतिरुचिरास्यबिम्बे प्रियकदम्बे गुरुनितम्बे । निशानाथसाचिव्यकारि स्फुरन्मन्दहास्यप्रभापूरमग्ने कर्पूरगौरे निजेऽन्विष्यमाणेयमित्यात्तशिवहस्तविन्यस्तनिजहस्तसंदर्शितानङ्गचाटुचित्रे सुचरित्रे विचित्रे । शृङ्गारदीक्षाभिषिक्तस्तनारब्धसुमधन्वसश्रीयकृत्त्विक्चमत्कारकरपत्रलेखेऽनङ्गलेखे नतलेखे । पटच्छन्नहृन्मण्डपासीनकलरावहारालीसभ्यकृतशब्दशास्त्रीयगम्भीरवादाहृतात्मीयकर्णे अपर्णे सुवर्णे । कौसुम्भशाटीपराभूतरविसूतसंतोपणायेव तुलितारुणामैाल्यमाणिक्यवाहिहृदयेसदये जये । विहङ्गेशभीत्या भुजङ्गीपटान्तर्निगूढा किमित्युत्प्रेक्षिका योग्यरोमावलीशालिजठरबिम्बे जनितहेरम्बे लावण्यबिम्बे । गम्भीरनाभीविगाहन्मनःशोधसंवृत्तपतिहस्तशाखासमा स्पर्शसंजातपञ्चेषुसंचारजनितरोमाञ्चे कृताङ्कुञ्चक्रान्तमध्ये । कचभारकुचभारनम्रीभवन्मध्यसंगोपपर्याप्तधूतरत्नपट्टे साम्राज्यपट्टे शुभदृष्टे । नैतम्बनैसर्गगुरुभारविध्वस्तगिरिगर्वजाते सुजाते गरिजाते । वंधूकसच्छायपटगुप्तमतिवृत्तमूरुद्वयं वीक्ष्य सिन्दूरसंलिप्तशुण्डातुलावृत्तपार्श्वस्थगणनाथमभिवीक्ष्य नन्दितेपतिनन्द्रितेदिते । रम्भापरीभावभटजङ्घिकायुग्मतोषाय विन्यस्तसिञ्जानमञ्जीरराजत्पदाम्भोजविन्याससंतोषितत्र्यम्बके अम्बिके शङ्करप्राणनायिके । सुधासिन्धुमध्ये मणिद्वीपशृङ्गोपरि स्थानसंस्थानसाम्राज्यसिंहासनोत्तंसपदपङ्कजातानतेन्द्रादिपरिवारवीक्षासमुद्योगविस्तृतापाङ्गे कृतशंभुसङ्गे असङ्गे । हालामदाघूर्णसानन्दनेत्रारविन्दे आनन्द-

कन्दे नतगोविन्दे अमन्दे। कोदण्डशरकाण्डपाशांकुशभ्राजिकरकङ्कणक्काणसूह्णीणवाणीस्ववीणां निचोलेऽभिगुप्तां यदग्रे करोत्यास्वमेऽग्रे। गम्भीरसंसारपाथोधिपरिपातदुःखेन मामार्तमुद्धरोद्दामकारुण्यसिन्धो नतबन्धो सुबन्धो। त्वत्पादमपहाय यामि क वा तूहि को वा परामर्ष्टुमीष्टे प्रपञ्चे वीक्षासमारब्धसकलप्रपञ्चे निष्प्रपञ्चे। नयनाश्रुसंमार्जनेपि क्षमः कोपि नेति प्रपन्नोस्मि पादाम्बुजं ते यदम्बोचितं वेत्सि तच्चाशु कुर्वित्यये प्रार्थयेऽहं मुहुर्मातरद्धा क्षमः कापि नेति प्रसीद प्रसीद प्रसीद। जय जयामरवन्दिते। जय वीरसेवाभिनंदिते जयभक्तमुदिते। जय परशिवाङ्कसंस्थिते। जय देवसंस्तुते। नमो विश्वात्मिके नमो-मन्त्रात्मिके नमो गुर्वात्मिके नमश्चक्रात्मिके नमो नादात्मिके नमो मदात्मिके भवे भवे त्वामेव सेवे शिवे नमस्ते नमस्ते नमस्ते। अयि मातरेतु करुणा तव मयि बाले प्रपञ्चसंतप्ते। सेवे सेवे त्वामयि नान्यं मामैतु मे मनः सुतराम्॥ १॥ बालेन्दुशालिभाला लाक्षालक्ष्मीललाममृदुचरणाः। कुटिलालकनिटिलाक्षाश्चटुलाः प्राणाः शिवस्य मे प्राणाः॥ २॥ पाशाङ्कुशशालिकरा हस्तन्यस्तेक्षुचापकुसुमशराः। अरुणाः करुणामय्यः शिवसर्वस्वा जनन्यो नः॥ ३॥ धम्मिल्लमल्लिकाविटसंत्रस्यन्नयनयुगलचटुलानि। कुटिलानि केशविषयेऽप्यकुटिलचेतांसि शंभुभाग्यानि॥४॥ अरुणानि भूरिकरुणान्यरुणाधरपल्लवानि तरुणानि। लीढानि शर्वशाणे सन्तु पुरस्तादनर्घ्यरत्नानि॥ ५॥ वाणीलक्ष्मीकरतलदत्तकरं शिवमनोहरं वस्तु। अस्तु पुरस्तात्किंचन विद्युच्चपलं स्वभावगम्भीरम्॥ ६॥ कल्पं करुणारसघनमभीष्टफलदं शिवाङ्कसंरूढम्। प्राथमिकपुष्पशोभं स्निग्धच्छायं समाश्रये मुग्धम्॥ ७॥ माध्वीमदालसानां सरसानां मन्दमुग्धहासानाम्। कामेशप्राणानां ब्रह्माख्यानां पदाब्जभृङ्गोस्मि॥ ८॥

इति श्रीमत्कृष्णानन्दसरस्वतीविरचितश्चाटुदण्डकः॥

---

# ताराष्टपदी ॥ ३५ ॥

सद्यहृदये शिवे पाहि तारे । ध्रुवम् । सिन्धुसलिलाकुले शोणकमले लसत्केसरे भासुरे भासि तारे । भालदेशे लसच्चन्द्र-चूडे मृडप्रेयसि प्रियतमं नयसि पारे । तारे० ॥ १ ॥ लीलये-न्दीवरं दिव्यगन्धोत्कटं करतले कलयसे कान्तमधुपम् । मधुर-सापूरितं शशिबिम्बसुप्रभं नरकपालं करे ज्ञानदीपम् । तारे० ॥ २ ॥ द्वीपिचर्माम्बरे रिपुभयंकरखड्गमेकं वरं शमितशत्रुतापम् । पाणिं कामिनिक्रातमस आराद्धियां ते करे राजते श्यामरूपे । तारे० ॥ ३ ॥ नागभूषावृते नाकिजनसंस्तुते श्रुतिमतश्रेयसे शान्तमूर्ते । प्रणतजनवत्सले हृत्सरोजस्थिते मत्सरातीतजनगीत-कीर्ते । तारे० ॥ ४ ॥ कठिनकुचमण्डले श्रुतिलसत्कुण्डले योगि-हृन्मण्डलावासनिरते । वासवादिश्रियं वारिता संददास्युद्धरसि विकलं जन्मगर्ते । तारे० ॥ ५ ॥ चन्द्रचूडे महामुण्डमालाधरे चण्डमार्तण्डवत्तिमिरनाशे । कोदण्डशरकाण्डराजिभुजदण्डहृतभं-डमैने परे स्वप्रकाशे । तारे० ॥ ६ ॥ नलिनमित्रं पदं ते सति ध्यायति ज्ञानपीयूषधारां स्रवति शुद्धाम् । नाम ते सुन्दरं यस्य वाचि स्थितं तां सभामन्यतो नित्यबुद्धाम् । तारे० ॥ ७ ॥ सिद्ध-मान्या लसद्गद्यपद्यात्मिका निःसरति वाक् तस्य नित्यसिद्धा । कृष्णभिक्षोरिमां शृणु शिवेभ्यर्थनां मुञ्च मा चित्तमयि मातरद्धा । सद्यहृदये शिवे पाहि तारे ॥ ८ ॥

इति श्रीकृष्णानन्दसरस्वतीविरचिता ताराष्टपदी समाप्ता ॥

---

# सूर्यसाधुचरितम् ॥ ३६ ॥

विवेकसीमा सूर्यस्य मित्रतापि च वास्तवी । त्रस्तेभ्यो याति दूरं स मुद्रितानां च सन्निधिं ॥ १ ॥ अस्तोदयाभ्यां मित्रत्वं प्रकटी-

कुरुषे रवे। उलूकाद्याश्च पद्माद्या यान्ति पर्यायतो मुदं ॥ २ ॥
अहो रवेर्दयालुत्वं भिषजो गणकानपि। यः पोषयति गत्यैव
गणनागदहेतुना ॥ ३ ॥ संचारो महतां नूनं सर्वविश्रान्तिका-
रणम्। न संचरसि चेन्मित्र प्राणिनां का गतिर्भवेत् ॥ ४ ॥ एकं
रवेर्दुर्भरत्वं प्रसिद्धं लोकवेदयोः। गुरुद्रोही याज्ञवल्क्यः शिष्य-
त्वेन व्यवस्थितः ॥५॥ यथेष्टं संचर रवे मागास्त्वं दक्षिणां दिशम्।
तत्रत्यमातरिश्वायं तेजो न सहते तव ॥ ६ ॥ यदा त्वं याज्ञव-
ल्क्याय ब्रह्मविद्यामुपादिशः। मन्ये ततःप्रभृत्येव स्वर्भानुस्त्वां
ग्रसत्यसौ ॥ ७ ॥ मित्रत्वं ते पुरस्कृत्य त्वयि लीनो विधुर्मुहुः।
कलाकर्षणपुष्ट्येपि क्षीणस्त्वं तु यथास्थितः ॥ ८ ॥ स्वकलाकर्ष-
कस्यापि मित्रतां यासि हे रवे। युक्तं ते स तु मूढात्मा स्वयं
कालेन नश्यति ॥ ९ ॥ राजा समीपमागत्य तेजः प्रार्थयतेऽधिकं।
देहि मा कुरु विश्वासं मित्रता राज्ञि कुत्र वा ॥ १० ॥ त्वयि
शोभां मित्रशब्दो वहत्येव निरन्तरं। लक्ष्मीनिवासं कमलं
चन्द्रं पोषयसेपि च ॥ ११ ॥ युक्ता ते मित्रता भानो कमलानां च
पोषणात्। राजतापि विधौ युक्ता परश्रीनाशनोद्यते ॥ १२ ॥
त्रयीमये त्वयि सतां व्यवहारस्तु वैदिकः। राज्ञि भूतपिशाचाना-
मुलूकानां महोद्यमः ॥ १३ ॥ विष्णोर्नाभिसरोजं त्वं तन्नेत्राल-
म्बनाद्रवे। विकासयसि तद्राजा निमीलयति मत्सरात् ॥ १४ ॥
सुविचार्यैव राजेति मित्रेति कवयो जगुः। तत्संमतं सतां नूनं
कमलान्यत्र साक्षिणः ॥ १५ ॥ स्वभावतो द्रवं नीरं घनीभवति
राजतः। त्वत्तो द्रवत्वमायाति मन्ये ते हृदयं द्रुतम् ॥ १६ ॥
राज्ञो हृदयकाठिन्यं जानाति विरही जनः। त्वामेव मित्रं विज्ञाय
न जहाति बुधः क्वचित् ॥ १७ ॥ रवे मित्र त्वद्वियोगदुःखितान्य-
म्बुजान्यपि। छिद्रं प्राप्य जडो राजा नाशयत्येव निर्दयः ॥ १८ ॥
लक्ष्मीनिवासकमलविकासविमुखः शशी। राजाप्यासनमापेदेऽ-

धरितिर्ज्योतिषा रवेः ॥ १९ ॥ मित्रत्वात्पोषयस्येव राजेति विधुमादरात् । तथापि जठरस्थं स कलङ्कं दर्शयत्यहो ॥ २० ॥ प्रत्यहं पूज्यसे मित्र द्विजैरादरपूर्वकम् । रात्रौ कृष्णचतुर्थ्यां तु राजा कष्टेन हेतुना ॥ २१ ॥ वृक्षा वर्धयसे मित्र वनस्पत्योषधीगणान् । राजा भुक्त्वापि संक्षीणो मन्ये मित्रत्वशून्यतः ॥ २२ ॥ मित्र कुत्रापि कालेषु देशेषु न विनश्यसि । राजाहंकृतिपूर्णात्मा क्षीयतेऽसौ पुनःपुनः ॥ २३ ॥ मित्र त्वद्दत्ततेजोभी राजेत्ति स निगद्यते । परं त्वारम्भकौटिल्याद्दशामाप्नोति तादृशीं ॥ २४ ॥ दृष्ट्वोद्यन्तं तु राजानं क्षीराब्धिर्वर्धतेऽचिरात् । न नद्यो मधुरास्तत्र साजात्यप्रेम दृश्यते ॥ २५ ॥ मित्रतां मा कुरु प्राज्ञ राज्ञा सह विभावसो । त्वामाच्छाद्य जगत्सर्वं गङ्गायां विनिमज्जेत् ॥ २६ ॥ अक्षीयमाणवपुषि स्थिते त्वयि सुधामयं । क्षीयमाणंतु राजानं प्राहुर्भाग्यैककारणात् ॥ २७ ॥ यो न लज्जां वहत्येव भगिनीगृहनाशने । तेन राज्ञा कथं मैत्री स्थिरा भवति भास्कर॥२८॥तत्पुत्रबुधमित्रत्वाद्यदि ते मित्रता विधौ। राजत्वात्कालमालक्ष्य बुद्धेर्भङ्गं विधास्यति ॥ २९ ॥ द्विजराज इति ज्ञात्वा यदि त्वं मित्रतोत्सुकः । पृष्टादेव गुरुं नूनं यद्युक्तं तत्समाचर ॥३०॥ त्वयि मित्रे बुधे पुत्रे देवपूज्ये गुरावपि । स्वमङ्कं न जहात्येष राजा नो हठिनः खलु ॥ ३१ ॥ यदन्तःश्यामता सैव पूजाया भङ्गकारिणी । तापदोपि भवान् पूज्यो राजा शीतकरोपि न ॥ ३२ ॥ अंतःकलंकहीनत्वान्मित्रशब्देन भण्यसे । तापप्रदोपि लोकानां न शीतकिरणस्तथा ॥ ३३ ॥ धन्योसि मित्र मार्तण्ड यद्बुधन्निकटेन्वहं । पितुरंकः सुते माभूदिति विश्रामयस्यहो ॥ ३४ ॥ खलकाकोलूकपूर्णे विश्वे संचर मा रवे । ज्ञात्वा ते हंसतां नूनं पीडयेयुर्दिवानिशं ॥ ३५ ॥ भासत्वात्त्वं वर्णशोहं धत्से लोकैकभूषणं । खलकृष्ण खगाटोपे किं त्वं मित्र करिष्यसि ॥ ३६ ॥

हंसत्वं प्रकटं भानो मा कार्षीर्यत्र कुत्रचित्। खलकाकोलूक-संघा एकमन्त्रा स हंति नो ॥ ३७ ॥ हंस ते शुद्ध वर्णस्य मलिना एव शत्रवः। दृष्टं पर्वणि राजासावाच्छादयितुमीहते ॥ ३८ ॥ शत्रवो बह्वो हंस महतां सहजाः खलाः। कृष्णो युधिष्ठिरो रामो नलश्चात्र निदर्शनं ॥ ३९ ॥ अपक्षं हंसमालक्ष्य राजासौ कुटिलः खलैः। नक्तंचरैर्भिन्नचित्तो मन्ये त्वां भ्रामयत्यहो॥ ४० ॥ बुधगेहं परित्यज्य राजगेहं तु माविश। त्वत्तेजो हानयेन्नून-मोषधीः पालयिष्यति ॥ ४१ ॥ अदीनतां दर्शयसि हंस संसार-वीथिषु। राजा जाले विनिक्षिप्य द्रष्टुमिच्छति ते मुखं ॥ ४२ ॥ जडौषधिगणान्राजा जडोऽसौ पालयन्नपि। न चेतनचमत्कारं हंसत्वं परिपालयेत्॥४३॥ पश्य पश्य बुधं हंस पितरं जडनायकं। कलंकिनं च राजानं ज्ञात्वा त्वामेव सेवते ॥ ४४ ॥ मुक्तानां रसवेत्ता त्वमोषधीषु विकुण्ठितः। औषधीशेन मित्रत्वं हंस ज्ञात्वा समाचर ॥ ४५ ॥ मुहुर्मुहुस्त्वया हंस राजासौ धवली-कृतः। तथापि निजकृष्णत्वं न मुंचति हठी विधुः ॥ ४६ ॥ राज्ञसस्वभावकृष्णस्य हृदयं हंस नावसि। त्वां कृष्णीकर्तुकामस्य यत्नाः पर्वणि पर्वणि॥४७॥ मित्र हंस क्रूरतां ते वदन्त्यबुधमानवाः। राज्ञस्तेजो भुवो वृष्टिममृतस्य प्रयच्छसि ॥ ४८ ॥ राजासौ सेवितो यत्नात्पितृलोकं प्रयच्छति। त्वं न हंस ब्रह्मलोकं मित्रता तत्र कुत्र हि ॥ ४९ ॥ यतात्मनेन भेदस्तु राज्ञो हंसस्य चानघाः। एकत्रकान्यधिकृतो निष्कामोऽन्यत्र च श्रुतौ ॥ ५० ॥ पुनरा-वृत्तिरहिते हंस मण्डल आविशन्। पुनरावर्तते राजा मन्येऽसौ-हृदकल्मषः ॥ ५१ ॥ हंस ते निकटं राजा स्वप्रकाशेच्छया गतः। त्यज स्वेच्छाविहारं त्वमेष ऋक्षाधिनायकः॥५२॥ब्रह्मविद्यावरिष्ठस्त्वं हंस राजापि तेन्तिके। गृहीत्वा तव विद्यां स शिष्यं कृत्वेव गच्छति ॥ ५३ ॥ मित्रस्य साधुवृत्तस्य स्वगृहाभ्यागतस्य च।

हंसस्य श्रियमादत्ते राज्ञि सद्वृत्तता कुतः ॥५४॥ महेशस्यापि मूर्द्धस्थः सर्वतः श्रियमाहरत् । राजासौ कुटिलो नूनं तव हंसस्य का कथा ॥५५॥ यः क्षीणो भजते मित्रं महेशं कलयैकया । प्राप्तसंपत्ततो दूरे हंस राजकथेदृशी ॥५६॥ राजगेहप्रविष्टेन प्राप्तं सिंहासनं त्वया । हंस तोयं मा भजस्व तेजोहानिर्भविष्यति ॥५७॥ राजगेहं मा विश त्वं मित्र सिंहासनेच्छया । कन्यायास्ते तुलारोहो भवेद्वृश्चिकवेदना ॥ ५८॥गुरोरुच्चासनत्वेपि मङ्गलस्यास्ति नीचता । तद्गेहं हंस विद्धि त्वं राज्ञोस्य मलिनस्य तु ॥ ५९ ॥ नक्तंचरस्य राज्ञोस्य वशे भूतानि सन्ति हि । न नक्तं चरसे हंस मन्ये तेनैव हेतुना ॥ ६० ॥ सेवा-च्छलेन त्वामेव मित्र मिन्दन्ति मानवाः । राजापि नीलिमारोपी सहसे हंस तत्कथम् ॥ ६१ ॥ राजा स्वर्क्षाधिपो भूत्वा हंस ते द्विजराजताम् । खगत्वमात्रसाम्येन जहार कपटं कियत् ॥ ६२ ॥ राज्ञऋक्षसमायोगाद्बुधप्रीतिर्न विद्यते । अतएव च तत्पुत्रो हंस त्वामेव सेवते ॥ ६३ ॥ मित्रं वापि महेशं वा क्षीण एव हि सेवते । पूर्णस्तु महिषीसंघं हंसराजायमीदृशः ॥ ६४ ॥ अल-ब्ध्वा हंस ते वर्णं त्वामेव मलिनं पुनः । कर्तुमुद्यतचित्तत्वा-द्राजा गच्छति तेन्तिकं ॥ ६५ ॥ हंसत्वाद्विजराजत्वं तव युक्त-मिदं सखे । राज्ञो मलीमसस्यास्य केन दत्तमिदं पदं ॥ ६६ ॥ भूताधिपेनापि हंस न च त्वं मलिनीकृतः । राज्ञा तथा कृत इति मन्ये तच्छिरसि स्थितः ॥ ६७ ॥ हंस विश्रम्य तिष्ठ त्वं यत्र कुत्रापि कोटरे । मलीमसखगस्यास्य राज्ञो मा विश कोटरे ॥ ६८ ॥ सत्यलोकान्तगन्तुस्ते किं राज्ञो भवने तव । नक्तंचरस्य भवने हंस ते संस्थितिः कथम् ॥६९॥ साजात्यमैत्री सर्वत्र प्रसिद्धापि स्थितिं गता । दोषाकरस्य हंसस्य साजात्यं केन कुत्र वा ॥ ७० ॥ दोषा-करोऽयं कुटिलो गुरुतल्पमपि स्पृशन् । राजा ते मित्रतां भिन्द्याद्धं-स जागृहि जागृहि ॥ ७१ ॥ भूताध्यक्षललामोऽयमाहूय निज-

मन्दिरम् । भूतानि दर्शयेद्राजा हंस जा० ॥ ७२ ॥ ऋक्षाध्यक्ष-प्रवेशेन पूजाभङ्गो भवेत्तव । ऐतिह्यमेतत्कीनाटे हंस जा० ॥७३॥ समदृष्टिर्भयाद्धंस राजा त्र्यक्षशिरःस्थितः । कदाचित्मृगयां कुर्याद्धंस जा० ॥ ७४ ॥ समुद्रप्रियचारित्रः शाल्याद्योपधि-वर्धनः । राजा चित्पावनो भाति हंस जा० ॥ ७५ ॥ कथिका वर्णपूर्णात्मा कर्मठानां गतिप्रदः । राजा चि० ॥ ७६ ॥ मुनि-दुःखदमारस्य मित्रं भूतेशभूषणम् । कुटिलो मलिनो राजा हंस जा० ॥ ७७ ॥ ब्रह्मविद्यादानशौण्डस्त्वं चेद्राजनि दित्ससि । भार्गवस्य गतिस्तेपि राज्ञा पिंगाक्षवे तव ॥ ७८ ॥ त्वं तु दोषान्न जानीषे राजा दोषाकरः खलः । संसर्गदोषतो हंस दुःखी कालान्-द्भविष्यसि ॥ ७९ ॥ ब्रह्मविद्यादानशौण्डश्चेद्राज्ञे दातुमिच्छसि ॥ ८० ॥ देहि हंस स ते सेवामालं वचनमाचरेत् । ऋक्षनाथस्य सदनं याम्यादपि भयंकरम् । तदीयऋक्षसंघस्त्वामविचार्यैव शात-येत् ॥ ८१ ॥ महेश्वरस्य शिरसि स्थितो नक्तंचरो यदा । ततः-प्रभृति हे हंस पिशाचाध्वोदघाटि किं ॥ ८२ ॥ महेश्वरस्य सङ्गोपि राज्ञो विफलतां गतः । मलीमसस्य राज्ञोस्य हंस ते संगतः किमु ॥ ८३ ॥ सद्वृत्तः पद्मिनीबन्धुस्त्रयीमूर्तिरकल्मषः । हंस एते तव गुणा राज्ञः स्वप्नेऽपि दुर्लभाः ॥ ८४ ॥ हंस त्वयि स्थिते राजा रूढो यच्छिवमस्तकम् । मन्ये साधुजनाः प्रायो न कौटिल्यविचक्षणाः ॥ ८५ ॥ हंसस्य द्विजपूज्यस्य बंधूतस्य यदम्बरम् । राजा गृह्णाति तन्मन्ये राजानो लोभिनः खलाः ॥ ८६ ॥ मित्र त्वद्दत्ततेजोभिः पूर्णचन्द्रं बिडालकः । समागतो दुग्धाबुद्ध्या तं वदन्ति शशं बुधाः ॥८७॥ मित्रदत्तद्युतिधरो मार्जारं वञ्चयत्यहो । दुग्धाबुद्धिं समुत्पाद्य राजा क्रीडति वञ्चकः ॥ ८८ ॥ त्वदीयसिंहासनगोप्येष मुंचति नो शशम् । अनीतिज्ञाय राजत्वं कथं हंस समर्पितं ॥ ८९ ॥ स्वयं सिंहासनारूढस्त्वां हंसीकृत्य

राज्ञताम् । भुनक्ति तेन पापेन क्षीयते च्यवतेपि च ॥९०॥ मार्गागताय हंसाय तुभ्यं सिंहासनं बलात् । तदाति तत्पुना राजा स्वयमारोढुमिच्छति ॥९१॥ पायितो गरलं शंभुर्देवराजेन तद्विदा । राज्ञानेन शिरःकान्तं अपन्हंसं स जीवति ॥ ९२ ॥ बहुवारमनेनैव राज्ञा पर्वणि योजितः । संकटे हंस ते नैव मित्रत्वं किं करिष्यसि ॥ ९३ ॥ मृत्योरंशहरो राजा मृत्यू राजांशजीवनः । विज्ञाय चैतयोरैक्यं हंस दूरेण संचर ॥ ९४ ॥ हंस किं ते सुतो राजा गुरुदारविटोपि च । स्वकरैः पोष्यते भूयो धन्या सा महतां दया ॥ ९५ ॥ हंस तेजस्त्वया दत्तं जडे राजनि मन्दति । बुधसङ्गानमिङ्गेन प्रवाही क्रियते किमु ॥ ९६ ॥ नीचः कुजन्मा यद्गेहे यद्गुरुर्नास्तिकाग्रणीः । तस्य राज्ञः कथ प्रीतिर्हंसे मित्रे बुधेऽपि च ॥ ९७ ॥ यद्गेहे नास्तिकाचार उच्चतां भजते बुधः । यत्संगं त्यक्तवान्हंसे तस्य राज्ञो रतिः कथम् ॥ ९८ ॥ भोभो हंस जगत्स्वामिन् त्वत्पादशरणः शशी । जगज्जीवनतां यातः पूज्यपादस्त्वमेव हि ॥ ९९ ॥ त्वत्पादालम्बतो राजाऽभवज्जलमयं सरः । त्वद्वंशजेन रामेण शिला बाला कृतेति किम् ॥ १०० ॥ तेजोमयस्य हंसस्य बुधसङ्गमुमुच्चतः । राज्यसेव्यस्य मित्रस्य वन्दनं नन्दनायते ॥ १०१ ॥ सर्वदेवमयं हंसं मित्रसाधुमुपास्महे । स्वस्त्यस्तु द्विजराजाय यो रञ्जयति योगिनः ॥ १०२ ॥ मानसपद्मविकासनहंस सुतोपर्णफलैकपरतन्त्रात् । तेजस्विनो रवेरपि साधोस्त्रस्ताः खलोलूकाः ॥ १०३ ॥ हंसे गुणाः सन्तु मित्रे दोषाः सन्तु च राजनि । साधुचित्तोपमायां तु चन्द्र एव विशिष्यते ॥ १०४ ॥ शैत्यं रूपं सुधाप्यस्तु महेश्वरविभूषणे । पराक्रमोपमायां तु सूर्य एव विशिष्यते ॥ १०५ ॥ राजा कुप्यतु वा मा वा हंसस्तुष्यतु वा नवा । वाचस्पतिर्नापि तुष्येत्तुष्यत्येव बुधः कविः ॥ १०६ ॥ पराक्रमो विक्रमान्तः कविता भोजसीमगा ।

पाण्डित्यं पुण्यपूरन्तमधुना तु यदस्ति तत् ॥ १०७ ॥ विक्रमो हंस सौभाग्यं जज्ञौ विज्ञानभूषितः । श्रीकालिदासो वागीशो भोजराजसमागमम् ॥१०८॥ कवितासरणिः कापि सरला सर्वतोमुखी । या पण्डितमुखारूढा विज्ञानज्ञाजसे (?) क्षिपेत् ॥१०९॥ मित्रसाधुचरित्रं तु वर्णितं रसविन्मुदे । सौराष्ट्रे गोण्डलपुरे कृष्णानन्देन भिक्षुणा ॥ ११० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीकृष्णानन्दसरस्वतीविरचितं सूर्यसाधुचरितं समाप्तम् ।

---

# कलिपरामर्शः ॥ ३७ ॥

पवित्रौ चरणौ नौमि श्रीकृष्णस्य जगद्गुरोः ।
यज्जलं कुरुते विष्णुं शिवं ब्रह्माणमप्यथ ॥ १ ॥
गङ्गां गीतां च गोविन्दं नमस्यामि महीयसः ।
येषां तरणिताज्ञानमनुवृत्तं यथोत्तरम् ॥ २ ॥

त एव यथार्थमङ्गलाः ॥

अथ कलिं परामृशामः । श्रूयते लोके श्लोकः पौराणिकः सर्वज्ञो व्यासो यमुवाच—'कलौ दशसहस्राणि विष्णुस्तिष्ठति मेदिनीं । तदर्धं जाह्नवीतोयं तदर्धं ग्रामदेवता'इति । तस्यायं परामर्शः । कलौ दशसहस्राणि वर्षाण्यभिव्याप्य विष्णुर्यथाशास्त्रं विश्वप्रवर्तयिता मेदिनीं तिष्ठति अधितिष्ठति अधिकृत्य तिष्ठति । अतएव द्वितीयोपपत्तिरुभयत्र । अत्यन्तसंयोगविवक्षणादधिकरणविवक्षणाच्च । अधियोगादधिकरणत्वं द्वितीयार्थः । ग्रामसध्यास्त इतिवत् एकदेशविवक्षया कलाविति सप्तमी । व्याप्तिविवक्षया सहस्राणीति द्वितीया । अधिकारो नाम यथाशास्त्रं विश्वप्रवर्तनं काल्पनिकोपमर्दनं च । यया कयापि रीत्या प्रमादस्य कलेरवकाशं न ददा-

---

1 अद्भुतौ इति पाठः.

तीत्यर्थः । श्रीजाह्नवीतोयं च पञ्चसहस्राण्यधितिष्ठति मेदिनीमधिकृत्य तिष्ठति यथाशास्त्रं प्रवर्तयति जनान् । तथा ग्रामदेवताः सार्धद्विसहस्रान्तमधिकुर्वन्ति । इत्थमर्थे पर्यवसन्ने सार्धद्विसहस्रान्तं शास्त्रस्य पूर्णं बलं । ततः सार्धद्विसहस्रान्तं न्यूनं । ततः पञ्चसहस्रान्तं न्यूनतरं । त्रिगुणं द्विगुणमेकगुणमिति । अत्रेदं निदर्शनं । पूर्वं ग्रामदेवतैव सर्वसिद्धिं विधास्यतीति तद्यागसमारम्भं कुर्वन्ति स्म येनोत्पातशान्तिःसमये समये । ततः ग्रामदेवतामसन्वाना अपि गङ्गायां श्रद्दधते स्म महतीयमिति । तामप्यमन्वाना गीतां मन्यन्तेऽधुनापि बहवः। गीतायामस्ति विष्णुः। स्ववचने स्वयं तिष्ठति सर्वो लोकः । यथा मनुयाज्ञवल्क्यादयो मुनयो न येषु घुणाक्षरन्यायः । यदि गीतां मन्यन्ते तर्हि सर्वाणि शास्त्राणि मतान्येव तैः शिष्टैः । तां गीतामपि न मन्यामहे इति वदिष्यन्तो भविष्यन्ति दशसहस्रान्ते न यदा पाण्डित्यलेशः । पाण्डित्येन विवृतौ शास्त्रनयौ । स एव गीतार्थः स्मृत्यर्थश्च । यथा प्रमातृमालिन्यं तथा शास्त्रतिरोधानं यथा शास्त्रतिरोधानं तथा देवतातिरोधानं तस्मात् 'इमं मे गङ्गे यमुने सरस्वती'त्यादिमन्त्रो यावत्तावद्गङ्गा तिष्ठतीति निर्विवादं । 'गणानां त्वे'त्यादिवद्गणपत्यादिवच्च । अतएव 'परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष'इति श्रुतिरुपपद्यते । प्रत्यक्षद्वेषे हेतुं मालिन्यं द्योतयतीवशब्दः । यथा निक्षिप्तं धनं भूमौ वर्तमानमपि लेखाधिष्ठानं लेखतिरोधाने निक्षेपस्तिरोधत्ते कदाचिल्लब्धेऽप्यविश्वासः । प्रमातृमालिन्यं च कालकृतं । कालो हि विस्मरणहेतुः प्रसिद्धः । बहुतिथं न स्मरामीति । विष्णुः स्मरणहेतुः स च गायत्रीतृतीयपादे प्रदर्शितः । तस्माद्यावद्गायत्री तावद्विष्णुस्तावद्वेदमार्गोऽनुवर्तते । ततोऽर्वाग्विस्मरणतारतम्यमन्यत् । किं च जाह्नवीतोयं स्वाधिकारं तिरोदधातु न जाह्नवी । तपोमूलं यज्जलं तपोन्तं तिष्ठति । अतएव लोके गाथा मनसि

शुद्धे संपन्नेऽसत्कमण्डलावपि गङ्गेति यामुदाहरन्ति भाषायां। मन्त्रमयी तु देवता मन्त्रान्तमनुवर्तते। वाचारम्भणश्रुतेर्वागन्तं संसारः अतएव 'गङ्गागङ्गेति यो ब्रूयाद्योजनानां शतैरपि। मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छती'ति स्मृतिरुपपद्यते। योजनशतान्तरितेपि संनिधत्ते भक्ते। स्पष्टं चैतद्देवताधिकरणे वैयासिके। जलरूपस्य कालाधीनत्वेपि न जाह्नवी कालाधीनाऽतएव तत्सूनुर्गाङ्गेयो नाम कुरुकुलावतंसो भीष्मः स्वेच्छया महावस्थां प्रतिपेदे। किं बहुना यस्या जलरूपमप्यजरामरं प्रसिद्धं शतान्तं स्थापितमपि न परिणमत इति। माहात्म्यं चाद्यापि तीरवासिभिः परिदृश्यते चेतनता च तस्मात्तपोमय्या मन्त्रमय्याः स्मृतिमात्रेण संनिधिमादधानायाः स्मरणं विज्ञानं च यावत्तावद्धर्मो निराबाध इति यथा तथा विष्णुस्मरणं यावत्तावद्धर्मो निराबाधः। यस्माद्भूता वर्तमाना वा पण्डितास्तत्त्वपरामर्शनपरा गीतायामेव संप्रवृत्ता दृश्यन्ते श्रुताश्च। किमिदं पाण्डित्यमाहात्म्यम् उत गीतामाहात्म्यम्। वयं तु मन्यामहे पाण्डित्यमाहात्म्यमेतदिति किमन्धानां पुरतः सूर्यस्य दर्पणस्य वा माहात्म्यं स्वपररूपप्रतिपादकस्य। सत्यां बुद्धौ गीतायास्तद्देवतायाश्चतुर्विधपुरुषार्थप्रकाशिकाया माहात्म्यम्। अर्जुनोपदेशेन बुद्धिदेवता गीता निरूपिता भगवता। उत्तरोत्तरं बुद्धिर्वर्धेत इति यदि तर्हि गीताशास्त्रमधितिष्ठति मेदिनीं यावद्बुद्धि। सत्यां धेनौ दुग्धमनुवर्तत इति न्यायात्। कस्त्वं कोऽहं कीदृशस्त्वं कीदृशोऽहमिति जिज्ञासायां दर्पणीभूतावतिष्ठते। यदि क्षीयत इति ते मतं तदा गीतैव बुद्धिं दास्यत्युपासनयेति मतमस्माकम्। यथा सूर्योपासनया नेत्ररोगनिवृत्तिस्तथा गीतोपासनया बुद्धिदोषनिवृत्तिः। बुद्धेर्द्वौ दोषौ क्लैव्यं मोहश्चेति तन्निवृत्तौ बुद्धिर्लब्धैव अतएव फलमाह स्वयं भगवान्—'ददामि बुद्धियोगं तमि'ति। तत्स्वरूपमाह 'येन मामुप-

१ धेनुसमुदाये.

यान्ति तं इति कृष्णमोहविनाशे महालाभ एव परिशिष्यते मयि लब्धे किं न लब्धमेव एव बुद्धियोगः । कृष्णनाशात्पराक्रमः । मोहनाशादाचारशुद्धिर्ज्ञानशुद्धिश्च । पशुत्वनिवृत्तेः । मोहफलं च सूचितं भगवता 'स्वधर्मे निधनं श्रेयः परधर्मो भयावह' इति । किं मार्जारो व्याघ्रो भवेत् किं व्याघ्रो मार्जारो भवेत् । बुभूषायां द्वयोरपि हानिः । अतएवाचारविचारशुद्धिः फलमिति गीतार्थः पर्यवसितः । अहो कृष्णस्य पाण्डित्यं यत्रैव सर्वेषां पाण्डित्यान्येकीभवन्ति समुद्र इव नद्यः । न तज्जलं यत्समुद्रेण नैकीभवितुं क्षमं यथा पाषाणः । न तत्पाण्डित्यं यद्गीतया नैकीभूतं यथा दुर्योधनस्य पाण्डित्यं पाण्डित्येनैकीभवति स्वाजात्याज्जलवदिति द्रवस्वभावम् । अतएव लोके गाथाशतं शुनयो बुद्धिरेकैवेति । सत्येवं गीताविनोदान्तं पाण्डित्यमनुवर्तिष्यते दशसहस्रान्तं ततोऽधिकं वा । तदेतदिदानींतनाध्यापनयत्नैरनुमीयते । एष महोपकारः । अतएवोक्तं श्रीव्यासेन मुनिना 'कलौ दशसहस्रान्तं विष्णुस्तिष्ठति मेदिनीमि'ति । युक्तं तत् । शास्त्रयोनित्वात् ।

गङ्गया प्रेरितं यच्च लिखितं तच्च तत्तटे ।
क्षीणात्वनेन लेखेन लेखेश्वरजटास्पदा ॥ १ ॥
विस्मृत्य शङ्करं कृष्णमन्यथवस्थां प्रपेदिरे ।
तपोन्तं च गताः प्रायो विस्मृत्य च भगीरथम् ॥ २ ॥

इममेवाभिप्रायं मनसि निधाय वृद्धाः प्रातरुत्थाय स्वहितं स्वहितमूलं श्रीगुरुं परमेश्वरं संचिन्त्य प्रह्लादनारदपराशरपुंडरीकादीन्स्मरन्ति स्म केन किं कृतं किमाप्तमिति परीक्षणाय ।

स्मरणीयास्त्रयो लोके पूरुषा इति मे मतिः ।
भगीरथः शङ्करोऽथ श्रीकृष्णो वा जगद्गुरुः ॥ ३ ॥
इमं कलिपरामर्शं योऽधीते प्रयतः पुमान् ।
तस्मात्पुंसः कलिर्दूर इति कृष्णानुशासनम् ॥ ४ ॥

इति श्रीकैवल्यधामनिवासिकृष्णानन्दसरस्वतीकृतः कलिपरामर्शः ।

समाप्तेयं विचारत्रयी ।

